# उत्तररामचरितम् ।

## प्रथमोऽङ्कः ।

( चित्रदर्शनम् )

इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे ।
विन्देम देवतां वाचममृतामात्मनः कलाम् ॥ १ ॥

---

टीकारम्भमङ्गलाचरणम् ।

विश्वं यस्य शरीरं गुणकृतिविहितं यस्य चानन्तशक्तेः
सत्यं वै यस्य रूपं ह्यनुभवसुभगं योगिनां योगदृश्यम् ।
व्याप्तं सर्वत्र सृष्टिस्थितिलयगुणको निर्गुणो योऽगुणत्वाद्
यावान् यस्मिंश्च योऽहङ्कृतिमयवपुषा संस्थितः सोऽहमासे ॥
कर्मप्रसूतिः प्रभवः फलानां, न तस्य कर्त्ता ह्यपरोऽस्ति मत्तः ।
अतो मयाऽस्मिन्नहमेव वन्द्यः, प्रभुत्वमासामपि मे प्रकृत्याम् ॥
छात्राणां सुखबोधार्थं श्रीजीवानन्दशर्मणा ।
क्रियते विस्तृता व्याख्या नाम्ना च सुखबोधिनी ॥

तत्रभवान् निरवद्यविद्याविद्योतमानविद्वन्निकर-निकषायमाणमहाकवि
।कर-राकानिशाकरः भवभूतिः, पावनीभिरमलकर्चिररामचरितोज्ञा
ाचित-कपर्द्दोत्सनिःसृताभिः, सहृदयहृदयनन्दन-सन्तानप्रसूनामो
।चमत्कारसार-स्वान्तविद्रावकापूर्वकरुणरसामरसरित्प्रवाह-श
;, साहित्यविद्याजुषां प्रेक्षावतां सौभाग्यलक्ष्मीभुवां, स
सन्तर्पणाय, चलमभिनवनाटकदामैकं ग्रन्थितुमीप्सुः
विराजितत्तया नवजलधरनिनादानुकारिमृदुमधुर

गुणाभिव्यञ्जक-सुललित करुणरसाऽनुप्राणित-मञ्जुलपदविन्यासोपशोभितैः इ
ओजःप्रकाशकविविधाडम्बरविनिबद्धगौड़रीत्यनुगुणसमासबहुलैः पदीपन्या
तथा अम्लवर्षुक बलाहक-स्फूर्जथुसनाथैरम्लद्युति-द्योतितैन वाग्विभव
सभ्यानां नाकसदोय-सुषमारुचिर-सुचिरशान्तिपीयूषोपचितं करुणरसमयमेक
मानससन्तर्पणं प्रबन्धं सिसृक्षुः ; तत्र च अविगीत शिष्टाचारपरम्पराप्राप्त
यालङ्कारिकवरेण्य-सम्प्रदायपूतीकृत-श्रुतिशासनानुमतां ग्रन्थारम्भपरिसमाप्तिप्र
प्रत्यूहव्यूहविध्वंसपटीयसीम् आदिकविकुलवन्दनामूलिकामभीष्टदेवस्तुतिमयीं
प्रधानाङ्गभूतां नान्दीं वाक्सम्पत्तिसिद्धये रङ्गविघ्नोपशान्त्यर्थञ्च आदाववतारयां
मिति ।—पूर्वेभ्यः प्राचीनेभ्यः कविभ्यः वाल्मीक्यादिभ्यः कविगुरुभ्यः इत्यर्थः । '
इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति, ः
श्वेतकेतो" इति, "स वा अयं पुरुषो जायमानः शरीरमभिसम्प
इत्यादिश्रुतेश्च सर्वेषामेव जीवानां खलु परमात्मस्वरूपतयाऽवस्थानस्य उत्कं
तमसां पारेऽवस्थितानां तपश्चर्याविधौत-किल्बिषकषायाणामादिकवीनां तत
मपरेषामपि सुतरां चिदात्मभूतत्वमवधेयम् । [ अतो हि तेषामपि स्वार्भ
मस्येवेति ध्वन्यते ] । अपि च "ब्रह्माणं वाल्मीकिं विदुः" इति "कृष्णद्वैपाः
व्यासं नारायणं प्रभुम्" इति च स्मृत्यादौ दर्शनात् तेषामप्यात्मभूतत्वेन
वाग्विभूतिसम्पन्नत्वादिति भावः । [ इह तु "कविभ्यः" इत्यत्र "गुरुभ्यः" इति
दृश्यते, तदर्थस्तु—पूर्वेभ्यः चिरन्तनेभ्यः नलिनपुलिनप्रभव-प्रभृतिभ्यः, तेषां
आदिभूततया तथैव प्रसिद्धेः । गुरुभ्यः कविसम्प्रदायप्रवर्त्तकेभ्यः च तत्रभवद्भ्य
गुरुभ्यः इति विशेष्यीभूततया व्याख्येयः ; यद्वा—वाल्मीक्यादिभ्यः आर्ष
कविकुलवन्दनीयेभ्यः ] । नमोवाकं—नमः उक्त्वा, [ वैदिकोऽयं प्रयोगः ः
चस्य कादेशश्छान्दसः । यद्वा—नमः नमःशब्दस्य वाकः उच्चारणं यथि
यथा तथा, प्रशास्महे इति क्रियाया विशेषणमेतत्, वयमित्यूह्यम् । वचे
- कुत्वञ्च ] । इदं—वक्ष्यमाणं, प्रशास्महे—प्रार्थयामहे । [ "प्रशास्महे
ऽाशीर्वादे" इत्यादादिकस्य रूपम् ; "आङः शासु इच्छायाम् इत्याशा
पकम् ; तेन नमोवाकं प्रशास्महे इति सिद्धम्" इति द
'र्थस्य द्विकर्मकस्य परस्मैपदिनः शास्तेः, तस्य चेत् तदा "शिष

· प्रणतिः क्रियते, तदधिगतस्यैव वस्तुनः तदन्तिर्
प्रेत्य तदीयां विभूतिमभीप्सुः आह, विन्देमेति ।

सततपरार्थानुध्यानेन तत्त्वज्ञानमधिगम्युष: शब्दब्रह्मनिष्णातस्य भगवत: वाल्मीके:, अमृतां पीयूषरसधारामिव मानसामोदकरीं, देवतां निखिलतत्त्वार्थप्रकाशकरीं दिव्यां, कलां विभूतिं, विन्देम लभेमहि । तत्प्रसादात् निर्भीकीकृता तदीया भारती मे स्फुरतु इति भाव: । [ "मुनित्रयं नमस्कृत्य" "नारायणं नमस्कृत्य" इत्यादौ "उपपदविभक्ते: कारकविभक्तिर्बलीयसी" इति न्यायेन, नम:शब्दद्योतितप्रणत्यर्थककरोते: व्याप्यत्वात् नारायणस्य कर्मत्वम्, इह तु 'कविभ्य:' इत्यनेन गुणीभूतस्यापि नम:-शब्दस्य योगात् "नम:स्वस्तिस्वाहा—" ( २ । ३ । १६ पा० ) इत्यादिना चतुर्थी । गुणीभूतानामपि नम:प्रभृतिशब्दानां योगे चतुर्थी शब्दविदां सम्मतैव ; तथा च भट्टि:, —"रावणाय नमस्कुर्य्या:" इति । नातोऽत्र काऽप्यनुपपत्तिरिति ध्येयम् ] ।

अथवा आत्मन: परमात्मन: कलामंशभूतामम्रताम् अमृतधाराभूतां नित्यामित्यर्थ:, ( मीमांसकमते शब्दस्य नित्यत्वाभ्युपगमात् तदधिष्ठातृदेवताया: सुतरामेव नित्यत्वमर्थबललब्धमिति, तथा च सत्यत्वाद्रसवत्त्वात् निरतिशयसुखहेतुत्वाच्च वेदवदनन्तकालव्यापिनीं ) वाचं वाग्रूपां देवतां,—"काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च । शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मन: ॥" इति विष्णुपुराणवाक्यात् शब्दमय्या वाण्या:, कामधेन्वादितन्त्रोक्तवाक्यात्, "वा-सान्ते वा-लमध्ये उफ-कठसहिते कण्ठदेशे स्वराणां हंसंतत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि" इति मातृकासरस्वतीध्यानाच्च वर्णमय्या अपि वाण्या देवतात्वमवगम्यते । विन्देम लभेमहीति । [विन्दते: तौदादिकात् विधिलिङ् ] । पूर्वेभ्य: कविभ्यो नमस्कारपूर्वकं वयमिदं प्रार्थयामहे—यत्तेषां प्रसादात् तदीया रसभावमयी निखिलार्थोद्भासिका लोकमनोहारिणी वाक् अस्य ग्रन्थस्य प्रणयने अस्माकं सहायभूता भवतु इति भाव: । अस्य नाटकस्य वाल्मीक्यादिकविवाक्यमूलकत्वात् तेषु इत्थं प्रार्थनेति हृदयम् । वाग्देवी प्रसन्नीभूय तथाविधां काव्यदामगुम्फनप्रतिभां मह्यं ददातु इति वाऽत्र तात्पर्य्यम् ।

अथवा "भगवद्वन्दनं लाद्यं गुरुवन्दनपूर्वकम्" इति विधानात् मधुरगिरां सर्वेषामेव कवीनां गुरुत्वात् प्राचेतसादीनामादौ वन्दनस्य औचित्यात् आदित एव तान् वन्दते, इदमिति ।—पूर्वेभ्य: कविभ्यो नम:, तेषां काव्येषु पथिप्रदर्शकत्वात्, वा—अपि च वयं कम्—आत्मानं विष्णुं वा, कवेर्वाक्सिद्धिप्रयोजनत्वाद् वाचश्च तदंशत्वादिति भाव:, इदं प्रशास्महे । किमिति तदेवाह, विन्देमेति ।—यदात्मन: विष्णोर्वा, कलाम् अंशभूताम् अमृतां तदनुसरसां शाश्वतीं देवतां देवप्रभावतीं वाचं विन्देम इति ; अन्यथा अस्य काव्यस्य ग्रन्थनासम्भवादिति भाव: ।

"श्लोकैः काव्यार्थसूचकैः" इत्यालङ्कारिकाचार्यसमयानुसारतः एतदपि अर्थान्तरं ध्वनयति, तथाहि—आ जननात् अनुपमस्निग्धतातानलसस्नेहभरेण भृशं विवर्द्धिता देवयजनसम्भवा विदेहराजतनया अलीकलोकापवादभयाकुलव्यथितचेतसा स्वप्राणप्रतिमेन चिरजीवनसहचरेण स्वभर्त्रा रामचन्द्रेण अनिमित्तनिराकृता सती सुचिरं जनस्थानमध्युष्य मर्म्मभेदिकां कियतीं विप्रयोगजवेदनामनुभवन्ती, अनुपदन्तु परमकारुणिकेन वाग्देवता-नवलीलाभ्यलीलास्थभुवः आदिकवेरनुकम्पया विविधजानपदतपोधनपार्थिवपरिवृतां राजसमितिमित्य निकारमसहमाना उवाच सपदि—"नयतु माम् आत्मनः अङ्गेषु विलयमम्बा, न शक्ताऽस्मि ईदृशं जीवलोकपरिवर्त्तनमनुभवितुम्"इत्यमिशं व्याहरन्ती, धरातले विलयं गतवतीति। तदा तु सा वैदेही पृथ्वीगङ्गाभ्यामवलम्बिता सती यामेव काव्यप्राणोपमकरुणरस-समुद्दीपिकां वाचमभिदधे, काव्यार्थसूचकमेतदेव गर्भितवचनमित्यभिप्रेत्य व्याख्यायते, तथाहि—पूर्वेभ्यः कविभ्यः आदिकवये वाल्मीकये नमः मदीयाऽसीमा आढ्‌यौ प्रणतिरस्तु, वाकमन्तिमश्चेमं व्याहारं प्रयाख्यह प्रार्थये, अमृताम् अमृताधारभूताम् आत्मनः मम कलां विभूतिं मातरमिति यावत्, वाचं वाग्व्यापारवतीं मूर्त्तिमतीमित्यर्थः, देवतां धरित्रीं विन्देम लभे ; इदानीमनन्यगतिकामयथानिकृतिं सोढुमशक्नुवतीं दुहितरं मामम्बैव अवत्विति प्रार्थना। सत्यं हि एतत्, पतिगृहनिराकृताया अपाश्रयायाः दुहितुः जननी एव शरणं भवतीति दिक्।

अथवा इत्थमपि काव्यार्थोऽत्र सूच्यते। तथाहि—श्लोकपूर्वार्द्धे शब्दशक्तिमूलकध्वनिमहिम्ना विश्रुतकीर्त्तीनां सर्वलोकवन्दितानां प्राज्ञानामेवाच संवर्द्धना सूचिता ; अत एव कविषु आदिभूततया वाल्मीकेरिव अन्येषामपि प्राज्ञानां महामहिमशालिनां वरणीयत्वमर्थवशात् सम्पन्नम्। सत्यप्येवम्, अत्र सूचितेषु वस्तुषु वर्णनीयस्य वरेण्यस्य भगवतः रामभद्रस्यैव प्राधान्यप्रतीतेः अन्येषां लक्ष्मणादीनाञ्च तथाविधमुख्यत्वानवगमात् बहुनेतृत्वालाञ्छितत्वात् न शङ्कनीयं नाटकस्य बहुनायकप्रयुक्तदोषसम्पृक्तत्वम्। अतः एतस्मिन् काव्ये लक्ष्मणशत्रुघ्नयोश्चोपवर्णनस्योपसर्जनीभूततया भगवता रामभद्रेण सीताविवासनार्थं लक्ष्मणः, लवणवधाय च शत्रुघ्नः प्रेषितः। एवञ्चाक्षेपवशात् प्रथमार्द्धोपनिबद्धं वस्तु ध्वनितम्। परार्द्धे च देवोपमभाग्यभाक् काचन विदुषी स्त्री उपवर्ण्यते इति गम्यते, सा च 'आत्मनः कलाम्'' इत्यभिधानात् च देवयजनाम्भूता, देवस्य च कस्यचित् धर्म्मपत्नीति प्रतीयते। "अमृताम्'' इति पदेन च सम्भाविताशुभायाः विवशायाः तस्या भागीरथीधरित्रीभ्यां जीवनविसर्ज्जनव्यवसायात् विनिवर्त्तनं कियञ्च समाश्वासनं समारब्धमिति संसूच्यते ;

नान्द्यन्ते (क)।

सूत्रधारः (ख)। अलमतिविस्तरेण(ग)। अद्य खलु भगवतः(घ)

---

अतः द्वितीयाङ्कात् प्रभृति सप्तमाङ्कं यावत् नाटकेऽस्मिन्नुपवर्णितस्य विदेहराजतनया-सम्बलितवस्तुनः विवृतिः उपदर्शितेति सुधीभिः समीक्ष्यावधेयम्।

अत्र तु प्राधान्येन कविना करुणविप्रलम्भाख्यशृङ्गाररसः उपवर्णितः। करुण-वीरभयानकादयश्च रसाः प्रधानरस-परिपोषणव्यपेक्षया यथायथमुपवर्णिताः। अत्र रतेरेव स्थायिभावतया विशदीकृत्य नायिका-नायकयोः सम्भोगमावेदयितुं पुरतः चित्रप्रदर्शनव्यपदेशेन पूर्वरागः आलिखितः कविना। पुनश्च सप्तमाङ्के वनस्थली-मध्युषितायाः विवासितायाः विमनायमानायाः सीतायाः समागमोपायः अनुसृतः, कल्पनया च दर्शनस्पर्शनादिना रतिः कियच प्रकटीकृता इति। वृत्तं पथ्यावक्रम्,— "युजोर्जेन सरिद्भर्तुः पथ्यावक्रं प्रकीर्त्तितम्" इति लक्षणात्॥ १॥

(क) नान्द्यन्ते इति।—नन्दन्ति प्रसीदन्ति देवता यस्मात् सा नान्दी। [ भ्वादि-गणीय-नदिधातोर्घञ्, पृषोदरादित्वाद् वृद्धिः, ततो ङीप्] तथाहि,—"देवद्विजनृपा-दीनामाशीर्वादपरायणा। नन्दन्ति देवता यस्मात् तस्मान्नान्दीति कीर्त्तिता॥" इत्या-लङ्कारिकवाक्यम्; सा च सूत्रधारेण कर्त्तव्या। अथवा—नन्दयति स्तवेन देवान् आशीर्वचसा च सभ्यान् नत्या चात्मानं या शैलूषेरिता वाक्, सा नान्दीत्युच्यते, [ नन्दयतेः कर्त्तरि पचादित्वादच् पश्चाच्च "प्रज्ञादिभ्यश्च" ( ५।४।३८ पा० ) इति सूत्रेण स्वार्थे अणि स्त्रियां ङीप्, इति वा व्युत्पत्तिः]। तथाहि—नाट्यप्रदीपे, "नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः। यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दी॥" इति। सा चात्र सुप्तिङन्तरूपद्वादशपदात्मिका ज्ञेया; तथा चात्र तिङन्तात्मकं द्विविधं, सुबन्तात्मकञ्च दशविधं, मिलित्वा च द्वादश पदानि इति बोध्यम्। अत्र नमोवाकमिति तु असमस्तरूपमेव ज्ञेयम्, असमस्तपदानादरे नान्दीलक्षणायोगात्। एवमेवाह भरतः स्वकृतनाट्यशास्त्रे पञ्चमाध्याये;—"सूत्रधारः पठेत् तत्र मध्यमं स्वरमाश्रितः। नान्दीं पदैर्द्वादश-भिरष्टाभिर्वाप्यलङ्कृताम्॥" इति। पदमत्र त्रिविधं बोध्यं,—पादरूपं, सुप्तिङन्तरूपं, वाक्यरूपञ्च। तथा च नाट्यप्रदीपकारः,—"श्लोकपादः पदं केचित्, सुप्तिङन्त-मथाऽपरे। परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे॥" इति। वेणीसंहारे—श्लोकद्वये पादरूपा द्वादशपदा, शाकुन्तले—वाक्यरूपा अष्टपदा, इत्यासां विस्तरः। पदन्त्वत्र यौगिकं वाचकत्वार्थाभिप्रायकं ग्राह्यम् इति। नान्द्यन्ते इति।—तथाविधाया

कालप्रियनाथस्य ( ङ ) यात्रायाम् ( च ) आर्य्यमिश्रान् ( छ )

नान्द्याः अन्ते पाठावसाने इत्यर्थः। तथा चोक्तं,—"पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते। प्रविश्य तद्वदपरः काव्यमासूत्रयेत् नटः॥" इति।

अस्माभिस्तु तत्रभवतां सर्वेषां प्रमालङ्कारिकाचार्य्याणां प्राचीनतया भरतादीनां मतमनुसृत्य "इदं पूर्वेभ्यः" इत्यादि श्लोकेषु नान्दीत्वमव्याहतमिति प्रागभिदर्शितम्। तत्तु नवीनाः न मन्यन्ते, "पदैर्युक्ता द्वादशभिः" इत्यादिना विरोधात्; अत एव केचन पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गमेतदिति वदन्ति। सत्यमेवम्; प्रथितकवियथितेषु बहुषु नाटकेषु, प्रथमत एव "नान्द्यन्ते सूत्रधारः" एतावानेव पाठक्रमः दृश्यते; कुत्रचिच्च कविकृतमङ्गलाचरणरूपस्य श्लोकस्यान्ते, अतस्तयोरविवादाय इत्यमेव "नान्द्यन्ते सूत्र-धारः" इत्येष सन्दर्भः व्याख्येयः इति दर्पणकारेणोक्तं—तथा हि "यत्र पश्चात् 'नान्द्यन्ते सूत्रधारः' इति लिखनं, तस्यायमभिप्रायः,—नान्द्यन्ते सूत्रधारः इदं प्रयोजितवान्; इतः प्रभृति मया नाटकमुपादीयते इति कवेरभिप्रायः सूचित इति।" इति। इदन्त्वत्र तत्त्वं—यत् नव्यानां मते वाचिका एव नान्दी सूत्रधारेण प्राक् पठिता, एष खलु कविकृतमङ्गलाचरणरूपः श्लोकः इति।

(ख) सूत्रधार इति।—सूत्रं वर्णनीयवस्तूनि धारयति प्रवर्त्तयतीति सूत्रधारः, नाटकस्थापको नटविशेषः। तथा हि—"वर्णनीयतया सूत्रं प्रथमं येन सूच्यते। रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते॥" इति। [ आहेति क्रियापदेनाध्याहार्य्ये-णान्वयः ]।

(ग) अलमिति।—अतिविस्तरेण अलं, वाग्बाहुल्यं निष्प्रयोजनमिति भावः। "अलं भूषणपर्य्याप्ति-शक्तिवारणवाचकम्" इत्यमरः। द्वादशपदात्मकनान्दीप्रयोगेणैवा-भीप्सित-देवस्तुतिमयनान्दीप्रयोगनिर्वाहात्, अत्र तावत् वाक्प्रसरभूयिष्ठं निष्फलम् एवेति। विघ्नबाहुल्यशङ्कयैव तदनुष्ठानमिति तात्पर्य्यम्।

(घ) अथ प्ररोचनां प्रस्तौतुं सामाजिकजनानां समवधानाय प्रार्थयते, अद्येति।—भगवतः,—ऐश्वर्य्यादिगुणवतः।

(ङ) कालेति।—उज्जयिनीस्थितस्य कालप्रियनाथस्य—महाकालेत्यपराख्यस्य शिवमूर्त्तिविशेषस्य इत्यर्थः।—"यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेश-योगिनी" इति, "महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णकम्" इत्यादौ च दर्शनात्। कथासरित्सागरेऽपि—"यस्यां वसति विश्वेशो महाकाल-वपुः स्वयम्। शिथिलीकृतकैलास-निवासव्यसनो हरः॥" इति। अस्या देवमूर्त्तेः

विज्ञापयामि, एवमत्रभवन्तो विदाङ्कुर्वन्तु (ज)—अस्ति खलु तत्र-

प्रतिष्ठास्थानमपि महाकालशब्देनोच्यते,—"प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्, पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम्" इत्याद्यारभ्य, "पुण्यं यायास्त्रिभुवन-गुरोर्धाम चण्डीश्वरस्य" इति, "अप्यन्यस्मिन् जलधर ! महाकालमासाद्य काले" इति च । तट्टीकायां, महाकालं नाम पूर्वोक्तचण्डीश्वरस्थानमिति दर्शनाच्च यन्योक्त-कालप्रियनाथस्यैव नामान्तरं महाकाल इति तत्प्रतिष्ठास्थानञ्च महाकालशब्देनोक्त-मित्यनुमन्यामहे । अपरस्थानेन महाकविना स्वाधिष्ठानविज्ञापनार्थं महावीर-चरिते दक्षिणापथान्तर्वर्त्ति-पद्मपुरनगरस्य निर्देशात् पद्मपुरस्य चावन्तीसान्निध्यात्, तदुक्ता कालिदासोक्ता च शिवमूर्त्तिरेकैवेत्यनुमीयते । "उज्जयिनी स्याद्विशालाऽवन्ती पुष्पकरण्डिनी" इति हेमचन्द्रः । विशालावन्त्युज्जयिन्यश्च एकार्थप्रतिपादिकाः । कालप्रियनाथो नाम विदर्भेषु भवभूतिनिवासे पद्मपुरनगरे समासीनः देवमूर्त्तिभेदः, तस्य यात्रायाम् उत्सवे इत्यपि केचित् व्याचक्षते ।

(च) यात्रायाम्—यान्ति अत्र जनौघा इति, या-धातोः ष्ट्रन् । कालप्रियनाथोत्सवे जनसमागमे मिलितसभायामि इत्यर्थः । अपि वा कालप्रियनाथस्य भगवतः वार्षिकोत्सवव्यापारं सम्यक् साधयितुं पौरजानपदैरनुष्ठीयमाने महोत्सवे, समागता-निति शेषः । "यात्रोत्सवे गतौ वृत्तौ" इति हेमचन्द्रः ।

(छ) आर्य्यमिश्रान्—पूज्यतमान् । "कर्त्तव्यमाचरन् कार्य्यमकर्त्तव्यमना-चरन् । तिष्ठति प्रकृताचारे स वै आर्य्य इति स्मृतः ॥" इति । अपि च,—"कुलं शीलं दया दानं धर्म्मः सत्यं कृतज्ञता । अद्रोह इति येष्वेतत् तानार्य्यान् सम्प्र-चक्षते ॥" इति । तेषु मिश्राः श्रेष्ठाः तान् । आर्य्याश्च मिश्राश्च ये तथाभूतानिति वा विग्रहः, अतीव सत्कारार्हानित्यर्थः ।—"स्यादुत्तरपदे मिश्रस्त्रिषु श्रेष्ठार्थवाचकः" इति दर्शनात् । कालप्रियनाथोत्सवे समागतान् पूज्यतमान् रसास्वादनिपुणान् पण्डितान् विज्ञापयामि कथयामि इति भावः ।

(ज) किमिति तदेवाह,—अत्रभवन्तः,—पूज्यतमाः, उदाराशयाः सभासदः इत्यर्थः, एवम्—इत्थं, विदाङ्कुर्वन्तु—विदन्तु, ["विदाङ्कुर्वन्त्वित्यन्यतरस्याम्" (३।१।४१ पा०) इति सूत्रेण निपात्यते] अवधारयन्तु इत्यर्थः । "त्रिषु तत्रभवान् पूज्यस्तथैवात्रभवान्" इति वैजयन्ती ।

भवान् काश्यपः (भ) श्रीकण्ठपदलाञ्छनः (ञ) पदवाक्यप्रमाण-तत्त्वज्ञो (ट) जातूकर्णीपुत्रः भवभूतिर्नाम (ठ) ।—

यं ब्राह्मणमियं देवी वाग् वश्येवानुवर्त्तते ।
उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते ॥ २ ॥

(भ) काश्यपः,—कश्यपस्य गोत्रापत्यं पुमानिति अनन्तरापत्यरूपेणैव ऋष्यणाभिधानं भविष्यति, कश्यपगोत्रोद्भवः इत्यर्थः । ब्रह्मणो मानसपुत्रो मरीचिस्तत्पुत्रः कश्यपः तद्वंशजः काश्यपः कश्चित् मुनिविशेषः, स आदिपुरुषो यस्य सोऽपि काश्यपः । तथाहि मनुः,—"जमदग्निर्भरद्वाजो विश्वामित्रोऽत्रिगौतमाः । वशिष्ठकाश्यपाऽगस्त्या मुनयो गोत्रकारिणः ॥" इति । "एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते" इति च ।

(ञ) श्रीकण्ठपदलाञ्छनः,—श्रीः सरस्वती कण्ठे यस्य तथाविधानुपूर्व्यवच्छिन्नं पदमुपाधिर्लाञ्छनं परिचायकं, चिह्नमित्यर्थः, यस्य स तथोक्तः, श्रीकण्ठोपाधिक इत्यर्थः । "ऋचो यजूंषि सामानि सा हि श्रीरमृता सताम्" इति श्रुतिप्रतिपादिता वाक् इह श्रीशब्देनाभिहिता ज्ञेया, अथवा "श्रीर्वेशरचनाशोभा-भारतीसरलद्रुमे" इति नानार्थकोषः । लोकातिशायि-कवित्वसम्पद्भूषितत्वादस्य कवेः तदानीन्तनैः विद्वद्भिः श्रीकण्ठ इति विशेषणं परिकल्पितमिति ।

(ट) पदवाक्यप्रमाणतत्त्वज्ञ इति,—पदं सुप्तिङादिविभक्त्यन्तम् ; वाक्यं तथाविध-पदसमुदायात्मकम् ; प्रमाणं—प्रमीयते अनेनेति करणव्युत्पत्त्या-तत्साधुत्वविनिर्णायकं शास्त्रमुच्यते, पदवाक्यानां प्रमाणं समीचीनत्वादिबोधकं यत् शास्त्रं शब्दशास्त्रमित्यर्थः, तस्य तत्त्वज्ञः याथार्थ्यवित्,—शब्दविद्यापारं गतः तत्प्रयोगनिपुणश्च इति समुदितार्थः ।

(ठ) जातूकर्णीपुत्रः,—जातूकर्णगोत्रसम्भूता तज्जननी आसीत्, तस्याः तनयः, एतेनास्य मातामहगोत्रमप्यभ्यधायि । भवभूतिर्नाम इति ।—भवस्य हरस्य भूतिः ऐश्वर्य्यमिव भूतिः ज्ञानसम्पत् यस्य तथाविधः । भवभूतिरित्यन्वर्थनामा इति भावः । अथवाऽस्य कवेः "साऽम्बा पुनातु भवभूतिपवित्रमूर्त्तिः" "तपस्वी काङ्गतोऽवस्थामिति स्मेराननाविव । गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ ॥" इत्यादिकं वा महोदारं श्लोकमाकर्ण्य सन्तुष्टेन राज्ञा भवभूतिरिति नाम्नैव सततं समाहूतः आसीत्, इत्यैतिह्यं प्रचरति ; एतदभिप्रेत्यैतत् वा प्रवृत्तमिति बोध्यम् ।

असौ कविः कथमन्वर्थनामा अभूत् ? तदेव विवृणोति, यमिति ।—ब्राह्मणं यजनादिषट्कर्म्मनिरतमित्यर्थः यं भवभूतिम् इयं सुप्रतिष्ठिता वाग्देवी वश्या

वशीभूता अभिप्रायानुसारिणी रमणीव अनुवर्त्तते अनुगच्छति, इङ्गितमात्रेणैवाभिमतं साधयति इत्यर्थः; वाचि तस्यैतादृशी प्रभुता आसीत् यत् अभिलाषमात्रेणैव सा हृद्गतमतिनिगूढ़मनिर्वचनीयमपि रसभावं यथागतं प्रबन्धादिषु प्रवर्त्तयति इति भावः। तेन कविना स्वाभिप्रायानुरूपं वस्तुजातमायासं विनैव वर्णयितुं शक्यते, इति फलितार्थः। [एतेन अतुलनीयोऽयं कविरिति व्यज्यते]। तेन श्रीकण्ठभवभूतिना प्रणीतम् उत्तरं पश्चिमं परार्द्धमिति यावत्, सीताविवासनाश्रयं रामचरितम्; विश्वामित्रोपनयनताड़कावधवनप्रस्थानरावणनिधनसीताहरणादिकं पूर्वचरितं महावीरचरितनिबद्धं विहाय रामस्य उत्तरचरितानामभिवर्णनात् उत्तररामचरितमित्यस्य नाटकस्य आख्या जाता। [तदिदमत्र तु—रामस्य चरितम् इति षष्ठीसमासः, उत्तरं रावणवधादुपरिष्टात् विहृतं रामचरितं यत्र तथोक्तम्; रावणहननात् परं भगवतः राघवस्य पश्चिमकथाश्रयं यद्वृत्तं तद्बहुलमित्यर्थः। यद्वा—उत्तरम् अन्तिमं यत् रामस्य भावरसोज्ज्वलं प्रत्यक्षचित्रबहुलं चरितम् उत्तररामचरितमित्यर्थः, तदधिकृत्य कृतमेतत् इति व्युत्पत्त्या "अधिकृत्य कृते ग्रन्थे" (४।३।८७ पा०) इति सूत्रेण अणि, पश्चात्र "लुबाख्यायिकाभ्यो बहुलम्" इति वार्त्तिकेन अणः लुपि "उत्तररामचरितम्" इति सिद्धम्। यद्यपि कविना स्वयमेव "उत्तरं रामचरितम्" इति कृत्वा नाटकस्य नाम अभिहितं, तथाप्यस्माभिः रामचरितस्य "अधिकृत्य कृते ग्रन्थे" इत्यनुशासनात् नाटक-नामपरत्वे उत्तरमिति पद्रान्वयायोगात् एकपदीकृत्य "उत्तररामचरितम्" इति रूपकनामाभिप्रायेणैव व्याख्यातम्। एवं हि प्रयुञ्जते शिष्टाः। "नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशकम्" इत्यालङ्कारिकवचनात्, वर्णनीयगर्भितविषयमधिकृत्यैव कविना इत्थं नाटकाभिधानं कृतमिति ध्येयम्]। नाटकलक्षणन्तु,—"नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्। * * * पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः॥" इत्यादि साहित्यदर्पणोक्तविधानादुपयुज्यते। प्रयोक्ष्यते अभिनेष्यते, नटभूमिकामधिष्ठाय अवस्थाऽनुकरणादिना सम्पादयिष्यते अस्माभिरिति शेषः। अभिनयश्च अङ्गैर्वचनैर्वेशभूषादिभिः रसप्रकाशकमुखरागादिभिश्च क्रियते। उक्तञ्च,— "भवेदभिनयोऽवस्थाऽनुकारः, स चतुर्विधः। आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा॥" इति। इत्यत्र प्ररोचना नाम भारतीङ्गमः अङ्गमेकं प्रदर्शितम्।— "या वाक्प्रधाना पुरुषप्रयोज्या स्त्रीवर्ज्जिता संस्कृतवाक्ययुक्ता। स्वनामधेयैः भरतैः प्रयुक्ता सा भारती नाम भवेत् तु वृत्तिः॥" इति नाट्यशास्त्रोक्तेः; "यं ब्राह्मणम्" इति पुरुषेण नटेन संस्कृतवाक्येन प्रयुक्तं, तेन इयं भारती नाम वृत्तिः। "तस्याः प्ररोचना वीथी तथा प्रहसनामुखे। अङ्गानि—" इति दर्पणोक्तेः कविनैपुण्यप्रकटनेन

एषोऽहं कार्य्यवशादायोध्यिकस्तदानीन्तनश्च संवृत्तः (ड)। [समन्तादवलोक्य।] भो भोः! यदि तावदत्रभवतः पौलस्त्यकुलधूमकेतोः (ढ) महाराजरामस्य अयम् अभिषेकसमयो

अभिनयदर्शनादौ सभ्यानां प्रहृष्यन्मुखीकरणात् प्ररोचना। तल्लक्षणं यथा,—"निवेदनं प्रयोज्यस्य निर्देशो देशकालयोः। कविकाव्यनटादीनां प्रशंसा तु प्ररोचना" ॥ इति। [अत्र वाग्देव्याः वश्यात्वेन सम्भावनात् इवशब्देन च तत्प्रकाशनात् वाच्यगुणोत्प्रेक्षाऽलङ्कारः। यत्र विशेषणादिमहिम्ना वैचित्र्यविशेषाधायकत्वं तत्रैवोपमाध्वनेर्विषयः, अत्र तु विशेषणायोगात् उत्प्रेक्षालङ्कारेणैव तद्वैचित्र्यप्रतीतेश्च 'वश्या भार्य्या इव' इत्युपमाध्वनेर्नावसरः]।

[अत्र श्लोके "यं ब्राह्मणम्" इत्यत्र "यं ब्रह्माणम्" इति, "प्रयोक्ष्यते" इत्यत्र "प्रयुज्यते" इति च पाठान्तरं दृश्यते, तदर्थस्तु—ब्रह्माणं—ब्राह्मणं,—"ब्रह्मा विप्रः प्रजापतिः" इत्यभिधानात्; प्रयुज्यते—अभिनीयते इति। एतत्पाठे अर्थगतवैचित्र्याभावेऽपि अलङ्कारगतं वैचित्र्यमस्ति। यथा हि—अजयोनेः दुहिता सती सरस्वती वश्या सेविकेव नियतं नितरां तमुपतिष्ठते, तथैव स्वतः प्रतिभासमानशब्दब्रह्मणः आदिकवेः वाल्मीकेरिवास्य मनसि वशीभूता वाक् सततमुदगात् इति। एतेन च कवेः महामहिमशालित्वं कृतेश्च प्रख्यातेतिवृत्तत्वेन नाटकत्वं सूच्यते इति]। पथ्यावक्त्रं वृत्तं, लक्षणन्तूक्तं पुरस्तादिति ॥ २ ॥

(ड) एष सूत्रधारोऽहं कार्य्यवशात् प्रयोगानुष्ठानानुरोधाद्धेतोः अन्यतः आगतोऽपि अयोध्यायां भवः [“धन्वयोपधाद्वुञ्” (४।२।१२१ पा०) इति सूत्रेण वुञ्]; आयोध्यिकः अयोध्यावासी इत्यर्थः, तदानीन्तनश्च, इदानीन्तनोऽपि रामसामयिकश्च संवृत्तः सञ्जातः; तथा चाभिनेयवस्तुनः समधिकं सौष्ठवं सम्पादयितुं तात्त्विकतया च यथायथमुपवर्णयितुं तत्तद्देशाचारविज्ञानस्यास्ति प्रयोजनमिति विचार्य्य सूत्रधारेण अयोध्याजनपदवासिभूमिकेदानीमस्माभिरधिक्रियते इत्युक्तम्; एवञ्च रामभद्रस्य नियतमवितथमेव चरितमत्रोपवर्ण्यते इति सूचितम्। समन्तात्—परितः, अवलोक्य—निरीक्ष्य, तत्प्रयोजनन्तु नटानां सम्यक् सावहितत्वविज्ञापनार्थमिति।

(ढ) पुलस्त्यस्य ब्रह्मणो मानसपुत्रस्य दशानां प्रजापतीनामन्यतमस्य कस्यचित् मुनिविशेषस्य अपत्यं पुमानिति पौलस्त्यो विश्रवाः, तस्य तनुजः पौलस्त्यः रावणस्तस्य कुलं वंशः, राक्षसकुलम् इति यावत्, तस्य; धूमः केतुः चिह्नं यस्य स धूमकेतुः अग्निः तत्स्वरूपः, समूलनाशकत्वात्। [एतेन राक्षसकुलस्य तृणोपमत्वं व्यज्यते]। केचित्

रात्रिन्दिवम् (ण) असंहतानन्दनान्दीकः (त) तत् किमिति विश्रान्तचारणानि चत्वरस्थानानि ? (थ)।

तु—धूमकेतुः गगनोदितोत्पातविशेष इव प्रलयकारणं तस्य तथोक्तस्य, दशानन-कुलान्तकस्य इत्यर्थः इत्याहुः, तन्न सम्यक् मन्यन्ते केचन ; तथा हि तेषां मते—गगनोदित-धूमकेतुना हि न खेन विनाश्यन्ते लोकाः, किन्तु सकल-लोकसंहार-सूचकेन भूयते, इति प्रसिद्धिः। अत एव कालिदासः,—"उपप्लवाय लोकानां धूमकेतुरिवोत्थितः" इति ; माघे च "शत्रूणामनिशं विनाशपिशुनः * * * * केतुश्चकारास्पदम्" इति। सत्यप्येवं, विवदमानां विविधवादे बहूनामेव कवीनां नाशकत्वार्थाभिप्रायेणैव धूमकेतुशब्दप्रयोगदर्शनात् "पौलस्त्यधूमकेतोः" इत्यस्य दशमुखकुलान्तकस्य इत्यर्थः एव समीचीन इति मन्यामहे ; एतदभिप्रेत्यैव कविभिरस्य शब्दस्योपादानं बहुशः कृतम्। तत्र तु दिङ्मात्रमुदाह्रियते ; तथा हि जयदेवः,—"म्लेच्छनिवहनिधने कलयसि करवालं, धूमकेतुमिव किमपि करालम्" इति सुधीभिरवधातव्यम्।

(ण) रात्रिमिति।—रात्रौ च दिवा चेति रात्रिन्दिवम्। "अचतुर—" (५।४।७७ पा०) इत्यादिना द्वन्द्वाश्रयणात् रात्रेः "मान्तत्वं निपात्यते" इति काशिका।

(त) असंहतेति।—असंहताः अविश्रान्ताः, अविरतमनुष्ठीयमाना इत्यर्थः ; आनन्दयन्ति इति आनन्दाः आनन्दजनिकाः नान्द्यः मङ्गलजनिकाः तौर्य्यत्रिकरूपाः प्रीतिवहाः क्रिया यस्मिन् अभिषेकसमये स तथोक्तः, [ समयविशेषणमेतत् ] अविश्रान्तानन्दसन्दोहरमणीयः इत्यर्थः।

(थ) तदिति।—तत् तदा किमिति कथं विश्रान्ताः निरुद्यमाः अभिनयादि-व्यापारविरताः ? तूष्णीम्भूता इत्यर्थः। चारयन्ति प्रथयन्ति कीर्त्तिमिति चारणाः नटा येषु तानि तथोक्तानि चत्वरस्थानानि अङ्गनभूमयः। [ चर-धातोः औणा-दिकः अरन् ] यद्वा,—विश्रान्ताः स्वस्वव्यापारतो विरताः चारणाः अधिकारिणः पुरुषाः येषु तथोक्ताः। निर्व्यापारतया चत्वरेषु उपविश्य चाराः विश्राम्यन्तीति भावः। [ महाराजरामभद्राभिषेकसमयः प्रकृतिजनानन्दविधायी कथंकारं हि समुत्सुकैः सद्भिः पौरजानपदैः न नीयते ? इति प्रस्तावनाऽवतारणाफलकं नटस्याभिधानमूहनीयम् ]। अत्र हि रामभद्राभिषेकसम्प्रत्यये अविश्रान्त नान्दी-पाठात् चारणप्रवेशाभाव इदानीं सूच्यते, तेन पुनश्चारणाः चत्वरेषु विश्राम्यन्ति इति।

नटः। [प्रविश्य] भाव! प्रेषिता हि इतः स्वगृहात् महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्ग-राक्षसाः, सभाजनोपस्थायिनो नानादिगन्तागता ब्रह्मर्षयो राजर्षयश्च, (ट) यदाराधनाय एतावतो दिवसान् उत्सव आसीत् (ध)।

---

अथवा यतः नान्दीपाठस्य विरामाभावः अभिषेकस्य विघ्नबाहुल्यशङ्कया अभीक्ष्णमनुष्ठीयते तत् तस्मात् किम्? चलरङ्गस्थानेषु चारणा विश्राम्यन्ति इति सूत्रधारप्रश्नाशयः।

(ट) भावेत्यादि।—भावेति सूत्रधारसम्बोधनम्। भावयति ख्यापयति प्रयोगमिति भावः सूत्रधारः। "सूत्रधारं वदेद्भावम्" इति साहित्यदर्पणे, 'भावो विद्वान्' इत्यमरकोषे च। प्रेषिताः,—स्वस्थानं प्रति समुचितसत्कारं विधाय गमनार्थमनुमताः। इतः अस्या अयोध्याया इत्यर्थः। प्लवन्तः सन्तो गच्छन्तीति प्लवङ्गाः वानराः उपलक्षणात् भल्लूका अपि, सुग्रीवहनुमज्जाम्बवदादयः, ते च राक्षसाः विभीषणादयश्चेति तथोक्ताः। [रक्ष्यते हविः अस्मादिति, रक्षतेः असुन्, रक्षांस्येव राक्षसाः स्वार्थे अण्]। सभाजनाय अभिषिच्यमानस्य रामस्य संवर्द्धनाय उपहारादिभिः उपतिष्ठन्ते ये तथोक्ताः, रामं प्रीणयितुमभीप्सवः इत्यर्थः। "समाजोपस्थायिनः" इति पाठे तु—योगिनामूर्द्ध्वरेतसामन्येषाञ्च सधर्म्मणां समूहमुपस्थातुं शीलं येषां तथाभूताः इत्यर्थः; "पशूनां समजोऽन्येषां समाजोऽथ सधर्म्मिणाम्" इत्यमरः। नानादिगन्तागता इति।—नाना बह्व्यः याः दिशः तासामन्तः सीमा तस्मात् अपि आगताः उपस्थिताः, सर्वस्याः दिशः विदिशश्च आयाताः। ["नानादिगन्तपावनाः" इति पाठे तु—नानादिगन्तानां बह्वीनां दिशां पावनाः, स्वाधिष्ठानेनाभिक्रमणेन च तांस्तान् दिगन्तान् पूतीकुर्वन्तः अयोध्यामागताः इत्यर्थः]। "स्वभावे च स्वरूपे च अन्तं शेषे पुमानपि। नाशे प्रान्ते च सीमायां निश्चयेऽवयवे पुमान्॥" इति कोषः। ब्रह्माणश्च ते ऋषयश्चेति ब्रह्मर्षयः, राजानश्च ते ऋषयश्चेति राजर्षयः, [उभयत्रापि कर्मधारयः]। ब्राह्मणा ऋषयः वशिष्ठादयः, क्षत्रिया ऋषयः जनकादयः, इति विविधा ऋषयो निमन्त्रिता आसन्।

(ध) यदाराधनायेति—यान् यानेव महाभागान् आराधयितुं तोषयितुमेतावतः इयतः दिवसान् अहानि व्याप्येत्यर्थः [‘कालाध्वनोरत्यन्तसंयोगे’ (२।३।५ पा०) इति द्वितीया] उत्सवः आसीदिति, इदानीमेव ते स्वगृहं प्रति प्रस्थिताः, अत एव हि निवृत्तव्रततया मूलचारणसहचरणानि चलरङ्गस्थानानि दृश्यन्ते इति भावः।

सम्प्रति हि।—

वशिष्ठाऽधिष्ठिता देव्यो गता राघवमातरः।
अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम्॥ ३॥

सूत्र। वैदेहिकोऽस्मीति पृच्छामि कः पुनरसौ जामाता?(न)

नटः। कन्यां दशरथो राजा शान्तां नाम व्यजीजनत्।
अपत्यकृतिकां राज्ञे लोमपादाय यां ददौ॥ ४॥

---

उत्सवाभावे कारणान्तरमपि दर्शयति, वशिष्ठेति।—वशिष्ठेन तन्नाम्ना रघुकुलगुरुणा अधिष्ठिताः अधिनायकत्वभूमिकामधिष्ठाय नीयमानाः, अग्रेसरस्य वशिष्ठस्यानुपदं क्रममाणाः इत्यर्थः, देव्यो राघवमातरः कौशल्यादयः, अरुन्धतीं वशिष्ठपत्नीं पुरस्कृत्य अग्रे कृत्वा, यज्ञे द्वादशवार्षिकक्रतौ, तन्निमित्तमित्यर्थः, [“निमित्तात् कर्मयोगे” इति वार्त्तिकेन, यन्निमित्तिका क्रिया तस्मादेव सप्तमी अनुशिष्टा, तथा च “वस्त्रेषु रजकमवधीत् कृष्णः” इत्यादयः प्रयोगाः सङ्गच्छन्ते। निमित्तकर्मणोरवयवावयवित्वादिलक्षणसमवायसम्बन्धावच्छिन्नाधेयत्वाद्यवगाहिप्रतीतौ सत्यामेव निमित्तवत्पदोत्तरं सप्तमीति केचित्; तथा च तेषां मते यज्ञोद्देश्यकजामाश्रम-कर्मकं यदतीतगमनं तदनुकूलकृतिमत्यः देव्यः इत्याकारकोऽन्वयबोधः। अत एव “चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्” इत्यादि सिद्धम्। यतो हि समवाय-संसर्गावगाहिप्रतीतौ निमित्तबोधकात् सप्तमी विहिता, अत एव, “मुक्ताफलाय करिणं हरिणं पलाय” इत्यादयः अपप्रयोगा एव इति वदन्ति]। जामातुः ऋष्य-शृङ्गस्य आश्रमं तपोवनं गताः प्रतस्थिरे। लौकिकाचारं सम्यक् संरचितुं महर्षिः केवलं स्वयमगत्वा स्वपत्नीमरुन्धतीमूरीकृत्य ययावित्यभिप्रायः। ऋष्यशृङ्गस्तु कथं हि जामाता आसीत् तदुपरिष्टात् व्यक्तीभविष्यति॥ ३॥

(न) वैदेशिक इति।—वैदेशिकः विदेशवास्तव्यः अन्यदेशीयः, अभिनेतुमेव इदानीं वितथाऽऽयोधिकभूमिकामधिगतः, अस्मि भवामि, अहमिति शेषः, इति—अस्माद्धेतोः, पृच्छामि इत्युत्तरेणान्वयः; तथा च न पूर्वापरवाक्यविरोधः, अत एव “पृच्छामि कः पुनः” इत्यादिप्रश्नावसरः आयाति। [अस्मीति—अहमर्थकमव्ययम् इत्यपि केचित्। पुनः,—वाक्यालङ्कारे]।

कथं हि मुनिः ऋष्यशृङ्गः तज्जामाता आसीत्?—तदेव व्यनक्ति, कन्या-मिति।—राजा दशरथः शान्तां नाम कन्यां दुहितरं व्यजीजनत् उत्पादयामास

[ देवादिकजनिधातोः पिजन्तात् लुङि रूपम् ]। अपत्यकृतिकां अपत्याय अपत्यदेय-पिण्डोदकादिसम्पत्तये अपत्यार्पितपिण्डादिकं लब्धुमिति भावः, कृतिः करणं ग्रहणमिति यावत् यस्याः तां [ "शेषाद्विभाषा" ( ५।४।१५४ पा० ) इति सूत्रेण कप् ] दत्तिमां सुतामित्यर्थः, यां शान्तां नाम कन्यां राज्ञे लोमपादाय अङ्गाधिपाय ददौ अदितेति, लोमपादस्यानपत्यत्वादिति भावः। अपुत्रो हि अङ्गराजः लोमपादः अन्तिमे वयसि स्थितः स्वप्रियसखं दशरथं तद्दुहितरं शान्ताम् अपत्याय ययाचे किल, ततश्च अधिगतां तां मुनये ऋष्यशृङ्गाय दातुमैषीत्, मुनिस्तस्मै तामुपयेमे। तथा च रामायणे, ऋष्यशृङ्गं प्रति लोमपादवाक्यम्।—

"अयं राजा दशरथः सखा मे दयितः सुहृत्।
अपत्यार्थं ममानेन दत्तयं वरवर्णिनी॥
याचमानस्य मे ब्रह्मन्! शान्ता प्रियतमा मम।
सोऽयं ते श्वशुरो धीर! यथैवाहं तथा नृपः"॥ इत्यादि।

अत एव हि लोमपादस्य जामातरि ऋष्यशृङ्गे राज्ञः दशरथस्य जामातृत्वसम्बन्धः न विरुध्यते। सुष्ठु सङ्गच्छते पुनः रामस्य मातरः जामातुराश्रमं गताः इति कवीरितं वचः। अपि च,—

"अपुत्रस्त्वङ्गराजो वै लोमपाद इति श्रुतः।
स राजानं दशरथ प्रार्थयिष्यति भूमिपः॥
अनपत्योऽस्मि धर्मज्ञ! कन्येयं मम दीयताम्।
शान्ता शान्तेन मनसा पुत्रार्थं वरवर्णिनी॥
ततो राजा दशरथो मनसाऽभिविचिन्त्य च।
दास्यते तां तदा कन्यां शान्तामङ्गाधिपाय सः॥
प्रतिगृह्य च तां कन्यां स राजा विगतज्वरः।
स्वपुरं यास्यति प्रीतः कृतार्थेनान्तरात्मना॥
तां कन्यामृष्यशृङ्गाय प्रदास्यति स पार्थिवः।
ऋष्यशृङ्गोऽपि च प्रीतो लब्ध्वा भार्यां भविष्यति"॥ इत्यादि।

उद्धृतवचने "दीयतां" "दास्यते" "प्रतिगृह्य" इत्यादिशब्दैः दानविधिः स्पष्ट एव। तथा चापुत्र इत्युपसंहारदर्शनात् औरसपुत्रीवत् दत्तपुत्र्यापि पुत्रप्रतिनिधिः भवतीति गम्यते। यथाऽऽह मनुः,—

"सदृशन्तु प्रकुर्य्याद्यं गुणदोषविचक्षणम्।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः"॥ इति।

विभाण्डकसुतस्ताम् ऋष्यशृङ्ग उपयेमे, (प) तेन च साम्प्रतं

पुत्रमित्यत्र पुंस्त्वमविवक्षितं, स्त्रिया अपि कृत्रिमत्वादिकं सम्भवति, यथा "एवञ्च औरसदुहित्रभावे दौहित्रकृतलोकप्राप्त्यर्थं क्षेत्रजादिदुहितॄणामपि प्रतिनिधित्वेनोपादानं सिद्धमेव" इति दत्तकमीमांसा।

केचित्तु,—अपत्यकृतिकेतिपदं पुत्रिकाकरणाभिप्रायकं वदन्ति—"अस्या गर्भे यः पुत्रो जनिष्यते, स मम पुत्रो भविष्यति" इति समयपूर्वं या कन्या दीयते, सा हि कन्याप्रदातुः "पुत्रिका" इत्युच्यते। तथा च वशिष्ठः,—

"अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति" ॥

अपि च मनुः,—

"अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्।
यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम्।
अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिका।
विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः" ॥ इति।

एवञ्च सति, कृतस्य लोमपादस्य आत्मनः दुहितुरभावे सख्युः दशरथस्य दुहितरमादाय पुत्रिकाकरणमित्यवगम्यते इति वदन्ति; तत्तु न समीचीनमिति विभावयामः,—स्वात्मजायाः एव पुत्रिकाकरणस्य शास्त्रकृद्भिरनुशिष्टत्वादिति ॥ ४ ॥

(प) विभाण्डकेति।—पश्चात् विभाण्डकस्य तदाख्यस्य मुनेः सुतः पुत्रः ऋष्यशृङ्गस्तां कन्यां शान्ताम् उपयेमे उदवोढ़। ["उपात् यमः स्वकरणे" (१।३।५६। पा०) इति सूत्रेण स्वकरणरूपोद्वाहार्थबोधनादात्मनेपदम्]। "कथं हि ब्राह्मणः सन् ऋष्यशृङ्गः क्षत्रियतनयां शान्तां परिणिनाय?" इति नैव शङ्का कार्य्या, असवर्णविवाहस्तु कलीतरयुगेषु अविगीतः शास्त्रकृतामनुमतश्च आसीत्। तथा च मनुः,—

"शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृतः।
ते च स्वा चैव राज्ञः स्युः ताश्च स्वा चाग्रजन्मनः ॥" इति।

कलौ त्वसवर्णाया अविवाह्यत्वमधिकृत्यादित्यपुराणं, व्यवस्थापूर्व्वकं पुरा बुधैः कर्म्माण्येतानि अधस्तात्रस्तापि निवर्त्तितानि इत्याह। यथा,—

"दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः।
देवरेण सुतोत्पत्तिः दत्तकन्या प्रदीयते ॥

द्वादशवार्षिकं सत्रमारब्धम्; (फ) तदनुरोधात् कठोरगर्भामपि वधूं जानकीं विमुच्य गुरुजनस्तत्र गत इति (ब)।

सूत्र। तत् किमनेन? एहि राजद्वारमेव स्वजातिसमयेन उपतिष्ठावः (भ)।

नटः। तेन हि निरूपयतु राज्ञः सुपरिशुद्धामुपस्थानस्तोत्र-पद्धतिं भावः (म)।

---

कन्यानामसवर्णानां विवाहश्च द्विजातिभिः।
आततायि-द्विजाग्र्याणां धर्मयुद्धेऽनिर्हिंसनम्" ॥ इत्यादि।

(फ) तेनेति।—तेन च ऋष्यशृङ्गेण, द्वादशवर्षं भावि इति द्वादशवार्षिकं, द्वादशवर्षसाध्यम् इत्यर्थः, [''तमधीष्टो भृतो भूतो भावी"(५।१।८० पा०) इति सूत्रेण ठकि "वर्षस्याभविष्यति"(७।३।१६ पा०) इति सूत्रेण उत्तरपदवृद्धिः]। सत्रं—यज्ञः, आरब्धम्—उपक्रान्तम्।

(ब) तदिति।—तस्य आरब्धयज्ञस्य जामातुः ऋष्यशृङ्गस्य अनुरोधात् अभिलाषात्, प्रार्थनया इति यावत्, कठोरः पूर्णो गर्भो यस्याः तथोक्तामपि [अपिकारस्तु तस्याः त्यागायोग्यतां सूचयति]। वधूं स्नुषां जानकीं विमुच्य त्यक्त्वा गुरुजनः श्वश्रूजनः कौशल्यादिस्तत्र तदीययज्ञस्थाने गतः; गुरुसङ्घः ऋष्यशृङ्गस्य यज्ञवाटमियायेत्यर्थः।

(भ) तदिति।—तत् तदा, अनेन तत्तद्विषयकालोचनया वृथाकालहरणेनेत्यर्थः, किम्? तदालोचनं निष्प्रयोजनमिति भावः। "तत् किमन्येन" इति पाठे—यद्येवं तदन्येन अन्यकार्य्येण राजसमीपगमनादन्येन कार्य्येणेत्यर्थः, किं किंप्रयोजनम्? एहि आगच्छ, स्वजातिसमयेन स्वजात्याः चारणजात्याः समयेन राजस्तुतिरूपेण समुदिताचारेण तथाविधमाचारमाश्रित्येत्यर्थः। "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः। राजद्वारमेव उपतिष्ठावः गच्छावः। [अत्र उपतिष्ठतेः देवपूजार्थत्वाभावात् नात्मनेपदम्]।

(म) तेनेति।—तेन हि आवयोः इदानीं राजसमीपोपस्थानोचितत्वेन हेतुना, सुपरिशुद्धां सर्वथा दोषरहितां सर्वावयवेषु अनिन्दितामित्यर्थः, उपस्थानस्य उपासनायाः या स्तोत्रपद्धतिः स्तुतिप्रणाली तां नृपोचितस्तोत्रप्रकारमित्यर्थः। निरूपयतु भावः,—निश्चिनोतु, विमृश्यावधारतु भवानित्यर्थः। राज्ञामुपस्थानसमये यादृशी स्तोत्रपद्धतिरनुसर्त्तुमुचिता अगर्हणीया च भवति तथाविधमेव स्तोत्रप्रकारमिदानीमनुसर इत्याशयः।

सूत्र। मारिष ! (य)।—

सर्वथा व्यवहर्त्तव्ये कुतो ह्यवचनीयता।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः॥ ५॥

(य) मारिष !—आर्य्य ! आर्य्यार्थप्रतिपादको नाटकादिषु एव प्रयोज्य एष शब्दः। तथाहि भरतः,—"किञ्चिदूनस्तु मारिषः" इति, "आर्य्यस्तु मारिषः" इत्यमरश्च। [ रेषतः निषेधार्थकमाशब्देन एकपदीभावः, तथा च मा—न, रेषति दुष्टाभिनयेन सभ्यानां शान्तिं हिनस्ति इति व्युत्पत्त्या मारिषशब्दः नटानाम् अभिनयसौष्ठव-परीक्षकाणां सम्बुद्धार्थाभिधायकः। तथा च साहित्यदर्पणे—"सूत्रधारं वदेत् भाव इति वै पारिपार्श्विकः। सूत्रधारो मारिषेति—" इत्यादि। "मारिषः शाकभिदार्य्ये नाट्योक्तौ पुंसि योषिति" इति मेदिनी ]।

नीचाशयाः परोत्कर्षमसहमानाः स्वाभिप्रायानुसारतः अनिन्द्यमपि वस्तु गर्हयन्ति, अतः तत्समाधानमसमाकलय्य स्वकृत्ये यतितव्यमन्यथा कर्त्तव्यार्थहानिः स्यादित्यभि-प्रायेणाह, सर्वथेति।—व्यवहर्त्तव्ये व्यवहार्य्ये सर्वेषां समालोचनीय इत्यर्थः, वस्तुनि सर्वथा सर्वप्रकारेण अवचनीयता अनिन्द्यता कुतः ? दुर्जनसङ्कुले इह जगति सा कथमपि न सम्भवतीति भावः। जनापवादभयं विहाय राजस्तुतिरूपमधुना व्यवहर्त्तव्यमभीष्टं वस्तु अस्माभिः योग्यताऽनुसारतः सम्पादयितुमीहनीयम् इत्याशयः। हि—निश्चये। लोकनिन्दाया अपरिहार्य्यत्वमर्थान्तरन्यासेन द्रढयति, तथेति।—जनः लोकः स्त्रीणां सतीनां योषितां साधुत्वे पांशुलत्वादिदोषराहित्ये सत्यपि साध्वी-नामपि विशुद्धे चरिते इत्याशयः, यथा दुर्जनः खलः भवतीति शेषः, अयथाऽपवाद-मुद्भावयतीत्यर्थः, तथा वाचां कविवचसां साधुत्वे निराकाङ्क्षत्वादिदोषापरामृष्टत्वेऽपि माधुर्य्योज्ज्वल्यादिविषये स्वभावत एव दुर्जनः असूयति ;—सर्वथा दोषासम्पृक्तायां वनितायामिव सत्कविभणितौ दुर्ज्जनः खलः प्रकृत्या खलु दोषदर्शी भवतीति भावः। "दोषदर्शित्वमेव दौर्जन्यम्" इति संक्षेपः।("पिशुनो दुर्ज्जनः खलः" इत्यमरः)। तथा च लौकिकानामाभाणकः,—"काव्ये भव्यतमेऽपि विज्ञनिवहैरास्वाद्यमाने मुहुः दोषा-न्वेषणमेव मत्सरजुषां नैसर्गिको दुर्ग्रहः। कासारेऽपि विकासिपङ्कजचये खेलन्मराले पुनः क्रौञ्चश्चञ्चुपुटेन कुञ्चितवपुः शम्बूकमन्विष्यति॥" इति।

[अत्र व्यवहर्त्तव्ये वस्तुनि वचनीयत्वाभावरूपं कार्य्यं, निर्दोषासु वाक्षु दुर्जनानां स्वाभाविकासूयाकारित्वरूपस्य कारणस्य समर्थकम्, अतः पूर्व्ववाक्यं प्रति परार्द्ध-वाक्यस्य भङ्ग्यन्तरेण समर्थकत्वात् कार्य्येण कारणसमर्थनरूपाऽर्थान्तरन्यासालङ्कारः,

नटः ।- अतिदुर्जनः इति वक्तव्यम् (२) ;—

देव्यामपि हि वैदेह्यां सापवादो यतो जनः ।
रक्षोगृहे स्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः !! ॥ ६ ॥

उत्तरार्द्धगतोपमयाऽङ्गाङ्गिभावेन सङ्गीर्य्यते । अवचनीयतेत्यत्र नञः पर्य्युदासरूपत्वेन "अमुक्ता" इतिवत् समासे गुणीभावात् विधेयतानवगमः । परन्तु अत्र प्रसज्य-प्रतिषेधार्थकत्वेन विधेयत्वमेवोचितमिति अविमृष्टविधेयांशकत्वरूपो दोषो ज्ञेयः । "सर्वथा व्यवहर्त्तव्यम्" इति पाठे तु,—सर्वथा अपवादभीतिं परित्यज्य व्यवहर्त्तव्यं राजस्तुतिरूपमभीप्सितं कर्म समाचरणीयमित्यर्थः । यतः पद्धतेरतिशुद्धत्वेऽपि निन्दा-परिहारसम्भावना नास्तीति भावः ।

अथैतत् प्रथमाङ्के नानार्थरसोत्पादकहेतुतया वर्णितस्य सीताविवासनरूप-प्रयोजनैकसङ्गतकथांशभूतस्य आलेख्यसन्दर्शनस्य प्रारम्भेण समायुक्तत्वात् पञ्च-सन्ध्यन्तर्गतबीजसन्धेः समाधानरूपमङ्गं वेदितव्यम् ; यतोऽत्रैव सतीनामपि धुरि कीर्त्तनीयायां कुलललनाऽनुकरणीयचरितायां विदेहराजतनयायां दुराशयैरयथा-ऽपवादः वितनिष्यते इति बीजार्थागमनं सूचितम् ; तथाहि—"बीजस्यागमनं यत्तु तत्समाधानमुच्यते" इति लक्षणात् । एवञ्च वचनीयत्वस्य अवर्जनीयत्वात् व्यवहार-विलयप्रसङ्गाच्च कुलक्रमागतं राजस्तुतिरूपं कर्म अस्माभिरवश्यमेवानुष्ठेयमिति सूत्रधाराशयः ] ॥ ५ ॥

(२) अतिदुर्जन इति ।—अग्निशुद्धिरूपं बाधकप्रमाणमविश्वस्याविगणय्य च विषय-प्रभावं सर्वथा वितथस्यासतोऽपि दोषस्य उत्कीर्त्तनात् ते अतिदुर्जना एव इति निश्चयः । अतः "अतिदुर्जनः" इति वक्तव्यं, न तु केवलं दुर्जन इति भावः ।

गर्भितबीजोन्मेषव्यपदेशेन, अतिदुर्जन इति वक्तव्यतायां हेतुमाह, देव्यामिति ।—यतो यस्मात् जनो लोकः, [ जातावेकवचनम् ] देव्यां दीप्तिमत्यां [ देवीपदो-पादानात् पूतचारित्र्यं ध्वन्यते] साध्वीनामादर्शभूतायामित्यर्थः, विदेहस्य जीवन्मुक्तस्य राजर्षेः जनकस्य [देहाभिमानशून्यस्य इत्यर्थोऽपि ध्वन्यते] अपत्यभूतायाम् [एतेन सत्-कुलसम्भूतत्व मुज्ञातिशय्यञ्च ध्वनितम् ] वैदेह्यामपि सर्वथा निर्दोषायामपि [अपिशब्दः अपवादायोग्यत्वं व्यनक्ति ] जानक्यां सापवादः अयथाऽपवाददानेऽपि न शङ्काकुलः इत्यर्थः । ततः अतिदुर्जन इति वक्तव्यमिति भावः । अथ निन्दामूलं हृढं चेत् तदपायार्थप्रतीकारश्च न सम्यगित्याशङ्क्याह, रक्ष इति ।—रक्षसो राक्षसस्य रावणस्य गृहे भवने [रक्षःशब्दोपादानात् दुःशीलत्वं सूचितं ] स्थितिर्वास एव अस्य अपवादस्य

मूलं कारणम् [स्थितिशब्देन च चिरकालीनत्वं सूचितं, मूलशब्दाच्च अग्निपरीक्षया निर्मूलीकृतायामपि तस्यां मूलसत्त्वात् अपवादपादपस्य पुनः प्ररोहसम्भावना अस्तीति ध्वनितम् ]। अत्रायं भावः,—असङ्कया वैदेही असहृतलङ्काधिपभवन-मधिष्ठाय कियन्तं कालं निनाय, तावन्मात्रमेव मूलमवलम्ब्य दुर्जनाः "तच्चरितभ्रंशो जातः" इति शङ्कमानाः पूतचरितायां तस्याम् अयथा परिवादमारोपयन्ति इति। ननु अग्निदाहशुद्ध्या दग्धीभूतापवादपादपस्य कथं हि पुनः प्ररोहः उदपादि ?—इत्या-शङ्काह, अपीति।—अग्निशुद्धौ रावणवधानन्तरं वह्निपरीक्षया सम्यक् विशोधितायां सत्यामपि तस्यां जानक्याम्,अनिश्चयः,—सीता तात्त्विकतया विशुद्धचरिता न वेति सर्वे एवं अयोध्यावासिनः सन्दिहन्ति। अग्निशुद्धावित्यनेन बाधप्रमाणमुक्तम्; तथा च बाध-ज्ञानसत्त्वे कथं हि संशयः? इति तु न शङ्कनीयं, तस्याप्रामाण्यशङ्कायत्तत्वात्,अप्रामाण्य-शङ्काभावविशिष्टस्यैव बाधज्ञानस्य प्रतिबन्धकत्वनियमात्; अथवा—वह्निपरीक्षायाम् अनिश्चयः अप्रत्ययः, तत्र संशयः अस्त्येव जनानाम्। तथा च अग्निपरीक्षायाः लङ्काया-मेव समाहितत्वात् अयोध्यातः लङ्कायाः सुदूरावस्थितत्वाच्च "वह्निपरीक्षा भूता न वा" इति सर्वे एवायोध्यावास्तव्याः दुर्जनाः शङ्कन्ते इति भावः। [तुशब्दस्तु वैलक्षण्यं द्योतयति, तथा च रक्षोगृहावस्थितेः अग्निपरीक्षायाश्च उभयोरेव सम-देशिकत्वे समकालिकत्वेऽपि एकस्य विश्वसिति अपरस्य न विश्वसिति इति महत् वैषम्यमागच्छति, तेन अयोध्यावासिनामतिदौर्जन्यं ध्वनितम्।

एतद्धि, वैदेहीविवासनादिसम्वलितेतिवृत्तलक्षणप्रस्तुताभिधेयरूपकाव्यार्थस्य समुत्पत्तिरूपतया "सर्वथा ऋषयः देवताश्च श्रेयो विधास्यन्ति" इत्यादि वक्ष्यमाण-वचसा च वाल्मीकिः भागीरथ्याश्च विक्लवायाः प्राणवियोगव्यवसितायाः सीतायाः समाश्वासनरूपकाव्यार्थोत्पत्तिरूपतया च मुखसन्धेरुपक्षेपरूपमङ्गं वेदितव्यम्; तथा हि "काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः" इति लक्षणात्। एतेन लोकापवाद-स्यापरिहार्यतया भिया सतीनामिव वाचां वर्जनमनौचित्यमिति गम्यते। इति कथोद्घातः।

अत्र प्रकृतदोषकारणासत्त्वेऽपि अपवादरूपकार्योत्पाददर्शनात् विभावना, परार्द्धे च अग्निशुद्धिरूपहेतुसद्भावेऽपि पूतत्वविषयकनिश्चयरूपकार्याभावदर्शनात् विशेषोक्तिः, इत्यनयोः विभावना-विशेषोक्त्योः नैरपेक्ष्येणैवावस्थानात् संसृष्टिः। अग्निशुद्धौ इत्यत्र अपिशब्दस्यावश्यवाच्यत्वात् तदनभिधानात् वाच्यस्यानभिधानरूपो दोषः; अपि च अनिश्चय इत्यत्र प्रसज्यप्रतिषेधस्य नञः समासे गुणीभावात् पूर्ववत् अविमृष्टविधेयांशभावरूपः दोषः उन्नेयः ] ॥ ६ ॥

सूत्र। यदि पुनरियं किंवदन्ती महाराजं प्रति स्पृशेत्, ततो-ऽतिकष्टं स्यात् (ल)।

नटः। सर्वथा ऋषयो देवताश्च श्रेयो विधास्यन्ति (व)। [परिक्रम्य (श)] भो भोः! क्व इदानीं महाराजः? [आकर्ण्य](ष) एवं जनाः कथयन्ति।—

स्नेहात् सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान्।

---

(ल) यदीति।—यदि पुनः यदिशब्दार्थकमव्ययद्वयं विस्मयसम्मिलितसम्भावनारूपार्थमावेदयति, सूचकमेतदप्यन्यत् सीताविवासनबीजमवधेयम्। एतेन प्रथमाङ्कार्थः सूचितः। किंवदन्ती—अलीकलोकापवाद इत्यर्थः, महाराजं रामभद्रं प्रति, स्पृशेत् कर्णाकर्णिकतया गच्छेत्, महाराजः तां शृणुयादित्यर्थः। ("महाराजं प्रति स्यात्" इत्यपि पाठः दृश्यते, महाराजमधिकृत्य भवेत्, तद्वाच्यापवादमवलम्ब्य उदियादित्यर्थः। "किंवदन्ती जनश्रुतिः" इत्यमरः)। ततस्तदा अतिकष्टमतिशयमनःक्षोभकारणं भवेत्। रामं प्रति इयं किंवदन्ती नः निरतिशयं व्यथयिष्यतीति भावः। ["राजाहःसखिभ्यष्टच्" (५।४।९१ पा०) इति सूत्रेण टच्प्रत्ययेन महाराज इति पदं सिद्धम्। "परिस्यन्देत्" इति पाठे तु—महाराजश्रवणान्तिकं शनैर्गच्छेदित्यर्थः। पाठोऽयं साधीयस्तया प्रतिभाति]।

(व) ऋषयो वशिष्ठादयः, देवता ब्रह्मादयश्च, सर्वथा सर्वप्रकारेण श्रेयो मङ्गलं विधास्यन्ति करिष्यन्ति, [सान्त्वनावाक्यमेतत्]। एवंविधपुण्यव्रतस्य महात्मनो रामस्य पतिव्रतायाः सीतायाश्च न कदाचिदपि देवा ऋषयश्चाशुभं सहिष्यन्ते, प्रत्युत शुभमेव विधास्यन्ति, अतो नाशुभमाशङ्कनीयमिति भावः। [एतेन महर्षिणा वाल्मीकिना भगवत्या पृथिव्या च अस्याः समाश्वासनरूपावशिष्टाङ्कार्थः सूचितः]।

(श) परिक्रम्य—राजभवनगमनार्थमिव कियन्ति पदान्तराणि गत्वेत्यर्थः।

(ष) आकर्ण्येति।—जनानामुत्तरमाकर्णयितुं दत्तावधान इव इत्यर्थः। इदमाकाशभाषितमुच्यते। तल्लक्षणञ्च—"अप्रविष्टैः सहालापः भवेदाकाशभाषितम्" इति।

किं कथयन्तीत्याह, स्नेहादिति।—जनको विदेहाधिपः स्नेहात् प्रीत्या सभाजयितुं सम्भाषणादिना वनात् प्रतिनिवृत्तं राज्ये चाभिषिक्तं रामं संवर्द्धयितुं, सत्कर्तुमिति यावत्, सीताञ्च प्रीणयितुमित्यर्थः। [चौरादिकस्य सभाजधातोः तुमुन्]

देव्यास्ततो विमनसः परिसान्त्वनाय
धर्मासनाद् विशति वासगृहं नरेन्द्रः ॥ ७ ॥

इति निष्क्रान्तौ (ख)।

.इति प्रस्तावना (ङ)।

---

एत्य, मिथिलातः अयोध्यायाः राजभवनमागत्येत्यर्थः; अमूनि एतानि, दिनानि दिवसान्, उत्सवेन आनन्दव्यापारेण, नीत्वा यापयित्वा, अद्य विदेहान् विदेहानां जनपदं स्वराज्यमित्यर्थः, गतः प्रस्थितः। ततस्तस्मात् पितृगमनादित्यर्थः, विमनसः विमनायमानायाः देव्याः सीतायाः परिसान्त्वनाय विनोदनाय, नरेन्द्रो रामः, धर्मासनात् विचारासनात्, स्वीयसिंहासनात् इति यावत्,धर्मासनं परित्यज्येत्यर्थः, [ल्यब्लोपे पञ्चमी] वासगृहं शुद्धान्तं विशति प्रविशति। राजकार्य्यमपि परित्यज्य देव्याः परिसान्त्वनार्थं स्वयमेव याति इति [अनेन सीतां प्रति रामस्य स्नेहातिशयो द्योतितः]। वसन्ततिलकं वृत्तम्।—"ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति तल्लक्षणात्; चतुर्दशाक्षरपादेषु छन्दःसु २९३३ म-संख्यकः प्रस्तारो बोध्यः ॥ ७ ॥

(ख) इतीति।—इति इत्थं, मिथः सम्भाषणच्छलेन प्रस्तुतविषयमवतार्य्य नटसूत्रधारौ निष्क्रान्तौ, रङ्गान्निर्ययतुः।

(ङ) प्रस्तावना—आमुखं, प्रस्तुताक्षेपिणी मिथः सम्भाषणा इत्यर्थः। तथा हि,—"नटी विदूषको वापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा॥" इति साहित्यदर्पणम्। इत्यत्र प्रस्तावनाऽत्र प्रयोगातिशयरूपा ज्ञेया; तथा हि, एकस्मिन् प्रयोगे, रामभद्राभिषेचनमधिकृत्य नटानां प्रासङ्गिकाभिनयव्यापारसौष्ठवावगाहिनि अन्योऽन्यालापे प्रवृत्ते, अन्यविधस्य प्रयोगस्य, राजर्षेः जनकस्य विदेहगमनात् विमनायमानां जानकीं समाश्वासयितुं रामभद्रस्य वासगृहप्रवेशरूपस्य प्रयोगान्तरस्य प्रयुक्तेः तेनैव च पात्रप्रवेशदर्शनात्,—"यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते। तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा॥" इति साहित्यदर्पणोक्तलक्षणस्य सङ्गतेः इति केचित् वदन्ति; तन्न समीचीनतया प्रतिभाति। यतः,—दर्शितप्रयोगयोरन्योऽन्यतादात्म्यगततथाविधभेदप्रतीतिविरहात् एकविधौ एव प्रयोगौ इति द्राक् प्रतीतिपथमागच्छति, महाराजरामभद्रस्योपचारकरणरूपैकनियोगमधिकृत्य प्रस्तुतस्य पात्रस्य प्रवेशोत्कीर्त्तनात्; तथा चात्र प्रस्तुतवृत्तान्तप्रतिपादकवाग्विशेषमवतार्य्य

[ ततः प्रविशति (क) आसनोपविष्टौ रामः सीता च ]।

रामः। देवि ! समाश्वसिहि, न हि ते गुरवश्चिरं शक्नुवन्ति अस्मान् वियोक्तुम् (ख)।—

निष्क्रान्तेन सूत्रधारेण विवर्णितविषयाश्रयं पात्रं रामभद्रं सीतासन्तोषणोद्विग्नमानसं कठोरगर्भगुर्वीं दोहदवतीं विमनायमानां सीतां प्रोत्साहयितुं वासगृहमनुप्रविश्य लोकपरिवादभीतेन भर्त्राऽनुष्ठितं चिराय तथाविधायाः विक्लवायाः सीतायाः वनाय विसर्जनरूपमुपक्षिप्तमर्थान्तरमन्यत् समाहितम् ; अत एवेषाऽवलगितरूपा एव प्रस्तावना ज्ञेया। तथा हि,—

"यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते।

प्रस्तुतेऽन्यत्र वाऽन्यत् स्यात् तच्चावलगितं द्विधा ॥ इति।

तत्राद्यं यथोत्तरचरिते। समुत्पन्नवनविहारगर्भदोहदायाः सीतायाः दोहदकार्य्यं अनुप्रविश्य जनापवादादरण्ये त्यागः" इति धनिकेन दशरूपके व्याख्यातम्।

अत्र त्वर्वाचीनाः,—

"कालं प्रवृत्तमाश्रित्य सूत्रधृक् यत्र वर्णयेत्।

तदाश्रयश्च पात्रस्य प्रवेशस्तत् प्रवर्त्तकम्" ॥ इति।

अन्येषामपि ग्रहणात् कालपदन्त्वत्र उपलक्षणमेव, सूत्रधारैरितप्रस्तुतविषयमधिकृत्य पात्रप्रवेशस्यैवात्र मुख्यत्वात्, अथवा—कालपदमत्र न केवलं शरदादिविशेषकालवाचकम्, अपि तु प्रवृत्तसंवादविषयकं यत्किञ्चिद्वस्तुवर्णनाऽभिप्रायकमिति। ननु—"आसादितप्रकटनिर्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तिः" इत्यादौ यद्यपि प्रवृत्तकालसमानगुणवर्णनया पात्रप्रवेशस्य सूचितत्वात् धनिकादिभिरपि एवमेवोक्तत्वाच्च कालविशेषमाश्रित्य कुत्रचित् कियच्च तत्तद्विषयकश्लेषमुखेण वर्णनं दृश्यते, तथापि तत्र केवलं नास्य ग्रन्थस्य तात्पर्य्यम् ; शरदाद्युपवर्णनन्तु सम्पातायातमिति वैचित्र्यविशेषाधानायैव श्लेषमुखेणाभिधानमिति वा, अन्यथाऽपि तस्याः सम्भवात् ; नो चेत् उक्तायाः क्वचिदन्तर्भावाभावात् प्रस्तावनायाः पञ्चविधत्वं व्याहन्येतेति सुधीभिः निभृतं विचारणीयमिति वदन्ति।

(क) अथाऽङ्कः प्रस्तूयते,—ततः इत्यादिना। तथा हि—"प्रत्यक्षचित्रचरितैर्युक्तः भावरसोद्भवैः। अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः ॥" इति दर्पणकारः। प्रविशति—अभिनयस्थले आविर्भवति इत्यर्थः।

(ख) समाश्वसिहि,—समाश्वस्ता भव, शोकं विजहीहीत्यर्थः। [समाङ्पूर्वकात्

किन्त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
सङ्कटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ ८ ॥

स्वसधातोः लोटि मध्यमपुरुषैकवचनम् । "रुदादिभ्यः—" (७।२।७६ पा०) इति सूत्रेण इट् ]। ते हि प्रसिद्धाः प्रसिद्धार्थकत्वात् तच्छब्दस्य न यच्छब्दापेक्षा । गुरवः,—तव पिता [ गौरवे बहुवचनम् ], अस्मान्—त्वां माञ्च [ "त्यदादीनां सहोक्तौ यत्परं तत् शिष्यते" इति नियमात् अस्मच्छब्दस्य शेषः, द्वित्वे बहुत्वम् ]। चिरं वियोक्तुं विहाय स्थातुमित्यर्थः, न शक्नुवन्ति, अस्मत्स्नेहाकुलाः त्वरितमेवागमिष्यन्ति इति भावः।

यदि तथा न शक्नुवन्ति, तदा किमिति अस्मान् परित्यज्य एतावत्कालान् तिष्ठन्तीत्याह, किन्त्विति।—किन्तु यत् तिष्ठति तत्र हेत्वन्तरं विरोधीति किन्-शब्दार्थः। किं तत् हेत्वन्तरमित्याह—अनुष्ठानानाम् अग्निहोत्रजपहोमादिपारत्रिक-कर्मणां नित्यत्वं अहरहः क्रियमाणत्वम्, अकरणे प्रत्यवायजनकत्व, सति सम्भवे अपरिहार्य्यत्व वा ; अथवा,—अनुष्ठानस्य वैवाहिकेऽग्नौ कर्त्तव्यतया उपदिष्टस्य साय-प्रातर्होमरूपस्य कर्मणः नित्यत्व नियतकर्त्तव्यत्वम् अनुल्लङ्घनीयत्वमित्यर्थः, [कर्त्तृपदम्]; स्वातन्त्र्यम् ऐहिककार्य्येषु स्वच्छन्दचारित्वम् अपकर्षति रुणद्धि, स्वैरावस्थानं न सहते इत्यर्थः ; शश्वत्पदकाङ्क्षिणां मुनीनां व्रतादिरूपपारत्रिकपुण्यकर्माणि तान् सांसारिक-विषयोपभोगादिकर्मभ्यो निवारयन्तीति भावः। हि तथा हि, एतदेव विशिष्य व्यनक्ती-त्यर्थः ; आहितः यथाविधि स्थापितोऽग्निर्यैस्ते तथोक्तानाम् अग्न्याहितानां साग्निकाना-मित्यर्थः, गृहस्थता गृहमेधिधर्मः, प्रत्यवायैः विघ्नभूतैः, नित्यकर्मबाहुल्यैरित्यर्थः, विहिताकरणजन्यैः पापैः वा, सङ्कटा—सं—सङ्कीर्णः कटः स्थानं यत्र तथोक्ता, विघ्न-बहुला सङ्कुला वा इत्यर्थः। "हेत्ववधारणप्रश्नविशेषेषु तथाहि हि" इति कोषः। "विघ्नोऽन्तरायः प्रत्यूहः" इत्यमरश्च। अवश्यकरणीयतत्तत्कर्मानुरोधेन अग्न्याहिता-नामन्यत्रावस्थितिः असम्भवा एव,—"यावज्जीवमग्निहोत्रं जुहोति" इति श्रुतिप्रति-पादितानाम् अनुष्ठानानां नित्यत्वात्। राजर्षिः जनकस्तु साग्निकः गृहमेधी आसीत्। साग्निका हि वैवाहिकेऽग्नौ सायंप्रातर्होमादिलक्षणं कर्म नित्यमेवानुतिष्ठन्ति, मृतानाञ्च तेषां तेनैव अग्निना आत्मनः दाहः विहितः ; तेषामुल्लङ्घने प्रत्यवायश्रुतेः। तदनुरोधा-देवासौ झटिति स्वगृहं प्रति निवृत्तः, न हि वात्सल्याभाववत्तया तान् जहौ।—

"निक्षिप्याग्निं स्वदारेषु परिकल्प्यार्त्विजं तथा ।
प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं वसेत् ॥"

इति शातातपवचनात्, विधिज्ञः राजर्षिः जनकः कियन्ति अहानि व्याप्य

सीता। जाणामि अज्जउत्त! जाणामि; किन्तु सन्दाव-आरिणो बन्धुजणविप्पओआ होन्ति (ग)। *

राम:। एवमेतत्, एते हि हृदयमर्म्मच्छिद: संसारभावा:; येभ्यो बीभत्समाना: सन्त्यज्य सर्वान् कामान् अरण्ये मनीषिणो विश्राम्यन्ति (घ)।

* जानामि आर्य्यपुत्र! जानामि; किन्तु सन्तापकारिणो बन्धुजनविप्रयोगा भवन्ति।

प्रवासं गत:, न पुन: चिरं तस्थौ। अग्निहोत्रादिनित्यकर्म्मणां प्रतिनिधिविधानं हि स्वल्पकालाभिप्रायकमिति सुधीभिरवधेयम्।

[ अत्र पराद्धंगतवाक्यार्थस्य पूर्व्वार्द्धं प्रति हेतुत्वेनोपन्यासात् पदार्थहेतुकं काव्य-लिङ्गम्; अपि च द्वितीयार्द्धगतसामान्येन प्रथमार्द्धगत: विशेषोऽर्थ: सोपपत्तिक: क्रियते, इति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास:; तयोश्चान्योऽन्यनैरपेक्ष्येणाव-स्थानाभावात् अङ्गाङ्गिभावेन सङ्कर:। न हि जनकप्रयाणरूपस्य कार्य्यस्यानु-ष्ठाननित्यत्वरूपैककारणे सत्यपि अन्यग्रन्तरेण खलेकपोतिकान्यायेन सङ्कटेत्यादिना कारणान्तरस्य प्रतिपादनात् समुच्चयोऽलङ्कार: शङ्कनीय:; तथा च प्रदर्शितकारणयो: तथाविधविच्छित्तिविशेषाभावात् अन्योऽन्यगतसूक्ष्मभेदाप्रतीतेश्च नायमस्यालङ्कारस्य विषय इति सुधीभिर्विभाव्यम् ] ॥ ८ ॥

(ग) आर्य्यपुत्रेति।—आर्य्यस्य गुरो: श्वशुरस्य पुत्र: सुत: इति पत्नीकृतं पति-सम्बोधनम्। जानामि जानामीति शोकावेगात् द्विरुक्तम्। तथा चोक्तम्;—"विषादे विस्मये हर्षे खेदे दैन्येऽवधारणे। प्रसादने सम्भ्रमे वा द्विस्त्रिरुक्तिर्नदुष्यति॥" इति। बन्धुजनानां पित्रादीनां विप्रयोगा: विरहा: सन्तापकारिण: भवन्ति खेदं जनयन्तीत्यर्थ:। अत्र अनीचानां योषितां भाषा शौरसेनी विज्ञेया।

(घ) एवमेतत्—एतदेवमेवम्प्रकारं, त्वया यदुक्तं तत् सत्यमेव इत्यर्थ:। एते—अनुभूयमानास्तत्सदृशाश्चान्ये इत्यर्थ:, हि—निश्चये, हृदयमर्म्मच्छिद:,—हृदयस्य मर्म्माणि जीवनस्थानानि सन्धिस्थानानि वा छिन्दन्तीति ते तथोक्ता: हृदयग्रन्थिविश्लेषका:, वैराग्यजनका इत्यर्थ:; संसारभावा:,—संसरति अस्मिन् इति व्युत्पत्त्या संसार:, प्राक्तनकर्म्मणां भोगाय यत्र हि पौन:पुन्येन प्रवर्त्तनं भवति इत्यर्थ:, तत्र ये भावा: विषयरूपा: विविधा: आगमापायिन: इति भाव:; शरीरपरिग्रहजन्यसुखदु:खसन्तति-

कञ्चुकी। (ङ) [प्रविश्य] रामभद्र !—" [इति अर्द्धोक्ते साशङ्कम्] (च) महाराज !

रामः। [सस्मितम्] (छ) आर्य्य ! ननु 'रामभद्र' इत्येव मां प्रति उपचारः शोभते तातपरिजनस्य ; तत् यथाऽभ्यस्त-मभिधीयताम्। (ज)

कञ्चु। देव ! ऋष्यशृङ्गाश्रमात् अष्टावक्रः (झ) सम्प्राप्तः।

---

रिति यावत्। तथा च बन्धुजनविप्रयोगः तदन्तर्भूत एव। येभ्यो विषयेभ्य इत्यर्थः, बीभत्समानाः [अधेश्चित्तविकारे स्वार्थे सन्, "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" इति पाणिनीयवार्त्तिकराद्वान्तेनापादाने पञ्चमी] जुगुप्समानाः विरक्ताः सन्त इत्यर्थः, [मनसः + ईषा मनीषा, सा विद्यते येषां ते] मनीषिणः मनसः वशीकर्त्तारः आत्मदर्शिनः इत्यर्थः, सर्वान्—सकलान्, काम्यन्ते ये ते कामाः विषयास्तान्, सन्त्यज्य सम्यग् विहाय विषयवासनां परिहाय इत्यर्थः ; अरण्ये—वने, विश्राम्यन्ति—शान्तिं लभन्ते, ईश्वरध्यानेन आत्मानं विनोदयन्तीति भावः। [संसारक्लेशाप-नोदनसूचनार्थं विश्राम्यन्तीति श्रमधातोः प्रयोगो युक्त एव। शमादित्वात् दीर्घः। अत्र काव्यलिङ्गम् अलङ्कारः]।

(ङ) कञ्चुकी—राज्ञः शुद्धान्तरक्षकः स्थविरः द्विजः ; तथाहि भरतः,—"अन्तः-पुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते। जरावैक्लव्ययुक्तेन विशेद् गात्रेण कञ्चुकी॥" इति।

(च) अर्द्धोक्ते साशङ्कमिति।—अर्द्धोक्ते—प्रयोक्तव्यवाक्यस्य कियदंशे उच्चारिते सति। साशङ्कम् इति।—अहो मया प्रभोर्महाराजस्य नामग्राहं सम्बोधनं कृतम् ! अतः अपराद्धो भवामि इति आशङ्काकारणम्।

(छ) सस्मितमिति।—ईषद्धिहस्येत्यर्थः।—"ईषद्विकासिनयनं स्मितं स्यात् स्पन्दिताधरम्" इति लक्षणात्।

(ज) उपचारः,—सेवाव्यवहारः, अयथार्थवाक्येन सन्तोषजननम् इति वा। यथाऽभ्यस्तम्—अभ्यस्तमनतिक्रम्य, अभ्यासानुरूपम् इत्यर्थः। एतेन रामभद्रस्य विनयित्वं महोदारत्वञ्च कियत् विवृतं कविना। [अत्रापि काव्यलिङ्गम्]।

(झ) अष्टावक्रः,—अष्टसु अवयवेषु वक्रः, अष्टौ वक्राणि यस्य इति वा विग्रहः ["अष्टनः संज्ञायाम्" (६।३।१२५ पा०) इति दीर्घः]। पुरा किल कहोड-

सीता। अज्ज ! तदो किं विलम्बीअदि ? *

रामः। त्वरितं प्रवेशय। [ कञ्चुकी निष्क्रान्तः। ]

अष्टावक्रः। [ प्रविश्य ] स्वस्ति वाम्। (ञ)

रामः। भगवन् ! अभिवादये, इत आस्यताम्। (ट)

सीता। भअवं ! णमो दे, अवि कुसलं सजामातुअस्स गुरुजणस्स, अज्जाए सन्ताए अ ? † (ठ)

---

* आर्य्य ! ततः किं विलम्ब्यते ?

† भगवन् ! नमस्ते, अपि कुशलं सजामातृकस्य गुरुजनस्य, आर्य्यायाः शान्तायाश्च ?

---

(कहोड़)-नामा सर्वां रात्रिमध्येता कश्चिद्दृषिः स्वगुरोः उद्दालकस्य कन्यां सुजातामुपयेमे। तस्याः परिपुष्टो गर्भः शिष्यगणपरिवृतं पितरमेकदा "सर्वां रात्रिमध्ययनं करोषि नेदं पितः ! सम्यगिवोपवर्त्तते" इति उपालब्धवान्। अथ कहोडः "उपालब्धः शिष्यमध्ये महर्षिः स तं कोपादुदरस्थं शशाप। यस्मात् कुक्षौ वर्त्तमानो ब्रवीषि तस्माद् वक्रो भवितास्यष्टकृत्वः। स वै तथा वक्र एवाभ्यजायत् अष्टावक्रः प्रथितो वै महर्षिः॥" इति वनपर्वणि १३२ तमे अध्याये तदुत्पत्तिकथा।

(ञ) स्वस्ति वाम् इति।—भवद्भ्यां कुशलं भूयात्। "नमःस्वस्ति—" ( २।३।१६ पा०) इत्यादिना चतुर्थी, ततो "युष्मदस्मदोः—" ( ८।१।२० पा० ) इति वामादेशः।

(ट) अभिवादये इति।—भगवन्तमभिमुखीकर्त्तुमभिवन्दे इत्यर्थः। नामग्रहणपूर्वकं नतिरेव अभिवादनमुच्यते, तत्फलमुक्तं मनुना २य अध्याये १२०। १२१ संख्यकश्लोकयोः; यथा—"ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति। प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते॥ अभिवादनशीलस्य नित्यं वृद्धोपसेविनः। चत्वारि सम्प्रवर्द्धन्ते आयुर्विद्या यशो बलम्" ॥ इति।

(ठ) अपि—प्रश्ने। "गर्हासमुच्चयप्रश्न-शङ्कासम्भावनास्वपि" इत्यमरः। जामाता ऋष्यशृङ्गेण सह वर्त्तमानस्य सजामातृकस्य [ "नद्यृतश्च" ( ५।४।१५३ पा० ) इति समासान्तः कप्प्रत्ययः ]। आर्य्यायाः,—मान्यायाः, पत्युः ज्येष्ठत्वात् ; [ऋच्छतेः ण्यत् निपातनात् ]। अत्र ब्राह्मणस्य ऋष्यशृङ्गस्य, तत्परिणीतायाः क्षत्रियात्मजाया अपि शान्तायाः, तथा सपत्नीकस्य वशिष्ठस्य च ब्रह्मतेजःप्राधान्यात् "कुशलम्" इति प्रश्नः सङ्गच्छते। तथा च मनुः—"ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्" इति।

रामः । निर्विघ्नः सोमपीथी आवुत्तो (ड) मे भगवान् ऋष्यशृङ्गः, आर्य्या च शान्ता ?

सीता । अह्मेवि सुमरेदि ? * (ढ)

अष्टा । [ उपविश्य ] अथ किं, (ण) देवि ! कुलगुरुर्भगवान् वशिष्ठस्त्वामिदमाह ;—

* अस्मानपि स्मरति ?

(ड) निर्विघ्नः,—विघ्नरहितः । सोमेति ।—सोमः,—स्वर्णवर्णपूतिकलताकारौषधिविशेषः, स च हिमवत्सन्निहितप्रदेशे जायते, पुष्टिहर्षकायशीन्मादादिकरत्वं तस्य रसस्य गुणाः । पुरा खलु मुनयो यज्ञादौ विशेषतस्तु सोमयागे शर्करया आसवीकृतं तद्रसं पीत्वा आत्मानं बहु मन्यन्ते स्म । सोमः सोमरसः, तस्य पीतं पानं, तदस्यास्तीति [इनिप्रत्ययः । यद्वा पीतमनेनेति पीती, सोमे पीतीति तथोक्तः । पृषोदरादित्वात् तस्य स्थाने थः ; अथवा, पीथं पानं तदस्यास्तीति पीथी "पातृतुदिवचिरिचिसिचिभ्यस्थक्" ( उ०२।७ पा० ) इति पिबतेः औणादिकः थक् । 'सोमपीती' इत्यपि भवति, तथैव क्वचित् पाठः दृश्यते ; ] स कृतसोमलतारसपानः, यथाविध्यनुष्ठितसोमयागः इत्यर्थः । सोमयागप्रकारस्तु ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे प्रोक्तः, तथा हि षष्टितमाध्याये नारदं प्रति नारायणवाक्यम् ।—

"ब्रह्महत्याप्रशमनं सोमयागफलं मुने ।।
वर्षं सोमलतापानं यजमानः करोति हि ॥
वर्षमेकं फलं भुङ्क्ते वर्षमेकं जलं मुदा ।
त्रैवार्षिकमिदं यागं सर्वपापप्रणाशनम् ॥
यस्य त्रैवार्षिकं धान्यं निहितं भृतिसिद्धये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥
महाराजश्च देवी वा यागं कर्त्तुमलं मुने ! ।
न सर्वसाध्यो यज्ञोऽयं बह्वन्नो बहुदक्षिणः ॥" इति ।

(ढ) आवुत्तो—भगिनीपतिः । "भगिनीपतिरावुत्तः" इत्यमरः । दशरथतनयायाः लोमपादपालितायाः शान्तायाः परिणेतृत्वादृष्यशृङ्गस्य रामभगिनीपतित्वम् ।

(ढ) अस्मान् इत्यत्र वैकल्पिकी षष्ठी अपि भवति ।

(ण) अथ किमिति ।—स्वीकारार्थकमेकमव्ययम्, अथवा अव्ययद्वयम् । अथ—

"विश्वम्भरा भगवती भवतीमसूत,
राजा प्रजापतिसमो जनकः पिता ते।
तेषां वधूस्त्वमसि नन्दिनि! पार्थिवानां,
येषां कुलेषु सविता च गुरुर्वयञ्च॥ ९॥

अनन्तरं भवद्वाक्यानन्तरम् इत्यर्थः, किं—किमु वक्तव्यमिति शेषः। भवता यदुच्यते तत् तदेव इति भावः। अर्थ्यते एवेत्यर्थः। अत्र महाराजं रामं मुक्त्वा सीतां प्रति वशिष्ठवाक्यन्तु पुरन्ध्रीस्नेहातिशय्यप्रकटनार्थम्। तदुक्तं हृद्धमनुना—"यामयो यत्र शोचन्ति गृहंष्वप्रतिपूजिताः। तानि कृत्याहतानीव विनश्यन्ति समन्ततः॥" इति।

उद्बोधकसमवधानवशादेव हि भवति स्मरणम्। अतः सीताविषयकस्मृती नियतोद्बोधकप्रकारं प्रकटीकृत्य वशिष्ठवचनव्यपदेशेनाभिधत्ते, विश्वम्भरेति।—हे नन्दिनि! पुत्रीसदृशानन्दप्रदत्वात् पुत्रि! भगवती विश्वं बिभर्त्तीति विश्वम्भरा ["संज्ञायां भृतृ—" (३।२।४६ पा०) इति सूत्रेण खचि, "अरुर्द्विषत्" (६।३।६७ पा०) इति सूत्रेण मुम्] पृथिवी, भवतीमसूत—त्वां प्रसूतवती, [एतेनास्याः विनयसहिष्णुतादिगुणग्रामयोगित्वं भाविपतिवियोगदुःखसहत्वञ्च ध्वनितम्।] प्रजापतिसमः प्रजानां रक्षणावेक्षणादौ स्वाध्यायाध्ययनादौ वा विधातृसदृशः; (तथा हि श्रुतिः—"जनको ह वै" इत्यादि, आगमश्च—"कर्मणैव हि संसिद्धिमास्थिता जनकादयः।" इत्यादि)। राजा जनकस्ते पिता। [एतेन प्रजासु परिजनेषु च दाक्षिण्यादिकं, पत्या विना एकाकिन्या अपि अरण्यमध्ये भाविनोः पुत्रयोः पालनक्षमत्वञ्च ध्वनितम्।] येषां पार्थिवानां कुलेषु—[अत्र बहुवचनं पूजायाम्, कुलस्य इत्यर्थः,] सविता—सूर्य्यः जगतां द्रष्टा दर्शयिता पाता पावनश्च इत्यर्थः, [एतेन तदन्वयानां प्रतापित्वम् औज्ज्वल्यवत्त्वञ्च ध्वनितम्] तथा वयञ्च प्रजापतिपुत्रत्वात् पवित्रत्वात् प्रभूततेजस्कत्वाच्च त्रिलोकपूज्या इत्यर्थः, [वयमिति अविशेषणत्वात् बहुवचनमेकत्वे "अस्मदो द्वयोश्च" (१।२।५९ पा०) इत्यनुशासनात्। सविशेषणस्य प्रतिषेधः इत्यस्य विधेयविशेषणविषये विषयत्वात् दोषाशङ्का नास्ति "ततोऽनुत्वं प्रेयान् वयमपि हताशाः प्रियतमाः"; "वयं तत्त्वान्वेषान्मधुकर! हताः" इत्यादि प्रयोगदर्शनात्। यद्वा अस्मदादिपदानादिभिः विश्वामित्र-वाल्मीक्यादीनामपि ग्रहणात्, "वशिष्ठाङ्गिरसौ ऋषी प्राचेतसस्तथा" इत्यादि स्मरणाच्च बहुवचनम्। गुरुरित्यनुषक्तस्य वचनविपरिणामात् गुरवः उपदेष्टारः। [एतेन लौकिकाचारादिपरिज्ञानं व्यज्यते]।

तत् किमन्यदाशास्महे, केवलं वीरप्रसवा भूयाः" । (त)

[ सूर्य्यवंशीयानामादिभूतत्वात् सवितुः गुरुत्वमार्त्विज्यकरणात् वशिष्ठस्यापि तथात्वम् । "गुरुस्तु गीष्पतौ श्रेष्ठे" "गुरौ पितरि दुर्भरे" इत्युभयत्रापि विश्वः । अज्ञान-निवर्त्तकः वेत्यर्थः ;—"गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निवर्त्तकः" इत्युक्तेः । ] त्वं तेषां पार्थिवानां सूर्य्यवंशीयानां राज्ञाम् इत्यर्थः, [ एतेन सर्वसुखाकरत्वं ध्वन्यते ] वधूः स्नुषा असि । [ एतेन प्रतिदिनं नवनवसुखप्रदपदार्थदर्शनाकाङ्क्षा सम्मान-नार्हत्वञ्च ध्वन्यते । ] विश्वम्भराजनकसविवादिसम्पर्कजाता वशिष्ठमिश्राणां रतिः प्रीतिरूपाऽत्र सांसर्गिकीनामधेया इति ज्ञेया, सा च क्वचित् क्वचित् सांसर्गिकी, नैसर्गिकी, औपमानकी, आध्यात्मिकी अपि भवति इति बोध्यम् । तथा हि— भोजराजः, — "रतिर्निसर्गसंसर्गौपम्याध्यात्माभियोगजा । सम्प्रयोगाभिमानोत्था विषयोत्था च कथ्यते ॥" इति । अत्र विश्वम्भरादिसंसर्गात् सीतायां वशिष्ठमिश्राः स्निह्यन्ति" इति फलितोऽर्थः । [ अत्र यच्छब्दमादावभिधाय पश्चात् तच्छब्दस्य प्रयोग एव युक्त इति विधेयाविमर्षदोषः मृग्यः, स च पराद्धगतचरणयोः वैपरीत्यं विधाय समाधेयः । एतस्मिन् प्रस्तुतस्य सवितुः गुरोश्च एकगुरुत्वरूपधर्मसम्बन्धात् तुल्य-योगिता, सा च सीतायाः श्लाघ्यमानत्वरूपकार्य्यस्य विश्वम्भरादुहितृत्वरूपेणैकेनैवोद्बोध-केन स्मृतौ सत्यामपि उद्बोधकान्तररूपप्रजापतिदुहितृत्वपार्थिववधूत्वादिकारणान्तर-स्योक्तत्वात् जायमानेन समुच्चयालङ्कारेण, "प्रजापतिसमः" इत्यत्र समुपजातया समासगतया आर्थ्युपमया, "जनकः पिता" इत्यत्र च आपाततः एकार्थकविभिन्नशब्द-वत् प्रतीतेः पौनरुक्त्यावभासनात् पर्य्यवसाने पुनः जनकशब्दस्य मुनिरूपार्थबोधनाच्च पुनरुक्तवदाभासेन शब्दालङ्कारेण च सङ्कीर्णा ] । वृत्तं वसन्ततिलकम् ।—"ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति लक्षणात् ; प्रस्तारस्तस्य २९३३ तमः ॥ ९ ॥

(त) तदिति ।—तत्—तस्मात् अन्यत्, पुत्रादन्यदित्यर्थः । किमाशास्महे [ आङ् शासु इच्छायाम् इति धातोः लट् ] एतद्विना किमस्माकं आशीःकरणीयमस्ति ? लोकेषु यद् यत् प्रार्थनीयमस्ति पुत्रव्यतिरिक्तं तत् तव अस्त्येव । अतस्ते पुत्रादन्यदाशी-र्वचनीयं किमपि न पश्यामीति भावः । केवलं वीरः प्रसवो यस्याः सा तथोक्ता भूयाः ( इत्याशिषि लिङ् ) । [अत्र प्राक् प्रदर्शितस्य बीजाङ्गोपक्षेपस्य सीताविवासनात् प्रभृति भागीरथीसमाश्वासनाश्रयस्य, दण्डकारण्यस्थलीमध्युषितायाः सीतायाः सन्तत्योः कुशलवयोः समुत्पत्तिरूपस्य महर्षिणा च तेषां यथाविधि अध्यापनादिरूपस्य

रामः। अनुगृहीताः स्मः। (थ)—

लौकिकानां हि साधूनामर्थं वागनुवर्त्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति॥ १०॥

अष्टा। इदञ्च भगवत्या अरुन्धत्या देवीभिः शान्तया च

---

च समुत्पन्नार्थस्य बाहुल्येन विशदीकरणात् एतत् परिकराख्यं मुखसन्ध्यङ्गं वेदितव्यम्। तथाहि—"समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः" इति। अत्र पुत्रलाभरूपेष्टार्थ-शंसनात् "आशीः" नामालङ्कारः। तदुक्तं दण्डिना—"आशीर्नामाभिलषिते वस्तु-न्याशंसनं यथा" इति। अन्यत्राप्युक्तं—"आशीरिति च केषाञ्चिदलङ्कारतया मता। सौहृदस्याविरोधोक्तौ प्रयोगोऽस्यास्च तादृशः॥" इति]।

(थ) अन्वितेति—अनुगृहीताः,—कृतार्थाः, स्म,—भवामः इत्यर्थः। [अत्र प्रोक्तबीजार्थस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात् समाधानरूपमुखसन्ध्यङ्गं वेदितव्यम्। तथाहि,—"बीजस्यागमनं यत्तु तत् समाधानमुच्यते" इति।

कथमिति तदेवोपपादयति, लौकिकानामिति।—लौकिकानां हि लोके विदितानामेव संसारिणामित्यर्थः, साधूनां वाक् वाक्यम्, अर्थं प्रतिपाद्यविषयमनु-वर्त्तते अनुसरति, [लौकिकाः असाधवः बहवः सन्ति तद्व्यावृत्तये साधूनामित्युक्तम्। लौकिका हि साधवः अर्थमनुसन्दधतः वस्तुगतिं विमृश्य तदाश्रये वाचं प्रयुञ्जते] यतो हि अर्थोऽनुसन्धानं विनैवेरिता वाचः प्रेक्षावद्भिरुन्मत्तवाक्यवदुपेक्ष्यन्ते। आद्यानां—पुराणानाम् ऋषीणां—तत्त्वविदां पुनः वाचं वाक्यम् अर्थः अभिधेयं अनुधावति अनु-सरति; अर्थानुसन्धानं विनापि यदृच्छया ते यदभिदधति तपःसिद्धिबलात् तेषां तदेव नूनं फलति "न ह्रीश्वरव्याहृतयः कदाचित् पुष्णन्ति लोके विपरीतमर्थम्" इति न्याया-दिति भावः। प्रसन्नैः तैराशिषि समीरितायां, तत् नैष्फल्यं कदापि नैष्यतीति हृदयम्। [अत्र एतत् ऋषिश्रेणीविधानरूपबीजगुणवर्णनात् विलोभनाख्यं बीजाङ्गमवधेयम्। तथा हि "गुणाख्यानं विलोभनम्" इति लक्षणात्। लौकिकसाधुभ्यः पुराण-साधूनामुत्कर्षप्रतीतेः व्यतिरेकोऽलङ्कारः, अपि च अप्रस्तुतेभ्यः साधारण-ऋषिभ्यः विशेषस्य वशिष्ठस्य प्रतीतेः अप्रस्तुतप्रशंसा, तथा लौकिकसाधुभ्यः पुराणमुनीना-मुत्कर्षातिशयवर्णनेन महर्षिवर्णनादुदात्तालङ्कारश्च; तदेभिः परस्परं सङ्कीर्य्यते]। पथ्यावक्त्रं वृत्तम्॥ १०॥

भूयोभूयः (द) सन्दिष्टं,—"यः कश्चिद्गर्भदोहदो (ध) भवति अस्याः सोऽवश्यमचिरात् सम्पादयितव्यः" इति ।

रामः । क्रियते यद् यदेषा कथयति । (न)

अष्टा । ननान्दुः पत्या च देव्याः सन्दिष्टमृष्यशृङ्गेण,—"वत्से ! कठोरगर्भा इति न आनीतासि, वत्सोऽपि रामभद्र-

---

(द) भूयोभूयः,—पुनःपुनः, आभीक्ष्ण्येनेत्यर्थः, [वीप्सायां द्विर्भावः] एतद् वाक्यन्तु दोहदसम्पादनस्य अत्यावश्यकतामभिधत्ते । सन्दिष्टम्—आदिष्टम्, अभिहितम् इत्यर्थः ।

(ध) गर्भेति ।—दोहदम् इति दोहः । [दुहो भावे घञ् ।] गर्भस्य स्त्रियाः दोहार्थमाकर्षार्थं रसादिकं ददातीति गर्भदोहदः, गर्भिण्यभिलषितपुष्टिसाधकपानभोजनविहारादि पथ्यम् इत्यर्थः । अथ वा गर्भे गर्भावस्थायां दोहदः गर्भिणीमनोरथः इत्यर्थः, तथाविधाऽभिलाषस्तु गर्भस्यैव भवति इति गर्भदोहदः कथ्यते, स वस्तुविशेषापभोगाभिलाषः इति ; तदा हि अन्नपानादिवस्तुषु गर्भिणी वीतस्पृहा भवति, भवति च कतिचिद् विशेषवस्तुषु स्पृहावती । अथ दोहदाप्रदानमधि कृत्याह तत्रभवान् वाग्भटः,—"पादशोफौ विदाहोऽन्ते श्रद्धा च विविधात्मिका" इति । "देयमप्यहितं तस्मै हिताय हितमल्पकम् । श्रद्धाविघाते गर्भस्य विकृतिश्च्युतिरेव वा ॥" अन्यत्र,—"दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात्" इति रघुसञ्जीविन्यां मल्लिनाथाः । यद्यपि दोहदशब्दस्य अमरसिंहेन हलायुधेन च नपुंसकत्वमभिहितं, तथापि "दोहदो दौर्हृदं श्रद्धा लालसा" इति हेमचन्द्रेण पुंस्त्वम् अभिहितम् ; अतः दोहदशब्दस्य उभयलिङ्गकत्वमुन्नेयम् ।

(न) क्रियते ।—एषा—मत्पार्श्ववर्त्तिनी, तदुक्तं—"इदमस्तु सन्निकृष्टं समीपतरवर्त्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्" ॥ इति । यद्यत्—युक्तमयुक्तं वा, कथयति—अभिलष्यति । क्रियते—मया अनुष्ठीयते । गर्भिण्यभिलाषस्य अवश्यपूरणीयत्वात् गुरुजनाज्ञामनपेक्ष्यैव झटिति सम्पाद्यते इत्यर्थः । अत्र "क्रियते यद्येषा कथयति" इति पाठे—यदि एषा वैदेही कथयति [वर्त्तमानसामीप्ये भविष्यति लट्] तदैवेति शेषः, क्रियते कर्त्तुं शक्यते इत्यर्थः, अस्यास्तु विवासनमचिरादेव भविष्यति, अतः दोहदकथनमसम्भाव्यमेव, इति यदिशब्दार्थः ; यत्तु दृष्टचराणां वनानां पुनः सन्दर्शनदोहदं भविष्यति, तत्तु

त्वद्विनोदनार्थमेव स्थापितः। तत् पुत्त्रपूर्णोत्सङ्गाम् आयुष्मतीं द्रक्ष्यामि" इति। (प)

रामः। [सहर्षलज्जास्मितम्] तथाऽस्तु। भगवता वशिष्ठेन किमादिष्टोऽस्मि? (फ)

अष्टा। श्रूयताम्।—

"जामातृयज्ञेन वयं निरुद्धा-
स्त्वं बाल एवासि नवञ्च राज्यम्।
युक्तः प्रजानामनुरञ्जने स्या-
स्तस्माद् यशो यत् परमं धनं वः" ॥ ११ ॥ इति।

---

अस्माभिः सम्पादयिष्यते, इति। [सीताविवासनफलोत्पादहेतुभूतदोहदसाधनमिषेण वनाय विवासननिदानभूतस्य प्रक्रान्तार्थस्य समारम्भः, करणं नाम मुखसन्धेः अङ्गम्। तथा हि,—"करणं पुनः। प्रक्रान्तार्थसमारम्भः" इति]।

(प) ननान्दुरिति।—देव्याः सीतायाः ननान्दुः भर्तृभगिन्याः (ननन्देत्यप्यस्ति तत्पर्य्यायः) पत्या—ऋष्यशृङ्गेण, सन्दिष्टम्—आज्ञप्तम्। वत्से।—कल्याणि। कठोरगर्भा—परिणतगर्भा, इति—हेतोः, न आनीतासि त्वं यज्ञभूमिमस्माभिः न प्रापितासि इत्यर्थः। अतः वत्सः रामभद्रोऽपि, त्वद्विनोदार्थं—तव मनसः सन्तर्पणाय, नास्माभिरानीतः। अतः पुत्राभ्यां पूर्णः तनयभूषितः उत्सङ्गः क्रोड़ः यस्याः तथाविधामायुष्मतीं—कल्याणिनीं भवतीं द्रक्ष्यामि; तनयालङ्कृताङ्कां भवतीं दृष्ट्वा आत्मानं सश्लाघमानं करिष्ये इति भावः। [अत्र बीजोद्भेदानुकूलहेतुभूतकठोरगर्भत्वादिरूपवस्तूनां विमृश्य सम्प्रधारणात् यथायथं सयौक्तिकस्य विमृश्यावधारणात् युक्तिर्नाम सन्ध्यङ्गं ज्ञेयम्। तथा हि—"सम्प्रधारणमर्थानां युक्तिः" इति लक्षणात्]।

(फ) यत् भगवता ऋष्यशृङ्गेणोक्तं तत् तथैव भवतु इत्यर्थः। नाटकस्य पञ्चसन्धिभिरूपचेतुमुचितत्वादादौ प्रयोजनसिद्धिहेतुभूतानां बीजादिपञ्चकानामवतारणार्थमनन्तरं वशिष्ठादेशरूपं विषयमवतार्य्य बीजसन्धिमुत्थापयितुं प्रस्तौति, "भगवता वशिष्ठेन किमादिष्टोऽस्मि" इत्यादिना।

तदेव विशिष्योपपादयति, जामातृेति।—वयं जामातुः,—ऋष्यशृङ्गस्य, यज्ञेन—(करणेन) निरुद्धाः,—ऋत्विक्त्वेन व्रतिनः सन्तः आबद्धाः, आ परिसमाप्तेः प्रतिगन्तुमक्षमा इत्यर्थः। [जामातृपदोपादानात् तद्वचनस्यावश्यमादरणीयत्वं ध्वनितम्। यज्ञपदेन

रामः। यथाह भगवान् मैत्रावरुणिः। (ब)—

च तत्त्यागानौचित्यं गम्यते। निरूढपदस्य च चिरकालावस्थितिवाचकत्वेन ततः निष्क्रमणायोग्यत्वमपि] त्वं बाल एव—अबहुश्रुत एव असि [एतेन च तस्य कार्याकार्यविचाराक्षमत्वं बोध्यते। एवकारेण च सन्देहाभावः द्योतितः।] राज्यस्य नवं—नवाधिगतं [राज्यस्य नवीभूतत्वेन "यदैव राज्ये क्रियतेऽभिषेकः तदैव याति व्यसनेषु बुद्धिः" इति नियमात् प्रतिपदं व्यसनबाहुल्यापातसम्भावना अस्तीति ध्वन्यते]। प्रजानां—लोकानाम् अनुरञ्जने—राज्यदार्ढ्यसम्पादके कौलिके स्वधर्मे इत्यर्थः, युक्तः,—एकाग्रचित्तः, स्याः,—भवेः; तस्मात्—प्रजानुरञ्जनात् यत् उत्पन्नं यशः तत् वः,—इक्ष्वाकुवंशप्रसूतानां युष्माकं परमं—सर्वोत्कृष्टं धनम्। तदन्वयभुवां महामहिमशालिनां महीभृतामिव कौलीन्यभीतानां भवतामपि तदनुसृतसरणीषु क्रमाधानं सर्वथैवोचितमिति भावः। यशसां परमधनत्वेनारोपात्, तद्रक्षणप्रयासस्यात्यावश्यकत्वं सूचितमन्यथा तदपायस्य सम्भवात्। एष हि प्रदर्शितबीजस्योत्थापनहेतुः वेदितव्यः, पश्चाच्च भगवता रामभद्रेण स्वयमेवैतत् "जानकीमपि......मुञ्चतो नास्ति मे व्यथा" इत्यादिना जानकीविवासनं लोकानामनुरञ्जनाय करिष्यते इत्यभिधास्यते। पश्चात् बहुधा विस्तृतस्य सीताविवासनरूपफलस्यात्र प्रथमहेतुभूतं बीजं लोकानुरञ्जनरूपमभिहितम्। तथाहि दर्पणम्,—

"अल्पमात्रं समुद्दिष्टं बहुधा यत् विसर्पति।
फलस्य प्रथमो हेतुर्बीजमित्यभिधीयते॥" इति।

[अत्र प्रजानामनुरञ्जने वशिष्ठमिश्राणां जामातृयज्ञनिरोधरूपे एकस्मिन् कार्ये सत्यपि राज्यशासनापायभूतानां बहूनां बालत्वनवत्वादिरूपसाधकानां निर्देशात् समुच्चयालङ्कारः, तथा पूर्वार्द्धवाक्यस्य परवाक्यम्प्रति हेतुत्वप्रतीतेः काव्यलिङ्गालङ्कारश्च; इत्येतयोः सङ्करः]। इन्द्रवज्रा वृत्तम्।—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति लक्षणात्। अयञ्च सप्तपञ्चाशदधिकत्रिशततमः प्रस्तारः॥ ११॥

(ब) मित्रश्च वरुणश्च तौ मित्रावरुणौ ["देवता द्वन्द्वे च" (६।३।२६ पा०) इत्यानङ्] तयोरपत्यं पुमानिति ["बाह्वादिभ्यश्च" (४।१।९६ पा०) इति इञ्प्रत्ययः]। [उर्वशीं दृष्ट्वा विमुग्धयोः मित्रावरुणयोः स्कन्नं तेजः कुम्भे बहिरन्तश्च पतितमासीत्, तत्र तु बहिः वशिष्ठः अन्तश्चागस्त्यः जज्ञे, इत्थंच वशिष्ठस्य मैत्रावरुणिसंज्ञायाः अगस्त्यस्य कुम्भयोनिसंज्ञायाश्च हेतुः विष्णुपुराणादौ द्रष्टव्यः। एवमेव सायणाचार्याः आहुः ऋग्वेदभाष्ये,—

स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि।
आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा॥ १२॥

सीता। अदो ज्जेव राहवकुलधुरन्धरो अज्जउत्तो। * (भ)

* अत एव राघवकुलधुरन्धरः आर्य्यपुत्रः।

"तयोरादित्ययो. सत्रे दृष्ट्वाऽप्सरसमुर्वशीम्।
रेतश्चस्कन्द तत् कुम्भे न्यपतद्वासतीवरे॥
तेनैव तु मुहूर्त्तेन वीर्य्यवन्तौ तपस्विनौ।
अगस्त्यश्च वशिष्ठश्च तत्रर्षी सम्बभूवतुः।
बहुधा पतितं रेतः कलशे च जले स्थले।
स्थले वशिष्ठस्तु मुनिः सम्भूत ऋषिसत्तमः॥" इति। म० ७, सू० ३३, ऋ ११। तौ हि एकस्मिन् कल्पे मित्रस्य कल्पान्तरे च वरुणस्यापत्यमासीत्। इत्यपि पुराणान्तरम्।

अत्रैतत् रघुमणिः प्रतिजानीते. स्नेहमिति।—लोकानां—जनानां प्रजानामिति यावत्, आराधनाय—प्रीणनाय, तान् आराधयितुम् इत्यर्थः, [ "तुमर्थाच्च भाववचनात्" ( २।३।१५ पा० ) इति चतुर्थी।] अनुरञ्जनार्थमिति भावः, स्नेहं—ममत्वं, प्रजासु अप्राणदण्डादिकं भार्य्यादिविषयकं वा, दयां—परदुःखहरणेच्छाम्, अनैष्ठुर्य्यं गर्भिणीविषयां वा ;—"दुर्व्वहगर्भखिन्नसीताविवासनपटोः करुणा कुतस्ते" इत्यादिना शम्बूकवधावसरे रामभद्रेण स्वयमेवैतत् व्यक्तीकरिष्यते। सौख्य—सुखसमूहं, सुखसाधकविषयसमूहं पुत्रमुखदर्शनलालनजातं वा इत्यर्थः। यद्विवा—अथवा, जानकीं—सीतां, प्राणाधिकामपि इत्यर्थः, मुञ्चतः,—त्यजतः, मे—मम, व्यथा नास्ति। किमधिकं, प्राणाधिकाया अपि प्रियतरा मे प्रजा इति भावः। [ अत्रैव प्रदर्शितं बीजं सर्वथा व्यक्तीभूतत्वमगात्, प्रकृतिरञ्जनाय जानकीनिर्वासनस्य तत्त्वार्थस्य कथनात् मार्गनामकं गर्भसन्धेरङ्गभूतमेवैतत् अवगन्तव्यम्। तथा हि दर्पणम्।—"तत्त्वार्थकथनं मार्गः" इति। एतेन प्रजारञ्जनरूपव्यवसायात् अचलनकथनेन धैर्य्यं नाम नायकस्य सात्त्विकः गुणः कथितः। तथा च दर्पणे—"व्यवसायादचलनं धैर्य्यं विघ्ने महत्यपि" इति। अत्र गम्यस्य जानकीपरित्यागस्य भङ्ग्यन्तरेण कथनात् पर्य्यायोक्तम् अलङ्कारः। मुञ्चत इत्येकक्रियया स्नेहादीनां सर्वेषामन्वयात् प्राचीनमतेन दीपकालङ्कारभेदेन संसृष्टः ]॥ १२॥

रामः। कः कोऽत्र भोः! विश्राम्यतां भगवान् अष्टावक्रः।

अष्टा। [ उत्थाय परिक्रम्य च ] अये! कुमारलक्ष्मणः प्राप्तः। (म)

[ इति निष्क्रान्तः। ]

लक्ष्मणः। [ प्रविश्य ] जयति जयति आर्य्यः। आर्य्य! तेन चित्रकरेण अस्मदुपदिष्टमार्य्यस्य चरितमस्यां वीथिकायाम् (य) अभिलिखितं, तत् पश्यतु आर्य्यः।

---

(भ) अत इति।—अत एव भवन्तं राघवकुलधुरन्धरं तत्तत् दुर्वहभारोद्वहनसमर्थतया रघुवंशीयनरपतिगणाग्रगण्यं वदन्तीति भावः। शरणागतसंरक्षण भूतदया-प्रकृतिरञ्जनादिधर्मव्रतयोगात् सत्यं हि भवान् विश्रुतचरितानां रघूणामन्वायविशोभा इत्याशयः।

(म) "नासूचितं विशेत् पात्रम्" इति भरतोक्तेः लक्ष्मणप्रवेशमभिधत्ते, अये इति।

(य) चित्रं करोतीति चित्रकरः चित्रशिल्पी, पक्षान्तरे—चित्रः विचित्ररचनाशक्तिसम्पन्नः करः हस्तो यस्य स कविरित्यर्थोऽपि व्यज्यते। वीथिकायामिति।—वीथिरिव इति वीथिका [ स्वार्थे कन् ] तस्यां—चित्रफलके चित्रश्रेण्यामित्यर्थः—"पङ्क्तिवर्त्मंगृहाङ्गेषु वीथिः वीथी च" इति रत्नकोषः। पक्षान्तरे—अस्य नाटकस्याभिनये। [ अत नाटकीयप्रयोजनसिद्धिहेतुभूतानां वीजादिपञ्चकानामन्यतमं कार्य्यसन्धिमवतारयितुमपूर्वमेकं चित्रप्रदर्शनपाटवं कविः विन्यासाञ्चक्रे। इत्थं हि तत्र भवान् कालिदासोऽपि स्वकृतौ अववर्णत्। तद्यथा—

"तयोर्यथाप्रार्थितमिन्द्रियार्थान् आसेदुषोः सद्मसु चित्रवत्सु।
प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखान्यभूवन्॥" इति।

तथाहि सीतानिर्वासनमेवात्रापेक्षितं तन्निबन्धनचित्रदर्शनप्रयाससमारम्भः, निसर्गतोऽनरालहृदया जानकी नैसर्गिकं जनस्थानवनस्थलीरामणीयकं सुखावगाह्यं गोदावरीसलिलञ्च स्मृतिपथे उदीयमानं सपदि उपभोक्तुं दोहदवती भविष्यति, भगवत्या अरुन्धत्या शान्तया च पुरा तद्दोहदमवश्यमेव पूरणीयमित्याज्ञप्तम्, अतः तत्पूरणमिषेण तद्विवासनं सुकरं भविष्यति इति एतदालिखितम्। सीताविवासनसिद्धये हि अस्य चित्रप्रदर्शनप्रयासभङ्गः समापनम्। यदुक्तम्,—

"अपेक्षितन्तु यत्साध्यमारम्भो यन्निबन्धनः।
समापनन्तु यत् सिद्ध्यै तत् कार्य्यमिति सम्मतम्"॥ इति।

रामः । जानासि वत्स ! दुर्मनायमानां देवीं विनोदयितुम् । तत् कियन्तमवधिं यावत् ? (र)

लक्ष्मणः । यावदार्य्याया हुताशने विशुद्धिः । (ल)

रामः । शान्तम् । (व)—

तथैवोपवर्णितं महाकविना कालिदासेन,—

"प्रजावती दोहदशंसिनी ते तपोवनेषु स्पृहयालुरेव ।

स त्वं रथी तद्व्यपदेशनायां प्रापय्य वाल्मीकिपदं त्यजैनाम् ॥" इति ।

अत्र पुनः प्रोक्तकार्य्यसम्बे: प्रयत्नरूपावस्था विज्ञेया, यथाहि रत्नावल्यामिवलंघनादि-व्यापारः वत्सराजसमागमोपायत्वेन अङ्गीकृतः, तथाऽत्रापि कविना करुणरससमर्थित सीताविवासनरूपव्यापारसिद्धये आलेख्यसन्दर्शनरूपाऽतित्वरान्वितः व्यापारः समारब्धः इति समीक्ष्येचितव्यं कुशाग्रैकबुद्धिभिः;—"प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः"। इति लक्षणात् । नाट्यशास्त्रे भरतोऽपि,—

"अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति ।

परं चौत्सुक्यगमनं प्रयत्नः परिकीर्त्तितः ॥" इति ] ।

(र) जानासीति ।—भूयोभूयः सन्तप्यमानं देवीदौर्मनस्यं कथं हि अपनेतुं विनोदयितुञ्च वा शक्यते तत् त्वमेव सम्यक् जानासि इति भावः । अत्र देवीविनोदननिबन्धं हि कार्य्यसन्धिमवतारयितुं लक्ष्मणेन आलेख्यावली आनीतेति ज्ञेया । [अदुर्मनाः दुर्मनाः भवन्ती इति अभूततद्भावार्थे दुर्मनःशब्दात् "भृशादिभ्यः" (३।१।१२पा० ) इति सूत्रेण क्यङि अन्तलोपः आत्मनेपदञ्च । यावद्योगादवधिमिति द्वितीया, कियद्दूरमित्यर्थः ] ।

(ल) यावदिति ।—विशुद्धिरिति कर्तृपदमभवदित्यध्याहार्य्यया क्रिययाऽन्वितम् । "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति न्यायात् न तद्योगे द्वितीया । यावच्छब्दोऽत्रावधारणार्थकः ।

(व) शान्तमिति ।—अहमश्राव्यमित्यादिबुद्ध्या असहिष्णुताप्रकाशकत्ववचनमिदं शान्तपदमव्ययम् । अलीकोपन्यासत्वात् आधिहेतुभूतत्वाच्चैतदनिष्टकरं पापजनकञ्च व्याहृतं दूरीभूतमस्तु नैतदिदानीं श्रोतव्यं कथयितव्यञ्चेत्यर्थः । इयं हि लोकोक्ति ; दृष्टजनानामनिष्टमाशङ्कमानैः तदनुपलब्धिञ्चेच्छमानैः हितैषिभिरेवमेव हि आशीर्वचसा अनिष्टमभिधीयते किल । "शान्तोऽभियुक्तरसयोः पुंसि त्रिषु शमान्विते । अव्ययं वारणे शान्तम्" ॥ इति मेदिनी ।

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः ? ।
तीर्थोदकञ्च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ १३ ॥

देवि ! देवयजनसम्भवे ! (श) प्रसीद, एष ते जीवितावधिः प्रवादः ! (ष)—

कथं शान्तमित्युक्तम्? तदेव सोपपत्तिकमाह, उत्पत्तीति।—उत्पत्तेः जन्मतः प्रभृति इत्यर्थः, किंवा उत्पत्त्या जन्मना, परिपूतायाः,—शुद्धायाः। [एतेन कृत्रिमपूतत्व निरस्तम्। शुक्रशोणितादियोगरूपबीजाधानकर्मणि जीवस्य यत् जन्म उच्यते तदपवित्रं, पश्चात् क्लेदादिसंवलितं गर्भाशयाद्भूमाववतरणं जन्म, तदप्यपवित्रम्। अतः संस्कारकर्मभिरेव योनिजानां शुद्धिर्विहिता ; तथा हि याज्ञवल्क्यः,—"एवमेनः शमं याति बीजगर्भसमुद्भवम्" इति। एतत् जरायुजानामेव सम्भवति, किन्तु अयोनिसम्भवत्वात् सीतायाः साऽप्यशुद्धिर्नास्तीति भावः। एतेनास्या अतीव पूतत्वं ध्वनितम्]। एवम्भूताया अस्याः शुद्ध्यर्थं, पावयन्तीति पावनानि [नन्द्यादित्वात् ल्युः प्रत्ययः] अन्यानि पावनानि पावनान्तराणि ["मयूरव्यंसकादयश्च" (२।१।७२ पा०) इति नित्यसमासः।] तैः पावनान्तरैः,—अपरैर्वह्न्यादिपवित्रतासाधनैः किम्? सर्वमेतन्निष्प्रयोजनम् इत्यर्थः। अविद्यमानदोषायाः कथं शुद्धिरिति भावः। [अन्तरशब्देन दोषरहितत्वादेव पावनवस्त्वपेक्षा नास्तीति गम्यते। यत् तु सीताया अग्निपरीक्षाऽनुमतिः, सा मूढानां लोकानां प्रत्ययार्थं, न तु तच्छुद्ध्यर्थमिति]। तीर्थानां गङ्गादीनामुदकं च वह्निश्च अन्यतः पावनान्तरादित्यर्थः, शुद्धिं न अर्हतः। अनलः ऋषिजुष्टं जलञ्च स्वेनैव पूतत्वात् पदार्थान्तराणि शोधयतः, अन्यत् किमपि वस्तु ततोऽवरत्वात् न वा तानि न वा तौ विशोधयितुं शक्नोति ; ततः जगत्पावनानां प्रकृतिपरिशुद्धानां शुद्ध्यर्थमन्यत् पावनविधानं पिष्टपेषणवत् व्यर्थमिति भावः। [अत्र पावनशुद्ध्योर्वस्तुतस्त्वेकरूपतया पर्य्यवसानात् पौनरुक्त्यनिरासाय भिन्नवाचकतया निर्देशाच्च प्रतिवस्तूपमालङ्कारः। स च एकयैवार्हत इति क्रियया तीर्थोदकवह्न्योरन्वयात् जायमानेन तुल्ययोगिताऽलङ्कारेण सङ्कीर्य्यते]। पथ्यावक्त्रं वृत्तम ॥ १३ ॥

(श) देवयजनसम्भवे! इति।—देवा इज्यन्तेऽस्मिन्निति देवयजनं यज्ञभूमिः, वसुन्धरा वा, सैव, सम्भवत्यस्मादिति व्युत्पत्त्या सम्भव उत्पत्तिस्थानं यस्याः सा तथोक्ता, तत्सम्बुद्धौ। तथा च रामायणे अयोध्याकाण्डीय अष्टादशाधिकशततमे सर्गे अनसूयां प्रति सीतावचनम्।—

कष्टं जनः कुलधनैरनुरञ्जनीय-
स्तन्नो यदुक्तमशिवं न हि तत् क्षमं ते।

---

"मिथिलाऽधिपतिर्वीरो जनको नाम धर्मवित्।
क्षत्रकर्मण्यभिरतो न्यायतः शास्ति मेदिनीम्॥
तस्य लाङ्गलहस्तस्य कर्षतः क्षेत्रमण्डलम्।
अहं किलोत्थिता भित्त्वा जगतीं नृपतेः सुता॥
... ... ... ...
अन्तरीक्षे च वागुक्ता प्रतिमाऽमानुषी किल।
एवमेतन्नरपते! धर्मेण तनया तव॥
ततः प्रहृष्टो धर्मात्मा पिता मे मिथिलाधिपः।
अवाप्तो विपुलामृद्धिं मामवाप्य नराधिपः॥" इति।

(ख) प्रसीदेति।—स्वदोषश्रुतेः शोकोद्विग्ना मा भव इत्यर्थः; यतः अपरिहार्य-त्वादपवादस्य लोकप्रत्ययार्थं परीक्षा कृता, अतः विषादं विजहीहि इति भावः। जीवितावधिरिति।—जीवितं जीवनमवधिः परिच्छेदः अस्य, आमरणं दुष्परिहरः इति यावत्; यद्वा जीवितं लोकजीवनं जीवसृष्टिरित्यर्थः, अवधिः यस्य सः; यावत् जगत् स्थास्यति तावत् इयं कथा प्रचरिष्यति इति भावः। प्रवादः,—रक्षोगृह-स्थितिमूलकः चारित्रभ्रंशसंशयनिबन्धनः अलीकलोकापवादः इति यावत्।

कथं हि एवमपवादरताः दुर्जनास्त्वया न दण्डिताः? प्रत्युत अनुमोदिताः; इत्याशङ्क्य सम्प्रति सनिर्वेदं स्वानुष्ठितायामग्निपरीक्षायां हेतुमुक्त्वा आत्मदोषमपसार-यति, कष्टमिति।—कुलमेव धनं श्लाघ्यतया अनर्घतया च अवश्यरक्षणीयं येषां तैः, तथोक्तैः जनैः,(कर्तृभिः)जनः,—लोकः, अनुरञ्जनीयः,—आराधयितुमेव योग्यः, सर्वथा लोकानुरञ्जनमभिजनवतां परमं व्रतं, न तु तद्दण्ड इति, इत्येव कष्टम्—दुःखकरं तत् स्मर्यमाणं सत् निरतिशयमेव व्यथयति मानसमिति, परच्छन्दानुवर्त्तनं हि अतीव क्लेशप्रदमित्याशयः। ("कष्टम्"इत्यत्र क्वचित्"कष्टः" क्वचिच्च "क्लिष्टः" इति पाठान्तरमस्ति, तदर्थस्तु,—कष्टः क्लेशदायकः जनः, अतिदुर्जन इति यावत्; क्लिष्टः अस्मात् कारणात् दुःखितः इति भेदः)। कुलधनैस्तु दुर्गताः दुर्जनाः सुजनाः वा सर्वे एव निर्विशेषेण अनुरञ्जनीया इति भावः। तत्—तस्मात् लोकानुरञ्जन-व्रतानुपालनाद्धेतोः, नः,—अस्माकं, ("मे" इति पाठान्तरम्), अशिवम्—अप्रियं

नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि ॥ १४ ॥

वचः ते—तुभ्य यदुक्तं "वह्निविशुद्धिमन्तरेण नाहं त्वां ग्रहीष्यामि" इत्येवंरूपम्। तथा हि रामायणम्;—

"प्राप्तचारित्रसन्देहा मम प्रतिमुखे स्थिता।
दीपो नेत्रातुरस्येव प्रतिकूलाऽसि मे दृढम्॥
तद् गच्छ त्वमनुज्ञाता यथेष्टं जनकात्मजे!।
एता दश दिशो भद्रे! कार्य्यमस्ति न मे त्वया॥" इति।

तत् न हि क्षमं—त्वयि तत् कथमपि न योग्यम्। त्वं साध्वी भवसि अणीयानपि चारित्रभ्रंशविषयकः संशयः त्वयि मे नासीत्, तथापि अलीकलोकापवादपरिजिहीर्षया मया तथाविधं रूक्षमभिहितम्; तत् तु सर्वथा त्वयि अयोग्यमतस्तदिदानीमनुस्मृत्य कोपं मा कुर्विति भावः। अथवा, तत् तस्मात् वस्तुगतिमनुसृत्येत्यर्थः, यदशुभममङ्गलं "यावदार्य्याया हुताशने विशुद्धिः" इत्युक्तलक्षणवचनमिति यावत्, ते तव विषये नः अस्माकं त्वदेकजीवितानां तव निर्दोषतां जानतामित्यर्थः, उक्तमिदानीमुदीरितं तत् त्वयि न क्षमं नोचितं सर्वथैवासमीचीनमिति। अत्रेदमाकूतम्।—मित्रत्वामित्रत्वाविशेषेण लोकसंरक्षणं हि राज्ञामुचितं पर्य्याप्तञ्च कर्म, तथा च सर्वज्ञभूतायाः तव उपरि किर्यत्प्रकारमनुष्ठितवतां तव निर्द्दोषताञ्च जानतामस्माकं पुनः त्वया अवाक्प्रसरं प्रागनुभूतानां तावतां दुःखानामनुस्मरणं सर्वथैवाकार्य्यम्; सत्यप्येवं, तथापि प्रभावमहिम्ना चन्तव्यमिति। उक्तमेवार्थं दृष्टान्तेन दृढयति, नैसर्गिकीति।—तथा हि सुरभिणः,—सुगन्धिनः [ अत्र "तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य" (७।१।७४ पा०) इति सूत्रेण पुंवद्भावात् 'सुरभेः' इत्यपि रूपं भवति। ] कुसुमस्य मूर्ध्नि देवादीनां शिरसि स्थितिर्नैसर्गिकी स्वाभाविकी इति सिद्धा—चिरप्रसिद्धा चेतनाचेतनसाधारण्यात् इति यावत्; चेतनैरवतंसरूपेण अचेतनैश्च स्तवकरूपेण (शाखाये) धारणादिति भावः। चरणैरवताडनानि—अवमर्दनानि न। अत्राभाणकः,—"सुधांशोर्जातेयं कथमपि कलङ्कस्य कणिका, विधातुर्दोषोऽयं न च गुणनिधेस्तस्य किमपि। स किं नात्रेः पुत्रो न खलु हरचूडार्चितमणिः, न वा ध्वान्तं हन्त्याज्जगदुपरि किंवा न वसति?॥" इति वदिति भावः। अत्रेदमवधेयं,—सुरभित्वविशेषणोपादानात् इतराणि अत्र व्यवच्छिद्यन्ते; तथा हि, कुसुमानि तावत् द्विविधानि, कान्तिप्रधानानि

सीता। भोदु, अज्जउत्त! भोदु, एहि पेक्खह्म दाव दे चरिदं। * [इति उत्थाय परिक्रामतः]।

लक्ष्मणः। इदं तावदालेख्यम्।

सीता। [निर्वर्ण्य] के एदे उवरि णिरन्तरट्ठिदा उवत्थुवन्ति विअ अज्जउत्तं? † (स)

लक्ष्मणः। देवि! एतानि सरहस्यानि जृम्भकास्त्राणि (ह),

* भवतु, आर्य्यपुत्र! भवतु, एहि पश्यामस्तावत् ते चरितम्।

† के एते उपरि निरन्तरस्थिता उपस्तुवन्तीवार्य्यपुत्रम्?

कानिचित् यथा शाल्मलिकुसुमानि, सुरभीणि च दमनकादीनि, उभयवन्ति मालती-प्रभृतीनि। यतः हि तानि कान्यपि सौकुमार्य्यसौन्दर्य्यसौरभ्यादिगुणवन्ति, अतः न हि अमूनि पादविघातार्हाणि, उभयगुणवतान्तु वस्तुतो न तथेति। [अत्र सुरभिप्रसूनानां शिरसि स्थितिरिव तवापि प्रथितयशसः स्वभावपूतत्वप्रशंसा समुचिता एव, चरणाव-मर्दनानीव न हि त्वयि कृतककलङ्कारोपः समीचीनः इति बिम्बप्रतिबिम्बभावेन साधर्म्यावगमात् दृष्टान्तालङ्कारः।—"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" इति लक्षणात्। केचित् तु पूर्वार्द्धं प्रति परार्द्धस्य समर्थनरूपत्वात् सामान्येन विशेषसमर्थन-रूपमर्थान्तरन्यासं मन्यन्ते]। वसन्ततिलकं वृत्तम्॥ १४॥

(स) निर्वर्ण्य—सप्रणिधानमवलोक्येत्यर्थः; ("निर्वर्णनन्तु निध्यानं दर्शनालोकने-क्षणम्" इत्यमरः)। उपरि—ऊर्द्ध्वदेशे, व्योमपथमधिकृत्येति यावत्। निरन्तरस्थिताः,—नास्ति अन्तरमवकाशः यस्मिन् कर्मणि तद्यथा तथा, अविरलभावेनान्योऽन्यविलग्नाः, घनसन्निविष्टा इत्यर्थः, उपचारार्थमिति यावत्। के नाम एते उपस्तुवन्ति इव—उपा-सते इव? दिव्यास्त्रत्वात् एषाम् उपर्य्यवस्थानं युक्तमेव, नातः उपचारसमयविरोधः। तथा हि रामायणम्।—

"उपतस्थुर्महार्हाणि सर्वाण्यस्त्राणि राघवम्।
ऊचुश्च मुदिता रामं सर्वे प्राञ्जलयस्तदा॥
इमे च परमोदार! किङ्करास्तव राघव!।
यद् यदिच्छसि भद्रन्ते तत्सर्वं करवाम वै॥" इति।

(ह) सरहस्यानि—रहसि निर्जने भवा रहस्या गोप्याः ("रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयकम्" इति मेदिनी।) आयुधप्रयोगसंहारकमन्त्रभेदाः इत्यर्थः, तैः सह

यानि भगवतः कृशाश्वात् (क) कौशिकम् (ख) ऋषिमुपसंक्रान्तानि (ग); तेन च ताड़कावधे प्रसादीकृतानि (घ) आर्य्यस्य ।

रामः । वन्दस्व देवि ! दिव्यास्त्राणि ।—

---

वर्त्तमानानि, जृम्भकास्त्राणि,—जृम्भयन्ति, सचेतनानां सम्मोहकत्वात् स्वलच्चीभूतान् चित्रार्पितानिव निश्चलान् कुर्वन्ति इति जृम्भकाणि, तन्नामधेयानि साधिदैवतानि ज्योतिर्मयाणि दिव्यास्त्राणि । अस्यन्ते चिप्यन्ते इति अस्त्राणि ।

(क) कृशाश्वात्—कृशाश्वः विश्वामित्रस्य कश्चित् पूर्वपुरुषः प्रपितामहः, तस्मात् ।

(ख) कौशिकं—विश्वामित्रम् । कुशिकः विश्वामित्रस्य पितामहः, गाधिर्नाम राजा तस्य पिता । कुशिकस्य गोत्रापत्यं पुमान् कौशिकः, ["ऋष्यन्धक" (४।१।११४ पा०) इत्यादिना अण् । ]

(ग) उपसंक्रान्तानि—उपगतानि । ["उपसंक्रान्तानि" इति कर्त्तरि प्रयोगात् स्वयमेव तानि दिव्यास्त्राणि आगत्य कौशिकमुपगतानीति प्रतीयते । परन्तु उपरिष्टात् कविः "कृशाश्वः परःसहस्रपरिवत्सरान्तेवासिने कौशिकाय" इत्यादिसन्दर्भेण, भगवान् कृशाश्वः स्वाधिगतानि तपस्तेजसा आप्यायितानि तनयभूतत्वमापुर्वन्ति सर्वास्त्राणि सहस्रपरिवत्सरान् व्याप्य शुश्रूषमाणाय अन्तेवासिने नम्रे कौशिकाय स्वप्रसादभूततया अदित इति अभ्यधात् । तथा हि रामायणम्—

"सर्व्वास्त्राणि कृशाश्वस्य पुत्त्राः परमधार्म्मिकाः ।
कौशिकाय पुरा दत्ता यदा राज्यं प्रशासति ॥
तेऽपि पुत्त्राः कृशाश्वस्य प्रजापतिसुतासुताः ।
नैकरूपाः महावीर्य्याः दीप्तिमन्तो जयावहाः ॥
* * * *
तानि चास्त्राणि वेत्त्येष यथावत् कुशिकात्मजः ।
अपूर्व्वाणाञ्च जनने शक्तो भूयश्च धर्म्मवित् ॥" इति ।

(घ) प्रसादेति—प्रसाद्यते सन्तुष्यते मनो येषु कार्य्येषु तानि प्रसादानि सानुग्रहदानानि । अप्रसादानि प्रसादानि कृतानि प्रसादीकृतानि, अनुकम्पया प्रदत्तानीत्यर्थः । आर्य्यस्य—आर्य्याय रामभद्रायेत्यर्थः (शेषे षष्ठी) ।

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्राः शरदस्तपांसि।
एतान्यपश्यन् गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि॥ १५॥

एतेषां दिव्यत्वं तेजोमयत्वं साधिदैवतत्वञ्च विशिष्य प्रतिपादयितुं भगवन्तरेणाभ्युपगमप्रकारं विवृण्वन् प्रस्तौति, ब्रह्मेति।—ब्रह्मादयः,—हिरण्यगर्भादयः कृशाश्वान्ताः तमसां निहन्तारः, पुराणाः,—प्राचीनाः आदिभवा इति यावत्, गुरवः,—शासितारः, ("मुनयः" इति वा पाठः)। ब्रह्मणो—वेदस्य ब्राह्मणस्य वा उपचारात् जगतः अपि वा ("वेदस्तत्त्वं तपो ब्रह्म" "ब्रह्मा विप्रः प्रजापतिः" इत्युभयत्राप्यमरः)। हिताय—रक्षणाय, सहस्रात् परा इति परःसहस्राः बहुसहस्रा इत्यर्थः, ["परःशताद्यास्ते येषां परा संख्या शताधिकात्" इत्यमरः। "पञ्चमी भयेन (२।१।३७ पा०) अत्र सूत्रे पञ्चमी" इति योगविभागात् समासः, राजदन्तादित्वात् सहस्रशब्दस्य परनिपातः। पारस्करादित्वात् सुडागमः। मयूरव्यंसकादित्वात् वा समासः]। शरदो वर्षाणि, ("स्याद्दतौ वत्सरे शरत्"इत्यमरः। व्याप्त्यर्थे द्वितीया)। तपांसि तप्त्वा कायशोषकराणि बहुविधानि दुष्कराणि व्रतानि सेवयित्वा। एतानि—अस्त्ररूपाणि, अस्त्ररूपेण परिणतानीत्यर्थः, तपोमयानि—तपस उद्भूतानीत्यर्थः, स्वानि—स्वकीयानि, तेजांस्येव अपश्यन्—ऐक्षिषत। ब्रह्मादिकृशाश्वान्तानां तपोधनानां चिरोपार्ज्जिततपोमयानि व्यपेतरजांसि तेजांसि एव जृम्भकास्त्राणि इति भावः। पुराण-रूषीणाम् तपस्तेजःसम्भूतत्वात् अस्माकन्तु सन्तानपारम्पर्य्यक्रमेण गौरवाधायकत्वात् च सबहुमानमभिवन्दितुमुचितानि इति रामस्याशयः। जृम्भकास्त्रप्रदानमुक्तं रामायणे—

"कामरूपं कामरुचिं मोहमावरणं तथा।
जृम्भकं सर्पनाथञ्च पन्थानवरुणौ तथा॥
कृशाश्वतनयान् राम ! भास्वरान् कामरूपिणः।
प्रतीच्छ मम भद्रन्ते पात्रभूतोऽसि राघव !॥
* * * *
राम प्राञ्जलयो भूत्वाऽब्रुवन् मधुरभाषिणः।
इमे स्म नरशार्दूल ! शाधि किं करवाम ते॥" इति।

[अत्र हि महात्मनां महापुरुषाणाञ्च गुणप्रख्यापनात् उदात्तालङ्कारः। तथा

सीता। णमो णमो एदाणं। * (ङ)

रामः। सर्वथा इदानीं त्वत्प्रसूतिमुपस्थास्यन्ति। (च)

* नमो नम एतेषाम्।

प्राचीनतमानां ब्रह्मादीनां तावत्फलरूपास्त्राणाम् अद्भुतपदार्थानां प्रत्यक्षायमाणत्व-प्रकटनात् भाविकालङ्कारः। "स्वान्येव" इत्यत्र रूपकञ्च ; इति सङ्कीर्य्यते]। वृत्तमुप-जातिः ;—"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति लक्षणात्। उपजातयो हि चतुर्दशधा भवन्ति—"भेदा भवन्तीह चतुर्दशास्याः" इति वाणीभूष-णोक्तेः। उपजातीनां प्रस्तारे कृतेऽयं "वाणी" नाम द्वितीयो भेदः। यथा प्राकृत-पिङ्गले—"कीर्त्तिर्वाणी माला शाला हंसी माया जाया बाला। आर्द्रा भद्रा प्रेमा रामा ऋद्धिबुद्धिस्तासां नामानि॥" इति॥ १५॥

(ङ) एतेषामिति सम्बन्धसामान्यविवक्षया षष्ठी। क्वचित् "एदेह्म" इत्येव पाठः, तस्य "एतेभ्यः" इति संस्कृतम्।

(च) त्वत्प्रसूतिं—तव सन्ततिमस्मद्वंशपरम्परामित्यर्थः। उपस्थास्यन्ति—उपगमि-ष्यन्ति, त्वत्पुत्राधिकृतानि भविष्यन्तीत्यर्थः। [एतेन पुंप्रजे जनिष्येते इति सूच्यते ; स्त्रीप्रजात्वे जृम्भकास्त्राणामुपस्थानमसङ्गतं स्यादित्यवधेयम्]। भगवतः कौशिकानु-ग्रहादेतानि मामारभ्य अस्मद्वंश्यान् सर्वानेव उपसंक्रमिष्यन्तीति भावः।

आलेख्यप्रदर्शनप्रसङ्गेन, प्रथमतः एव रघुकुलराजश्रियः सुदृढं प्रतिष्ठापकानां भगवतः रामभद्रस्याभ्युदयैकनिदानभूतानामन्वयक्रमेण तदङ्गभुवः उपसंक्रम्य कलधौतविधौतां सूर्य्यवंशकीर्त्तिञ्च परितः प्रथयतां जृम्भकास्त्राणाञ्चोपवर्णनमित्यपूर्व-मेकं कवित्वकौशलं प्रस्तुतमकारि कविना अस्मिंतिहासवर्णनावसरे ; एतेषां तपस्तेजो-मयत्वेन प्राधान्यमवगम्य पुरतस्तेनैषामुपन्यास उचित इति विभाव्य च भगवता राघ-वेण अपि सबहुमानमेतानि उद्दिश्य अवन्दिषत। अतः सर्व्वेऽपि प्राथमिकवृत्तान्ते रामभद्रजन्मादौ तदनङ्कापयित्वा इतः प्रभृति एव चित्रदर्शनमनुष्ठितमिति सुधीभि-रनुसन्धेयम्।

[अयं हि प्रकरी नाम सन्धिरनुमीयते, इति केचित, तथा हि प्रसङ्गसङ्गतिक्रमेण अभिहितानामेकदेशवृत्तीनां वस्तूनामुपवर्णनमेव प्रकरी नाम सन्धिः, तदुपवर्णितन्तु वस्तु स्वकीयं फलमसाधयत् नाटकप्रतिपाद्यस्यैव वस्तुनः सुमहदुपकारकं भवति। यथोक्तं दर्पणे—

सीता। अणुग्गहीदह्मि। *

लक्ष्मणः। एष मिथिलावृत्तान्तः।

सीता। अह्महे! दलन्तणवणीलुप्पलसामलसिणिद्धमसिणसोहमाणमंसलदेहसोहग्गेण विह्मअत्थिमिदतादद्दीसमाणसोम्मसुन्दरसिरी अणादरखण्डिदसङ्करसरासणो सिहण्डमुद्धमुहमण्डलो अज्जउत्तो आलिहिदो। † (छ)

* अनुगृहीतास्मि।

† अहो! दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलदेहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसौम्यसुन्दरश्रीः अनादरखण्डितशङ्करशरासनः शिखण्डमुग्धमुखमण्डल आर्य्यपुत्र आलिखितः।

"प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता।

प्रकरी नायकस्य स्यात् न स्वकीयं फलान्तरम्" ॥ इति।

यथा हि शाकुन्तले चूताङ्कुरमवचिन्वतीनां चेटीनामवतारणा,तथैवेयं प्रकरीत्याख्यायते इति। यद्यपीयं प्रकरी, भावप्रकाशिकामतेऽत्र कथञ्चिदुपपद्यते, तथापि नव्यमते न तथा, यथा कुलपत्यङ्के रावणजटायुसंवादमवतार्य्य जटायोर्मोक्षादिप्राप्तिप्रस्तावावतारः, प्रासङ्गिकेतिवृत्ततया अवान्तरचरितोपवर्णनमिति ध्येयम् ]।

( छ ) इदानीमभिव्यक्तां रतिं विभावादिना सुस्फुटं प्रकाशयितुं सीताकपालम्बनविभावानुगतं विप्रलम्भावान्तरभेदं पूर्वरागम् ओजोगुणमयीं गौड़रीतिविनिबद्धां स्वाधिकृतामुत्कलिकाप्रायां रचनापद्धतिं विन्यस्य प्रस्तौति,अहो इत्यादिना ; तथा हि—

"श्रवणात् दर्शनाद्वापि मिथः संरूढरागयोः।

दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥" इति।

अहो इति।—अहो—विस्मयानन्दसंयोगे ; दलतीति दलत् विकसत् यत् नवनीलोत्पलम् उद्भिद्यमानेन्दीवरमित्यर्थः, तदिव श्यामलं मेचकं, स्निग्धं मेदुरं कोमलञ्च, मसृणं कार्कश्यादिरहितं विस्रमरञ्च, शोभमानम् अङ्गसौष्ठवात् सुन्दरं मांसलं सुघटितदृढमांसवदित्यर्थः, यद्देहः तस्य यत् सौभाग्यं सौन्दर्यं तेनोपलक्षितः। विस्मयेत्यादि।—विस्मयेन आश्चर्य्येण शोभातिशायित्वादित्यर्थः, स्तिमितः निश्चलः आह्लादनिर्भरार्द्रहृदयः इति यावत्, तथाविधेन तातेन पित्रा जनकेन दृश्यमाना अवलोक्यमाना सौम्या निसर्गशोभाभूमिः प्रशान्तेति यावत्, सुन्दरी मनोहारिणी

लक्ष्मणः। आर्य्य ! पश्य।—

सम्बन्धिनो वशिष्ठादीनेष तातस्तवार्चति।
गौतमश्च शतानन्दो जनकानां पुरोहितः॥ १६॥

रामः। द्रष्टव्यमेतत्।—

जनकानां रघूणाञ्च सम्बन्धः कस्य न प्रियः ?।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः॥ १७॥

दिव्यन्यर्थः, श्रीः शोभा यस्य तथोक्तः, "शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरपि गद्यते" इति विश्वः। अनादरेत्यादि।—तथा अनादरेण अवलीलया आयासं विनैवेत्यर्थः, खण्डितं भग्नं शङ्करशरासनं हरधनुर्येन तथोक्तः। शिखण्डेत्यादि।—अपि च शिखण्डेन काकपक्षेण ("बालानान्तु शिखा प्रोक्ता काकपक्षः शिखण्डकः" इति हलायुधः।)मुग्ध सुन्दरं, शोभमानमित्यर्थः, ("मुग्धः सुन्दरमूढयोः" इति मेदिनी।) मुखमण्डलं यस्य तथोक्तः, आर्य्यपुत्रः,—राम इत्यर्थः, आलिखितः,—चित्रितः। [अत्र रामस्य महत्त्व-वर्णनात् उदात्तालङ्कारः। अत्र शृङ्गाररसानुगुणैः वाग्वेषादिभिः मधुरतायाः नायक-गतायाः सुसमञ्जसमालिखितत्वात्, ललिताख्यः सात्त्विको नायकगुणः वर्णितः]।

अथ सीतायाः निरतिशयां प्रीतिं तरसा समेधयितुं स्निग्धगुरुजनेषु जनकानाम् ऋत्विजाञ्च प्रगाढ़प्रणयित्वं स्फुटतया विहणोति, सम्बन्धिन इति।—एषः तव तातः जनकः, जनकानां जनकापत्यभूतानां, पुरोहितः ऋत्विक् [ पुरः अग्रे धीयते स्थाप्यते इति दधातेः कर्म्मणि क्तः ] मन्त्राद्युपदेशार्थं सर्वोपरि स्थापितः पुण्यादि-कर्मणि उपदेशको गुरुः इति यावत्। गौतमः, अहल्यायां जातः गौतमस्य महर्षेः तनुजः, शतानन्दः तन्नामधेयः, एष हि सर्वजनविदितः जनकपुरोधाः। सम्ब-न्धिनः,—अभिनवविवाहजन्यसम्बन्धवतः ऋषित्वादात्मीयांश्च, वशिष्ठादीन् अर्चति सबहु-मानं प्रत्यङ्गं करोति। [अत्र प्राकरणिकयोः शतानन्दजनकयोः कर्तृत्वेन एकस्यामर्च्चन-क्रियायामन्वयात् तुल्ययोगितालङ्कारः।]॥ १६॥

स्वगौरवाभ्युदयैकनिदानस्य कुशिकनन्दनस्योपरि समुचितां सुदृढाञ्च भक्तिं प्रदर्श्य जनकरघुवंशसम्बन्धमखिललोकहितकरत्वेनोत्कीर्त्तयति. जनकानामिति।—रघोः गोत्रापत्यानीति रघवस्तेषाम्। जनकानां जनकवंशीयानाम्। [उभयत्र तद्राजत्वात् संज्ञायां बहुष्वणो लुक्]। सम्बन्धः विवाहनिबन्धनमित्यर्थः, कस्य जनस्य न प्रियः प्रीति-करः? यत्र यस्मिन् वैवाहिके सम्बन्धे, कुशिकनन्दनः राजः कुशिकस्य पौत्रः विश्वामित्रः

सीता। एदे क्खु तक्कालकिदगोदाणमङ्गला चत्तारो भादरो विआहदिक्खिदा (ज) तुम्हे। अम्हो! जाणामि, तस्सिंज्जेव प्पदेसे तस्सिंज्जेव काले वत्तामि। * (झ)

* एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरो विवाहदीक्षिता यूयम्। अहो! जानामि, तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्त्ते।

स्वयं दाता दानकर्त्ता गृहीता च। उभयोरेव कुलयोः पूज्यत्वात् विश्वामित्रे दातृत्व-गृहीतृत्वोपचारः। ["कुशिकनन्दनः" इति पदोपादानात् प्राक् विश्वामित्रस्य चत्रत्वात् तद्भावेनैवाऽसौ महाभागः इदानीं कठोरतपसैवोपलब्धस्य ब्रह्मर्षित्वस्याभिमानं परिहृत्य परमसुहृद्रूपतया अस्माकमनिशं सौख्यमावहति इति व्यज्यते, अतश्चोभयोरेव कुलयो भूरीणां दानग्रहणप्रयोजकव्यापाराणामनुष्ठानात् महोपकारकत्वेन दातृत्वगृहीतृत्व-प्रशंसा तदीया सुसङ्गता अविरुद्धा चैवेति भाव्यम्। उभयकुलपूज्यत्वात् तदाज्ञया कन्यादानग्रहणयोः सम्पन्नत्वाच्चेति भावः। अत एवात्रोदात्तालङ्कारः,—प्रस्तुतेऽस्मिन् वैवाहिकसम्बन्धे महत्त्वमावेदयितुं तत्सम्बन्धितयोपधमावश्वामित्रमहत्त्वोत्कीर्त्तनात्। तथा हि—"यत्राऽपि प्रस्तुतस्याङ्गं महतां चरितं भवेत्" इति दर्पणः। ]॥ १७॥

(ज) तत्कालेत्यादि।—स एव कालः तत्कालः, विवाहप्राक्कालः इत्यर्थः [ तत्-कालस्य अतीवाह्लादकरत्वेन तेषु प्रसिद्धत्वात् तस्य तच्छब्देनोपादानमिति बोध्यम्]। तस्मिन् कृतं गवां केशानं दानं छेदनं तदेव मङ्गलं शुभकर्म येषां ते तथोक्ताः। ("गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः। स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि। पुंस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु॥" इति विश्वः)। ["दो छेदे" इति दैवादिकस्य दोधातोर्ल्युः"] अथवा गावः लोमानि, केशाः इत्यर्थः, दीयन्ते खण्ड्यन्ते यत्र कर्मणि इति अधिकरणव्युत्पत्त्या केशान्ताख्यं चौरकर्म उच्यते, तदेव मङ्गलं माङ्गलिकं कर्म, तत् कृतं यथाशास्त्रमृत्विग्भिरनुष्ठितं येषां तथोक्ताः; यथाविधि तत्कर्मनिष्पादनात् शुभां सुषमामादधतः इत्यर्थः। तथा हि मनुः,— "केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते। राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥" इति। अतः रघौ कालिदासः,—"अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्त्तयत् गुरुः" इति। एतद्धि कर्म विवाहात् प्राक् क्रियते। केचित् तु— गवां पयस्विनीनां धेनूनां दानं पात्रेषु त्यागः तद्रूपं वा माङ्गलिकं कर्म; दम्पत्योः

रामः। एवम्। (ञ)—

समयः स वर्त्तत इवैष यत्र मां
समनन्दयत् सुमुखि! गौतमार्पितः।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्त्तिमानिव महोत्सवः करः॥ १८॥

---

दीर्घायुष्कामनयैवैतत् क्रियते इति व्याचक्षते। विवाहदीक्षिताः,—उद्वाह-संस्कृताः [ दीक्षधातोः भौवादिकस्य कर्त्तरि क्तः ]।

(झ) अहो इति।—जानामि अनुभवामि मन्ये इत्यर्थः, अह तस्मिन्नेव प्रदेशे—जनकालये विवाहाधिष्ठितस्थाने, तस्मिन्नेव काले—हरधनुर्भङ्गादिकाले इत्यर्थः, वर्त्त—अस्मि। अहो! चित्रकारिणा अपूर्वमालिखितं, यतः स एव कालः देशश्च इदानीम् अतीतः दूरस्थः अपि प्रत्यक्षीभूततया आभाति नः। [अतीते चाऽनुप्राणितः भाविका-लङ्कारः ]।

(ञ) एवम्—अस्त्येवेति शेषः, यद्वदसि तत्तथैवेत्यर्थः।

इदानीं रूपभूषणादिरूपकोद्दीपनविभावैरुद्बुद्ध नायकगतं पूर्वरागमभिधातुं पुरस्तावत् तद्गतमनुभवमभिव्यनक्ति, समय इति।—हे सुमुखि! स एष समयः,—वैवाहिकः कालः, वर्त्तते इव—अतीतोऽपि इदानीन्तन इवानुभूयते इत्यर्थः। यत्र—यस्मिन् समये, सम्प्रदानसमये इत्यर्थः, गौतमार्पितः,—गौतमेन गौतमतनयेन पुरोधसा शतानन्देन मम करे स्थापित इत्यर्थः, (एष हि चिरन्तनः सदाचारः प्रचरति, तथा हि भवदेवः,—"ततो आमाताऽऽचान्तः मङ्गलौषधिलिप्तेन दक्षिणहस्तेन तादृशमेव कन्यायाः दक्षिणहस्तं स्वहस्तोपरि निदध्यात्" इति)। आगृहीतं परिहितं, कमनीयं सुन्दरं कङ्कणं वलयं वैवाहिकसूत्रं वा येन तथाविधः, समन्ताद्धृतरुचिरहेम-वलयः इत्यर्थः,"कङ्कणं करभूषायां हस्तसूत्रे च शेखरे" इति हैमः। [एतेन सुमुखीति-पदसमभिव्याहारात् सीतायाः वदनकमलचारुताऽतिशयादिवत् करकमलसौकुमार्य-भूमत्वञ्च ध्वनितम् ]; अथवा—आगृहीताः शृङ्गारमूलकसात्त्विकभावविशेषाणां स्वेदवेपथुरोमाञ्चादीनामुदयात सम्यक्तया स्वीकृताः कमनीयाः स्पृहणीयाः कङ्कणाः तदाकाराः स्वेदजललवाः यस्मिन् तथाविधः, अयं तव करः, मूर्त्तिमान् सविग्रहः; महोत्सवः महामह इव मां समनन्दयत् नितरामपिप्रयदित्यर्थः। [अत्र

लक्ष्मणः। इयमार्य्या, इयमपि आर्य्या माण्डवी, इयमपि वधूः श्रुतकीर्त्तिः। (ट)

सीता। वच्छ ! इअं पि अवरा का ? * (ठ)

लक्ष्मणः। [सलज्जस्मितं स्वगतम्] अये ! ऊर्मिलां पृच्छति

* वत्स ! इयमपि अपरा का ?

पूर्वार्द्धे अतीतस्यापि कालस्य इदानीन्तनत्वेन उत्कटैककोटिकतया प्रतीयमानत्वात् भावाभिमानिनी क्रियोत्प्रेक्षा ; परार्द्धेऽपि तथैव महोत्सवलक्षणगुणावगाहितया गुणोत्प्रेक्षा ; ताभ्याञ्चाङ्गतस्य भूतस्य वस्तुनः प्रत्यक्षायमाणत्वेन अभिधानात् विच्छित्तिविशेषार्थ्यभिधायकतया भाविकालङ्कारः ध्वनितः, प्राक्प्रत्यक्षीभूतानां हि वस्तूनामुपवर्णने इदानीं प्रत्यक्षायमाणत्वोक्तेरिति] । मञ्जुभाषिणी वृत्तम् ।—"सजसा जगौ भवति मञ्जुभाषिणी" इति लक्षणात् । वृत्तमिदं हि त्रयोदशाक्षरपादच्छन्दसां २७९६ तमप्रस्तारान्तर्भूतम् ॥ १८ ॥

(ट) चित्रे हस्तं निर्दिश्य अभिधत्ते, इयमिति ।—इयमार्य्या—भवती, (सीतां प्रति इयमुक्तिः)। माण्डवी, राजर्षेः जनकस्य कनीयसः भ्रातुः कुशध्वजस्य ज्येष्ठा कन्या भरतपत्नी । अनयोस्तु ज्येष्ठभ्रातुः भार्य्यात्वेन मातृसमानत्वात् आर्य्यापदेनाभिधानम् ; तथा हि बृहस्पतिः,—

"मातुःस्वसा मातुलानी पितृव्यस्त्री पितृस्वसा।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः ॥" इति ।

श्रुतकीर्त्तिः,—शत्रुघ्नपत्नी कुशध्वजस्य कनिष्ठा कन्या, कनिष्ठभ्रातुः पुत्रस्थानीयत्वात् तद्भार्य्यायाः स्नुषात्वेनाभिधानम् ; तथा हि मनुः,—

"पितेव पालयेत् पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः ।
पुत्रवच्चानुवर्त्तेरन् ज्येष्ठे भ्रातरि धर्मतः ॥" इति ।

(ठ) महामनाः लक्ष्मणः ज्यायसां सोदराणां सविधे सदाचारं सम्यक् अक्षतमेव विधातुं स्वाविनीतत्वञ्च दर्शयितुं लज्जया स्वपत्नीमूर्मिलामप्रदर्श्य माण्डवीतः प्रभृति चित्रं दर्शयितुमारेभे, तद्दृष्ट्वा अपारप्रणयपीयूषधाराप्रवाहिणी मुग्धा वैदेही अप्रतिमं वात्सल्यं विकाशयितुं पृच्छति,--वत्स इत्यादि ।

आर्य्या !! भवतु अन्यतः सञ्चारयामि। (ड) [प्रकाशम्] आर्य्ये ! दृश्यतां द्रष्टव्यमेतत्। अयञ्च भगवान् भार्गवः। (ढ)

सीता। [ससम्भ्रमम्]। कम्पिदह्मि। * (ण)

रामः। ऋषे ! नमस्ते।

लक्ष्मणः। आर्य्ये ! पश्य अयमार्य्येण—" [इत्यर्द्धोक्ते] (त)

रामः। [साक्षेपम्]। (थ) वत्स ! बहुतरं द्रष्टव्यमस्ति। अन्यतो दर्शय। (द)

* कम्पिताऽस्मि।

(ड) सलज्जेति।—लज्जया सह वर्त्तमानं सलज्जं, तथाविधं स्मितमीषद्धसनं यस्मिन् कर्मणि तत्। स्वस्त्रीविषयकप्रश्नोदयात् लज्जा मृदुहसितञ्च युगपदेवोदियाते-त्यर्थः। स्वगतम्—आत्मगतमभिदधे इत्यर्थः।—"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्" इति लक्षणात्। भवतु—सत्यप्येवं तथापीत्यर्थः, अन्यतः—भयानकरसभाव-बहुलं आलेख्यस्थान्यस्मिन्नंशे इति यावत्, सञ्चारयामि—आर्य्यायाः दृष्टिं विनि-वेशयामीत्यर्थः, ऊर्मिलावृत्तान्तं विस्मारयितुमिति भावः।

(ढ) प्रकाशम् इति।—"सर्वश्राव्यं प्रकाशं स्यात्" इति लक्षणात् स्फुटमभिधत्ते इत्यर्थः। द्रष्टव्यमेतत्—द्रष्टुमुचितं भार्गवविजयालेख्यं, रामस्य विजयवार्त्तासंसृष्ट-त्वादेतस्येत्यर्थः, पत्युः सर्वतः कीर्त्तेः प्रथनेन सतीनां महाह्लादकरत्वाच्च इत्यर्थः। भगवान्—त्रिलोकीपूज्य इत्यर्थः, भार्गवः—परशुरामः। उद्वाहक्रियां समाप्य मिथिलायाः प्रत्यावृत्तानां रामादीनां निधनाय क्षत्रान्तकः परशुरामः हरधनुर्भङ्गात् तद्वीर्य्यमसहिष्णुः पथि उदीयमानः अभूत्, रामस्तु तं पराजिग्ये, इति रामायणी वार्त्ता।

(ण) ससम्भ्रममिति।—भीत्यादिजनितत्वरया सहितम्*। कम्पिता—वेपथु-मती। भार्गवस्य भीषणवपुषः समालोकनात् भयानकरसावेशात् कम्पनं वेदितव्यम्।

(त) आर्य्येण इति।—वैष्णवं शरासनं समारोप्य समाकृष्टतेजाः निरस्तश्चेतश्च इति वाक्यशेषः, अयञ्च भगवान् भार्गवः इति पूर्वेणान्वयः।

(थ) साक्षेपमिति।—सप्रतिषेधम्। लक्ष्मणसमीरितं वचः प्रतिषिध्येत्यर्थः। अथवा, आक्षेपेण—कष्टेन सह। ["क्षिपु निरसने" इति धातोः भावे घञि रूपम्]।

(द) वत्सेत्यादि।—भगवतः भूसुरस्य परशुरामस्य पराभवोत्कीर्त्तनस्य सता-

सीता । [ सस्नेहबहुमानं निर्वर्ण्य ] । सुट्ठु सोहसि अज्जउत्त ! एदिणा विणअमाहप्पेण । *

लक्ष्मणः । एते वयमयोध्यां प्राप्ताः ।

रामः । [सास्रम्] । (घ) स्मरामि हन्त स्मरामि ।—

जीवत्सु तातपादेषु नवे दारपरिग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥१९॥

* सुष्ठु शोभसे आर्य्यपुत्र ! एतेन विनयमाहात्म्येन ।

मननुमतत्वात्, प्रत्युत, महतां निन्दाश्रवणस्य प्रत्यवायजनकत्वात् स्ववीर्य्ययशसः च आत्मना श्रोतुमयोग्यत्वात् तत्कथनव्यवसायात् लक्ष्मणः प्रतिषेधितः; [एतेन अनात्मश्लाघाकरत्वात् नायकस्य धीरोदात्तत्वं सूचितमिति बोध्यम् । तथा हि,— "अविकत्थनः क्षमावान् अतिगम्भीरो महासत्त्वः । स्थेयान् निगूढमानी धीरोदात्तो दृढव्रतः कथितः ॥" इति] । अन्यतः दर्शय—अन्यत्र लिखितं वस्तु निभालयेत्यर्थः ।

सस्नेहबहुमानमिति ।—रामस्य धीरोदात्तोचितव्यवहृतिं दृष्ट्वा तस्मिन् सीतायाः निर्भरस्नेहाविर्भावः, यद्यपि तस्मिन् महति वीर्य्ये, अत एव द्विजस्योपरि तदाहितत्वेन निन्द्यत्वेन तद्दर्शनौत्सुक्यपरिवर्जनदर्शनात् बहुमानश्च, ताभ्यां सह वर्त्तमानं यथा तथेत्यर्थः । सुट्ठ—प्रशंसार्थकमव्ययम् । विनयमाहात्म्येन—विनयस्य प्रागुपदर्शितस्य माहात्म्येन महिमभूयस्त्वेनेत्यर्थः, [एतेन महतः भार्गवस्य निकृतिरूपं महाजनलाघवं, स्वविजयरूपं गौरवञ्च द्रष्टुमशक्यत्वेन, राघवस्य माहात्म्यम्, अतिविनयित्वञ्च सूच्यते] ।

(घ) सास्रमिति ।—विदेहात् (वर्त्तमानाभिधा "तिरुत्") अयोध्यामुपगतस्य राघवस्य, कियद्दिवसानन्तरमेव तद्राज्याभिषेचनमनुतिष्ठतः पितुः स्वर्गतिमनुस्मृत्य निर्भरशोकमग्नस्य, अयोध्याप्रत्यागमनश्रवणसमकालं हि निर्भरम् अश्रुपातः अजायत इत्यवधेयम् । हन्त—खेदे । स्मरामि—स्मरामीति द्विरावृत्तिः गुरुवियोगकृतोद्वेगसन्तापद्योतिका,—

"विवादे विस्मये हर्षे शोके दैन्येऽवधारणे ।
प्रसादने सम्भ्रमे च द्विस्त्रिरुक्तिर्न दुष्यति ॥" इत्याप्तवचनात् ।

तत्कालसम्भूतमुदन्तजातमिदानीं स्मृतिपथमारूढमित्यर्थः । तद्वृत्तान्तस्य शोकबहुलत्वात् तद्वेगं सोढुमशक्नुवतः रामस्य सास्रेङ्गितमिदम् ।

शोककारणानां संस्मारकतां विशदीकर्त्तुं स्मरणप्रकारमभिदधाति, जीवत्स्विति ।—तातपादेषु जनके "एकत्वं न प्रयुञ्जीत गुरावात्मनि चेश्वरे" इत्यादि-

इयमपि तदा जानकी—

प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलैः
दशनमुकुलैर्मुग्धालोकं शिशुर्दधती मुखम् ।

स्मरणात् गौरवात् बहुवचनम् । ( पादशब्दप्रयोगस्तु तेषामतिपूज्यत्वद्योतनाय,—"उत्तमानां स्वरूपं तु पादशब्देन भण्यते" इति दर्शनात् । स्वर्गतस्य पितुः नामोच्चारणस्य सपदि शोकावेगकरत्वात् गुरुनामग्रहणप्रतिषेधाच्च दशरथ इति नामग्रहणं नाकारि इत्यवधेयम् ) । जीवत्सु विद्यमानेषु सत्सु, नवे दारपरिग्रहे परिणये सति, मातृभिः कौशल्यादिभिः, चिन्त्यमानानां कथं हि एतेषां समयः सुखेन गमिष्यति, इत्थं सततं शुभमनुध्याय सस्नेहं परिवर्द्धमानानां, नः अस्माकं, [ दशरथस्य सार्द्धसप्तशती पत्न्यः आसन्, तासु तिस्रो मुख्याः । तत्रापि महिष्याः कौशल्यायाः गर्भसम्भूतस्य रामस्य सुखवर्द्धनाय ताः सर्वा एव निरताता बभूवुः । एकस्या एव मातुः सुखलालनत्वं दुर्लभमेव, किमुत सार्द्धसप्तशत्याः ; अत उक्तं "मातृभिः" इति । किञ्च तासां सुखाकरवस्तूनां नवनवोद्भावनमपि आसीत्, अत उक्तं "चिन्त्यमानानाम्" इति । सामान्यरक्षकस्य जीवनं सततं हि रक्षितजनानां सुखावहं भवति, निरतिशयसुखानुध्यानरतस्य पितुस्तु सुतरामेव तथेति हृदयम् ] ते पूर्वानुभूताः [ अत्र अनुभूतार्थविषयत्वात् तच्छब्दस्य न यच्छब्दव्यपेक्षा ; तथाहि—"प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते" इत्यायुक्तेः] हि दिवसाः अपरिच्छिन्नानन्दैकरसाः वाचामगोचराः इत्यर्थः, गताः अतीताः चिरायेति शेषः, कथमपि ते पुनः नैवेदानीं लप्स्यन्ते इत्यर्थः । [अत्र दिवसानां सुखप्रदत्वे, तातपादजीवनरूपे एकस्मिन् कारणे सत्यपि, नवदारपरिग्रहादिरूपाणां हेत्वन्तराणां खले कपोतवत् साहित्येनैकदावतरणात् समुच्चयालङ्कारः ; अपि चात्र, दिवसपदस्य लक्षणया मुख्यार्थस्य परित्यागेन स्वविशेषरूपार्थान्तरसंक्रमणात् अर्थान्तरसंक्रमितत्वं ज्ञेयम्] ॥ १९ ॥

न केवलं मातापितरौ भवत्याः सुखाय निरतौ, त्वमपि तेषां सुखहेतुरासीः, इति नायिकायाः मुग्धात्वमुपवर्णयितुं तत्तद्दिवसानां महाह्लादकरत्वं भङ्ग्यन्तरेण प्रतिपादयति, प्रतन्विति ।—तथा प्रतनुभिः स्वभावसुकुमारवयोजन्यतया सूक्ष्मैः अथच विरलैः अनतिनिविडैरित्यर्थः, तथा प्रान्ते कपोलोपान्ते उन्मीलन्तः स्फुरन्तः ये मनोहराः रुचिराः कुन्तलाः केशाः तैः ; अपि च दशनमुकुलैः,—दशनाः दन्ताः मुकुलानीव कुन्दकोरका इव तैः उपलक्षितं, तथा मुग्धालोकं—मुग्धो मनोहरः आलोकः

ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-
रकृत मधुरैरम्बानां मे कुतूहलमङ्गकैः ॥ २० ॥

लक्ष्मणः। एषा मन्थरा।

रामः। [ अनुत्तरमन्यतो दर्शयन् ]। (न) देवि वैदेहि !—

दर्शनं यस्य तथोक्तं सुहास्यमित्यर्थः, मुखं दधती धारयन्ती, शिशुः शैशवयौवनान्त-र्वर्त्तमाना शिशुप्राया इत्यर्थः ( "इयमपि जानकी" इति कर्तृपदेन पूर्वेणान्वयः ) ; ललितललितैः,—ललितेभ्यः ललितैः [इति पञ्चमीसमासः], अथवा अतिशयेन ललितैरतिसुन्दरैरित्यर्थः। [ "प्रकारे गुणवचनस्य" (८।१।१२ पा०) इति द्विर्भावः। "ललितं त्रिषु सुन्दरम्" इत्यमरः ] अथवा—ललितात् तन्नाम्ना प्रसिद्धात् सभ्रूभङ्ग-करकिसलयावर्त्तनरूपात् स्वैरचरणकमलन्यासादिरूपाच्च स्वाभाविकनायिकाऽलङ्कर-णात् हेतोः, तद्वत्तयेति भावः, ललितैः मञ्जुलैः हृदयग्राहिभिरित्यर्थः, ( तथा हि— "सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत्" इति लक्षणात् ) ज्योत्स्नाप्रायैः,— आनन्दकरत्वात् कौमुदीसदृशैर्लावण्यमयैरित्यर्थः, अतीव धवलैरिति यावत्, [ अत्र प्रायशब्दः प्रचुरवाची, "जलप्रायो देशः" इतिवत् मयूरव्यंसकादित्वात् समासः] ; अकृत्रिमविभ्रमैः,—नास्ति कृत्रिमो विभ्रमः विलासः भङ्गीविशेषः येषु, तथाविधैः, अनुद्भिन्नयौवनतया अशिक्षितकृत्रिमविलासैरित्यर्थः, मधुरैः,—नेत्रानन्दकरैः कोमलैः, अङ्गकैः [अल्पार्थे कन्] तनुतरैरित्यर्थः, मे मम, अम्बानां मातृणां, कुतूहलं दर्शनौत्सुक्यं किमपि नाम आनन्दमित्यर्थः, अकृत अजनयत् [ करोतेः लुङि रूपम्। कृञः आत्मनेपदेन रामाम्बाकुतूहलकरणफलं सीतायाः अवगम्यते कर्त्रभिप्रायिकत्वादित्यव-धातव्यम् ]। सीतायाः शुद्धान्तमध्युषितत्वेन अन्येषां तद्दर्शनासम्भवात्, मातृणां पुनः तस्यां स्नेहातिशय्यञ्च द्योतयितुम् अम्बानामितिपदमुपात्तमिति संक्षेपः। [ अत्र मुग्धानायिकायाः यथावत् असाधारणचेष्टादीनामुपवर्णनात् स्वभावोक्त्यलङ्कारः, अपि च कुतूहलरूपकार्यस्य बहूनां कारणानां खले कपोतवदेकत्र समावेशात् समुच्चयालङ्कारः ; "दशनमुकुलैः" "ज्योत्स्नाप्रायैः" इत्युभयत्र लुप्तोपमा ; इत्येषा-मङ्गाङ्गिभावतयाऽवस्थानात् सङ्करः]। वृत्तं हरिणी।—"नसमरसला गः षड्-वेदैर्हयैर्हरिणी मता" इति तल्लक्षणात्। तत्र सप्तदशाक्षरपादच्छन्दसां ४६११३ तम प्रस्तारान्तर्गतम् ॥ २० ॥

(न) अनुत्तरमिति।—तातविनाशादिविपदाप्तिनिदानत्वात् कैकयीसंवादसंवलि-

इङ्गुदीपादपः सोऽयं शृङ्गवेरपुरे पुरा ।
निषादपतिना यत्र स्निग्धेनासीत् समागमः ॥ २१ ॥

लक्ष्मणः । [विहस्य स्वगतम्] । अये मध्यमाम्बावृत्तान्तोऽन्तरित आर्य्येण !! (प)

सीता । अम्हो एसो जड़ासञ्जमणवुत्तन्तो । * (फ)

लक्ष्मणः । पुत्रसंक्रान्तलक्ष्मीकैर्यद् वृद्धेक्ष्वाकुभिः कृतम् ।
धृतं बाल्ये तदार्य्येण पुण्यमारण्यकव्रतम् ॥ २२ ॥

---

* अहो एषः जटासंयमनवृत्तान्तः ।

---

तायाः तदीयदास्याः मन्थरायाः संवादे कामपीडामङ्गलैव अन्यतः दृष्टिमदितेति बोध्यम् ।

इङ्गुदीति ।—सः अयं पुरोवर्त्ती चिचित इत्यर्थः, शृङ्गवेरपुरे—गुहस्य नगरे, (अधुना "चुनार" इति ख्याते) इङ्गुदीपादपः तापसतरुवृक्षः, यत्र वृक्षमूले, पुरा वनवासावसरे, स्निग्धेन मित्रेण ("वयस्यः स्निग्धः सवयाः" इत्यमरः) निषादपतिना गुहेन, सहेत्यर्थः, समागमः सम्मिलनम् आसीत् ॥ २१ ॥

(प) विहस्य इति ।—सस्मितमित्यर्थः । मध्यमेत्यादि—मध्यमायाः द्वितीयायाः अम्बायाः अनन्याः कैकय्याः इत्यर्थः, वृत्तान्तः,—उदन्तः रामविवासनादिरूपः व्यापारनिचयः इत्यर्थः, अन्तरितः,—निह्नुतः गोपायित इत्यर्थः ; [ तद्वृत्तान्तस्य दुःखोद्दीपकत्वात् अशुभकरत्वात् वा परिह्नतः ; अन्तरयतेः नामधातोः कर्मणि क्तस्य रूपम् । "वृत्तान्तः" इत्यत्र "वृत्तम्" इति पाठस्तु समीचीनः । तदर्थस्तु,—वृत्तं चरितं वनप्रस्थापनरूपम् । वृत्तान्तमिति पाठे—वृत्तान्तम् आचरितं, स्वरूपार्थे अन्तशब्दस्य क्लीवलिङ्गत्वात् वृत्तान्तमित्यस्य क्लीवत्वम्] ।

(फ) अहो—विस्मये ; वसुधाऽऽधिपत्ये व्रियमाणस्य राघवस्य को नामाऽयमवस्थाविपरिणामः, दैवस्याप्रतिबद्धप्रसरत्वात्, एतदेवात्र विस्मयकारणमवधेयम् । जटासंयमनवृत्तान्तः,—जटाबन्धनव्यापारः । पुरा हि वनगमनाऽवसरे एतस्मिन् शृङ्गवेरपुरे गुहेन रामलक्ष्मणयोः जटाः नियमिताः इति, रामायणी वार्त्ता ।

तदेवेदानीं सविशेषं व्यतीकर्त्तुमुदारमार्य्यवृत्तं प्रणौति, पुत्रेत्यादि ।—पुत्रसंक्रान्तलक्ष्मीकैः,—पुत्रनिहितराज्यश्रीकैः पुत्रन्यस्तराज्यशासनभारैः इति यावत्

सीता। एसा पसस्सपुस्स-सलिला भअवदी भाईरही।*(ब)
राम:। देवि रघुकुलदेवते! (भ) नमस्ते।—

* एषा प्रसन्नपुण्यसलिला भगवती भागीरथी।

अथवा पुत्रेषु संक्रान्ता प्रत्नाश्रयविगमात् निराश्रया सती नवीनाश्रयभूतेषु तेषु स्तत: संक्रान्ता लक्ष्मीर्येषां तथाभूतै: "[ उर:प्रभृतिभ्य: कप्" ( ५।४।१५१ पा० ) इति कपि, "न कपि" (७।४ १४ पा० ) इति ह्रस्वप्रतिषेधश्च ]। वृद्धेक्ष्वाकुभि:,—गलितवयोभि: इक्ष्वाकुवंशीयै:, यत् पुण्यं पावनम्, आरण्यकव्रतम्—[ अरण्ये भवा: इत्यर्थे वुञ् ] आरण्यका: वनवासिन: तेषां व्रतं नियम:, वैखानसानुपालितमित्यर्थ:, ["आरण्यकं व्रतम्" इति पाठे तु,—आरण्यकशब्दात् पुन: अण् इदमर्थे, अर्थस्तु उभयत्र समान: ] कृतम्—अनुष्ठितं, तत्—तत्सदृशं व्रतं, पित्राज्ञापालनानुरोधात् धर्म्यम् अरण्यवासादिरूपम्, आर्य्येण—सतां श्रेष्ठेन, पूज्येन रामेणेत्यर्थ:। (एतेन श्रद्धालुतयैव तत् स्वीकृतं, न तु लोकापवादभयादिति बोध्यम्)। बाल्ये—नवे वयसि, धृतम्—अवलम्बितम्। यदेव पुरा पुत्रवद्भि: उपभुक्तराज्यैश्च इक्ष्वाकुभि: वलीपलितोपहते वयसि दृष्टं धर्म्यं व्रतमाचरितम् आर्य्येण तु तदेव प्रथमे वयसि परिगृहीतमिति महदेतदाश्चर्य्यकरमित्यर्थ:। [ अत्र वृद्धेक्ष्वाकूणामारण्यकव्रतधारणमार्य्यस्याऽसम्भवत् अपि तत्सदृशव्रतधारणमवगमयत् वृद्धेक्ष्वाकूणां बालस्यार्य्यस्य च बिम्बप्रतिबिम्बभावं बोधयति, अन्यकृतान्यधर्मवद्दनासम्भवात्, अत एवात्र असम्भवद्वस्तुसम्बन्धरूपा निदर्शना ; अपि च वृद्धत्वरूपकारणस्याऽसन्नावेऽपि अहेतुकारण्यकव्रतरूपकार्य्यस्य उदयात् विभावनाऽलङ्कार:, ताभ्याञ्च, बालस्य राघवस्य वृद्धेक्ष्वाकुभ्य: आधिक्यप्रतीते: व्यतिरेकालङ्कार: व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिरिति ध्येयम् ]। द्वितुर्य्यपादयो: चतुर्थवर्णात् परं जगणस्य वर्त्तमानत्वात् पथ्यावक्त्रं वृत्तम् ;—"युजो: चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम्" इति लक्षणात् ॥ २२ ॥

(ब) प्रसन्नेत्यादि।—प्रसन्नं कलधौतधवलं निर्म्मलं पुण्यं पावनञ्च सलिलं यस्या: तथाभूता, भागीरथी—भगीरथेन आनीता ; स्वान् पूर्वपुरुषान् समुद्धर्त्तुमित्यर्थ:।

(भ) रघुकुलदेवते इति।—रघो: कुलं सन्तति: तस्य देवता अधिदेवता इत्यर्थ:, [ब्रह्मर्षिकपिलशापविदग्धान् सगरसुतान् समुद्धर्त्तुं भगीरथ: स्वर्धुनीं पृथिवीमानिनाय, स्वोर्द्धपुरुषान् तद्विमलपयसा पावयामास च, अतो हि रघो: सुता: तामधिदेवतामिवाऽमन्यन्त ]।

तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसाऽमर्षात् प्लुष्टान् पुरा प्रपितामहान्।

कथं हि सा भागीरथी तदन्ववायस्य* पावनी, रघुकुलदेवतेव च नियतममानि रघुभिः, तदेव विवृणोति, तुरगेत्यादि।—हे भगवति! भागीरथि! पुरा पूर्व्वं ["पुरा" इत्यत्र "पितुः" इति पाठान्तरं दृश्यते, तत्तु प्रपितामहानित्यनेनान्वितं ज्ञात्वा पितुः दिलीपस्य प्रपितामहानिति केचन व्याचक्षते। तत्तु रामायणविरोधात् उपेक्षित-मस्माभिः। यतः सगरस्य सौमतेयाः षष्टिसहस्रसुताः, असमञ्जस्य (विष्णुपुराणे तु "असमञ्जस्" शब्दः पठ्यते) वैमात्रेयाः भ्रातरः, भगीरथस्यैव प्रपितामहस्य वैमात्रेय-भ्रातरः भवन्ति, न तु तत्पितुः दिलीपस्येति बोध्यम्]। सगराऽध्वरे—सगर-स्याख्यत्पूर्व्वपुरुषस्य राज्ञः यज्ञे हयमेधे इत्यर्थः, तुरगविचयेत्यादि—तुरगस्य अश्व-मेधीयस्य वाजिनः इन्द्रेणापहृत्य पातालं नीतस्येत्यर्थः, विचये अन्वेषणे व्यग्रान्—उत्सुकान्, उर्वीभिदः,—यज्ञदीक्षितस्य सगरस्याज्ञया उर्वीं पृथिवीं भिन्दन्ति इति ये तथाविधाः, ["सत्सुद्विषद्रुहदुह" (३।२।६१ पा०) इति क्विप्] सर्व्वे अश्वान्वेषणे व्यर्थप्रयत्नाः भूत्वा, पातालगमनार्थं भुवं दीर्य्यन्तः इत्यर्थः। तथा हि आदिकाण्डे रामा-यणे एकोनचत्वारिंशोऽध्याये—

"यावत् तुरगसन्दर्शस्तावत् खनत मेदिनीम्।
तमेव हयहर्त्तारं मार्गमाणा ममाज्ञया॥
दीक्षितः पौत्रसहितः सोपाध्यायगणस्त्वहम्।
इह स्थास्यामि भद्रं वो यावत्तुरगदर्शनम्॥"

पश्चात्, अमर्षाद्—कोपात्, कपिलस्य महामुनेर्महसा तेजसा, प्लुष्टान्—दग्धान्, भस्मसात् भूतानित्यर्थः, ["प्लुष दाहे" कर्म्मणि क्तः]। तथा हि, तत्रैव—

"ततस्तेनाऽप्रमेयेण कपिलेन महात्मना।
भस्मराशीकृताः सर्व्वे काकुत्स्थ! सगरात्मजाः॥" इति।

प्रपितामहान्—सगरस्य नरपतेः पत्न्याः सुमत्याः तनयान्, षष्टिसहस्राणीत्यर्थः। तथा हि तत्रैव अष्टत्रिंशाध्याये—

"अथ काले गते तस्य ज्येष्ठा पुत्रं व्यजायत।
असमञ्ज इति ख्यातं केशिनी सगरात्मजम्॥
सुमतिस्तु नरव्याघ्र! गर्भतुम्बं व्यजायत।
षष्टिः पुत्रसहस्राणि तुम्बभेदात् विनिःसृताः॥" इति।

अगणिततनूपातं तप्त्वा तपांसि भगीरथो
भगवति! तव स्पृष्टानद्भिश्चिरादुददीधरत्॥ २३॥

असमञ्जस्य पितामहत्वेन तद्वैमात्रेयाणां षष्टिसहस्रसंख्यकानां सुमतिसुतानामपि तथात्वमवधेयम्। भगीरथसवंशीय आसीत्।—

"सगरादसमञ्जस्तु असमञ्जादथांऽशुमान्।
दिलीपोंऽशुमतः पुत्त्रो दिलीपस्य भगीरथः॥"

अपि च—"दिलीपस्तु महातेजाः श्रुत्वा पैतामहं बधम्।
दुःखोपहतया बुद्ध्या निश्चयं नाऽध्यगच्छत॥
कथं गङ्गाऽवतरणं कथं तेषां जलक्रिया।
तारयेयं कथं चैतानिति चिन्तापरोऽभवत्॥
तस्य चिन्तयतो नित्यं धर्म्मेण विदितात्मनः।
पुत्त्रो भगीरथो नाम यज्ञे परमधार्म्मिकः॥"

इत्यादि रामायणम्। अगणितेत्यादि—अगणितः उपेक्षितः अविचारितः वा तन्वाः शरीरस्य पातः पतनं शरीरध्वंसः इति यावत् यस्मिन् तपःकर्म्मणि, ("स्त्रियां मूर्त्तिस्तनुः तनूः" इत्यमरः)। तद् यथा तथा चिरात्—चिराय, सहस्रपरिवत्सरान् व्याप्येत्यर्थः, तपांसि तप्त्वा—तपस्यन् इत्यर्थः; तथा हि,—

"भगीरथस्तु राजर्षिः धार्म्मिको रघुनन्दन।
मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः॥
तपो दीर्घं समातिष्ठत् गोकर्णे रघुनन्दन!।
ऊर्द्ध्वबाहुः पञ्चतपा मासाहारी जितेन्द्रियः॥
तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः।
अतीतानि महाबाहो! तस्य राज्ञः महात्मनः॥" इति।

तपसा स्वर्गादवतारितायाः इति भावः, तव अद्भिः,—सलिलैः, स्पृष्टान्—अभिषिक्तान्, तान् उददीधरत्—उद्धारयामास। तथा हि तत्रैव—

"गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महाऽऽत्मनाम्।
स्वर्गं गच्छेयुरत्यन्तं सर्व्वे च प्रपितामहाः॥"

अपि च,—"अथ तद्भस्मनां राशिं गङ्गासलिलमुत्तमम्।
प्लावयत् धूतपाप्मानः स्वर्गं प्राप्ताः रघूत्तम!॥" इति।

सा त्वम् अम्ब ! स्नुषायामरुन्धतीव सीतायां शिवानुध्यान-
परा भव। (म)

[धरन्तः चिरिंच लुङि रूपम्। अत्र प्रस्तुतभागीरथीवर्णनस्याऽङ्गीभूततया महतां सगरादीनां चरितापवर्णनस्य प्रस्तुतभागीरथीमहत्त्वव्यञ्जकस्य संस्थितेः उदात्तालङ्कारः]।
वृत्तं हरिणी।

पुरा किल वैवस्वतस्य मनोरन्वये सगरो नाम नृपतिरासीत्। तस्य द्वे पत्न्यौ, (ज्येष्ठा केशिनी, अपरा च सुमतिर्नाम) आस्ताम्। स हि महात्मना: अप्रजस्त्वात् हिमवन्तं नगाधिपमासाद्य भृगुप्रस्रवणे वर्षशतं तपोऽतप्यत। महर्षेर्भृगोः प्रसादाच्च ज्येष्ठा वंशकरं सुतम् असमञ्जम् अपरा च षष्टिं पुत्रसहस्राणि जनयामास। ततश्च असमञ्जात् अंशुमान्, अंशुमतः दिलीपः, दिलीपाच्च भगीरथः जज्ञे। इति वंशानुक्रमः। अथ पौराणामहिते रतः असमञ्जः पुरात् पित्रा निर्व्वासितः अभूत्। तत्पुत्रः अंशुमान् सगरस्य मते स्थितः हयमेधमारेभे, सगरस्याज्ञया सुमतितनयाः षष्टिसहस्रसंख्याताः हयरक्षामकार्षुः। पथि वासवस्तु तदश्वमपहृत्य पाताले तपस्यतः कपिलस्य सकाशं संस्थाप्याऽपसृतः। ते तु अन्विष्यन्तः महीं, पश्चात् पातालं गताः, अथ तं महर्षिमश्वाऽपहारकं मत्वा क्रुद्धाः तं निर्भर्त्सयितुमारेभिरे, ततः षष्टिसहस्रं सगरसुताः कपिलमहसा भस्मीभूताः अभवन्। तेषामुद्धरणाय अंशुमान् ततः दिलीपः कठोरं तपः अन्वतप्त, न तु तानुद्धर्त्तुमीष्टे स्म, अथ भगीरथः दिलीपतनयः स्वप्रपितामहान् पावनीभिः गङ्गायाः अद्भिः जलक्रियां कृत्वा तानुदधारदिति पौराणिकी वार्त्ता॥ २३॥

(म) अम्ब इति।—हे अम्ब! जननि! अस्मत्कुलाधिदेवता त्वं, स्नुषायां—बध्वां सीतायाम्, अरुन्धती—वशिष्ठपत्नी इव। शिवेत्यादि—शिवस्य शुभस्य अनुध्यानम् अनुचिन्तनं तदेव परं प्रधानं यस्याः तथाविधा, शुभाऽनुध्यायिनी भवेत्यर्थः। [कुलगुरोः पत्न्यां समादराऽऽतिशय्यसूचनाय जननीवेत्यनुक्त्वा अरुन्धतीवेत्युक्तम्। एतच्च दशरूपककारादिमते बीजानुगुणप्रोत्साहनारूपं सम्ध्यङ्गं वेदितव्यम्, तदुक्तं—"बीजानुगुणप्रोत्साहनं भेदः" इति; एतदेवाह दर्पणकारः। केचित्तु "भेदः प्रोत्साहना" इति वदन्ति। परन्तु तन्मते बीजार्थस्य प्ररोहरूपत्वात् उद्भेदनामकं सम्ध्यङ्गमवधातव्यम्। तथा हि दर्पणे "बीजार्थस्य प्ररोहः स्यादुद्भेदः" इति लक्षणात्]।

लक्ष्मणः। एष भरद्वाजाऽऽवेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम। (य)

रामः। [ सस्पृहमवलोकयति ]। (र)

सीता। सुमरेदि वा एदं पदेसं अज्जउत्तो ? *

रामः। अयि ! कथं विस्मर्य्यते ?—

अलसलुलितमुग्धान्यध्वसञ्जातखेदात्
अशिथिलपरिरम्भैर्दत्तसंवाहनानि।

---

* स्मरति वैतं प्रदेशमार्य्यपुत्रः ?

---

(य) भरद्वाजेत्यादि।—भरद्वाजेन मुनिना आवेदितः विज्ञापितः ; [ पुरा किल ज्येष्ठभ्रातुः उतथ्यस्य गर्भिणीं पत्नीम् उपगतस्य बृहस्पतेः वीर्य्यात्, गर्भस्थबालकेन पद्भ्यां निःसारितात्, यः सुतो जज्ञे, स हि एकस्य चेत्रे अन्येन वीर्य्यस्याधानात् द्वाभ्यां जाततया "द्वाजः" इति, ततः "राजन्! भर द्वाजमिमम्" इति देववाक्यात् "भरद्वाजः" इति संज्ञां लेभे। सोऽपि गर्भस्थबालको बृहस्पतेः शापात् जन्मान्धोऽभत् "दीर्घतमाः" इत्याख्यां लेभे च इति विष्णुपुराणम् ]। श्याम इति।—प्रसिद्धः, चित्रकूटयायिनि—चित्रकूट-पर्व्वताभिमुखगामिनि वर्त्मनि। कालिन्दीत्यादि।—कालिन्द्याः,—यमुनायाः तटे, वनस्पतिः,—अपुष्पफलसमन्वितः, वटः,—तरुविशेषः। एवमेव रघौ कालिदासः,—

"त्वया पुरस्तादुपयाचितो यः सोऽयं वटः श्याम इति प्रतीतः।
राशिर्मणीनामिव गारुड़ानां सपद्मरागः फलितो विभाति॥" इति।

एतस्याधुना प्रयागे "अक्षयवटः" इति आख्या प्रचरति।

(र) सस्पृहमिति—सस्पृहं सौत्सुक्यमीक्षते इत्यर्थः। रमणीयपूर्व्वानुभूतवस्तूनामाकाङ्क्षा हि स्पृहेति कथ्यते। तथा हि दर्पणकारः,—

"आकाङ्क्षा रमणीयत्वात् वस्तुनो या स्पृहा तु सा।" इति।

पूर्व्वाऽनुभूतसुखानां स्मरणतः स्पृहायाः समुदयात्, तेषां तेषान्तु विस्मरणाऽनर्हत्वप्रतिपादनमुखेन स्पृहाकारणानि स्फुटमभिधत्ते, अलसेति।—यत्र यस्मिन् प्रदेशे त्वम्, अध्वना पथि गमनेन सञ्जातात् समुद्भूतात् खेदात् क्लान्तेः, अलसानि अपटूनि जड़ानीत्यर्थः लुलितानि शिथिलीभूतानि ईषत्कम्पमानानि

परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ २४ ॥

लक्ष्मणः । एष विन्ध्याटवीमुखे विराधसंवादः । (ल)

---

वा तथापि मुग्धानि निसर्गत एव मनोहराणि न तु विन्यासानीत्यर्थः, तथा अशिथिलैर्गाढैः परिरम्भैरालिङ्गनैः [ बहुवचनमालिङ्गनाऽऽवृत्त्यभिप्रायकं वेदितव्यं ] दत्तं संवाहनं मर्दनं येभ्यः, तानि तथोक्तानि, अध्वगमनखेदखिन्नानां प्रतिप्रतीकेषु संवाहितेषु किंयञ्च क्लान्तिविगमः भवति इति प्रसिद्धिः ; तथा परिमृदिताः विद-लिताः याः मृणाल्यः [ अपचयविवक्षया स्त्रीत्वम् । तथा हि अमरः,—"स्त्री स्यात् काचित् मृणाल्यादिर्विवक्षापचये यदि" इति ] ता इव दुर्बलानि कोमलानि च अङ्गान्येव अङ्गकानि, ["अनुकम्पायाम्" ( ५।३।७६ पा० ) इति कन्प्रत्ययः] । मम उरसि—वक्षसि, कृत्वा—निधायेत्यर्थः, निद्रामवाप्ता—निद्रिता आसीरस्वपीरित्यर्थः, स इदानीं कथं हि विस्मर्यते इत्यर्थः । [ केचित्—अत्र "कथं विस्मर्यते" इति चर्णकस्य हेतुरूपत्वेन श्लोकस्यास्य निर्देशात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । अपरे तु—अस्मिन् चित्रदर्शनव्यापारे पूर्वानुभूततत्तद्विषयाणां स्मृतेः, स्मरणालङ्कारं वदन्ति इति । अत्र ब्रूमः,—प्रथममध्वखेदः, तेन च लुलितत्वहेतुत्वं, ततः आलिङ्गनबाहुल्यं, ततश्च संवाहनता, तेन च वक्षःस्थललग्नत्वं, ततश्च निद्रावाप्तिरिति परं परं प्रति पूर्वपूर्वस्य हेतुतया अवस्थितेः कारणमालाऽलङ्कारः । तथा हि—"परं परं प्रति यदा पूर्वपूर्वस्य हेतुता । तदा कारणमाला स्यात्" इति । "मृणालीदुर्बलानि" इत्यत्र च लुप्तोपमा ; इत्येतयोः सङ्करः ] । वृत्तं मालिनी ।—"न न म य य युतेयं मालिनी भोगिलोकैः" इति लक्षणात् । पञ्चदशाक्षरपादच्छन्दःसु ४६७२तम संख्यकः प्रस्तारः ॥ २४ ॥

(ल) विन्ध्याऽटवीमुखे ।—विन्ध्यस्य शैलस्य अटवी अरण्यानी तस्य मुखं प्रारम्भः तस्मिन् । विन्ध्याऽरण्यप्रवेशाऽवसरे इत्यर्थः । विराधसंवादः—विराधो नाम कश्चिद्रा-क्षसः, तस्य संवादो वृत्तान्तः । [ "संवादः" इत्यत्र "संरोध" इति पाठे—विराध-कर्तृकाऽस्मन्निरोधनम् इत्येवार्थः । तथा हि रामायणम्—

"तावारोप्य ततः स्कन्धं राघवौ रजनीचरः ।
विराधो निनदन् घोरं जगामाऽभिमुखो वनम् ॥" इति ] ।

सीता। अलं दाव एदिणा ; पेक्खामि दाव अज्जउत्तहत्थधरिदतालवेण्टादवत्तं अत्तणो दक्खिणारण्णप्पवेसारम्भं । (व) *

राम:। एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रमतरूणि तपोवनानि।
येष्वातिथेयपरमाः शमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि ॥ २५ ॥

---

* अलं तावदेतेन ; पश्यामि तावदार्य्यपुत्रहस्तधृततालवृन्ताऽऽतपत्रमात्मनो दक्षिणारण्यप्रवेशाऽऽरम्भम् ।

---

(व) एतेनेति।—एतेन विराधवृत्तान्तदर्शनेन, अलं किम् ?। एतस्याऽनर्थकरस्य परिदर्शनं विफलमित्यर्थः, शोकाऽऽवेगविवर्द्धकत्वादित्याशयः। आर्य्यपुत्रेत्यादि।—आर्य्यपुत्रेण स्वहस्तेन धृतं गृहीतं तालवृन्तरूपम् आतपत्रं छत्रं यस्मिन् तथाविधमात्मनः स्वस्य सीताया इत्यर्थः। दक्षिणारण्येत्यादि।—दक्षिणनामकमरण्यं तत्र प्रवेशः तस्य आरम्भः व्यवसायः तं प्रेक्षे इत्यर्थः। दक्षिणारण्यप्रवेशसमये आर्य्यपुत्रः मम आतपतापजक्लेशं निवारयितुं स्वहस्तधृततालवृन्तेन मम शिरः प्रच्छाद्यशीतलमकरोदिति भावः। जनस्थानस्य दक्षिणाद्दिः एषा अरण्यानी दृश्यते, अत एवैषा दक्षिणारण्यमित्याख्यां भजते इति।

दक्षिणाऽरण्यमन्यदं विवृणोति, एतानीति।—गिरिनिर्झरिणीनां—गिरिणदीनां, तटेषु तीरेषु, एतानि तानि—पूर्वदृष्टानि इत्यर्थः, वैखानसेत्यादि—वैखानसानां वानप्रस्थतापसविशेषाणाम् आश्रमतरवो येषु तानि तथोक्तानि, तपोवनानि सन्तीति शेषः। येषु तपोवनेषु अतिथये हितम् आतिथेयं ["पथ्यतिथिवसतिस्वपतेर्ढञ्" (४।४।१०४ पा०) इति ढञ्प्रत्ययः], अतिथिसेवा एव परमं प्रधानं कर्म येषां ते तथोक्ताः ; यद्वा—आतिथेयेषु परमाः निष्णाताः आतिथ्यनिष्ठाः इत्यर्थः, अत एव, नीवारमुष्टिपचनाः,—नीवारमुष्टिं मुष्टिमेयतृणधान्यं पचन्ति ये तथोक्ताः, नीवारपाकमात्रेण स्वपोषणं कुर्वन्तः, संयताहाराः इत्यर्थः। शमिनः—शमदमाद्युपेता वीतरागाः इत्यर्थः, गृहिणः,—सदाराः वनस्थाः तपस्विनः "पुत्रेषु दारान् निक्षिप्य वनं गच्छेत् सहैव वा" इति श्रुतेः। गृहाणि भजन्ते—अधिवसन्ति। [अत्राऽपि प्रोक्तसम्भोगशृङ्गारो रसः, व्रीडाहर्षादिभिर्व्यभि-

लक्ष्मणः। अयमविरलाऽनोकहनिवहनिरन्तरस्निग्धनीलपरिसराऽरण्यपरिणद्धगोदावरीमुखरकन्दरः सन्ततमभिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यगो गिरिः प्रस्रवणो नाम। (अ)

चारिभावैः परं परिपोषमागतः; तथा हि दशरूपके,—"अनुकूलौ निषेवेते यत्राऽन्योऽन्यं विलासिनौ। दर्शनस्पर्शनादीनि स सम्भोगो मुदान्वितः॥" इति। [अत्राऽपि उदात्ताऽलङ्कारः, प्रस्तुतचित्रकूटवनस्थलीमहत्त्वव्यञ्जकतया शमिनामुपवर्णनस्य समुत्थानात्]। वसन्ततिलकं वृत्तम्॥ २५॥

(अ) अथ कविः करुणविप्रलम्भशृङ्गाररसं समधिकं परिपोषयितुं तदनुगुणं माधुर्य्यगुणमेवाश्रित्य वैदर्भ्या रीत्या समाश्लिष्टां, साडम्बरबन्धौद्धत्यशालिनीं घटनापरम्परामादाय ओजोगुणमभिव्यञ्जयितुं समासबहुलैः पदैः गौडीं रीतिमधिकृत्य प्रस्तुतं प्रस्तौति, अयमिति।—अयमालेख्ये पुरतो दृश्यमान इत्यर्थः, अविरलैर्निविडैः घनसन्निविष्टैरित्यर्थः, अनसः शकटस्य अकं गतिं घ्नन्तीति, न ओकः स्थानं जहतीति वा, अनोकहाः वृक्षाः। ("वृक्षो महीरुहः शाखी विटपी पादपस्तरुः। अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः" इत्यमरः)। तेषां निवहाः निचयास्तैर्निरन्तरः निरवकाशः, ("अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च" इत्यमरः) निविडः इत्यर्थः, तथा स्निग्धः मसृणः, ("स्निग्धस्तु मसृणे सान्द्रे" इत्यमरः)। नीलः श्यामलश्च परिसरः पर्य्यन्तभूविभागः यस्य ("पर्य्यन्तभूः परिसरः" इत्यमरः) तथोक्तेन अरण्येन परिणद्धा परिवेष्टिता, (अरण्यं परितो नद्धा विस्तृता वा इति केचित्, तत्र सत्त्वं विचार्य्यम्) या गोदावरी तया मुखरः, गोदावरीकल्लोलकोलाहलेन शब्दायमान इत्यर्थः, कन्दरो ("दरी तु कन्दरो वा स्त्री" इत्यमरः) दरी, उपचारात् तन्मध्यभागो यस्य तथोक्तः; सन्ततम्—अविरतम् ("सततेऽनारताऽश्रान्तसन्तताऽविरताऽनिशम्। नित्याऽनवरताऽजस्रम्" इत्यमरः) अभिष्यन्दमानैः स्रवद्भिः स्वयं वर्षद्भिरित्यर्थः [अप्राणिकर्तृकत्वात् सत्त्वम्] मेघैर्नवजलधरैर्मेदुरितः मेदुरः कृतः, स्निग्धीकृत इत्यर्थः, नीलिमा श्यामलत्वं यस्य स तथोक्तः, [पर्वतानां स्वतो हि नीलत्वेन दूरतः आभासमानत्वात्]। जनस्थानमध्यगः,—जनस्थानस्य तन्नाम्ना प्रसिद्धस्य महाऽरण्यस्य मध्यभागाऽवस्थितः, गिरिः प्रस्रवणो नाम। [दाक्षिणात्ये

राम:। स्मरसि सुतनु! तस्मिन् पर्वते लक्ष्मणेन
प्रतिविहितसपर्य्यासुस्थयोस्तान्यहानि?
स्मरसि सुरसनीरां तत्र गोदावरीं वा?
स्मरसि च तदुपान्तेष्वावयोर्वर्त्तनानि? ॥ २६ ॥

श्वापदकुलसङ्कुलदण्डकामहाऽरण्योपान्तवर्त्ति तदुत्तरसीमारूपतया आश्रितं वैखानसानामन्येषाञ्च मुनीनामाश्रमपदं महाऽरण्यं, शुक्राचार्य्यसुताधर्षकस्य दुर्हृत्तस्य वशिष्ठशापात् दग्धराज्यश्रीकस्य दण्डस्य शासनात् पलायमानानां जनानां निवासस्थानं जनस्थानमिति, नासिकाख्यया तु तत् इदानीं प्रसिद्धिमागतम्। तथा हि पौराणिका:,—"द्वापरे तु जनस्थानं कलौ नासिकमुच्यते" इति। उक्तञ्च, दण्डकामुद्दिश्य अनेनैव महाकविना,—"जनस्थानपर्य्यन्तानि दीर्घाऽरण्यानि दक्षिणां दिशमभिवर्त्तन्ते" इति। "न केवलं दण्डकेयं जनस्थानमपि" इत्यादिकम्। अत्, स्रवता निग्नतप्रतिबद्धमेघत्वात्, निरन्तरं श्रयतां नवानां मेघानाञ्च निग्नतस्रवणाद्गिरियं प्रस्रवणसंज्ञामापत्। [ अत्र स्वभावोक्ति: अलङ्कार: ]।

तत्र तत्र हि पुरा यानि कियन्ति अलौकिकामोदकराणि सुखानि अनुभूतानि, तानि तानि इदानीं स्मारयति, स्मरसीति।—शोभना तनुर्यस्या: सा सुतनू: तत्सम्बुद्धौ [स्त्रीप्रत्यये ऊङि, पश्चात् "अम्बार्थनद्योर्ह्रस्व:" (७।३।१०७ पा०) इति नदीसंज्ञकत्वेन ह्रस्व:,तन्वादेः स्त्रियामूङ् वैकल्पिकत्वेन, तदभावपक्षे सुतनो! इत्यपि भवतीति बोध्यम्]। हे सुतनु! तस्मिन् पर्वते प्रस्रवणे इत्यर्थ:, लक्ष्मणेन प्रतिविहितया कृतया सपर्य्यया सेवया सुस्थयो: [ "सुस्थयो:" इत्यत्र "स्वस्थयो:" इति पाठान्तरेऽपि अयमेवार्थ: ] अनुपमानन्दमुपभुज्य कालं नयतो: इत्यर्थ:, आवयोस्तानि —चिराय गतानि, नैवेदानीं पुनरावर्त्तनीयानीत्यर्थ:, अहानि—दिवसान् स्मरसि किम्? तत्र—गिरिसन्निधौ, सुरसं मधुरं शीतलञ्च नीरं यस्या: तां तथोक्तां स्वादुसलिलां, ("रसो गन्धे रस: स्वादे तिक्तादौ विषरागयो:। शृङ्गारादौ द्रवे वीर्य्ये देहधात्वम्बुपारदे॥" इति मेदिनी)। ["सुरसनीराम्" इत्यत्र "सरसतीराम्" इति पाठान्तरं दृश्यते, तदर्थस्तु—सरसं शीतलतया रसमयमिव प्रतीयमानम् अत एव सुखसेव्यं तीरं यस्या: तां, प्रच्छायशीतलतरुनिर्पवितविहङ्गमकुलोपशोभितकूलामिति भाव:।] गोदावरीं स्मरसि वा? [ गां स्वर्गं ददाति स्नानात् इति दाधातो: वनिप् ङीप् रश्चान्तादेश: ]। तदुपान्तेषु—तत्प्रान्तप्रदेशेषु, तत्तटेष्वित्यर्थ:। आवयो: वर्त्तनानि—बालक्रीडाभ्रमणानि स्वच्छन्दसञ्चरणानि इत्यर्थ:, स्मरसि च

अपि च—किमपि किमपि मन्दं मन्दमासत्तियोगात्
अविरलितकपोलं जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेवं व्यरंसीत् ॥ २७ ॥

चिन्तयसि च किम् ? चशब्दस्तु विकल्पार्थकः । [ अत्र देशरूपविभावेन उपनिबध्य-मानं काव्यं शृङ्गाररसास्वादनाय प्रभवति इत्युक्तं दशरूपके, तथा हि,—

"रम्यदेशकलाकालवेषभोगादिसेवनैः ।
प्रमोदात्मा रतिः सैव यूनोरन्योऽन्यरक्तयोः ।
प्रहृष्यमाणा शृङ्गारो मधुराङ्गविचेष्टितैः ॥" इति ।

यतः,—मध्यमने सीताकपोलस्पर्शनविभावेन रोमाञ्चाश्रुभ्रूक्षेपकटाक्षादिभिरनुभावैरावेग-हर्षादिभिः व्यभिचारिभिः भावैश्च विभाविता रतिः, सम्भोगशृङ्गारास्वादतामापन्ना । [अत्र एकस्य "त्वम्" इति कर्तुः तिसृभिः "स्मरसि" इति क्रियाभिः अन्वयात् दीपकम् अलङ्कारः ;—"अथ कारकमेकं स्यादनेकासु क्रियासु चेत्" इति दर्पणोक्तलक्षणात् ; तथा "स्मरसि" इति पदस्य पौनःपुन्येनाऽभिधानादनवीकृतत्वदोषः, तृतीयपादे "स्मरसि" इत्यत्र "सुमुख" "लपसि" इति वा, चतुर्थपादे च "स्मरसि च" इत्यत्र "कलयसि" इति "भ्रमहर" इति वा, पठनेन कथञ्चित् परिहरणीयः । नैतत् कथितपदत्वं, यत्र हि पर्य्यायान्तरेणोपादानेऽपि न विच्छित्त्यन्तरं तत्रास्य सद्भावात् । अत्र च "लपसि" "कलयसि" इत्यादि तत्पर्य्यायकपदान्तरप्रयोगेऽपि विच्छित्त्यन्त-राविर्भावादर्शनात् अनवीकृतत्वमेव ज्ञेयम् । अत एवास्माभिः तत्पर्य्यायकशब्दाप्रयोगेण, "सुमुख" "भ्रमहर" इत्यादिकल्पान्तरमुक्तम् ] । मालिनी वृत्तम् ॥ २६ ॥

अथाऽऽदौ सम्भोगमुपवर्णयितुं तत्स्थायिभावस्य उद्बोधकैरन्योऽन्यगात्रस्पर्श-परिरम्भणचुम्बनादिभिरनुभावैः हासहर्षौत्सुक्ययामविस्मृतिप्रभृतिभिः व्यभिचारिभावैः वनविहरणादिभिश्चोद्दीपनविभावैरभिव्यक्ताया: सहृदयसंवेद्यायाः रतेः शृङ्गाररूपता-मासादयति, किमपीति ।—आसत्तिः आसन्नभावः अतिसान्निध्यमित्यर्थः, परस्परशरीर-संलग्नत्वमिति यावत् ; तस्याः योगः संयोगकृतः सम्बन्धः तस्मात्, इतरेतरगात्रसंसर्ग-जनितात् अविच्छिन्नसुदृढालिङ्गनात् हेतोः अविरलितौ अन्योऽन्यविलग्नौ कपोलौ गण्डौ यस्मिन् अत्यन्तकर्णमूलीयत्यर्थः, तद् यथा तथा, अक्रमेण आनुपूर्वीं विना, औत्सुक्याऽतिशयात् यथागतपौर्वापर्य्यमनादृत्येत्यर्थः, मन्दं मन्दं—मृदु मृदु, किमपि किमपि—अनिर्वचनीयं निधुवनसङ्गततया सुखकरम् असम्बद्धं वाक्यजातमिति

लक्ष्मणः। एषा पञ्चवट्यां शूर्पणखा। (ष)

सीता। हा अज्जउत्त! एत्तिअं ज्जेव दंसणं। * (स)

रामः। अयि विप्रयोगत्रस्ते! चित्रमेतत्। (ह)

* हा आर्य्यपुत्र! एतावदेव दर्शनम्।

यावत्, जल्पतोः,—कथयतोः, तथा अशिथिलोऽतिदृढः यः परिरम्भः आलिङ्गनं तस्मिन् व्यापृतः निरतः एकः एकः परस्परव्यतीहारजनितः, अथवा एकैकस्य [ "एकं बहुव्रीहिवत्" इति (८।१।९ पा०) सूत्रेण द्विर्वचनम्]। दोः बाहुः ययोः तथोक्तयोः पुनःपुनर्गाढालिङ्गनव्यग्रहस्तयोरित्यर्थः, [ "पद्दन्"—( ६।१।६३ पा० ) इति सूत्रेण दोःशब्दस्य दोषन्नादेशः], आवयोः सम्बन्धे इति भावः, रात्रिः, अविदिताः यामाः प्रहराः, ( "द्वौ यामप्रहरौ समौ" इत्यमरः ) यस्याः सा तथोक्ता, एवम् एवमेव स्वानुभूतानन्दविमर्षसम्भाषणादिभिः, व्यरंसीत्—विरता, प्रभाता आसीदित्यर्थः; अक्रमेण जल्पनन्तु न अवसानं प्रापदिति यावत्। अनुपमभोगनिरतानामन्नानां प्राणिनां सुखकालो हि अविज्ञात एव गच्छतीति भावः। [ "व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम्। अत्र स्वभावोक्तिरलङ्कारः]। मालिनी वृत्तम् ॥२७॥

(ष) शूर्पणखेति।—शूर्पः धान्यादिप्रस्फोटनार्थं वंशनिर्म्मितद्रव्यविशेषः ("कुला" इति भाषा) तद्वत् नखानि यस्याः सा। ["नखमुखात् संज्ञायाम्" ( ४।१।५८ पा० ) इति स्वाङ्गत्वेऽपि ङीष्-निषेधः, "पूर्वपदात् संज्ञायामगः" (८।४।३ पा०) इति णत्वम्।

(स) एतावदिति।—इयत्कालपर्य्यन्तमित्यर्थः। इतः परं मे त्वद्दर्शनमसम्भाव्यम् अभूदिति भावः। यतः रावणेनाऽपहृतायाः त्वद्विरहशोकसागरनिमग्नायाश्च मे एषा एव निखिलापदागमहेतुः; अतः अशुभकारिण्याः नैतस्याः दर्शनमिदानीमुचितमित्याशयः। इत्यमभिदधती सीता आसन्नवनगमनप्रतीयमानभाविविरहं सोढुमशक्नुवाना विगतचेतनेवाऽभवत्। चूर्णकमेतत् आसन्नवनगमनज्ञापिका भविष्यद्वाणीव प्रतीयते। [ अत्र रावणापहरणरूपातीताद्भुतपदार्थस्य प्रत्यक्षायमाणत्वेन प्रतीतेः भाविकालङ्कारः ]।

(ह) विप्रयोगेत्यादि।—विप्रयोगो मया साकं विच्छेदः, तस्मात् त्रस्ता भीता, तत्सम्बुद्धौ; हे मदीयवियोगभीरु! न पुनरियं तत्त्वतो राक्षसी, अपि तु, चित्रं—चित्रार्पिता तदीया मूर्त्तिः; अतो न त्रासकारणम्। विरहशङ्केदानीं त्वया परिहरणीयेति भावः। [ नायं निश्चयाख्यालङ्कारविषयः, परप्रत्यायनात् ]।

सीता। जहा तहा होदु, दुज्जणो असुहं उप्पादेइ। * (क)

रामः। हन्त! वर्त्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति। (ख)

लक्ष्मणः। अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।
जनस्थाने शून्ये विकलकरणैरार्य्यचरितैः
अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्॥२८॥

---

* यथा तथा भवतु, दुर्जनोऽसुखमुत्पादयति।

---

(क) यथेति।—यथा तथा भवतु, एतत् चित्रं प्रकृतमप्रकृतं वा अस्तु इत्यर्थः; दुर्जनस्याऽशुभकरत्वेन आधिहेतुभूततया च सर्वथा तत्स्मरणमपि परिहर्त्तव्यमिति भावः। [ अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः अलङ्कारः ]।

(ख) हन्तेत्यादि।—जनस्थानस्य वृत्तान्तः अतीतोऽपि प्रत्यक्षीभूततया इदानीमाभाति, चित्रगतैः बुद्बुदायमानैश्च व्यापारनिचयैः उपशोभितत्वात्। [ एतत् प्रथमं पताकास्थानम्। यतो हि अत्रैषा सीताविवासनफलिकाऽर्थसम्पत्तिः; यद्यपि उपरिष्टात् दुर्जनस्य दुर्मुखस्य वचसा लोकापवादरूपाऽशुभोत्पादहेतुभूतत्वेनोपन्यस्ता, तथापि रामवचसा अधुना जनस्थानवृत्तान्तस्य सीतायाः जनस्थाननिर्वासनरूपस्य वर्त्तमानवत्त्वेन अचिरकालभावितया उल्लेखात् उपचाराऽतिशयसूचकतया उत्कर्षतामगादिति ध्येयम् ]।

जनस्थानस्य अदृष्टचरचित्रभूयिष्ठत्वात् अभूतपूर्व्वव्यापाराश्रयत्वाच्च भूतानामपि चित्रगाणामिदानीमपि विस्मायकत्वेन प्रत्यक्षायमाणत्वमनुमोदयितुमाह, अथेदमिति।—अथेति वाक्यालङ्कारे। इदं—महाऽरण्यं जनस्थानं चित्रगतं यद् दृश्यत इत्यर्थः; पापं विद्यते एषाम् [ इति अर्श-आदित्वादच् ], तैः पापैः,—पापात्मभिः, रक्षोभिः,—राक्षसैः, कनकमयो यो हरिणस्तदेव छद्म कापट्यं तस्य विधिना अनुष्ठानेन कनकमृगभूमिकारूपप्रपञ्चरमाश्रयेत्यर्थः, तथा—एवं हि, वृत्तम्—जातं, सम्पादितमित्यर्थः; यथा—यत्, क्षालितम्—विधौतं, रावणनिधनपूर्वकसीताऽऽनयनरूपकार्य्यादिना सम्यक् प्रतिकृतमपीत्यर्थः, व्यथयति—पीडयति, अस्मानिति शेषः। यद्वा,—यथाक्षालितमपि अग्निशुद्ध्यादिना सर्वथा परिशोधितमपि पापैः रक्षोभिः

सीता। [सास्रम्।] **अइ देव रहुउलाणन्द! एव्वं वि मम कारणादो किलिन्तो आसि!** * (ग)

लक्ष्मणः। [रामं निर्वर्ण्य साकूतम्।] **आर्य्य! किमेतत्?** (घ)—

* अयि देव रघुकुलानन्द! एवमपि मम कारणात् क्लान्त आसीः!

कनकमृगमायया अनुष्ठितं तत् वृत्तमिदानीं मानसपथे समुदीयमानं नियतमेव व्यथयति, [किं पुनरप्रतिकृतं व्यथयतीति वक्तव्यमित्यर्थापत्त्या गम्यते]। तदेव सुविशदं कर्त्तुं जडानामपि तव समवेदनां ज्ञापयति, जनस्थाने इति।—शून्ये—मनुजसञ्चार-विरले इत्यर्थः, जनस्थाने, विगता कला सामर्थ्यं येषां तानि तथोक्तानि, ("कला तु भागभेदे स्यात् कुसीदेऽवयवे गुणे। विद्यासामर्थ्यसंख्यासु नौकायां कपटे तथा" इति कोषः) करणानि इन्द्रियाणि येषु ("करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इति विश्वः) तैः तथाक्तैः वैक्लव्योपहतेन्द्रियग्रामसम्बद्धैरित्यर्थः, ["करुणैः" इत्यत्र "करुणैः" इति पाठे तु,—विकलैः वैकल्यपूर्णैः अत एव करुणैः शोकसमुद्दीपकै-रित्येवार्थः], आर्य्यस्य—पूज्यस्य भवतः चरितैः,—रोदनादिचेष्टितैः, ग्रावा—पर्वतः, ("अद्रिगोत्रगिरिग्रावाऽचलशैलशिलोच्चयाः" इत्यमरः) रोदिति—क्रन्दति, वज्रस्य—अतिकठिनस्यापि, हृदयमपि दलति—विदीर्य्यति। [वर्त्तमानवदनुभूयमानत्वाद्वर्त्त-मानप्रयोगः]। सीताविप्रयोगविधुरस्य रामस्य सकरुणं रोदनमालोक्य अचेतना वनस्थला अपि समदुःखा इवातितरां चुक्रोश, किमुत सचेतना? इति भावः। [अपि सम्भावनायाम्]। ("गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" इत्यमरः)। [अत्र ग्राववज्रादिषु रोदनदलनादीनां सम्बन्धाऽसत्त्वेऽपि तत्सम्बन्धस्य सिद्धत्वेन कविप्रौढोक्त्या-ऽध्यवसानात् असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिद्वयस्य सजातीयसाङ्कर्य्यम्। एतेन रामस्य शोकावेगमसहमानस्य मर्म्मस्पृक् विरहः क्रकचधारापात इव अनारतं हृदयं दलयति स्म, इत्यपि वस्तु व्यज्यते, इत्यलङ्कारेण वस्तुध्वनिः]। शिखरिणी वृत्तम्।—"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात्। सप्तदशाक्षरपाद-च्छन्दसां ५९३३० तम प्रस्तारान्तर्गतमिदं वृत्तम्॥ २८॥

(ग) रघुेति।—हे रघुकुलानन्द! रघोः वंशस्य सुखवर्द्धक! मदर्थमसीमं क्लेशमापः, मद्धेतोः वा कियन्ति दुःखानि असहिष्ठाः इति भावः।

(घ) निर्वर्ण्येति।—निर्वर्ण्य—निरूप्य, रामस्य भावादीन् दृष्ट्वेत्यर्थः। साकूतं—

अयन्ते वाष्पौघस्त्रुटित इव मुक्तामणिसरो-
विसर्पन् धाराभिर्लुठति धरणीं जर्जरकणः ।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति विरसाध्मातहृदयः ॥ २९ ॥

रामः । वत्स !—

तत्कालं प्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढ़ः ।

---

साभिप्रायम् । भूतवियोगस्मरणविवशकरणं रामं परिसान्त्वयितुमभिप्रेत्य इत्यर्थः, [अत्र भाविसीतावनगमनजायमानदुःखसन्तानमाशङ्क्य विवशयोः सीतारामयोरज्ञातकारणयोरपि आकस्मिकी उत्कण्ठा समजनि इति कवेराशयः व्यज्यते ]।

कथं हि एतत् ज्ञायते, तदेव वक्रोक्त्यात्मनः अभिप्रायाऽभिज्ञतां व्यनक्ति अयमिति ।—अयं ते—तव, जर्जराः पतित्वा बहुशः खण्डिताः कणाः बिन्दवो यस्य तथोक्तः, वाष्पौघः,—अश्रुप्रवाहः, त्रुटितः,—छिन्नसूत्रः, मुक्ताग्रन्थनतन्तुः इति यावत्, मुक्तामणिसरः,—मुक्ताफलरूपरत्नरचित इति यावत्, सरो माल्यमिव, ("सरा दध्यग्रग्रन्थीणीभावमालासमीरणे" इति मेदिनी )। धाराभिर्विसर्पन्—अविच्छिन्नप्रवाहैः धरणीतलमभिषिञ्चन्, धरणीं लुठति—भूमौ पततीत्यर्थः। निरुद्धोऽपि—यत्नत. अन्तःसंयमितोऽपि, आवेगः,—शोकावेगः, विरस निर्दयं यथा तथा आध्मातं ताड़ितं हृदयं येन स तथोक्तः, अरुन्तुदः इत्यर्थः, अत एव शोकसंविग्नमानसतया स्फुरत् कम्पमानम् अधरस्य नासाग्राश्च पुटं यस्य तस्य भावः तया हेतुना, शोकादीषद्वेपमानाऽधरपल्लवतया अत्युष्णनिश्वासेन व्यथितविशुष्कघ्राणकपोलतया चेति यावत्; परेषाम्—अन्येषामुन्नेयः,—अनुमेयो भवति। [ "कृत्यानां कर्त्तरि वा" ( २।३।७१ पा० ) इति सूत्रेण कर्त्तरि षष्ठी ]। अस्माभिस्तु अभिप्रायाभिज्ञतया तत्त्वत एव तदीयं मनोगतमनुभूयते, अधरनासाद्वयस्य कम्पनाधिक्यदर्शनात् पुरा परैरनुमितः य एव हृदये महान् शोकावेगः आसीदिति भावः। [ अत्र परिस्फुरतामधरादीनां विलासेन हेतुना, साध्यीभूतस्य प्रयत्नसङ्गोपितत्वेनाप्रत्यक्षायमाणस्य शोकावेगप्रसरस्य, प्रौढ़ोक्तिसिद्धाविच्छित्तिवशेनानुमीयमानत्वेनानुमानालङ्कारः,—"अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साधनात्" इति लक्षणात्; स च पूर्वाङ्कगतयोपमया संसृज्यते इति ध्येयम् ]। वृत्तं शिखरिणी ॥ २९ ॥

दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्मव्रण इव वेदनां करोति ॥ ३० ॥

सीता। हद्धी हद्धी! अज्ज अहं वि अदिभूमिं गदेण रणरण-एण अज्जउत्तसुण्णं विअ अत्ताणं पेक्खामि। * (ङ)

---

* हा धिक् हा धिक्! अद्य अहमपि अतिभूमिं गतेन रणरणकेन आर्य्यपुत्र-शून्यमिव आत्मानं पश्यामि।

---

वनाऽवस्थानवेलायां पूर्वं निर्बाधं विसोढ़मपि इदानीं कथं हि तत् शोकजात-मवाक्प्रसरं न सह्यते, प्रत्युतपुरस्तादपि समधिकं कातर्य्यमिदानीमनुभूयते, इत्या-शङ्कायामुत्तरयति, तदिति।—प्रियजनस्य सीतायाः विप्रयोगात् मर्म्मस्पृग्विरहात् जन्म यस्य स तथोक्तः, तीव्रोऽपि—दुर्विषहोऽपि विरहजो दुःखाग्निः, प्रतिकृतिवाञ्छया—प्रतीकारकरणेच्छया, रावणादिवधविषयिकया इति यावत्, विसोढ़ः कथमपि सोढ़ इत्यर्थः, पुनर्विपच्यमानः,—चित्रदर्शनसहायकं प्राप्य अधुना पुनरुद्दीप्यमानः स दुःखाग्निरित्यर्थः, आघातादिना पुनर्विपच्यमानः पुनः स्वयमेव विपाकं प्राप्यमाणः [कर्मणः कर्तृत्वविवक्षया "कर्मवत्कर्मणा" (३।१।८७ पा०) इत्यातिदेशिकयगा-त्मनेपदम्।] हृन्मर्मव्रण इव—हृदः अन्तःकरणस्य मर्मणि मर्मप्रदेशे, तदभ्यन्तरे इत्यर्थः, संरूढः व्रणः इव, मनसि वेदनां करोति—व्यथां जनयति। [अत्र दुःखाग्निसहनस्य हेतुत्वेन प्रतिकृतिवाञ्छाया निर्देशात् काव्यलिङ्गम्; दुःखाग्नि-रित्यत्र रूपकम्; विपचनस्य अहेतुकत्वात् विभावना; हृन्मर्म्मव्रण इव इत्यत्र उपमा, एषाम् अङ्गाङ्गिभावेन साङ्कर्य्यम्; स च दुःखाग्नेः तीव्रतरत्वात् पूर्वादप्यसह्यत्वं गमयित्वा व्यतिरेकध्वनिमुत्थापयति]। वृत्तं प्रहर्षिणी।—"त्र्याशाभिः मनजरगाः प्रहर्षिणीयम्" इति लक्षणात्। सा च त्रयोदशाक्षरपादच्छन्दसां २५११तम प्रस्ता-रान्तर्गता ॥ ३० ॥

(ङ) अतिभूमिमिति।—अतिशयिता या भूमिस्तामतिभूमिं परां काष्ठां, गतेन—वैपुल्यं प्राप्तेनेत्यर्थः। रणरणकेन—उद्वेगेन, उत्कण्ठाया आधिक्यात् आर्य्य-पुत्रविनाकृतमिवात्मानं प्रेक्षे इत्यर्थः, तज्जातीयोद्वेगस्य इदानीमनुभूयमानत्वादियम् आशङ्का इति विभाव्यम्। [रणति शब्दायते यत्र "क्वणिरणोरुपसंख्यानम्" इति वार्त्तिकेन रणेरप् रणः शब्दस्तत्प्रकारः, प्रकारे द्वित्वम्, ततः संज्ञायां कन्।]

लक्ष्मण:। [स्वगतम्।] भवतु अन्यतः क्षिपामि। (च) [चित्रमवलोक्य प्रकाशम्।] तदेतन्मन्वन्तरपुराणस्य गृध्रराजस्य तत्रभवतः तातजटायुषः चरित्रविक्रमोदाहरणम्। (छ)

सीता। हा ताद! णिब्बूढो दे अपच्चसिणेहो!! * (ज)

---

* हा तात! निर्व्यूढस्ते अपत्यस्नेहः!!

एतद्धि परिन्यासः नाम बीजाङ्गम्। अत्र हि आर्य्यपुत्त्रविरहेणानुमीयमानस्य सीता-विवासनस्य निश्चयापत्तिरूपतयैदानीमुत्थितिः, सर्वथैव सीताविवासनस्य इदानी-माकाङ्क्षितया तन्निष्पत्तेरभिहितत्वात् इति ध्येयम्। तथा हि—"तन्निष्पत्तिः परि-न्यासः" इति दर्पणः]।

(च) क्षिपामि इति।—सञ्चारयामि, अन्यविषये अस्य मानसम् अभिनिवेश-यामि इत्यर्थः। एतस्य स्थानस्य शोकोद्दीपकत्वात् परित्यागो विधेयः इत्याशयः।

(छ) मन्वन्तरेत्यादि।—अन्यः मनुः मन्वन्तरं [मयूरव्यंसकादित्वात् समासः]; तस्मिन् पुराणः अतिप्राचीनः तथाविधस्य, वैवस्वतमन्वन्तरप्रवृत्तिकालमारभ्य आस्थितस्य इत्यर्थः। भगवतः वैवस्वतस्य मनोः शासनकालात् प्रभृति कल्पान्तं यावत् अखिल-मेतच्चराचरं प्रत्यक्षीकर्त्तुमीशस्येति भावः। [पुराणेषु चतुर्द्दश मनवः अभिहिताः, तेषां प्रत्येकाधिकारकाल एव मन्वन्तरमिति कथ्यते। स्वायम्भुवात् प्रभृति षण्णां मनूनां शासनकालः अतीतः, इदानीं वैवस्वतस्य सप्तममनोरधिकारः प्रवृत्तः। तत्र तावत् वैवस्वतमनोः शासनकालादारभ्य संस्थितेः जटायुषः मन्वन्तरपुराणत्वमवधेयम्। मनोः शासनकालस्तु ३०८४४८००० एतावत्संख्यमितानि मानवीयवर्षाणि भवन्ति। ("मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः" इत्यमरः)। तथाभूतस्य गृध्रराजस्य—खगपतेः जटायुषः, तत्रभवतः,—पूज्यस्य, तत्—प्रसिद्धम्, एतत्—पुरस्तात् वर्त्तमानम्; चरित्रविक्रमोदाहरणम्,—चरित्रस्य स्वार्थं परित्यज्यैव प्राणव्ययेनाऽपि वधूतया जानक्याः रक्षणप्रयासरूपस्य विक्रमस्य च रावणेन सार्द्धं तुमुलयुद्धे जायमानस्य महौजसः उदाहरणम् उल्लेखः, आलेख्यगतमिति यावत्।

(ज) निर्व्यूढः इति।—निर्व्यूढः,—सुदृढः, कथमपि केनापि अन्यथा कर्त्तुम-युक्तः इत्यर्थः, अप्रतिबध्यः इति यावत्। अपत्यस्नेहः,—वात्सल्यम्। अपत्यस्नेहस्य पराकाष्ठा प्रदर्शिता भवतीति भावः।

रामः। हा तात काश्यप शकुन्तराज! क्व पुनस्त्वादृशस्य महतस्तीर्थस्य साधोः सम्भवः? (झ)

लक्ष्मणः। अयमसौ जनस्थानपश्चिमतः चित्रकुञ्जवान् नाम दनु-कबन्धाऽधिष्ठितो दण्डकाऽरण्यभूभागः; तदिदमृष्यमूकपर्वते मतङ्गस्य आश्रमपदम्। इयञ्च श्रमणा नाम सिद्ध-शवरी; तदेतत् पम्पाऽभिधानं सरः। (ञ)

(झ) हा तातेति।—हा कष्टम्। हे तात! पितः! पितृवत् वात्सल्य-निदर्शकतया मान्य इत्यर्थः। काश्यप!—कश्यपगोत्रोत्पन्न! (कश्यपसुतगरुडस्य कनिष्ठतनयत्वात्)। शकुन्तराज!—शकुन्तानां पक्षिणां राजा तत्सम्बुद्धौ तथोक्त। [ "राजाहः सखिभ्यष्टच्" (५।४।९१ पा०) इति टच् ]। क्व पुनः,—कुत्र अन्यत्र, त्वादृशस्य—त्वत्सदृशस्य, साधोः,—पवित्रस्य, तीर्थस्य—विद्यादिविविधगुणयुक्तपात्रस्य। ( "तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च। अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु" इति मेदिनी) सम्भवः? [ एवञ्च अत्र अनन्वयोऽलङ्कारोऽभिव्यज्यते इति बोध्यम् ]।

(ञ) जनस्थानपश्चिमतः इति।—जनस्थानस्य महाऽरण्यस्य पश्चिमतः पश्चाद्वर्त्ते दिग्विभागे इत्यर्थः अवस्थितः इति शेषः। दनुकबन्धाधिष्ठितः,—दनुनामकेन कबन्धेन शिरोग्रीवारहितेन वक्षःस्थलस्थिताननेन राक्षसेन अधिष्ठितः अधिकृतः। [अयं हि पुरा श्रियाः अप्सरसः सुतः विश्वावसुनामा गन्धर्वः आसीत्; महर्षेः स्थूलशिरसः शापात् राक्षसरूपतामधिगतः दनुसंज्ञां लेभे; ततश्च रणेऽजिरे शक्रस्य धर्षणात् तत्प्रमुक्तेन वज्रेण तस्य सक्थि शिरश्च शरीरे सम्प्रवेशितम्। अथ वासवप्रसादात् योजनायतौ बाहू कुक्षिगतञ्च तीक्ष्णदंष्ट्रं मुखञ्च लब्धवान्, राघवावुपरुरोध च। अथ सीताहरण-शोकार्त्तयोः तयोः दण्डकाऽरण्यं क्रममाणयोः निशिताभ्यां खड्गाभ्यां निकृत्तबाहुः दिव्यं वपुः लेभे इति पौराणिकी वार्त्ता। भारते वनपर्वगते द्रौपदीहरणपर्वणि अष्टसप्तत्यधिकद्विशततमाऽध्याये, तथा रामायणे आरण्यकाण्डे एकसप्ततितमाऽध्याये द्रष्टव्या ]। अयम् असौ चित्रार्पिततया वस्तुतः अविद्यमानः, चित्रकुञ्जवान्—चित्रः विचित्रः नानाफलपुष्पसम्भारसम्भृतबहुपुष्कलतयाऽतीव मनोरमो विस्मयावहश्चेति यावत्, असौ कुञ्जः सोऽस्मिन्नस्तीति तथोक्तः नाम दण्डकारण्यस्य भूभागः। तत् इदञ्च ऋष्यमूकसन्नामा पर्वतस्तत्र, मतङ्गस्य स्वनाम्ना प्रसिद्धस्य तपोधनस्य आश्रमपदमाश्रमस्थानम्। इयञ्च श्रमणा नाम सिद्धा प्रसिद्धा, योगाऽभ्यसनादिनेत्यर्थः,

सीता। एत्थ किल अज्जउत्तेण विच्छड्डिदामरिसाधीणं पमुत्तकण्ठं रुदिअं आसि। * (ट)

* अत्र किल आर्यपुत्रेण विच्छर्दितामर्षाधीनं प्रमुक्तकण्ठं रुदितम् आसीत्।

शबरी—मतङ्गस्य मुनेः शिष्याणां काचित् परिचारिणी। कमलोत्पलैरुपशोभित-सलिलायाः हंसकुररविनादितायाः पम्पायाः पुष्करिण्याः पश्चिमे तटे महर्षेः मतङ्गस्य आश्रमे तच्छिष्याणां सेविका शबरी तपोऽतप्यत। तथा हि रामायणे आरण्यकाण्डे,—

"ततः पुष्करिणीं वीरौ! पम्पां नाम गमिष्यथः।
... ... ...
मतङ्गशिष्याः तत्रासन् ऋषयः सुसमाहिताः।
... ... ...
तेषां गतानामद्यापि दृश्यते परिचारिणी।
श्रमणी शबरी नाम काकुत्स्थ! चिरजीविनी॥
त्वान्तु धर्मे स्थिता नित्यं सर्वभूतनमस्कृतम्।
दृष्ट्वा देवोपमं राम! स्वर्गलोकं गमिष्यति॥
ततस्तद्राम! पम्पायास्तीरमासाद्य पश्चिमम्।
आश्रमस्थानमतुलं गुह्यं काकुत्स्थ! पश्यसि॥" इति।

तदेतत्—यत्र शबर्य्या साकं समागमो जातः तदेवेत्यर्थः, महर्षेः मतङ्गस्याश्रमसङ्गतं, पम्पा अभिधेयं नाम यस्य तत् सरः जलाशय.।

(ट) अत्रेत्यादि।—अत्र—पम्पायाम्। विच्छर्दितेत्यादि।—विच्छर्दितः विवर्द्धितः योऽमर्षः असहिष्णुता. विरहोद्दीपकानां विविधानां विहङ्गानां रुतमाकर्ण्य आघ्राय च नानाप्रसूनानां प्रमोदकरं सौरभं यो हि धैर्य्यविगमः इति यावत्, तस्य अधीनं सीतावियोगदैन्यविषयकमित्यर्थः। प्रमुक्तकण्ठम्—उच्चैः रुदितमासीत्, भवान् रोरुद्यमानः अभूदित्यर्थः। ["विसृष्टामर्षधीरत्वम" इति पाठे तु,—पम्पा-दर्शनोद्दीपितेन प्रभूतेन शोकावेगेनाभिभूततया परित्यक्तः रावणस्योपरि अमर्षः कोपः धीरत्वं सहजधैर्य्यञ्च यस्मिन् कर्मणि तद्‌यथा तथा इत्यर्थः। अत्र करुण-विप्रलम्भरसविकाशनाय नायकस्य विमनायमानत्वमुक्तम्। एतेन पम्पायाः सौन्द-र्य्यातिशायित्वं सूचितम्]।

राम:। देवि ! रमणीयमेतत् पम्पासर: ।—

एतस्मिन् मदकलमल्लिकाख्यपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीका: ।
वाष्पाऽम्भ:परिपतनोद्गमाऽन्तराले
संदृष्टा: कुवलयिनो भुवो विभागा: ॥ ३१ ॥

अथ शृङ्गाररसं राजहंसरीलम्बादिकतैरुद्दीपनविभावैरुद्बोधयितुं पम्पासरस: स्वभावरामणीयकं मन्मथोद्रेकदकरत्वञ्च समधिकमावेदयितुम् आलम्बनविभावानुगतं रोदनाद्यनुभावं विशेषेण व्यनक्ति, एतस्मिन्निति।—हे देवि ! एतस्मिन्—पम्पासरसि, वाष्पाऽम्भसां वाष्पवारीणाम् अश्रूणामित्यर्थ:, परिपतनमुद्गमश्च तयोरन्तराले अवकाशे, वाष्पबिन्दुपतनाऽनन्तरं पुनरश्रूत्पत्तौ क्षणमध्ये वाष्पोपरोधाऽभावात् दर्शनं सम्भवति, अत: अन्तराले इत्युक्तम् ; [ एतेन अविच्छिन्नरोदनं ध्वनितम् ]। मदेन हर्षेण, उद्दामयौवनजनितेन इति शेष:, कलन्तीति मदकलास्तेषां मधुरास्फुटध्वनिकारिणां, मल्लिकाख्यानां मल्लिकानामकानां हंसविशेषाणां ["मल्लिकाक्ष" इति पाठे तु—चञ्चु-चरणेषु मलिनानां धवलहंसविशेषाणाम् ; तथा हि—"मानसौकस्तु राजहंसा: स्युर्धार्त-राष्ट्रा: सितेतरै:। मलिनैर्मल्लिकाक्षास्ते कथ्यन्ते चरणाननै: ॥" इति हलायुध:] पक्षैर्व्याधूता: विकम्पिता: अत एव स्फुरन्तश्चञ्चला: उरवो विशाला: दण्डा: मृणाला: येषां तानि तथोक्तानि पुण्डरीकाणि श्वेतोत्पलानि येषु तथोक्ता:, कुवलयिन:,—कुमुद्वन्त: नीलोत्पलबहुला: वा ("पुण्डरीकं सिताम्भोजम्"इति,"स्यादुत्पलं कुवलयम्" इति च अमर:) भुवो विभागा: भूखण्डानि इत्यर्थ: संदृष्टा:। मानसोन्मादकर-मनुपमं पम्पासर:सौन्दर्यं निरीक्ष्य त्वद्विरहविधुरस्य मे अनारतमेवाश्रु न्यपतत् इति भाव:।

अन्यथाऽपि व्याख्यायते,—मलिनचञ्चुचरणानां हंसानां स्वपक्षाऽनिलैरान्दो-लितानां कुवलयानां धवलिम्ना उपचितमपि निसर्गधवलं पम्पापय:, अभीक्ष्ण-मुदीयमानानां वाष्पधाराप्रवाहाणां रभसा उपहता कैलषीकृता मुग्धा च मे दृष्टि:, सितारविन्दराजहंसनिचयं वाष्पाम्भ:सेकप्रसारपरिणतया धूमाभधिया इन्दीवर श्यामलमदर्शत्। [ अत्र व्याख्याने विविधप्रसूनाकरस्य पम्पासरस: कुत्रचित् पुण्ड-रीकवत्त्वात् कुत्रचिच्च कुवलयवत्त्वात् प्रस्तुतस्य पुण्डरीकवत: भूविभागस्य अन्यस्य कुवलयिन: तादात्म्याध्यासात् पुण्डरीकवदितरभिन्नत्वेनाऽपरिचयात् उभयोस्तुल्य-

लक्ष्मणः । अयमार्य्यो हनूमान् । (ठ)

गुणतया प्रतीतेः भेदाऽग्रहनिबन्धनः सामान्याऽलङ्कारः ; न तु भ्रान्तिमान्, अतस्मिन् तद्बुद्धेरनुदयात् ;—"सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैः गुणैः" इति लक्षणात् ] ।

यद्वा,—ननु एतत्पद्माकरस्य रमणीयत्वात् कलकूजितहंसगणोपशोभितपुण्डरीकादि-सुरभितया च उद्दीपकत्वेन विप्रयोगविवशमानसस्य द्रष्टुमशक्यत्वात् कथमौचित्यं भवति? इत्यभिप्रायकं सीताप्रश्नं उत्तरयति, एतस्मिन्निति ।—मत्—मदर्थं मम विरहव्यथाऽऽतुरस्य त्वद्विरहसमुत्थां व्यथामपनेतुमित्यर्थः, अकलाः,—न विद्यते कलं कूजितं येषां तथाविधाः नैसर्गिकं मधुरनिनादमपि परित्यज्येति भावः, ते मल्लिकाख्याः हंसविशेषाः तेषां पक्षाणां गरुतां व्याधूतैः कम्पनैः ताडनैरित्यर्थः, छिन्नप्रसूनत्वादिति शेषः । स्फुरन्ति केवलं विगतकुसुमाश्रयत्वात् चलानि उद्दण्डानि पृथुलमृणालानि स्वाधारभूतानि इति यावत् येषां तथाभूतानि, स्वाधारच्युतैः विगतशोभानि पुण्डरीकाणि येषु तथोक्ताः प्रदेशाः कुवलयिनः दिवाविकाशाद्यभावात् विलूनपुण्डरीकवत् म्लानैरिन्दीवरैर्युक्ताः वाष्पाम्भःपरिपतनोद्गमाऽन्तराले संदृष्टाः । हंसाः खलु विधुरस्य मम विरहोद्दीपकं स्वकूजितं विहाय उद्वेगकराणि कमलानि अपि चिच्छिदुरित्याशयः । सत्य हि एतत्, विरहखिन्नं रामं दृष्ट्वा अचेतनानां गिरीणामपि रोदनदर्शनात्, अथच सचेतनानां तेषामवश्यं करुणोदयसम्भवादित्यवधेयम् । [इमचक्रवाकाणामुपरि शापदानदर्शनात्, अस्माकमपि उपरि रामः शापं दास्यतीति भीत्या हंसा अपि एवं मुमुचुः इत्यपि ध्वन्यते] । "कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतम्" इत्यादिदर्शनात् तिरश्चामपि विरहिजनेषु अनुकम्पा प्रसिद्धा वा । [दण्डपुण्डेत्यादौ संयुक्तव्यञ्जनयोः स्वरूपतः क्रमतश्च साम्यात् छेकानुप्रासः] । वृत्तं प्रहर्षिणी ॥ ३१ ॥

(ठ) अयमित्यादि ।—देवोपमसौभाग्यभाक्तया देवांशसम्भूततया महोपकर्त्तृतया च, हनूमति आर्य्य इत्युक्तिः । हनुः कपोलदयोपरिस्थः मुखभागः ; स प्रशस्तः अस्य इति मतुप् ; हनुमानित्यपि भवति, हनुशब्दस्य ह्रस्वान्तस्याप्येतदर्थकत्वात् । पुरा महेन्द्रः वज्रेणास्य हनुमभाङ्क्षीत्, तत एवाऽस्य इत्यमभिधानं सञ्जातम् । तथा हि—

"मत्करोत्सृष्टवज्रेण हनुरस्य यथा हता ।
नाम्नैव कपिशार्दूलः भविता हनुमानिति ॥" इति ।

सीता। एसो सो चिरणिव्विस्सजीअलोअपच्चुद्धरणगुरूओव-आरी महाणुभाओ मारुदी। * (ङ)

राम:। दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्द्धनः।
यस्य वीर्य्येण कृतिनो वयञ्च भुवनानि च ॥ ३२ ॥

* एष स चिरनिर्विण्णजीवलोकप्रत्युद्धरणगुरूपकारी महाऽनुभावो मारुतिः।

(ङ) चिरेत्यादि।—चिरनिर्विण्णस्य सुदीर्घकालं यावत् अन्येषु क्रौर्य्यादिदुर्व्यवहार-दर्शनात् चिरदुःखितस्य,—["तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना" इति साहित्य-दर्पणः।] जीवलोकस्य सर्वेषां जीवानामित्यर्थः, प्रत्युद्धरणात् शोकाऽपनयनात् गुरूप-कारी महोपकारी, महानुभावः,—महाशयः, मारुतस्यापत्यं पुमानिति मारुतिः पवनपुत्रो हनूमान्। सीता रावणेन हृता इति श्रवणसमकालमेव सर्वे एव जीव-लोकाः, का कथा महाजनानां महोदारचरितानां, सपदि शोकसंविग्नाः आसन्, त्रिभुवनकण्टकं रावणं निहत्य उद्धृतायान्तु सीतायां जीवलोकस्य तथाविधः अरुन्तुदः शोकः व्यपगतः, तत्र खलु सीतासमुद्धरणसमये अस्यैव महतः हनुमतः महोपकार-कत्वं सर्वत्र सुविदितमेव। त्रैलोक्यपीड़करावणहनने सहायकतया न केवलं ममैवोप-कारी अपि तु निखिलभुवनानामिति भावः। [दश मासान् व्याप्य सीतायाः रावण-गृहावस्थितत्वात् चिरपदमुपात्तम्]।

दिष्ट्येति।—दिष्ट्येति हर्षसूचकम् तृतीयान्तप्रतिरूपकमव्ययम्, अहो इत्यर्थः। सः,—प्रसिद्धः, अयं—पुरतः दृश्यमानः, महाबाहुः,—आजानुलम्बितभुजः रुद्राव-तारत्वात् महापुरुषत्वाद् वा, अथवा लक्षणया भुजबलसम्पन्नः, अञ्जनानन्दवर्द्धनः,—पवनेनाहितवीर्य्यायाः केशरिपत्न्याः अञ्जनायाः प्रीतिविवर्द्धनः तनयः इत्यर्थः, हनूमानिति पूर्व्वेणान्वयः। यस्य वीर्य्येण—पराक्रमेण वयं—लक्ष्मणाद्याः वानरान्ताः सर्व्वे भुवनानि —त्रिजगन्ति च कृतिनः,—कृतार्थाः उपकृताः इत्यर्थः; सिद्धकामा इति यावत्। [प्रशस्तं—कृतं प्रशस्यमेषामित्यर्थे प्रशंसायामिनि रूपम्]। कथं हि तत् निष्पादितं, तदेवेदानीमभिधीयते।—तथा हि, रावणहननानुकूल्यकरणात् रामस्य, अशोक-वनमध्यस्थितायाः रोरुद्यमानायाः प्रियवार्त्ताप्रेषणादिना कथञ्चित् खेदापनयनात् सीतायाः,सञ्जीवन्योषध्यानयनादिना स्वानवधानकृतसीताविरहपरिहाराय लक्ष्मणस्य, वह्निप्रवेशनिराकरणात् भरतशत्रुघ्नयोः, शरणागतपरिपालनात् विभीषणस्य, सुखोत्पादनादिना सुग्रीवस्य, मधुवनभङ्गापराधनिरोधात् वानराणां, स्वावस्थित्या

सीता। वच्छ ! एसो कुसुमिदकदम्बतरुतण्डविदवरहिणो किण्णामधेओ गिरी ;—जत्थ अणुभावसोहग्गमेत्तपरिसेसधूसरसिरी मुहुत्तं मुच्छन्तो तुए परुदिएण अवलम्बिदो तरुअले अज्जउत्तो आलिहिदो ? * (ढ)

---

* वत्स ! एष कुसुमितकदम्बतरुताण्डवितवर्हिणः किंनामधेयो गिरिः ;—यत्र अनुभावसौभाग्यमात्रपरिशेषधूसरश्रीः मुहूर्त्तं मूर्च्छन् त्वया प्ररुदितेन अवलम्बितस्तरुतले आर्य्यपुत्र आलिखितः ?

---

अ जीवलोकस्य महोपकारसाधनात् सर्वे एव महता हनुमता कृतार्थीकृता इति यथायथमुन्नेयम्। [ अत्र "भुवनानि च" इत्यत्र चकारश्रुतेः विभक्तिविपरिणामेन कृतानि इति अध्याहारेणान्वयः। अतो नास्ति न्यूनपदत्वदोषशङ्काऽवसरः। अत्र उपकृतिक्रियायां महतश्चरित्रख्यापनात् उदात्तालङ्कारः ]। पथ्यावक्त्रं वृत्तम् ॥ ३२ ॥

(ढ) वत्स ! एषः, कुसुमान्येषां जातानीति [ तारकादित्वादितच् ] कुसुमिताः पुष्पिताः ये कदम्बतरवस्तेषु ताण्डविताः नृत्यन्तः, यद्वा कुसुमिताः ये कदम्बतरवः ते ताण्डविताः कृतताण्डवाः यैः तथाविधाः, [ ताण्डववन्तः कृताः इत्यर्थे ताण्डव-वच्छब्दात् "तत्करोति तदाचष्टे" इति ग० सूत्रेण णौ इष्ठवद्भावात् मतुब्लोपे निष्ठाया रूपम् ]। वर्हिणाः मयूरा यत्र स तथोक्तः, ("मयूरो वर्हिणो वर्ही" इत्यमरः)। वर्षासु स्निग्धगम्भीरमेघध्वनिश्रवणसमकालं हि कदम्बकुसुमसुरभितानामुन्मदायमानानां वर्हिणानां नर्त्तनस्य कविसमयप्रसिद्धेः। "पुंनृत्य ताण्डवं प्रोक्तं स्त्रीनृत्यं लास्यमुच्यते" इति। किंनामधेयः,—किमाख्यो गिरिः ? [ नामैवेति नामधेयः स्वार्थे धेयः ]। यत्र —पर्व्वते, तरुतले—वृक्षस्य अधोभागे, [अनुगतो भावः इति गतिसमासः, न तु अनु-पूर्वात् भूधातोः घञ् "श्रिणीभुवोऽनुपसर्गे"(३।३।२४ पा०) इति सोपसर्गभूधातोः घञ्-निषेधात् ] अनुभावः प्रभावस्तेज इति यावत्, तस्य सौभाग्यं सर्व्वाङ्गः तदेव तन्मात्रं, तस्य परिशेषादवशिष्टत्वात् धूसरा ईषत्पाण्डुवर्णा श्रीः नवजलधरश्यामला वपुःकान्ति-र्यस्य स तथोक्तः, कृशाङ्गोऽपि स्वाभाविकसौभाग्यलक्ष्मीसमालिङ्गितकायः इति यावत् ; [ विप्रलम्भशृङ्गाररसस्य दशविधदशानामुत्कीर्त्तनात् तदन्तर्भूतस्य सततसीताप्राप्त्यु-पायादिचिन्ताजनितव्याधेरुदयात् सीताविरहविवशविग्रहस्य राघवस्य परिम्लानाया-मपि देहकान्तौ निसर्गमधुरायाः तदाकृतेः पाण्डुत्वमासीत्। तथा हि दर्पणकारः, —"व्याधिस्तु दीर्घनिश्वास-पाण्डुताकृशतादयः।" इति।] आर्य्यपुत्रः मुहूर्त्तं मूर्च्छन्—

लक्ष्मणः। सोऽयं शैलः ककुभसुरभिर्माल्यवान् नाम, यस्मिन्
नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः।
रामः। वत्सैतस्माद् विरम विरमातः परं न क्षमोऽस्मि
प्रत्यावृत्तः पुनरिव स मे जानकीविप्रयोगः ॥ २३॥

मूर्च्छया अचेतनीभवन्, प्ररुदितेन—रोदनं कर्त्तुं [आदिकर्म्मणि क्तः] रोरुद्यमानेन इत्यर्थः, तया आलम्बितः,—धृतः [कुसुमितव्रततीनां लास्यलीलासुनिपुणानां भुजङ्गभुजां मानसोन्मादकरीं विरहसमुद्दीपिकां केकामाकर्ण्य रणरणकाकुलस्य रामस्य जडतायाश्चापि उदयात् अङ्गानां मनसश्चापि हीनचेष्टता आयाता, एतदवलोक्य भ्रातरि अकपटप्रेमवता लक्ष्मणेन तदा रामभद्रः धृत आसीत् इत्यवधेयम्। तथा च दर्पणः,—"जड़ता हीनचेष्टत्वमङ्गानां मनसस्तथा" इति]। इत्येवंप्रकारेण आलिखितश्चित्रितः।

कथङ्कारं हि गिरिमिममालोक्य स्वभावधीरस्यापि रामस्य तथाविधः संमोहः प्राजनि, इत्याशङ्कायां तस्य पथिकविरहोत्कलिकाजनिकां सौभाग्यलक्ष्मीमावेदयति, सोऽयमिति।—ककुभैरर्जुनपुष्पैः [ककुभानां प्रसूनानि इत्यर्थे अण् "फले लुक्" (४।३।१६३ पा०) इति अणो लुक्। "नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः" इत्यमरः]। सुरभिः सुगन्धः। ("सुरभिर्घ्राणतर्पणः। इष्टगन्धः सुगन्धिः स्यात्" इत्यमरः।) सः अयं माल्यवान् नाम शैलः। यस्मिन्—शैले नीलः,—नीलवर्णः स्निग्धः,—शीतलः विद्युल्लतिकाभिः समाश्लिष्टत्वात् मसृणश्च [एकपदपाठे विशेषणकर्म्मधारयः] नूतनः,—नवाविर्भूतः तोयवाहः—मेघः शिखरं—शृङ्गं श्रयति—अवलम्बते। अभ्रंलिहोऽयं गिरिरित्यर्थः। [मन्दाक्रान्तावृत्तनिबद्धस्य अस्य श्लोकस्य अपरार्द्धं रामोक्त्या पूरितम्]॥

वत्सेति।—वत्स! लक्ष्मण! एतस्मात्—माल्यवत्प्रभृतिवृत्तान्तसंवलितचित्रवर्णनात्, विरम विरम—द्रुतं निवर्त्तस्व, [आयत्त्यातिशय्ये वीप्सायां द्विरुक्तिः। "जुगुप्साविराम" — इति वार्त्तिकेनाऽपादानत्वम्। "व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति सूत्रेण परस्मैपदञ्च।] अतः परं द्रष्टुमिति शेषः, न क्षमोऽस्मि—न शक्तोऽस्मि; यतः सः,—पूर्व्वमनुभूतः मे—मम जानकीविप्रयोगः,—सीताविरहः पुनः प्रत्यावृत्त इव—पुनर्लब्धप्रसर इव परावृत्त्य आगत इवेत्यर्थः। वैदेहीविरहजः स हि शोककीलकः नवीभूततया अधुना पुनः प्ररूढः नितरां मर्म्मभेदिकां वेदनां जनयतीति मन्ये इति हृदयम्। इममेव माल्यवन्तमाश्रित्य तत्रभवता कालिदासेनाऽपि एवमेवोपवर्णितम्। तथा हि—

लक्ष्मणः। अतः परम् आर्य्यस्य तत्रभवतां कपिराक्षसानाञ्च असङ्ख्यातानि उत्तरोत्तराणि कर्माश्चर्य्याणि; परिश्रान्ता चेयमार्य्या, तद् विज्ञापयामि—विश्राम्यतामिति। (ण)

सीता। अज्जउत्त! एदेण चित्तदंसणेण पच्चुप्पसदोहदाए अत्थि मे विण्णप्पं। * (त)

* आर्य्यपुत्र! एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदाया अस्ति मे विज्ञाप्यम्।

"एतस्मिन् गिरिर्माल्यवतः पुरस्तात् प्रादुर्भवत्यम्बरलेखि शृङ्गम्।
नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाऽश्रुसमं विसृष्टम्॥
गन्धश्च धाराहतपल्वलानां कादम्बमर्द्धोद्गतकेशरञ्च।
स्निग्धाश्च केकाः शिखिनां बभूवुर्यस्मिन्नसह्यानि विना त्वया मे" ॥ इति।

[एतच्च सीताविरहरूपं भाव्यर्थमभिसन्धाय कौतूहलबहुलानां माल्यवदुपवर्णन-विषयिकाणां वाचामभिधानात् "परिभावना" नाम मुखसन्धेरङ्गं वेदितव्यम्। "कुतूहलोत्तरा: वाचः प्रोक्ता तु परिभावना।" इति दर्पणोक्तेः। अत्र पूर्ववाक्यं प्रति परार्द्धस्य हेतुतयोपन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गं पुनरसम्भवापातस्यातीतलक्षविरहस्य पुनरागमनसंशयैककोटिकतया उत्थापनादुत्प्रेक्षा, इति तयोः सङ्करः]। मन्दाक्रान्ता वृत्तम्।—"मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ गौ ययुग्मम्" इति लक्षणात्; सप्तदशाक्षरपादच्छन्दसां प्रस्तारेषु १८९२९तमप्रकारे चास्य अन्तर्भावः॥ ३३॥

(ण) अत इति।—अतः परम्—अस्मात् अनन्तरम् आर्य्यस्य—रामस्य तत्रभवतां—महात्मनां कपिराक्षसानाञ्च असंख्यातानि—अगणितानि उत्तरोत्तराणि—परेभ्यः पराणि उत्कृष्टेभ्यः उत्कृष्टानीत्यर्थः [उत्तराणि च उत्तराणि चेति उत्तरोत्तराणि, पौर्व्वापर्य्येणानुष्ठितानि, क्रमशः विहितानि इति वा, वीप्सायां द्विर्भावः] कर्माश्चर्य्याणि—कर्माणि वीरोचितानि एव आश्चर्य्याणि विस्मयकराणि सप्ततालभेदसमुद्रबन्धनादीनि अद्भुतकर्माणीत्यर्थः। इयमार्य्या—सीता च परिश्रान्ता, गर्भभारालसत्वात् चित्रदर्शनजनितश्रमेण क्लान्तविग्रहा; तद् विज्ञापयामि—निवेदयामि, विश्राम्यतां—विश्रामं प्राप्यतां, भवता अथवा आर्य्यया इति शेषः। [तत्र प्रथमे पक्षे णिजन्तस्य श्रमधातोः कर्मणि रूपम्; द्वितीये च अदन्तचुरादेः श्रामधातोः भावे वाच्ये। उभयत्र प्रार्थनायां लोट्]।

(त) प्रत्युत्पन्नः सञ्जातः दोहदः मनोरथः गर्भिण्यभिलाषो वा यस्याः

राम:। ननु आज्ञापय।

सीता। जाणे पुणो वि प्पसस्सगम्भीरासु वणराइसु विहरिस्सं, पवित्तणिम्मलसिसिरावगाहाञ्च भअवदीं भाईरहीं अवगाहिस्सं। * (थ)

राम:। वत्स लक्ष्मण!

लक्ष्मण:। एषोऽस्मि।

राम:। अचिरं सम्पादनीयोऽस्या दोहद:,—इति सम्मत्येव गुरुभि: सन्दिष्टम्। तत् अस्खलितसुखसम्पातं रथमुपस्थापय। (द)

---

* जाने पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहरिष्यामि, पवित्रनिर्म्मलशिशिरावगाहाञ्च भगवतीं भागीरथीमवगाहिष्ये।

तथाभूताया: मे—मम विज्ञाप्यं वेदनीयमस्ति। [ मे इत्यत्र "कृत्यानां कर्त्तरि वा" (२।३।७१ पा०) इति सूत्रेण षष्ठी वैकल्पिकी, पक्षे मयेति। इदानीम् अदूरवर्त्तिन: वीजीभूतस्य आत्मविवासनस्य प्रतिरूपकतया स्थितस्य भूतपूर्वस्य प्रियसमागमसहकृतस्येव तस्य स्मर्य्यमाणतया महाह्लादकरत्वात् इदं हि प्राप्तिर्नाम बीजसम्भेदाङ्गं वेदितव्यम्। तथा हि—"प्राप्तिस्तु सुखागम:" इति दर्पण: ]।

(थ) जाने—अवगच्छामि, इच्छामि इति भाव:। [ जनस्थानविहरण-गङ्गावगाहादीनामवश्यभावितया ज्ञापनार्थमभिलषामीत्यनुक्त्वा जाने इति पदमुपात्तम्। "अनुपसर्गाज्ज्ञ:" (१।३।७६ पा०) इति सूत्रेणात्मनेपदम् ]। प्रसन्ना: हिंस्रै: विरहितत्वात् पुष्पफलैरुपशोभितत्वाद्वा अनुरञ्जयन्त्य:; गम्भीरा: तरुशैलादीनां दृढसन्निवेशात् लोकोत्तरं भावमावेदयन्त्य:, [ विशेषणकर्मधारय: ] तथाभूतासु वनराजिषु विपिनवीथीषु विहरिष्यामि—पर्य्यटिष्यामि। पवित्र: पावन:, निर्मल: पापानां समूलमुन्मूलनात् सुभग: सुखकरश्च, शिशिर: शीतल: तृप्तिकरश्च सन्तापहरश्च वा अवगाह: मज्जनं यस्यां तां भागीरथीं गङ्गामवगाहिष्ये। एतेन शोकविधुराया: निकारजातं विसोढुमशक्नुवत्या: वैदेह्या: भागीरथ्यामात्मविसर्जनं गम्यते। [ एतद्धि प्रोक्तप्राप्तिरूपवीजसम्भवस्य विहृतिरूपत्वमवगन्तव्यम्। ]

(द) अचिरम्—अविलम्बितमेव अस्या:,—सीताया: दोहद:,—अभिलाष: सम्पादनीय:,—पूरणीय:, इति—इत्थं गुरुभि:,—वशिष्ठारुन्धतीशान्ताप्रभृतिभि:

सीता। अज्जउत्त ! तुम्हेहिं वि तहिं गन्तव्वं। *

रामः। अयि कठिनहृदये ! एतदपि वक्तव्यमेव ! (ध)

सीता। तेण हि पिअं मे। †

लक्ष्मणः। यथा आज्ञापयति आर्य्यः।

[ इति निष्क्रान्तः। ]

रामः। प्रिये ! इतो वातायनोपकण्ठे मुहूर्त्तं संविष्टौ भवावः। (न)

---

* आर्य्यपुत्र ! युष्माभिरपि तत्र गन्तव्यम्।

† तेन हि प्रियं मे।

सन्दिष्टं—कथितम्। तत्—अतः, अस्खलितः गात्रसञ्चलनभ्रंशादिरहित इत्यर्थः, अत एव सुखयतीति सुखः सुखजनकः सम्पातः सुखेन अक्लेशेन वा सम्पातो गमनं येन तथोक्तम्। सीतायाः पूर्णगर्भतया तथाविधेनैव रथेन गमनस्य औचित्यादिति तात्पर्य्यम्। [ एतद्धि सीताविवासनरूपबीजार्थस्य प्ररोहीभूततया उद्भेदरूपं बीज-सम्बद्धं वेदितव्यम्। "बीजार्थस्य प्ररोहः स्यादुद्भेदः" इति लक्षणात् ]।

(ध) कठिनं निर्दयं हृदयं यस्याः तथाभूते ! निर्ममानसे ! इत्यर्थः, यतः त्वम-हञ्च पृथगिति चिन्तयितुमपि शक्नोषीति भावः, एतदपि त्वया सार्द्धं जनस्थाने पुनर्विह-रणमपि किमु वक्तव्यं प्रार्थयितव्यं वा। तत्र तव पर्य्यटनस्य अतीवानन्दकरत्वेन त्वद्विप्र-योगजवेदनासहिष्णुना त्वदभिन्नहृदयेन विम्बकल्पेन मयाऽप्रार्थितेनापि तत्र खलु गन्तव्यमेव, शङ्कायाश्चैतस्याः त्वद्गतया भेदबुद्धेरवोद्भावितया सुव्यक्तं खलु उपलोपमत्वं त्वच्चेतस इति हृदयम्। परन्तु "एतदपि वक्तव्यमेव"—एतद्धि च वक्तव्यम् ; यतः अहन्तु न गमिष्यामि, भवत्या असहायायाः खलु तव गन्तव्यम्। [अहमिदानीं त्वां दुर्वहगर्भ-खिन्नां क्रव्याद्भ्यो बलिमिव अरण्यान्याम् उपहरिष्यामि, इति काक्वा अर्थान्तराभि-धायकस्य प्रधानार्थान्तररूपिणः वाग्विन्यासस्य, चतुर्थपताकास्थानीयत्वात् ज्ञेयम्। भाव्यर्थस्यैवात्र सूचितत्वात्, तथा हि—

"द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
प्रधानार्थान्तराक्षेपी पताकास्थानकं परम् ॥" इति लक्षणात् ]।

(न) वातस्य मारुतस्य अयनमागमनं येन यस्मात् वा तथाभूतं, पवनसञ्चार-सुभगं छिद्रद्वारञ्च यत् गवाक्षान्तरालमित्यर्थः, तस्य उपकण्ठे सन्निधौ, ["वातायनापवर्त्तके" इत्यपि पाठः दृश्यते ; तदर्थस्तु,—वातायनापवारके, अपवारकभूतं यत् वातायनं तत्र

सीता। एव्वं भोदु, ओहीरिज्जामि क्खु परिस्समजणिदाए णिद्दाए। * (प)

राम:। तेन हि निरन्तरमवलम्बस्व(फ)मामत्र शयनाय।—

जीवयन्निव ससाध्वसश्रम-स्वेदबिन्दुरधिकण्ठमर्प्यताम्।
बाहुरैन्दवमयूखचुम्बित-स्यन्दिचन्द्रमणिहारविभ्रम:॥ ३४॥

* एवं भवतु, अपह्रिये खलु परिश्रमजनितया निद्रया।

इत्यर्थ:, यतस्य: अपर: न लक्ष्यते, अतिनिभृतं मदुलगन्धवहनिषेवितं देशं इति भाव:]। संविष्टौ—कृतसंवेशौ शयानौ इत्यर्थ: ("समीपे निकटासन्न-सन्निकृष्टसनीड-वत्। सदेशाऽभ्याससविध-समर्यादसवेशवत्। उपकण्ठाऽन्तिकाऽभ्यर्णाऽभ्यग्रा अप्य-भितोऽव्ययम्" इति, "स्यान्निद्रा शयनं स्वाप: स्वप्न: संवेश इत्यपि" इति चामर:)।

(प) परिश्रमजनितया,—चित्रदर्शनात् जायमानेन क्लमेनानीतयेत्यर्थ:, निद्रया—संवेशेन, हृदयावसादेनेति यावत्। अपह्रिये—अभिभूये। [ अपपूर्वकात् हरते: कर्म्मणि लटि रूपम् ]।

(फ) तेन हि निद्रासञ्जातवैक्लव्यात् हेतो: अत्र अस्मिन् वातायनोपकण्ठे शयितुं मां मच्छरीरमित्यर्थ:, निरन्तरं निर्नास्ति अन्तरम् अवकाशो यस्मिन् तद्यथा तथा कालक्षेपमन्तरेणैव गाढ़मिति यावत्, अवलम्बस्व—समाश्लिष्य। दुर्वहगर्भभार-विवशं स्वदेहं कियच्च विनोदयितुं मन्दमारुतरम्ये एतस्मिन् गवाक्षान्तराले मदङ्कोप-धाना क्षणं विश्रामसुखमुपभुङ्क्ष्व इति भाव:।

इदानीमात्मतोषकरं समालिङ्गनप्रकारं सुस्फुटमभिधत्ते, जीवयन्निति।—साधु अत्यर्थम् अस्यति विक्षिपति मन: इति साध्वसं भयम् ("—दरत्रासौ भीतिर्भी: साध्वसं भयम्" इत्यमर:) श्रम: खेद:,(अत्र आलेख्यगतशूर्पणखाऽऽदिदर्शनोद्भूतं साध्वसं श्रमश्च चित्रदर्शनजन्य: विज्ञेय:।) तत एव हि समुद्भूता: स्वेदबिन्दवो घर्म्मबिन्दव: तै: सह वर्त्तमान:, तथोक्त:; इन्दोरिमे: ऐन्दवैरिन्दुसम्बन्धिभिर्मयूखै: किरणै: चुम्बित: स्पृष्ट:, अत एव स्यन्दते स्रवतीति स्यन्दी तुषारशीकरवानित्यर्थ:, यश्चन्द्रमणिहार: चन्द्रकान्तमणिस्रक् तस्य विभ्रम: विलास इव विभ्रमो यस्मिन् स तथोक्त:, अथवा तस्य विभ्रमो भ्रान्ति: यस्मिन् तादृशो यो बाहु: स्वेदार्द्रत्वात् तुषारस्राविचन्द्रकान्त-मणिहारसदृश: शुभ्रोज्ज्वल:, यद्वा स्वेदबिन्दुसिक्ते यस्मिन् बाहौ तुषारनिष्यन्दिचन्द्र-मणिहारभ्रान्तिर्भवतीति भाव: स तथोक्तो बाहु:; जीवयतीति जीवयन्निव मामिति शेष:, त्वद्विरहखेदविक्लवप्येवप्रायं हि मां पुनरुच्छ्वासयन्निवेत्यर्थ:, मम उज्जीवन-

[तथा कारयन् सानन्दम्।] प्रिये! किमेतत् (व)?—
विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः!

ठम् ते मयं बाहुरिति भावः, अधिकण्ठं कण्ठे [विभक्त्यर्थेऽव्ययीभावः।] अर्प्यतां— स्थाप्यतामित्यर्थः; इत्थं तु भवनोन्मुखविप्रयोगसन्तप्तहृदयं मां शीतलं कुरु इति भावः। मृणालस्निग्धकोमलं मज्जीवनसञ्जीवनं स्वबाहुं मम कण्ठे बधान, अन्यथा त्वद्विरहे क्षणमपि न जीवेयमित्याशयः। [अत्र भयश्रमस्वेदादयः सात्त्विकभावाः; तथा हि भोजराजः,—

"विप्रलम्भेऽभियोगाद्यैः सम्भोगे साध्वसादिभिः।
मिथः परीक्षया प्रेम्णो निर्दिष्टास्ताः परीष्टयः॥
त्रासश्चित्तचमत्कार आकस्मिकभयादिभिः।
निद्राव्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः॥" इति।

तथा हि वैदेह्याः सुकोमलाङ्गलावण्यादीनि उद्दीपनविभावाः, निद्रास्वप्नजड़त्वादयः व्यभिचारिणः, तैः परिपुष्टः अत्र आलम्बनविभावभूतायां सीतायां समुत्पन्नः राघवस्य रतिरूपस्थायिभावः, सम्भोगशृङ्गाररसरूपतां लभते इति। अपि च चन्द्रकिरण-स्पृष्टार्द्रचन्द्रकान्तमणिहारधर्म्मस्य सीताभुजलतया धारणासम्भवात् तदीयविभ्रम-सदृशविभ्रममवगमयतः बाहोः मणिहारादेश्च बिम्बप्रतिबिम्बबोधात् असम्भवद्वस्तु-सम्बन्धरूपो निदर्शनालङ्कारः; जीवयन्निवेत्यत्र क्रियोत्प्रेक्षा; तदनयोः संसृष्टिः]। रथोद्धता वृत्तम्;—"रान्नराविह रथोद्धता लगौ" इति लक्षणात्; एकादशाक्षरपाद-च्छन्दसां ६९९ तमप्रस्तारान्तर्भूतमिदम्॥ ३४॥

(व) शालीनतया मुग्धया तया समाश्लेष्टुं स्वबाहौ असमर्पिते स्वयमेव सहजलज्जाजड़हृदयां सीतां तथा कारयन्, तदीयकरं स्वांसे उपस्थाप्येत्यर्थः। प्रिये! किमेतत्? कण्ठे तव बाहूपस्थापनानन्तरं कथं हि ईदृशी मदीयावस्था जाता, नाहं तामधुना निर्णेतुं शक्नोमीति भावः।

अनुभूयमानमवस्थान्तरं कीदृशमजनि तदेव सविशेषं विवृणोति, विनिश्चेतुमिति। —एतदित्यनेन सर्वेषामन्वयः। एतत्—मयोपभुज्यमानं त्वदङ्गसंस्पर्शजनितम् अनि-र्वचनीयं वस्तु इत्यर्थः। वा अन्यथा कथमेष सेवाऽर्थमायद्ध? इदं सुखं चेत्, तर्हि, बुद्धिस्तु कथं हि तद्विषयिका न भवति? अत आह, दुःखमिति वा।—किमियं हृतप्रभावमयी उत्कण्ठा? तथात्वे मानसीश्वायथकलङ्का अपरिहार्या स्यात्, अत

तव स्पर्शे स्पर्शे मम हि परिमूढ़ेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च सम्मीलयति च ॥ ३५ ॥

एवाह प्रमोहस्येति, प्रमोहश्चैतन्यसम्मीलनं वा, न चेदेवं तदा किमिति उत्प्रेक्ष्यते ? अत आह निद्रेति।—निद्रा स्वापो वा, स्वप्नसदृशं किमेतदलौकिकमनुभवामि। ननु जाग्रदवस्थायां चैतस्यात्यन्तमसम्भावितत्वात् आह,विषेति।—विषविसर्पः,—विषप्रसारः, विषप्रवेशजन्यः विसर्पाख्यः रोगविशेषो वा [ रोगवाचकविसर्पशब्दस्य ऋस्वदीर्घेकारता भवत्येव ]। एवञ्चेत् तर्हि कथं हि तदुद्भूता व्यथा निरन्तरमात्मानं न क्लिश्नाति ? अत आह मद इति।—मदः,—मद्योपयोगजः आनन्दविशेषो वा, अन्यथा कुत एतन्मनश्चाञ्चल्यम् ?—("सम्मोहानन्दसम्भेदो मदो मद्योपयोगजः" इति साहित्यदर्पणे मदलक्षणात् )। कथं पुनरेवं भावविपर्य्ययः अजायत, इति विनिश्चेतुं निर्णेतुं न शक्यः। [अध्याहृतेन"एष मदीयो भावः" इत्यनेन"शक्यः" इति पदस्य अन्वयो बोध्यः, पुंनिर्देशोऽपि तत एव साधुः ]। त्वदीयसुकुमाराङ्गसंश्लेषेण समुच्छलत्सर्वातिशायि-सुखसन्दोहपूरनिमग्नस्य मे लोकोत्तरानन्दमनुभवतामिन्द्रियाणां विवशता आयाता, तेन हि विवेकोऽपि हर्षातिरेकात् व्यलुपत् ; नातोऽहं कीदृशीं दशां गतवानिति सम्यगवधारयितुं प्रकाशयितुञ्चालमस्मि इत्याशयः। अशक्तौ हेतुमाह—तवेति। तव स्पर्शे स्पर्शे प्रतिस्पर्शं त्वदीययावदङ्गस्पर्शेषु इत्यर्थः, परिमूढ़ः,—परितः मूढ़ः विषय-ग्रहणासमर्थत्वात् मोहमुपागतः इत्यर्थः, स्वस्वविषयव्यावृत्तः इति यावत्, इन्द्रियगणो इन्द्रियाणां चक्षुरादीनां गणः समूहः यस्मिन् स तथोक्तो विकारः आन्तरावस्थाविशेषः, मम चैतन्यं विवेकं भ्रमयति च—तिरोदधाति च, सम्मीलयति च—प्रकाशयति च ; मम बुद्धिः कदाचित् भ्रान्ता कर्हिचिच्च प्रकाशिता आत्मविकारं निश्चेतुं नेशे इति भावः। स्पर्शे स्पर्शे मम चैतन्यं क्षणात् प्रबोधमेत्य सुखसन्दोहसमाच्छादितं सदैव तमसा परिभूयते, तत् कथमहं विनिश्चिनोमि किमवस्थोऽहमिति भावः। यद्वा—अत्र परार्द्धवाक्यस्य प्रथममन्वयं विधाय तदनु द्वितीयार्द्धव्याख्या विधेया ; ततश्च इति—एवं प्रकारः अयं प्रियास्पर्शजनितोऽपूर्वो विकारः सुखं वा दुःखमिति वा निश्चेतुं न शक्यः, सुखत्वेन वा दुःखत्वेन वा निर्णेतुं मया न शक्यते इत्यर्थः। [ शक्य इत्यस्य विकार इत्यनेनान्वयात् साधुः पुंनिर्देशः। अत्रापि सम्भोगशृङ्गारो रसः। अत्र पूर्वार्द्धे सुखदुःखाद्यनुभवस्य अतिप्रियस्वप्रियतमाऽङ्गसंस्पर्शेन सुखविमुग्धमानसस्य रामस्य तात्त्विकतया प्रतिभासनात् प्रतिभोत्थितत्वाभावात् वितर्कमात्रं, न तु सन्देहालङ्कारः। परार्द्धे तु बोधतिरोधानजनकबोधविकाशजनकक्रिययोः विरोध-

सीता। (विहस्य।) थिरप्पसादा तुम्हे, इदो दाणिं किम-वरं ? * (भ)

रामः। म्लानस्य जीवकुसुमस्य विकाशनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि।

* स्थिरप्रसादा यूयम्, इत इदानीं किमपरम् ?

---

वज्रापातत्वं भासनात् प्रियास्पर्शजनितविकारत्वेन च समाधानात् विरोधालङ्कारः, तथा विकारस्य स्पर्शहेतुकत्वात् काव्यलिङ्गञ्च ; इत्येतयोः साङ्कर्यम् ]। शिखरिणी वृत्तम्। लक्षणादिकमुक्तं प्राक् ॥ ३५ ॥

(भ) स्थिरेति।—यूयं, स्थिरः अविचलितः प्रसादः अस्मान् प्रति स्नेहः प्रीतिरिति यावत् येषां ते तथोक्ताः ; अस्मासु अविसंवादिप्रणयमभीप्सवः इत्यर्थः अस्मात् परम् इदानीं किम् अपरम् अन्यत् पत्युः स्थिरतरसौहार्दं विना इत्यर्थः। आशास्यमस्ति स्त्रीणामित्याशयः। [ अत्रापि सम्भोगशृङ्गारः रसः ]।

अथ तदानीं निर्भरप्रणयविवशमानसायां मधुरभाषितायां वैदेह्यामितावाननुरागः कथं हि प्रसृतिं गतः? तत्प्रतिपादनमिषेण तद्वचसाममृतायमानत्वादिधर्मशालित्व-मुपपादयति, म्लानस्येति।—हे सरोरुहाक्षि ! विकसितशतपत्रायतनेत्रे ! [ "बहु-व्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" (५।४।११३ पा०) इति षच्, "षिद्गौरादिभ्यश्च" (४।१।४१ पा०) इति ङीष्।] ते—तव, एतानि सुवचनानि—सुभाषितानि [ अत्र सीतावचनेष्वपि एतादृशसौभाग्यं नानुभूतपूर्व्वमित्यपि सुशब्देन व्यज्यते ] म्लानस्य—सांसारिकसन्तापादिरूपतपनमरीचिचयवितप्तमारुतसंसर्गात् ग्लानिमापन्नस्य जीव-कुसुमस्य—प्राणरूपपुष्पस्य, जीवः जीवनमेव कुसुमं तस्य सद्यःपातिनः इति यावत्, विकाशनानि—प्रस्फुटनानि अतिसुकुमारस्यापि हर्षचयवतः जीवनप्रसूनस्य वृन्तभूत-तया सद्यःपतननिरोधकानि इत्याशयः, सन्तर्पणानि—तृप्तिसाधनानि भोग्यान्तरा-काङ्क्षानुत्पादकानि इत्यर्थः, सकलानामिन्द्रियाणां मोहनानि मोहकराणि स्वस्व-व्यापारनिरोधीनि इत्यर्थः, तथा कर्णयोः अमृतानि अमृतवत् सुखप्रदानि, सुधाधारा-निषेकवदपूर्व्वानन्दसन्दोहसञ्जननानि ; यथा हि अमृतं दर्शनत एव जनानां तृप्तिं जन-यति, तथैव अर्थपर्य्यालोचनादृतेऽपि त्वद्वचसां रमणीयत्वमिति भावः। मनसश्च—दुःख-भारोद्विग्नस्य चेतसश्च रसायनानि—रसस्य हर्षस्य अयनानि स्थानानि ; यद्वा,—रसस्य पुष्टस्य सम्भोगशृङ्गाररसस्य इतरेतररतिरूपस्य अयनानि आश्रयभूतानि इत्यर्थः ; यद्वा,

एतानि ते सुवचनानि सरोरुहाक्षि !
कर्णामृतानि मनसश्च रसायनानि ॥ ३६ ॥

सीता। पिअंवद ! एहि संविसह्य। (म) *

( इति शयनाय समन्ततो निरूपयति। (य) )

---

* प्रियंवद ! एहि संविशाव:।

---

—रसस्य वीर्य्यस्य अयनानि आधानानि आधिशरीरावसादादिनाशकानि पुष्टिकारकाणि औषधानि इव "यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्" इति वैद्यकोक्तेः। उत्साहशक्तिप्रदानीत्यर्थः, ("रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोः। शृङ्गारादौ द्रवे वीर्य्ये देहधात्वम्बुपारदे॥" इति विश्वकोषात्)। [यथा हि रसायनरसनेन सर्वेषामेव रसानामास्वादजा तृप्तिरुपलभ्यते तथैव त्वद्वचनश्रवणसमकालं शब्दान्तरश्रवणजन्यसुखानामधिगमः भवतीति बोध्यम्। अपि च यथा रसायनानां रसरूपत्वात् भोग्यत्वम् औषधस्वरूपत्वाच्च रोगविनिवर्त्तकत्वं तथैव पुनरेतेषां वचनानां मनोहारित्वं हितत्वञ्च व्यज्यते, इत्यवधातव्यम्। अत्र जीवे कुसुमत्वारोपाद्रूपकालङ्कारः; कुसुमविकाशनत्वस्य तथेन्द्रियादिसन्तर्पणत्वादीनां जानकीवचनेषु प्रमाणाज्ञानविषयत्वेनाविद्यमानतया आहार्य्यज्ञानेन चाभेदप्रतीतेर्मालारूपकालङ्कारस्य, "सरोरुहाक्षि" इत्यत्रोपजायमानेनोपमाऽलङ्कारेण सङ्कीर्य्यते। केचित्तु—एकस्य जानकीवचनस्य विकाशनसन्तर्पणादिविषयभेदेनानेकधोल्लेखादुल्लेखालङ्कारमिच्छन्ति। "एतानि ते सुवचनानि" इति विशेष्यपदोपादानेनैव वाक्यार्थस्य परिसमाप्तत्वात्, पुनश्च "कर्णामृतानि" इत्यादिना उपात्तत्वात् समाप्तपुनरात्तत्वं दोषः; स तु तृतीयचतुर्थपादयोः वैपरीत्यपाठेन समाधेयः]। इति। वसन्ततिलकं वृत्तम्॥ ३६॥

(म) अतीव मधुरभाषित्वात् रामस्य प्रियंवदेति सम्बोधनम्। [प्रियपूर्व्वकात् वदतेः खः]। संविशाव:,—स्वपिवः, निद्राविवशशरीरेदानीमहं संवृत्तेति भावः। स्वस्यामपि निद्राकातरतायां सौजन्यात् प्रेमातिशय्यात् च उभयत्वेन कथनमिति ज्ञेयम्।

(य) शयनाय—शयितुं, ["तुमर्थाच्च भाववचनात्" (२।३।१५ पा०) इति चतुर्थी]। निरूपयति—शयनसामग्रीसमवधानं शयनयोग्यं स्थानमुपधानादिकञ्च अस्ति वा न वा इति अन्विष्यति।

रामः। अयि किमन्वेष्टव्यम्!!—

आ विवाहसमयाद् गृहे वने शैशवे तदनु यौवने पुनः।
स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेष ते॥ ३७॥

सीता। [निद्रां नाटयन्ती।] अत्थि एदं अज्जउत्त! अत्थि एदं। * (२)। [इति स्वपिति।]

* अस्त्येतत् आर्य्यपुत्र! अस्त्यतत्।

इदानीं शयनसुयोग्यमुपकरणमुपधानं दर्शयति, आ विवाहेति।—विवाहसमयात् आ—विवाहकालमारभ्य, विवाहकालात् परमित्यर्थः, ["आङ् मर्य्यादावचने" (१।४।८९ पा०) इति सूत्रेण कर्मप्रवचनीयतया "पञ्चम्यपाङ्परिभिः" (२।३।१० पा०) इति सूत्रेण पञ्चमी।] देशावच्छेदेन गृहे तदनु वने च, पुनः कालावच्छेदेनापि शैशवे तत्पश्चात् यौवने च, स्वापहेतुः,—निद्रालम्बनं शयनोपकरणमित्यर्थः, (गृहे शैशवे यौवने च स्वापहेतुः, वने पुनर्यौवने स्वापहेतुः, न तु यथासंख्यमन्वयः,) अत्र केवलं तवैव अधिकारः नान्यस्या इत्याह; अन्यया—त्वद्भिन्नया स्त्रिया, अनुपाश्रितः,—अनालम्बितः, स्वापहेतुतया स्व्यन्तरसङ्गशून्यः इत्यर्थः; यद्यपि "जुष्टं परमनारीणां भुजैः परमसुन्दरैः" इत्युक्तमस्ति, तत् तु "न रामः परदारान् वै चक्षुर्भ्यामपि पश्यति" इत्याद्युक्तेः चेटीसंवाहनाभिप्रायकमिति ज्ञेयम्। ["महाबाहुः" इत्यनुक्त्वा "रामबाहुः" इति कथनन्तु प्रसिद्धिद्योतनाय, "उपधाय भुजं तस्य"—इत्यादि-वचनात् एकपत्नीव्रतधरत्वमस्यावेदयति इति बोध्यम्]। एष रामबाहुरेव—तव उपधानं—शिरोधानम् ("उपधानं तूपबर्हः" इत्यमरः) अधुनाऽपि तदस्तु, किम् अन्यान्वेषणेनेति भावः। [अत्र रामबाहौ तादात्म्येनोपाधानत्वारोपात् शयनोपयोगित्वप्रतीतेश्च परिणामालङ्कारः, तस्य च "अन्यया अनुपाश्रितः" इति पदेन अधिकारूढवैशिष्ट्यम्]। रथोद्धता वृत्तम्।—"रात् परैर्नरलगै रथोद्धता" इति लक्षणात्। ६९९तमप्रस्तारान्तर्गतमिदम्॥ ३७॥

(२) अस्तीति।—आर्य्यपुत्र! एतत् तव बाहुरूपम् उपधानम् अस्ति। [अत्र "सर्वादिशब्दानां पर्य्यायेण उद्देश्यविधेयलिङ्गभाक्त्वम्" इति नयेन क्लीवत्वमिति बोध्यम्]। इत्युक्त्वा उपधानीकृत्य स्वपिति इत्यर्थः। अत्र प्रसादनार्थम् "अस्त्येतत्" इति पुनरभिहितं, नातः कथितपदत्वदोषशङ्का, "कथितञ्च पदं पुनः * * * अनुकम्पायां प्रसादने" इत्युक्तेः।

राम:। कथं प्रियवचना वक्षसि प्रसुप्तैव ? [निर्वर्ण्य सस्नेहम्।](ख)—
इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो:
असावस्या: स्पर्शो वपुषि बहुलश्चन्दनरस:।
अयं कण्ठे बाहु: शिशिरमसृणो मौक्तिकसर:
किमस्या न प्रेयो ? यदि परमसह्यस्तु विरह:॥ ३८॥

---

(ख) कथमिति।—प्रियं वचनं यस्या: सा प्रियवचना [ "वा प्रियस्य" इति वार्त्तिकराद्धान्तेन पक्षे वचनप्रियेति रूपम्] मधुरभाषिणी, वक्षसि—उरसि, कथं—किं, प्रसुप्तैव—निद्रिताऽभूत् ? परस्परं समाश्लिष्य करमुपधाय च शयितयोस्तयो: वक्ष:-सम्पर्कात् रामवक्षसि सीताया: शयनं तु "दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीड़ाकरञ्च यत्। शयनाधरपानादि नगराद्यवरोधनम्॥ स्नानानुलेपने चैभि: वर्जित:—" इति दर्पणोक्तादृदोषनिरूपणे व्रीड़ाजनकशयननिषेधात् अत्र तदभावाच्च न विरुध्यते इति बोद्धव्यम्। सस्नेहं—सादरं सकरुणञ्चेत्यर्थ:, निर्वर्ण्य—सीतामुखं निरीक्ष्य, आहेति शेष:।

न केवलमियं प्रियवचना, अपि तु मम निखिलार्थहेतुभूता सौभाग्यलक्ष्मीभूमिश्चेति विशिष्य विवृणोति, इयमिति।—(अत्र "मम" इति अध्याहार्य्येण पदेन सर्वत्र अन्वय: कार्य्य:)। इयं—सीता, गेहे—गृहे, ("गृहं गेहोदवसितम्" इत्यमर:) तस्मिन्, लक्ष्मी:,—श्री:, गृहसौभाग्यविधायिनी अधिदेवतेत्यर्थ:। तथा नयनयो:,—नेत्रयो: अमृतवर्त्ति:,—अमृतनिष्यन्दिनी अञ्जनशलाका, तद्दर्शनदशायां चराचरमिदं शून्य प्रत्यक्षीकुर्वत: नेत्ररोगेण रुग्णस्येव मे तमालोकेनैव अमृतवत् नयनानन्ददायिनीत्यर्थ:। किमेतावत्पर्य्यन्तानुधावनेन ? एतदीयं यत्किञ्चिदपि मे सुखातिरेकजनने पर्य्याप्तमित्याह, असावस्या: इति।—असौ—अनुभूयमान:, अस्या:,—प्रियाया:, स्पर्श:, वपुषि—गात्रे, बहुल:,—प्रचुर:, चन्दनरस:,—मलयजरससेकवत् विरहतापतप्तस्य मे निरतिशयं शरीरस्य मनसश्च स्निग्धताया: निरन्तरं कारक:। अयं—कण्ठे अर्पित इति शेष:, अस्या: बाहु:,—कर:, शिशिर: शीतलश्च मसृण: उज्ज्वलश्च मौक्तिकसर:,—मुक्तामाला इव सुखस्पर्श:; कोमलत्वात् सुखशीतलत्वाच्च मौक्तिकस्रगिव शरीरसन्तर्पण: मानसामोदकरश्च [शीक्तविशेषणकर्म्मधारयात् सीताशरीरस्य सम्भोक्ष्यत्वं निरतिशयविरहानलप्रशमनञ्च व्यज्यते, तेनासौ श्यामा मुग्धा च ज्ञेया]। अस्या:,—

प्रतीहारी। [प्रविश्य।] देव ! उवत्थिदो। * (व)

* देव ! उपस्थितः।

सीतायाः सम्बन्धि किं वस्तु न प्रेयः,—अतिप्रीतिकरम् ? यदि—किन्तु, परं—केवलम् असह्यः,—सोढुमशक्यः विरहः,—वियोगः न स्यात् तर्हि, मर्म्मनिकृन्तनात् परमदुःसहात् त्वद्विप्रयोगादितरत् सर्वमेव त्वत्सङ्गतं लोकातिशायिहर्षजनकं भवेत्, नास्ति तत्र संशयलेशः इति तात्पर्य्यम्। [अस्मिन् श्लोके आभिमानिकी रतिः, इति काव्याभरणम्। अत्र सीतायां लक्ष्मीत्वामृतवर्त्तित्वयोः अभेदारोपात् निरङ्गं रूपकम्; तथा तत्स्पर्शे चन्दनरसत्वारोपात् अपरं रूपकम्; एवं तद्भुजे मौक्तिकसरत्वारोपात् निरङ्गञ्च रूपकम्; अपि च एकस्या एव सीतायाः ग्रहणेनैकत्वविषयभेदात् अनेकधोल्लेखत्वात् उल्लेखः; चतुर्थपादे च विरहस्य असहनीयत्वेऽपि यथार्थवलात् आहृतेन सहनत्वारोपेण सीतायां सर्वविधप्रियत्वासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेः अतिशयोक्तिश्च। एषामलङ्काराणां सजातीयविजातीयरूपः सङ्करः]। शिखरिणी वृत्तम् ॥ ३८ ॥

(व) प्रतिहारीति।—प्रतिहारी शुद्धान्तरक्षिका काचित् वेत्रवती नारी; तथा हि,—"सन्धिविग्रहसम्बद्धं नानाकार्य्यसमुत्थितम्। निवेदयति या कार्य्यं प्रतीहारी तु सा स्मृता॥" इति तल्लक्षणम्। प्रविश्य—राघवभवनमिति शेषः, आहेत्यध्याहार्य्यम्। किमिति तदेवोच्यते,—देव—राजन्, उपस्थितः,—आगतः एव, कोऽयमागत इत्याकाङ्क्षायाम् उत्तरम्—"देवस्य आसन्नपरिचारको दूतः" इत्युपरिष्टात् व्यक्तीभविष्यति। [एतद्धि भाविविरहस्य समासन्नतासूचनाय उपन्यस्तम्। सीताविवासनरूपं प्रस्तुतसङ्क्रान्तमर्थोपक्षेपकमेतत् तृतीयं पताकास्थानमवधेयम्। तथा हि,—"इयं गेहे लक्ष्मीः" इति श्लोकस्य चतुर्थपादान्ते "परमसह्यस्तु विरहः" इत्युक्तं राघवेण, ततः प्रतिहार्य्या प्रोक्तं "देव उपस्थितः" इति; एतेन सीताविरहः भवन्नम् अचिरादेव उपस्थास्यति इति अन्यस्मार्थम् अर्थोपक्षेपकं वस्तु, विशेषनिश्चयप्राप्तिसहितं सदेवात्र प्रत्युत्तरोपेतसंस्थितम्। तथा चोक्तं दर्पणे—"अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत्। श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥" इति। एवमेव वेण्याम्; तथा हि,—दुर्य्योधनः,—"पर्य्याप्तमेव करभोरु ! ममोरुयुग्मम्" इति, ततः प्रविश्य कञ्चुकी आह—"देव ! भग्नं भीमेन" इत्यादि; अपि च मुद्राराक्षसे यथा, चाणक्यः,—"अपि नाम दुरात्मा राक्षसः गृह्येत ?" सिद्धा—"अज्ज गहीदो"। अनन्तर—राक्षसः,—

रामः। अयि! कः?

प्रती। आसण्णपरिचारओ देवस्स दुम्मुहो। * (अ)

रामः। [स्वगतम्।] गुह्यान्तचारी दुर्मुखः, स मया पौरजानपदान् अपसर्पितुं प्रयुक्तः! (ब) [प्रकाशम्।] आगच्छतु।

[प्रतीहारी निष्क्रान्ता।]

दुर्मुखः। [प्रविश्य स्वगतम्।] हा कधं सीदादेईए ईदिसं

* आसन्नपरिचारको देवस्य दुर्मुखः।

"तदपि नाम दुरात्मा चाणक्यवटुः" इति, उपसृत्य दौवारिकः,—"जेदु जेदु"। पुनश्च राक्षसः,—"अतिसन्धातुं शक्यः स्यात्," दौवारिकः—"अमच्चो" इत्यादिना अव्यक्तार्थस्य, राक्षसवशीकरणरूपस्य चाणक्यविजयस्य च तथा वेण्यां दुर्योधनर्वोरु-भङ्गरूपस्य, प्रस्तुतस्य सूचनात् तृतीयं पताकास्थानमेवं सुधीभिः ऊह्यम्। धनिकमते तु—उत्तरचरितमेतत् गण्डनामकं प्रस्तावनाऽङ्गं वेदितव्यम्। प्रस्तुतस्य सीताविवासनस्य सम्बन्धतया विरुद्धस्य सहसाऽभिधानात्। एतद्धि प्रस्तावनाऽङ्ग-भूततयाऽभिहितं मूलकृता धनञ्जयेन, तथा हि,—"गण्डः प्रस्तुतसम्बन्धि भिन्नार्थं सहसोदितम्" इति]।

(अ) आसन्नो निकटस्थः सन् परिचरति सेवते इति आसन्नपरिचारकः; यः सदा सन्निधौ स्थित्वा उपसेवते तथाभूतः भृत्यः इत्यर्थः। अस्य चरस्य भद्रनामधेयत्वेऽपि सीताऽपवादरूपदुर्वचनस्याभिधानात् दुर्मुख इति संज्ञा लोकपरम्परया आगतेति ज्ञेयम्; कविना च तदाख्यया आख्यापितोऽसौ। तथा च रघौ कालिदासः,—"पप्रच्छ भद्रं विजितारिभद्रः" इति।

(ब) गुह्यान्ते अन्तःपुरे परितः निर्विशङ्कं चरतीति। अतीव विश्वस्तः इत्यर्थः। ("स्त्र्यागारं भूभुजामन्तःपुरं स्यादवरोधनम्। शुद्धान्तश्चावरोधश्च" इत्यमरः)। पुरे निवसन्तीति पौराः, जनपदे भवाः जानपदाः [पौराश्च जान-पदाश्चेति द्वन्द्वः] नागरिकान् जनपदवासिनः वैदेशिकांश्चेत्यर्थः। अपसर्पितुं—गूढं चरितुं, चररूपेण प्रच्छन्नो भूत्वा तेषां मनोगतभावं परीक्षितुम्; अप पृष्ठतः प्रच्छन्न-मित्यर्थः सर्पतीति अपसर्पः,—गूढचरः। ["उपसर्पितुम्" इति पाठान्तरम्]।

अचिन्तणिज्जं जणाववादं देवस्स कधइस्सं? अहवा णिओओ क्खु ईदिसो मन्दभाअस्स। * (ख)

सीता। [उत्स्वप्नायते] हा अज्जउत्त! कहिं सि? † (ग)

रामः। अये! सैवेयं रणरणकदायिनी चित्रदर्शनाद् विरह-भावना देव्याः स्वप्नोद्वेगं करोति। [सखेदमङ्गमस्याः परामृशन्।] (क)—

---

* हा कथं सीतादेव्या ईदृशमचिन्तनीयं जनापवादं देवस्य कथयिष्यामि? अथवा नियोगः खलु ईदृशो मन्दभागस्य?

† हा आर्य्यपुत्त्र! कुत्र असि?

---

(ख) हा कथमित्यादि।—हा इति शोकसूचकमव्ययम्। तादृशपरीवादस्य कथयिष्यमाणत्वात् शोकः। ईदृशम्—एवंविधमवस्तुदमित्यर्थः। अचिन्तनीयं—कदापि मनसा चिन्तयितुमप्यशक्यम्, अतर्कितोपपन्नमिति यावत्। सीतादेव्याः,—जनकतनयासम्बन्धिनमित्यर्थः। जनापवादं—लोकापवादम्। देवस्य—रामभद्रस्य [सम्बन्धविवक्षया षष्ठी]। मन्दः अल्पः भागः भाग्यं यस्य तथाविधस्य, दुर्भगस्येत्यर्थः। ईदृशः,—एवंविधः, "निखिललोकमानसाभिप्रायं विदित्वा यथायथं मदन्तिके उपवर्णय" इत्येवंरूपः, नियोगः,—प्रभोः आदेशः खलु। साम्प्रतमायुष्मता प्रभुणा अप्रीतिकरे सज्जनालोकापवादप्रकाशकरणरूपे कार्य्ये नियोजनात् आत्मनः अतिमहत् दौर्भाग्यमावेदितमित्यवधेयम्।

(ग) उत्स्वप्नायते इति।—उद्भूतः विलापादिप्रयोजकः स्वप्नः निद्राऽवस्थायां विलापादिः यस्याः, यद्वा,—उद्वेजकः स्वप्नः यस्याः सा, सा इव आचरति इति उत्स्वप्नायते, ["कर्त्तुः क्यङ् सलोपश्च" (३।१।११ पा०) इति सूत्रेण उपमानभूतात् क्यङि लटि रूपम्। यद्वा—अनुत्स्वप्ना उत्स्वप्ना भवति इति च्व्यर्थे भृशादित्वात् क्यङि लटि रूपं बोध्यम्]। हा आर्य्यपुत्त्र!—स्वामिन्! कुत्र असि—इदानीं क्व गतो भवसि, इति भविष्यद्विरहसंवेदकः स्वप्नप्रकारः अवधेयः।—"स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः। कोपावेगभयग्लानि-सुखदुःखादिकारकः॥" इति दर्पणे स्वप्नलक्षणम्।

(क) अये इत्यादि।—रणरणकदायिनी—देव्याः उत्कलिकाकुलतां विदधती चित्तविक्षोभकारिणी इत्यर्थः। विरहस्य भविष्यतः विप्रयोगस्य भावना नियतानु-

अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यद्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्य्यो रसः।

---

ध्यानरूपानुभवजनितः स्मृतिजनकः उद्बोधकसमवहितसंस्कारविशेषः, चित्रदर्शनात् अशुभात्पादनिदानभूतायाः शूर्पणखाया आलेख्यमवलोक्य जायमाना इत्यर्थः, देव्याः सीतायाः स्वप्नोद्वेगं स्वप्ने अपि उत्कण्ठां तज्जनितविलापादिकञ्च करोति—समुत्पादयतीत्यर्थः। सस्नेह—सप्रणयं साग्रहमित्यर्थः, अस्याः वैदेह्याः अङ्गं—प्रतीकं, परामृशन्—स्वहस्तेन सदयमुपसेवमानः इत्यर्थः, सीतायाः अङ्के स्वं हस्तं सन्निवेशयन्निति यावत्। [ केचिदत्राङ्गपदमुदरपरमभिधाय वक्ष्यमाणश्लोकस्यापत्यार्थकत्वं कल्पयन्ति, तदसत्, तथात्वे "उदरमस्याः परामृशन्" इत्येव वक्तव्यत्वात्, न च "मयैवादौ ज्ञातः करतलपरामर्शकलया द्विधा गर्भग्रन्थिः" इति वक्ष्यमाणोक्तेरसङ्गततयाऽङ्गपदस्योदरपरत्वं कवेरभिमतमिति वाच्यम्; "सहजलज्जाजड़हृदयः" इत्यत्र सीतायाः जागरणप्रतीतेः उत्स्वप्नायमानत्वविरोधादित्यवधेयम् ]।

अथ चिरविरहविह्वलायाः नियतपरिदेवनाविवशमानसायाः मदेकजीवितायाः कातराक्ष्याः प्रियायाः वनवासे एवमेव कियन्ति सकरुणरुदितानि आसन्नित्यनुध्यायन् सस्नेहहस्तावमर्षं तदीयमङ्गजातं, स्वीयानुपमसौभाग्यमित्याशंसन् तादृश्याश्च स्त्रियाः गुणोपवर्णनं विलप्य बहुधाऽधुना तस्याः दुःखसन्तापादीन् स्मारं स्मारम् अनुशोचति, अद्वैतमिति।—यत् प्रेम—अहैतुकी अनुरक्तिः, अथवा सप्तविधसम्भोगान्तर्गतविच्छेदाऽसहनरूपावस्थाविशेषः, तथा च—"प्रेमाऽभिलाषो रागश्च स्नेहः प्रेम रतिस्तथा। शृङ्गारश्चेति सम्भोगः सप्तावस्थः प्रकीर्त्तितः॥" इति। तस्यार्थो यथा रसरत्नाकरे—"प्रेमा दिदृक्षा रम्येषु तच्चिन्ताऽप्यभिलाषकः। रागस्तत्सङ्गबुद्धिः स्यात् स्नेहस्तत्प्रवणक्रिया॥ तद्वियोगासहं प्रेम रतिस्तत्सहवर्त्तनम्। शृङ्गारस्तत्समं क्रीड़ा सम्भोगः सप्तधा क्रमः॥" इति। [ "भद्रं तस्य सुमानुषस्य" इति पाठे तु—यत् गुणवदहार्य्यारूपमनिर्वचनीयं वस्तु ]। सुखदुःखयोः, पत्युरिति शेषः, द्विधा इतं द्वीतं भिन्नमित्यर्थः, तस्य भावः द्वैतं भिन्नभावः तन्नास्ति यस्य तत् अद्वैतम्—एकरूपं समानं, पत्या समं समसुखदुःखभागित्यर्थः; यत् सर्वासु अवस्थासु दशाविपर्य्ययेषु सुखेषु दुःखेषु चेत्यर्थः, अनुगुणम्—अनुकूलं, न च सुखेषु अनुकूलं दुःखेषु च प्रतिकूलमिति भावः, यत्र—यस्मिन् हृदयस्य—विषयार्ज्जनपरिरक्षणविनशनादिदुःखसन्तप्तस्येत्यर्थः, विश्रामः,—जीवितालम्बनभूतं, यदेव हि एकमवलम्ब्य संसारसुलभशोकक्षोभाद्युप-

कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितम्
भद्रं प्रेम सुमानुषस्य कथमप्येकं हि तत् प्राप्यते ॥ ३९ ॥

---

हतमपि वैक्लव्यदोलाचलं हृदयं स्थैर्य्यमापद्यते, विषयजशोकसन्तप्तं मनः सदैव यत् लब्ध्वा भृशं हृष्यति इति भावः ; [ "विश्रामः" इति पदन्तु अपाणिनीयम् ; घञि "नोदात्तोपदेशस्य" (७।३।३४ पा०) इति सूत्रेण वृद्धिनिषेधात्, किन्तु, श्रम एव श्रामः इति "प्रज्ञादिभ्यश्च" (५।४।३८ पा०) इति सूत्रेण अणि कथञ्चित् योज्यम् इति केचित् ; केचित् तु अदन्तचुरादेः श्रामधातोः रूपमिति व्याचक्षते समादधति च ; परन्तु वोपदेवाचार्य्यमते "जनवधः" इत्यादिसूत्रे "चम-यम विश्रमस्तु वा" इति कृत्स्य वैकल्पिकविधानदर्शनात् श्रमधातोः घञि विश्रमः विश्रामः इति रूपद्वयं भवतीति भाव्यम् ]। यस्मिन् रसः,—अनुरागः रतिरूपः इत्यर्थः, ("रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोः" इति विश्वः।) जरसा—वार्द्धकेन, अहार्य्यः,—हर्त्तुमशक्यः, कूट इव अविकृतः सन्, यः सदैवास्ते इत्यर्थः, वार्द्धके हि प्रायशः सर्वा एव वृत्तयः प्रतिहताः भवन्ति, सतीषु भार्य्यासु सुगम्भीरोऽकपटश्च अनुरागः पुनः न नश्यतीति भावः। तत्र तस्य अकृत्रिमत्वादस्वार्थकत्वाच्च वयसि इव विपुला प्रीतिः नितरां निर्भरमभिवर्द्धते इत्याशयः। तथा कालेन—कियता समयेन, जनसमीपे नियतपरिचयविसारिणेत्यर्थः, आवरणस्य हृदावरणरूपप्रति-बन्धकस्य लज्जादेः अत्ययादपगमात् ; यद्वा—"आ वरणात्ययात्" इति पदद्वयम्। तत्र वरणं विवाहः, अत्ययः निधनं, ततः आ, तत्कालपर्य्यन्तावस्थायिना, विवाह-कालात् प्रभृति मरणं यावत् स्थितवता, सुदीर्घेण कालेन ; परिणते—परिपाक-मुपेयुषि, स्नेह एव सारः स्थिरांशः यत्र ("सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु" इत्यमरः) तस्मिन्, स्नेहस्योत्कृष्टांशे, प्रगाढ़े अनुरागे इति भावः, यत् स्थितं, यदकपटप्रणयरूपं फलं सारभूततया, असारव्यपगमात्, निश्चलं सदैव वर्त्तते इत्यर्थः ; यथा हि दुग्धादेर्जलांशापगमात् परिणते घनीभूते हि स्नेहसारे नवनीत-मात्रावशिष्टं स्यात् तद्वल्लज्जासङ्कोचादेरपगमात् परं परिणतस्नेहसारे रूपान्तरितं प्रेमरूपं यद् वस्तु अविचलितं सत् स्थितमित्यर्थः ; सुमानुषस्य शोभनस्य नरस्य स्त्रियारूपस्य वा एकम् अविच्छिन्नं तत्—मनःकल्पितं निष्प्रत्यूहमित्यर्थः, केवलं प्रणय-रूपमिति यावत्, भद्र—मङ्गलम्, अमलप्रेमभूतं ("श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्" इत्यमरः) कथमपि—कथञ्चिदपि महता क्लेशेन काकतालीय-

न्यायेन वा प्राप्यते। अपि अशक्यसम्भावनायां, हि निश्चये। निर्दोषस्य परम-परिपूतस्यापि सुमानुषस्य निष्प्रत्यूहसुखभसङ्घटनमतीव दुर्घटम्। यतः क्वचित् कस्यचिज्जनस्य आशा जन्मान्तरीयमहातपःफलभूता निरवच्छिन्नानन्दविधायिनी भवति, स्वयञ्च निरतिशयं सुखमुपभुङ्क्ते, आवयोस्तु तत् दूरापास्तमेव यतः सीतादेवी जननात् प्रभृति एव सुखलेशमपि नान्वभुङ्क्त, इत्येतदेव, आस्तां तावत् मदीया कथा नः भृशं व्यथाकरमिति हृदयम्। दुर्लभं खलु दम्पत्योः तथाविध प्रेम प्रायशः इति तु सङ्क्षेपः। सुष्ठूक्तं कविना,—"अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः।" इति।

अन्यथाऽपि व्याख्यायते ;—तथा हि, यत् प्रेम दाम्पत्यं सर्वासु अवस्थासु जाग्रत्-स्वप्नसुषुप्तिप्रभृतिषु ये अनुभूयमाने सुखदुःखे तयोः अद्वैतम् अभिन्नं सदैवानुगुणम् अनुगतम्, अभिन्नतया सुखदुःखयोरापादकमिति यावत्। यत्र च दाम्पत्यप्रेम्णि हृदयस्य सदुपदेशविशोधितस्य परिपूतस्य इत्यर्थः, विश्रामः श्रमहरसुखसमुदायानुभवः, यस्मिन् दाम्पत्ये प्रेम्णि च रसः स्नेहरूपः रतिश्च वा जरसा जरया च अहार्य्यः हर्त्तुमशक्यः। अथवा यस्मिन् दाम्पत्ये सति रसः आह्लादः जरसाऽपि अहार्य्यः हर्त्तुं न शक्यते, आ वरणात्ययात्, [वरणं विवाहः अत्ययः देहपातश्चेति समाहारः] विवाहात् प्रभृति निधनं यावत् वर्त्तमानेन कालेन सुदीर्घाखण्डकालेन परिणते उप-चयं गते प्रेमसारे सारभूते प्रेमणि स्थितम्, अविनश्वरं सदैव परां कोटिमासाद्य विवृद्धिं गतमिति यावत्, सुमानुषस्य दाम्पत्यस्य ["सुमानुषं तु दाम्पत्यम्" इत्यभि-धानात् इति प्राञ्चः; अन्ये तु प्रकरणात् तच्छब्देन दाम्पत्ये लब्धे शोभनः मानुषो येन इति विग्रहेण मनुष्यत्वाधायकम् इत्यर्थो लभ्यते, इति वदन्ति; सुमानुषस्य सौजन्यस्य इत्यपि केचित् व्याचक्षते। वस्तुतस्तु, सुमानुषमावसुलभस्येत्यर्थः, फल-बलात् अत्र दाम्पत्यस्येति।] कथमपि सर्वप्रकारेणापि तत् प्रसिद्धमेकं मुख्यं भद्रं चेमं प्रेम प्राप्यते प्रार्थ्यते, अभिलष्यते इति यावत्। अनर्थशङ्कीनि बन्धुमित्रहृदयानि इति न्यायादिति भावः। यतो हि सुमानुषस्य भद्रं सर्वतोभावेनाकाङ्क्षणीयम् अभूत् इति पूर्वेणान्वयः इति। (अत्र नायकः अनुकूलः एकनायिकश्च)।

[अत्र प्रस्तुतायाः सीतायाः इति वक्तव्ये "सुमानुषस्य" इति कथनात् अप्रस्तुत प्रशंसा अलङ्कारः; स च, चतुर्थपादं प्रति हेतुत्वेनोपेतानां पादत्रयाणां वाक्यभूतानां निष्पादकत्वात् समुद्भूतेन काव्यलिङ्गेन सङ्कीर्य्यते]। शार्दूलविक्रीड़ितं वृत्तम्।—"सूर्य्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीड़ितम्" इति लक्षणात्। एकोनविंशत्यक्षर-पादच्छन्दसां १४९२२७तमप्रस्तारान्तर्गतं वृत्तमिदम्॥ ३९॥

दुर्मुखः। [ उपसृत्य। ] जअदि जअदि देओ। *

रामः। ब्रूहि यदुपलब्धम्। (ख)

दुर्मुखः। उवत्थुअन्ति देअं पौरजाणवदा,—विसुमरिदा अम्हे महाराअ-दसरहस्स रामदेएण त्ति। † (ग)

रामः। अर्थवाद एषः, दोषन्तु मे कञ्चित् कथय, येन स प्रतिविधीयते। (घ)

दुर्मुखः। [ सास्रम्। ] सुणादु देओ। ‡ [ कर्णे एवमेवम् ]। (ङ)

---

* जयति जयति देवः।

† उपस्तुवन्ति देवं पौरजानपदाः विस्मारिता वयं महाराज-दशरथस्य रामदेवेनेति।

‡ शृणोतु देवः।

---

(ख) ब्रूहीति।—ब्रूहि—कथय, यत् उपलब्धं—प्राप्त—ज्ञातमिति यावत्।

(ग) उपस्तुवन्तीति।—उपस्तुवन्ति—सर्वतो गायन्ति, महाराजस्य रामस्य शासन-गुणमहिम्ना वयं महाराजे दशरथेऽपि मन्दौत्सुक्याः जाता इति अनिशमेवावेदयन्ति इत्यर्थः। गुणाधिकस्य द्रव्यस्य लाभे, अपकृष्टस्य विस्मृतिः स्वाभाविकी। अतः,—"फलेन सहकारस्य पुष्पोद्गम इव प्रजाः" इति सुष्ठूक्तं कविना। [ महाराजदशरथ-स्येति।—"अधीगर्थदयेशां कर्मणि" ( २।३।५२ पा० ) इति सूत्रेण कर्मणि षष्ठी ]। रामदेवेन—देववत्प्रभावशालिना रामभद्रेणेत्यर्थः।

(घ) अर्थवाद इति।—कस्यचिदर्थस्य निन्दायाः स्तुतेर्वा यो वादः सोऽर्थवादः। यदाहुः मीमांसकाः,—"गुणवादो विरोधे स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धाना-दर्थवादस्त्रिधा मतः॥" इति। अत्र तु स्तुत्यर्थवादः गुणकथनमित्यर्थः, प्रशंसा इति यावत्। ( "अर्थवादः प्रशंसा च स्तोत्रमीड़ा स्तुतिर्नुतिः" इति हलायुधः )। एषः,—भवदुक्तरूपः। प्रतिविधीयते—प्रतिक्रियते। अस्माकमभ्यर्णे गुणवादस्तु न करणीयः, यतो हि वयं दोषाणां समूलमेव निहन्तारः इत्याशयः।

(ङ) सास्रमिति।—सास्रं—सकरुणं वाष्पमुत्सृज्येत्यर्थः। शृणोतु देवः,—महाराज आकर्णयतु ; किं तत् ? तदेव कविरभिधत्ते,—"कर्णे एवमेवम्" इति, [ "एअं विअ" इति पाठे तु, गूढ़चरैरितमेतदेव इति विभाव्यम् ] यतो हि महतामपवादश्रवणस्य अकीर्त्तिकरत्वेन, यत्र शृणोति तस्यापि पापभाक्तया श्रोतुमयोग्यत्वेन कर्णे "एव-

रामः। अहह ! तीव्रसंवेगो वाग्वज्रः ! (च) [ इति मूर्च्छति। ]

दुर्मुखः। आस्ससदु देवो।*

* आश्वसितु देवः।

मिव" इत्युक्तम्। तथा हि प्राचः,—"अर्थस्तेनैव विशेषः पश्चाज्ज्ञात्वा प्रसङ्गतः। कर्णे एवमिवेत्युक्ता काव्यबन्धे प्रयुज्यते॥" इति। रामभद्रस्मृतिसविधे स्वमुखं संस्थाप्य जनाः किल कर्णाकर्णिकतया एवमभिदधति,—अस्माकमधिराजः एवं स्त्रैणः यत् दशाननोदवसितनिवासदूषितामपि सीतां निर्विशङ्कमनुमेने सर्वथैवा-न्याय्यं कापुरुषोचितं दुष्करमेवैतत् किल, यतो हि अस्माकमपि स्त्रीषु नियतमेव एतदापतिष्यति, राज्ञामप्येतदनुमतत्वेन तदप्यस्माभिर्निर्बाधं सहिष्यते, इत्यपसर्पो दुर्म्मुखः राघवाय निभृतमभिदधे। तथा हि, रामायणे, त्रिपञ्चाशे सर्गे उत्तर-काण्डम्—

"कीदृशं हृदये तस्य सीतासम्भोगजं सुखम्।
अङ्कमारोप्य तु पुरा रावणेन बलाद्धृताम्॥
लङ्कामपि पुरीं नीतामशोकवनिकां गताम्।
रक्षसां वशमापन्नां कथं रामो न कुत्स्यति॥
अस्माकमपि दारेषु सहनीयं भविष्यति।
यथा हि कुरुते राजा प्रजा तमनुवर्त्तते॥
एवं बहुविधा वाचो वदन्ति पुरवासिनः।
नगरेषु च सर्वेषु राजन् ! जनपदेषु च॥" इति।

(च) अहह इति।—दुर्विषहवेदनासहितशोकसूचकमेतदव्ययम्। तीव्रसंवेगः,—तीव्रः भीषणः मर्म्मभिदित्यर्थः, संवेगः पतनकालसमुत्पन्नः असहनीयाभिघातः यस्य तथाविधः ; वाग्वज्रः,—वाग् नीचानां सदसद्विचाररहितानां वा वचनं वज्रः दम्भोलिरिव दुःखातिदुःखदायिका खलु, सीतायाः साधुचरिते यत् ते एवमन्याय्य-माशंसन्ते, अतस्तेषां वचांसि शतकोटिरिव नः मानसं शतधा दारयन्तीति भावः। [ अत्र रूपकालङ्कारः। "ह्रादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः" इत्यमर-वाक्यव्याख्याने "वज्रम् अस्त्री स्यात्" इति केचित् अनुयन्ति ; केचित् तु "विदग्धो-दयधारायः कुलिशो मम वक्षसि" इति भट्टौ कुलिशशब्दस्य पुंलिङ्गतां दृष्ट्वा "ह्रादिनी वज्रम्," "अस्त्री स्यात् कुलिशम्" इत्यन्वयं कुर्वन्ति। तदत्र वज्रशब्दस्य पुंलिङ्गता कथं सङ्गच्छते ?—इति प्रश्ने—"वज्रोऽस्त्री हीरके पवौ" इति नानार्थे

रामः । [ साम्रम् । ]—

हा हा धिक् परगृहवासदूषणं यद्
वैदेह्याः प्रशमितमद्भुतैरुपायैः ।
एतत् तत् पुनरपि दैवदुर्विपाकात्
आलर्कं विषमिव सर्वतः प्रसृप्तम् !! ॥ ४० ॥

अमरवाक्यात् ; एवञ्च वज्रशब्दस्य पुंनपुंसकतायां सिद्धायामपि पुंसि तत्प्रयोगाभावात् "भाति पद्मः सरोवरे" इत्यादिवत् अप्रयुक्तत्वं दोष एव ]। इति मूर्च्छति ।— तच्छोकसंवेगं सोढुमशक्यत्वात् सपदि मोहमुपागतः इति भावः ।

अथ कथञ्चित् परस्योपचारैः सुतीव्रे शोकावेगे उपशमिते, वृषदामुखस्य राघवः भस्मीभूतस्यापि तदपवादबीजस्य दुर्दैवविपाकवशादेव पुनः प्ररोहमाशङ्कमानः, निर्भरमनुशोचति, हा हेति ।—अद्भुतैः,—आश्चर्य्यकरैः लोकानां विस्मयावहैः अग्निपरीक्षारूपैः कर्मभिः, वैदेह्याः,—सीतायाः, यत् परस्य शत्रोः रावणस्य गृहे भवने अशोकवनिकायां, वासः दश मासान् व्याप्य अवस्थितिः एव दूषणं दोषः अपवादः इत्यर्थः ; प्रशमितं—परिहृतं प्रतिकृततमपि, असहायायाः जानक्याः शत्रुसदनवासजनितं यदेव कौलीनबीजमाविरभूत् तत्तु वह्निपरीक्षया चारित्र्यविशुद्धिं परीक्षमाणेन मया सर्वथा भस्मीकृतमपीत्यर्थः ; तदेतत् दैवस्य—दुरदृष्टस्य, दुर्विपाकात्,—विषमपरिणामात्, दशाविपर्य्यासाद्धेतोः इति यावत् । अलर्कः,—मत्तकुक्कुरः("शुनको भषकः श्वा स्यादलर्कस्तु स रोगितः" इत्यमरः ) तस्येदमालर्कं विषमिव—मत्तकुक्कुरदंशजातगरलमिवेत्यर्थः ; यद्वा,—शुक्लार्कवृक्षजन्यं ("शुक्लेऽलर्कप्रतापसौ" इत्यमरः) पुनरपि—भूयोऽपि, सर्वतः प्रसृप्त—परितः व्याप्तम् । हा हा—अहो अतीव क्लेशप्रदमेतत् [ हा इति खेदसूचकमव्ययम् । दैन्ये द्विरुक्तिः ] । धिक्, मामधन्यमिति शेषः । यथा हि कदाचिच्छरीरप्रविष्टं कुक्कुरविषं मन्त्रादिदैवोपायैः प्रतिकृततमपि पुनरलक्षितरूपेण सर्वावयवेषु व्याप्तं सत् दौर्भाग्यवशात् बहुकालानन्तरं घोरविकाररूपेण आविर्भवति, तद्वदिदं वैदेहीगतं परगृहवासदूषणम् अग्निपरीक्षाऽऽदिना प्रतिकृततमपि पुनः सर्वराज्याङ्गेषु कालान्तरेण सर्वतः प्रसृतं तदधुना सर्वथैवेदमप्रतिविधेयं जातमिति भावः । किमिदानीमितः परं करवाणि मन्दभाग्यः ? दैवमचिन्त्यं बलवच्चेति न्यायादित्याशयः । [ अत्र उपमाऽलङ्कारः स्फुटः । स च यथा हि मूलदाहाभावात् दाहितवृक्षमूलेभ्योऽङ्कुराणि समुत्पद्य वनवद् घनीभूय समन्तात् व्याप्नुवन्ति, तथा अग्निपरीक्षाच्छलेन मया दाहितोऽपि सीताऽपवादोऽयं पुनः प्रादुर्भूय पौरजानपदान्

तत् किमत्र मन्दभाग्यः करोमि? [विमृश्य सकरुणम्।] अथवा किमन्यत्? (छ)—

सतां केनापि कार्य्येण लोकस्याराधनं व्रतम्।
यत् पूरितं हि तातेन माञ्च प्राणांश्च मुञ्चता॥ ४१॥

---

समस्तानेव व्यापश्ये; अहो किं करवाणि? इति वस्तुध्वनिं व्यनक्ति]। प्रहर्षिणी वृत्तम्, तल्लक्षणादिकन्तूक्तं प्राक्॥ ४०॥

(छ) तदित्यादि।—तत् तस्मात् लोकापवादस्य सर्वतः प्रसृतत्वादित्यर्थः, मन्दभाग्यः,—हतभागधेयः, लोकाननुरञ्जयितुं स्वगृहाधिदेवताभूतायाः अपि सीतायाः विसर्जने हेतुत्वादात्मनः दुर्भगत्वमुक्तम्। अत्र—एतयोः प्राणाधिकसीताविवासनदारुणलोकापवादरूपयोः मध्ये, किं करोमि—अन्यत् लोकसन्तोषणात् किं विदधामि? प्राणेभ्यः गरीयसीमपि सीतांत्यजामीति हृदयम्।

सकरुणं निर्भरं विलप्य बहुधा सीतायाः परीवादक्षालनोपायं कमपि चेतसा निश्चेतुमशक्नुवन् लोकानुरञ्जनस्य स्वकुलधर्मत्वेनावश्यपरिपालनीयत्वं समीक्ष्य सीताविवासनेन तद्दोषं परिमार्ष्टुमिच्छति, सतामिति।—केनापि कार्य्येण—येन केनापि उपायेन, निरपराधाया अपि सीतायाः निर्वासनेनेत्यर्थः, लोकस्य—लोकानामित्यर्थः, [जातावेकवचनम्] प्रकृतिपुञ्जानाम्, आराधनं—प्रीणनं, सतां—सज्जनानां, व्रतं—नियमवत् अवश्यमेव पालनीयम्। तदेव द्रढ़यति, यदिति।—यद्धि—यदेव लोकानुराधनरूपं कुलव्रतं, पुनः, तातेन—पित्रा दशरथेन, मां—प्राणसम्मितं तनयं, प्राणान्—स्वजीवनञ्च मुञ्चता—विजहता सता, ["लक्षणहेत्वोः क्रियायाः" (३।२।१२६ पा०) इति पूरणक्रियाया हेतुत्वात् हेतौ शतृ:]। पूरितं—परिपूर्णं कृतं ["पूजितम्" इति पाठे तु—पूजितं सत्कृत्य सयत्नं परिपालितमित्यर्थः। चकारद्वयोपादानात् कार्य्यकारणयोरेककालिकत्वं सूच्यते; अत एव व्रतरूपकारणस्य मद्वनवास स्वजीवनविसर्ज्जनरूपकार्य्यणाभेदेनाभिधानात् हेत्वलङ्कारोऽपि ध्वन्यते] कैकयीं प्रीणयितुमनपराद्धं मां वनाय स्वप्राणान् चिराय विजहत् पिता दशरथः कुलधर्म्मानुपालनस्य परां काष्ठां प्रदर्शितवान्; तथा अहमपि निरपराधां दुर्वहगर्भगुर्व्वीं सीतां वने विसृजामि। इदानीं करुणां हृदयाभ्यन्तरात् दूरीकृत्य मानसमश्मसारवत् सुदृढ़ं करणीयम्, अन्यथा लोकानुरञ्जनस्यासम्भावितत्वादित्याशयः। यतो हि भगवता वशिष्ठेन इदानीमेव, "जामातृयज्ञेन वयं निरुद्धास्त्वं बाल

सम्प्रत्येव भगवता वशिष्ठेन सन्दिष्टम्।

अपि च।—यत् सावित्रैर्दीपितं भूमिपालैः

लोकश्रेष्ठैः साधु शुद्धं चरित्रम्।

मत्सम्बन्धात् कश्मला किंवदन्ती

स्याच्चेदस्मिन् हन्त! धिङ्मामधन्यम्॥ ४२॥

एवासि नवञ्च राज्यम्" इत्यादिना कुलधर्ममनुपालयितुमभीक्ष्णमेवोपदिष्टम्, अतः सीतापरित्यागः मया सर्वथा कर्त्तव्यः इति तु सन्दर्भार्थः। [अत्र सतां केनाप्युपायेन प्रकृतिरञ्जनं करणीयमिति सामान्येनाऽप्रस्तुतेन मया येन केनापि तत् करणीयमेवेति विशेषावगतितः अप्रस्तुतप्रशंसाऽलङ्कारः; मया जनरञ्जनं करणीयमित्यस्य पुत्र-जीवितयोरत्ययेनापि पितृकर्त्तृकजनरञ्जनकृतत्वरूपस्वकारणेन समर्थनादर्थान्तर-न्यासालङ्कारश्च; तथा मोचनक्रियाऽभिसम्बद्धयोः प्रस्तुतयोः मान्च प्राणांश्चेत्यनयो-रन्वयादङ्गाङ्गिभावेन तुल्ययोगितया सङ्कीर्णौ]। अनुष्टुप् वृत्तम्॥ ४१॥

अथ आत्मनः दौर्भाग्यं विशदीकृत्यावेदयितुं दुग्धसिन्धुवत् सुविशालेऽतिधवले वैव-स्वते कुले स्वसम्बन्धजनितं कलङ्कमाकलयति, यदिति।—सविता सूर्यः, ("भानुर्हंसः सहस्रांशुस्तपनः सविता रविः" इत्यमरः) तस्य गोत्रापत्यैः ["तस्यापत्यम्" (४।१।९२ पा०) इति सूत्रेण अण्प्रत्ययः] सूर्यवंशीयैरित्यर्थः। लोकश्रेष्ठैः,—लोकेषु भुवनेषु जनेषु वा श्रेष्ठैः प्रख्यातैः, भूमिपालैः,—क्षत्त्रधर्मं भूमिपरिपालनं प्राणव्ययेनापि कुर्व-द्भिरित्यर्थः, यत्—साधु, निरपवादमिति यावत्, शुद्धं—सर्वथा दोषसम्पर्करहितं, पवित्रमिति यावत्, चरित्रं—प्रजाऽनुरञ्जनादिकार्य्यजातं कुलमिवेत्यर्थः, दीपितम्—उज्ज्वलीकृतं सर्व्वोत्कर्षतामापादितम् इति भावः। तदिदानीं किमभूत्, तदेवाह, मदिति।—अस्मिन्—एतस्मिन् एव महनीये कुले, मत्सम्बन्धात्—हतदैवस्य मम सम्पर्कात्, कश्मला—मलिना, किंवदन्ती—लोकवादः स्यात् भवेत् चेत्, तदा हन्त खेदे, अधन्यं—दुर्भगमीदृशं, मां—धिक्; एतादृशि अस्मिन् कुले कालुष्यमारोपयतः मम न केवलं वृथैव जन्मग्रहणं, प्रत्युत दोषैकाधायकत्वञ्च, किमितः परं खेदकर-मस्तीति भावः। सीतासंरक्षणे तु कश्मलायाः किंवदन्त्याः कथञ्चिदपि व्यपगमा-भावात्, तदपवादस्य कियच्चोपशमनार्थं सीताविवासनमिदानीं विधेयमेवेति निर्गलितार्थः। [एतस्मिन् किंवदन्तीभिरुद्दीपनविभावैः विलापादिभिरनुभावैः विषाद-चिन्ताऽऽदिभिश्च व्यभिचारिभिः परिपुष्टतां गतः शोकरूपस्थायिभावः करुणरसतां

हा देवि! देवयजनसम्भवे! हा स्वजन्मानुग्रहपवित्रीकृत-वसुन्धरे! हा जनकवंशनन्दिनि! हा पावकवशिष्ठारुन्धती-प्रशस्तशीलशालिनि! हा रामैकजीविते! हा महाऽरण्यवास-प्रियसखि! हा तातप्रिये! हा स्तोकप्रियवादिनि! कथमेवं-विधायाः तव अयमीदृशः परिणामः? (ज)—

---

भजते। अत्र प्रसिद्धैः भूमिपालैः महनीयैः कर्मभिः उद्दीपिते अधन्येन स्वेन च सीतावनवासरूपातिजुगुप्सितकर्म्मणा कौलीनारोपणात् दूषिते सवितुरेकस्मिन् वंशे पूतत्वकश्मलत्वयोरन्योऽन्यविरुद्धधर्म्मयोः सङ्घटनात् विषमालङ्कारः] ॥ ४२ ॥

(ज) सीताविवासनस्यावश्यकर्त्तव्यत्वेनेदानीं निश्चयात् भृशमभिवर्द्धमानैः अनु-शोचनाबहुलैः तद्गुणानां नियतमनुध्यानादिभिः शतधा उद्वेलस्य शोकावेगस्य प्रसारं सोढुमशक्नुवन् रोरुद्यमानः मुहुः विलपति, हा देवीति।—हा देवि!—द्युतिमति! रामस्य हतदैवस्य निखिलशुभाकरभूते! इत्यर्थः; यद्वा—पूतचरित्रत्वात् देवीति सम्बोधनम्, अथवा "देवी कृताभिषेकायाम्" इत्यमरोक्तेः मया सह अभिषिक्ता भूत्वाऽपि मम राजसुखोपभोगः भवत्याश्च वनवासदुःखम्, इति मत्वा देवीति सम्बोधनम्। देवेति।—देवाः इन्द्रादयः इज्यन्ते अस्मिन् इति देवयजनं यज्ञ-भूमिः पृथिवीत्यर्थः, सा एव सम्भवः उत्पत्तिस्थानं यस्याः तथाभूते! शुक्रशोणितदोष-विनिर्म्मुक्तत्वात् जननादिदोषसंस्पर्शरहिते! इत्यर्थः। स्वजन्मेति।—स्वस्याः आत्मनः जन्म सीतारूपेण शरीरपरिग्रह एवानुग्रहः दया तेन पवित्रीकृता महत्त्वमापादिता वसुन्धरा भूमिः यया तथाविधे! स्वजन्मस्वीकारानुग्रहपूतीकृतभूमिवलये! जनकेति।—जनकवंशस्य तन्नामराजर्षेः कुलस्य; अथच जनक एव जनकः तात इत्यर्थः। [अत एव श्लिष्टरूपकालङ्कारः]। नन्दिनि! आनन्दं वर्द्धयित्रि! त्वदभावे इदानीं तत्कुलं निरानन्दमेव भवेदित्यर्थः; पावकेति।—पावकस्य सर्वदेवमयस्य अनलस्य, वशिष्ठस्य ब्रह्मर्षेः अरुन्धत्याः सतीनां ललामभूतायाश्च, यत् प्रशस्तं प्रशंस-नीयं शीलं स्वभावः इत्यर्थः, अथवा तैः वशिष्ठादिभिः प्रशस्तं प्रशंसित कालुष्य-निर्म्मुक्तमित्यावत् यत् शीलं व्रतादिकं तेन। शालत इति शालिनि! परिशोभिते! अतीव पवित्रचरिते!। अतः त्वं परमपतिव्रतेति नात्यत्र संशय इति भावः। [अत एव उदात्तालङ्कारध्वनिः] रामैकेति।—रामस्य ममेत्यर्थः एकं केवलं जीवितं जीवनं तत्स्वरूपे! त्वया विना रामः क्षणमपि न जीविष्यति, इति

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे !! ॥ ४३ ॥

भावः । तथा चोक्तम् ।—"अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् । तेनेयं स च धर्म्मात्मा मुहूर्त्तमपि जीवति ॥" इति । पक्षान्तरे—राम एव एकमद्वितीयं जीवितं यस्याः तथाभूते ! रामगतप्राणे ! [ उभयत्र रूपकम् ] । महारण्येति ।—महारण्यं दण्डकारण्यं तस्मिन् यो वासः वसतिः तत्र प्रियसखि ! मिथःसम्भाषणादौ प्रीतिविवर्द्धिनि ! सर्वेषामपि वनवासशोकग्रस्तानां हितमधुरभाषणादिना समूल-मुन्मूलनात् "समप्राणः सखा मतः" इत्युक्तेः महानन्दविधायिनि ! इत्यर्थः । तातेति ।—तातानां दशरथादीनां प्रिये ! प्रीतिविधायिनि ! [ अतस्तव परित्यागेन स्वःस्थस्य पितुरप्यहं क्लेशकारणं भविष्यामीति भावः ध्वन्यते ] । स्तोकेति ।—स्तोकम् अल्पञ्च प्रियं वदितुं शीलं यस्याः तथाभूते ! मितमधुरवादिनि ! एवंविधायाः—ईदृशगुणमर्यापेतायाः, तव विशुद्धसत्त्वस्वभावसम्पन्नाया अग्निपरिशुद्धायाः [ गर्भ-स्थितपवित्ररघुकुलाङ्कुरायाः अपि इति ध्वन्यते ] कथं—केन हेतुना, कस्य विषमस्य जन्मान्तरीणकर्म्मणः दुर्विपाकवशात् इत्यर्थः । ईदृशः,—शाकुनिकैः श्वापदैश्च विसृष्ट-स्यामिषस्येव परिणामः,—दशाविपर्य्ययः ? अजनि इति शेषः । आदर्शपूतचरितायाः असाधारणगुणग्रामविभूषितायाः ते ईदृशाकन्तुदः परिणामः अतीव मर्म्मनिकृन्तन इति तात्पर्य्यम् । [ अत्र समुदायवाक्ये तु एतेषामेव प्रकृतार्थपरिपोषणाभिप्रायेण प्रयुक्तानां विशेषणसङ्घानां साभिप्रायकतया परिकरालङ्कारः ।—"उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः" इति लक्षणात् ] ।

सतां स्वभावपरिपूतानां दैवदुर्विपाकवशात् समापतन्तः दशाविपर्य्ययाः भृशं हि चेतसामुन्माथका भवन्तीति विभाव्य दैवस्याचिन्तनीयप्रसरत्वमभिधत्ते, त्वयेति ।—त्वया—सतीनामग्रण्या, पूतचरितयेति यावत् ; जगन्ति—त्रिलोकीत्यर्थः ; पुण्यानि—[ "पूञो यत् णुक् ह्रस्वश्च" ( उणा० ५।१५ ) इति । पुण्यं—पवित्रता, ततः अर्श-आदित्वात् अच् । अत एव अमरः, "—अथ त्रिषु द्रव्ये पापपुण्यसुखादि च" इति । ] पवित्राणि, सञ्जातानीति शेषः । जनानामुपजीव्यविरोधमाशङ्कते त्वयीति ।—त्वयि—भवत्यां, जनोक्तयः,—लोकवचनानि, अपुण्याः,—अपवित्राः जनानाम् एतानि निन्दावचनानि इत्यर्थः, लङ्कामध्युषिता सीता दशास्यदर्शनेन नूनं दूषिता इत्येवंरूपाः बहुवादाः अकीर्त्तिकराः अपुण्यजनकाश्च कथं हि आविर्भूताः ! अहं लोकानां नाथः त्वञ्च ममापि गृहाधिदेवताभूतत्वात् नाथभूता भवसि,

[ दुर्मुखं प्रति । ] दुर्मुख ! ब्रूहि लक्ष्मणम्,—एष ते नूतनो राजा रामः समाज्ञापयति ।—[ कर्णे एवमेवम् । ](भ)

दुर्मुखः । कधं दाणीं अग्गिपरिसुद्धाए गब्भपरिप्फुडिद-

---

अतः लोकैः मयि निधापितं नाथत्वं त्वत्कृतमेव त्वं तु तात्त्विकतया लोकानां नाथभूता भवसि, मम नाथत्वमौपचारिकमेवेत्याशयेनाह, नाथेति ।—त्वया जनाः, नाथ्यन्ते प्रार्थ्यन्ते इति नाथाः अभीष्टवस्तूनि मङ्गलानीति यावत्, तद्वन्तः सम्पन्नाः रक्षकवन्तः वा भवन्तीति शेषः, लक्ष्मीभूतत्वात् तस्या इति भावः । त्वं स्वयं मयि नाथे स्थिते सतीत्यर्थः, अनाथा—अशरणा सती, विपत्स्यसे—विपन्ना भविष्यसि ? सर्वथा विगर्ह्योऽयं संसारः निर्विवेकश्च विधिरिति भावः । प्रतिकूलवर्त्तिनः विधातुः चरितं नूनं सुदुःसहं वर्त्तते इति तु सङ्क्षेपः । [अत्र एकस्मिन् वस्तुनि सीतायाम् अत्यन्तमसम्भवतोः विभिन्नकालीनयोः पुण्यवदपुण्ययोः नाथवदनाथयोश्च विरूपयोः सङ्घटनात् अन्योऽन्य-विरुद्धकार्य्यकारणयोश्च वा जननात् विषमालङ्कारः ।—"विरूपयोः सङ्घटना या च तद्विषमं मतम्" इति लक्षणात् । न ह्येष विरोधाभासः शङ्कनीयः ; विरोधे हि दैशिकः कालिकश्च उभयविध एव विरोधः भासते, विषमे न तथा, केवलं दैशिकः एव, अत्र उभयविधविरोधाभावात्, केवलं दैशिकविरोधसत्त्वात् इति ध्येयम् ] । पथ्यावक्त्रं वृत्तम् ॥ ४३ ॥

(भ) नूतनः,—अदृष्टाऽश्रुतपूर्वचरिततयाऽभिनव इत्यर्थः, यतोऽस्यैतादृशी विगर्हिता दुर्निर्वर्षितसर्ववृत्तान्तोऽपि परीक्षया सीतां निर्द्दोषा इति निश्चिकाय, निरतिशयस्नेह-वानपि योऽसौ सर्वथा निर्द्दोषां स्वगतजीवितां प्रियतमां जानकीं प्रति एवं नृशंसमा-ज्ञापयतीति भावः । यद्वा नूतनः राजा इति ।—राज्यरक्षणकार्य्याणां कदाऽपि पुरा अकृतत्वेन नवे राज्ये अभिषिच्य एव "प्रजारञ्जनं हि केवलं राज्ञां परमः धर्मः" इति मन्यमानः करुणाऽऽकरोऽपि स्वयं स्त्रियाः कठोरगर्भाया अपि सीतायाः विवासने करुणालेशविरहितः, अतः कुतः तस्य कार्य्याकार्य्यविवेकविधुरस्य राजपदभाक्त्वम् ? राजेति विशेषणन्तु तस्य सर्वथा नूतनमेव एवंविधराजचरितस्यादृष्टाश्रुतपूर्व्वत्वा-दित्यवधेयम् । केचित्तु नवं नृपासनमध्यारुह्यैव एष स्वानाम् अपरीक्ष्य सुख-जननाहते तेषां निर्वासनं प्रथमतः करोति, अतस्तस्य सर्वथैव नूतनत्वं, पुरा तु कदा केनाऽपि राज्ञा एवं नृशंसस्य कर्मणः अननुष्ठितत्वादिति व्याचक्षते । एवमेवमिति ।—तपोवनप्रदर्शननिभेन वाल्मीकिवनोपकण्ठे सीतां विसर्जय इति भावः ।

पवित्तरहुउलसन्ताणाए देईए दुज्जणवअणादो एव्वं अणज्जं अज्झवसिदं देएण ? * (ञ)

राम:। शान्तम्। कथं दुर्जनाः पौरजानपदाः ? (ट)—

इक्ष्वाकुवंशोऽभिमतः प्रजानां जातश्च दैवाद्वचनीयबीजम्।
यच्चाद्भुतं कर्म्म विशुद्धिकाले प्रत्येतु कस्तद्भुवि दूरवृत्तम् !! ४४ ॥

* कथमिदानीमग्निपरिशुद्धाया गर्भपरिस्फुटितपवित्ररघुकुलसन्तानायाः देव्याः दुर्जनवचनादेवमनार्य्यमध्यवसितं देवेन ?

(ञ) कथमिति।—केन हेतुना दुर्ज्जनानां बीभत्सचरितानां पौरजानपदाना वचनात् "सीता कलुषिता" इति वाक्यमात्रत एव देवेन विवेकिना परमकृपालुनाऽपि भगवता महाराजेन त्वया; अग्निना परिशुद्धाया सर्वथा निर्णीतविमलचरितायाः तस्यास्तथाभूतायाः, जनापवादाङ्कुरोन्मूलनाय सर्वसमक्षमग्नौ प्रविश्य तत्रापि स्वपातिव्रत्यनिरतया दाहासम्पर्केण विख्यापितशोभनचारित्राया इति यावत्; गर्भेण कुक्षिस्थेन शिशुना परिस्फुटितः आवेदितः पवित्रः अतीव पूतः जारजातत्वादिदोषादुष्टः रघुकुलसन्तानः रघुवंशाङ्कुरः यस्याः; यद्वा गर्भे उदरे परिस्फुटितः जनितः पवित्रः रघुकुलसन्तानः यस्याः तथाविधायाः, [ एतेन अशरणायाः तस्याः विवासने न केवलं तन्नाशजायमानं पातकम्, अपि तु रघुकुलोच्छेदश्च भविष्यति इति सूच्यते ] अत एवमनार्य्यं—सतामननुमतं कर्म अध्यवसितम्—अनुमोदितमाज्ञप्तमित्यर्थः।

(ट) शान्तमिति।—मा मैवं भण प्रजासु; ते दुर्जना इति त्वया नैव वाच्यमित्यर्थः। पुरवासिनः वैदेशिकाश्च कथं केन हेतुना दुर्जना अभूवन् ? ते तु सर्वथा सज्जना एवेति रामाशयः।

कथं हि स्वभावपरिपूतायामपि सीतायाम् एवमयथा दोषमुद्भावयन्तोऽपि ते पौराः सज्जना इत्युच्यते, तदेव सयुक्तिकमभिधत्ते, इक्ष्वाकुवंश इति।—इक्ष्वाकोः राजर्षेः वंशः प्रजाश्रयभाजनम् अन्ववायः तत्प्रभृति मदवधिरित्यर्थः, प्रजानां—प्रकृतिपुञ्जानाम्, अभिमतः,—प्रेयान्, पौरजानपदाः कदापि मनसा इक्ष्वाकुवंशीयानाम् अशुभं न आशंसन्ते सुचिरमनुरक्ताः ते तेषु राजसु इति भावः। ("इक्ष्वाकुवंशोद्भवतः" इत्यपि पाठान्तरं दृश्यते, तदर्थस्तु—इक्ष्वाकुवंशादुद्भवः उत्पत्तिर्यस्य तथाभूतादधन्यात् कुलपांशुलात् मत्तः इत्यर्थः। पञ्चम्यां तसिल् ]। तर्हि सीतायां कथं ते एवं परीवादपरायणाः ? इत्याशङ्कां परिहरति, दैवादिति।—दैवात्—

तद् गच्छ ।

दुर्मुखः । हा देइ ! *

[ इति निष्क्रान्तः । ]

रामः । हा कष्टमतिबीभत्सकर्म्मा नृशंसोऽस्मि संवृत्तः !(ठ)—

* हा देवि !

दुर्दैववशात् अस्माकमिति शेषः, प्राक्तनकर्मणां विष-मयात् परिणामादिति भावः । वचनीयबीजं—लोकापवादबीजं, जातं—समुद्भूतम् उप्तमित्यर्थः, तत्रार्ऽतिविशुद्धे वैवस्वतमनोरन्वये इति शेषः । पूर्व्वेषान्तु महाभागानां तथाविधदुर्दैवाभावात् वचनीयावसरो न जातः, अधुना तु अधन्यस्य मे तथात्वात् तं निन्दामीति भावः । ननु वैदेह्याः वह्नौ विशोध्य गृहीततया लङ्केश्वरस्य भवने सुचिरस्थितिनिबन्धनं दूषणं परिहृतं, तत् कथमिदानीं तद्वचनीयतापातमाशङ्कते ? इत्यत आह, यच्चेति ।— यतः, विशुद्धिकाले—अग्निना सर्वथा परिशुद्धिसमये, यच्च अद्भुतं—लोकोत्तरं कर्म्म, पतिव्रताऽऽदर्शभूततया तस्याः तदधिष्ठातृत्रा सम्यक् समाश्वासनम्, अक्षतशरीरतया चाग्निमध्यात् साभरणायाः सचेलायाः तस्याः निष्क्रमणञ्च देवैः गुरुभिः दशरथादिभिश्च मां प्रति बोधनम् इति, दूरे सुदूरवर्त्तिन्यां समुद्रमध्यवर्त्तिन्यां लोकैरगम्यायां लङ्कायां वृत्त सम्पन्न, अतस्तदद्भुतं कर्मेति शेषः, भुवि कः प्रत्येतु—विश्वसितु ? यदि पौरजानपदास्तत् न विश्वसन्ति, तत्र तेषां दोषो नास्ति इति रामाशयः । [ अत्र वचनीयबीजं प्रति प्रजाऽनुरक्तिदैवायत्तत्वात् दूरवृत्तत्वादिरूपाणां भूयसां कारणानां खले कपोतिकान्यायात् तत्करत्वेनाभिधानात् समुच्चयालङ्कारः, अपि च प्रत्ययाभावरूपकार्य्यं प्रति दूरवृत्तत्वपदार्थस्य हेतुत्वेनोत्कीर्त्तनात् पदार्थहेतुकं काव्यलिङ्गमित्यनयोरन्योऽन्यसापेक्षतया सङ्करः ] । इन्द्रवज्रा वृत्तम् ।—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति लक्षणात् । एकादशाक्षरपादच्छन्दसां ३५७तमप्रस्तारान्तर्गतञ्च ॥ ४४ ॥

(ठ) [ अतिबीभत्स्यते अतिशयेन निन्द्यते इदमिति अतिबीभत्सं, बीभत्सतेः कर्म्मणि अप् । बधेश्चित्तविकारे इति धातोः निन्द्य सन् । "मान्-बध दान् शान्भ्यो दीर्घश्चाभ्यासस्य" (३।१।६ पा०) इति दीर्घत्वम् ] । बीभत्सं जघन्यं, तादृशं कर्म यस्य स तथोक्तः, जुगुप्सिताखिलवृत्तः, अलीकलोकापवादभिया सतीमपि स्त्रियं विवासयति — इत्यर्थः । [ नॄन् मानवान् शंसति हिनस्तीति नृशंसः । नृशब्दोपपदात् शंसतेरच् ] । नृशंसः,—क्रूरकर्मेत्यर्थः । संवृत्तोऽस्मि—सीतायां पाषाणवदतिकठोराशयः भवामीति ।

शैशवात् प्रभृति पोषितां प्रियाम्
सौहृदादपृथगाश्रयामिमाम्।
छद्मना परिददामि मृत्यवे
सौनिको गृहशकुन्तिकामिव ॥ ४५ ॥

तत् किमिति अस्पर्शनीयः पातको देवीं दूषयामि ! (ङ)

सीताविवासने आत्मनः सर्वाधिकं क्रौर्य्यं विश्वासघातकत्वञ्च सविलापं विवृणोति, शैशवादिति।—शैशवात् प्रभृति—आशैशवं, बाल्यकालादारभ्येति यावत् ["कार्त्तिक्या आग्रहायणी मासे * * * कार्त्तिक्याः प्रभृति" इति भाष्यप्रयोगात् प्रभृतियोगे पञ्चमी ] पोषितां—सयत्नं प्रतिपालितां, सौहृदात्—प्रणयातिरेकादित्यर्थः [ सुहृदो भावः इत्यणि "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" (७।३।१९ पा०) इति सूत्रेण उभयपदवृद्धौ प्राप्तायामपि असिद्धविधेरनित्यत्वात् प्रथमपदवृद्धिः इति केचित् ; केचित् तु आहुः सौहार्दमित्यस्यैव साधुत्वमवबेयम्। ] अपृथक् अभिन्नः एकः आश्रयः आलम्बनं यस्याः तथाविधां—मदेकानुरागिणीं मां विहाय किमप्यजानतीमित्यर्थः, इमां प्रियां—प्रीतिकरीं, प्राणेभ्योऽपि गरीयसीम् [ शिशुद्वयञ्चेत्यपि व्यज्यते ]। सौनिकः—मांसविक्रयीव, [ षू प्रेरणे इति तौदादिकस्य सुवतेः क्तः, ततः आप्, सूना—प्राणिवधस्थानं प्राणिवधश्च। सूनं सूना वा जीविका यस्य स सौनिकः ("वैतंसिकः सौनिकः स्यात् कौटिको मांसविक्रयी" इति अमरमाला। ) गृहशकुन्तिकां—गृहपालितपक्षिणीमिव यत्नतः गृहेषु परिवर्द्धितां पक्षिणीमिव [ अनुकम्पायां कन् ] छद्मना—छलेन, दोहदपूरणमिषेण मृत्यवे—अन्तकाय परिददामि—अर्पयामि, एतस्या विनाशं साधयामीत्यर्थः। यथा हि लुब्धकः शाकुनिकः आ शैशवात् परिपालितां प्रियामपि पक्षिणीं धनलालसया पिशितलोलुपेभ्यः विक्रीणाति, तथैवाहमपि सरलहृदयां मदेकजीवितां सीतां दोहदपूरणव्यपदेशेन वनाय विसृजामि, अतः अहो मे क्रौर्य्यमिति भावः। [ अत्र पूर्णोपमाऽलङ्कारः, एतेन रामस्यातीव क्रौर्य्यं ध्वन्यते ; इत्यलङ्कारेण वस्तुध्वनिः ]। रथोद्धता वृत्तम्।—"रान् परैर्नरलगै रथोद्धता" इति लक्षणात् ; एतच्च ६९९तमप्रस्तारान्तर्भूतम् ॥ ४५ ॥

(ङ) तदित्यादि।—तत्—तदा स्वस्यातीवाधन्यत्वाद्धेतोः, अस्पर्शनीयः,—अतिपवित्रां सीतां स्प्रष्टुमप्यक्षमः इत्यर्थः, पातकी—पतिव्रतायाः भार्य्याया अशरणायाः श्वापदसङ्कुले वने विसर्जनात् हत्युमवधार्य्य स्त्रीभ्रूणादिहत्यादिनिबन्धनपातित्यवान् अहमिति शेषः। अपतितानां परित्यागे पातित्यमाह गौतमः, यथा—"ब्रह्महा......

[ सीतायाः शिरः स्वैरमुन्नमय्य बाहुमाकर्षन्। (ढ) ]—

**अपूर्व-कर्मचाण्डालमयि मुग्धे ! विमुञ्च माम्।**
**श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम्॥ ४६॥**

पतिताऽत्याग्यऽपतितत्यागिनश्च पतिताः।" इति। इमां—सत्काराहां, पवित्रां सीतामिति यावत्, किम्—कथं हि नाम, दूषयामि—तद्देहस्पर्शनादिभिः प्रकृत्यैव परिपूतां पापिनीं करोमीत्यर्थः। पतितस्पर्शे पापसङ्क्रमोऽपि भवति, तथाहि—गरुड़पुराणम्।—"आलापात् गात्रसंस्पर्शात् संवासात् सह भोजनात्। आसनात् शयनात् यानात् पापं सङ्क्रमते नृणाम्॥" इति।

(ढ) स्वैरमिति।—स्वैरं—मन्दं मन्दम्, उन्नमय्य—उत्थाप्य, [ उत्पूर्वकात् नमयतेः ल्यप् "ल्यपि लघुपूर्वात्" ( ६।४।५६ पा० ) इति णेः अयादेशः ]। बाहुमाकर्षन्—उपधानभूतं स्वकरं तन्मस्तकादपसारयन्।

अपूर्व्वेति।—अयि मुग्धे ! सरलहृदयत्वात् कूटविवेकविरहिते ! इत्यर्थः। त्वमिति शेषः। अपूर्व्वेण अदृष्टचरेण अश्रुतपूर्वेण च कर्म्मणा सतीत्यागरूपेणेत्यर्थः, चण्डाल एव चाण्डालः, यद्वा—अपूर्वश्चासौ कर्मचाण्डाल तं नृशंसवीभत्सहत्तमित्यर्थ., [ निषादोऽपि स्वानुरक्तां सतीं गर्भिणीं स्वपत्नीमेवं न त्यजति, अहन्तु, निरपराधामपि तां त्यजामीति ततोऽप्यधिकः संवृत्त इति व्यतिरेकश्च व्यज्यते। नाहं जात्या चण्डालः, परन्तु कर्म्मणा तथाभूत एव भवामीति भावः। तथा हि वशिष्ठः,—

"असूयको वा पिशुनः कृतघ्नो दीर्घरोषकः।
चत्वारः कर्मचाण्डालाः जन्मतश्चापि पञ्चमः॥" इति।

एतेभ्यः अधिकत्वादेतेष्वनन्तर्भुक्तत्वाच्चात्मनः अपूर्वत्वमुक्तं रामभद्रेणेति अवधेयम् ]। तथाभूतं मां विमुञ्च—विजहीहि; अतिनिष्करुणं मामाश्रितायाः तवैतादृशं समुत्पन्नं दुःखमिति भावः। यदि तात्त्विक एव त्वमेवम्भूतः भवसि, तदा कथं नाम पुरा सतीनामपि शरणमासीः ? इत्याशङ्कां निरस्यति, परित्यागस्य चावश्यकरणीयत्वमभिधत्ते;श्रितेति।—त्वं चन्दनभ्रान्त्या—घनसारद्रुमभ्रमेण, दुर्विपाकं—दुःखजनको विपाकः परिणामो यस्य तं तथोक्तं, प्राणसंहारकमित्यर्थः, प्रथमतः प्रणयप्रदत्वया प्रतीयमानमपि परिणामे अरुन्तुदमित्यर्थः। विषद्रुमं—विषवृक्षं श्रितासि। सत्पुरुषभ्रमेण अतिक्रूरकर्म्माणं मामाश्रितासीति भावः। त्वं शीतलत्वबोधेन हृदि परिपालयसि मां पुनः प्राणघ्नं विषमिति न जानासीति महती ते भ्रान्तिरित्यर्थः। अत्रेदमवधातव्यम्;—दृश्यते हि लोके फलितत्वजातीयानामपि पादपानां वन्ध्यत्वे तान् छिन्दन्ति जनाः,

[उत्थाय।] हन्त विपर्य्यस्तः सम्प्रति जीवलोकः, अद्य पर्य्यवसितं जीवितप्रयोजनं रामस्य, शून्यमधुना जीर्णारण्यं जगत्, असारः संसारः, कष्टप्रायं शरीरम्; (ग) अशरणोऽस्मि, किं करोमि, का गतिः, क्व गच्छामि? अथवा, (त)—

अशुभावहत्वे तु सुतरामेवेति, तत्रापि विषप्रसवत्वे कथैव नास्ति, दुर्विपाकतया लोकनाशकत्वे तु सर्वथा तेषां छेदनमेव प्रसक्तम् इत्यत्र किमुत वक्तव्यम्। यदि पुनः "विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्" इति न्यायात् सयत्नपरिवर्द्धितस्य छेदनं न समीचीनमिति विभाव्यते, तथाऽपि तत्परित्यागस्तु सर्वथैव समुचितः। अतस्तथाविधं विषद्रुमदंशीयं मां सपदि विमुञ्चेति रामाशयः।

[अत्र चन्दनद्रुमभ्रमेण विरुद्धविषद्रुमसंश्रयणं सर्वथाऽसम्भवदपि तयोरविरुद्ध-सम्बन्धः कल्प्यते, स चासम्भवन् अपि चन्दनतरुभ्रमेण विषवृक्षसमाश्रयणमिव त्वया सुपुरुषभ्रमेण अतिदुर्जनाश्रयः कृतः इति बिम्बप्रतिबिम्बभावं बोधयति अतः असम्भवद्वस्तुसम्बन्धरूपा निदर्शना ज्ञेया]॥ ४६॥

(ग) हन्तेत्यादि।—हन्त इति खेदे अव्ययम्। जीवानां प्राणिनां लोकः, जीवलोकः,—निखिलप्राणिसनाथमेतत् भुवनत्रयमित्यर्थः, सम्प्रति सीताविरहे विपर्य्यस्तः,—वि विरुद्धं परि सर्वतः अस्तः क्षिप्तः, अन्यथाभूतत्वमागतः, विरुद्धः परिणत इत्यर्थः, अधुना सर्वमेव मे दुःसहासीमदुःखायतनमिव प्रतिभाति, प्रियतमान्यपि वस्तूनि इदानीम् अप्रियतां गतानि, किमधिकम्? "तदा रम्याण्य-रम्याणि प्रियाः शल्यं तदाऽसवः। तदेकाकी सबन्धुः सन् इष्टेन रहितो यदा॥" इति न्यायात् जीवितमपि कष्टजनकमिति भावः। रामस्य जीवितप्रयोजनमद्य पर्य्यवसितं—परिसमाप्तं, स्वजीवनाधिकवैदेहीविरहिततयेति शेषः। सुजनानां सुख-मेव गृहिणां जीवितप्रयोजनं, मम तु सम्प्रति सर्वथैव तस्यासम्भवत्वादतः परं जीव-धारणं निष्प्रयोजनं फलाभावादित्यर्थः। इदं जगत् जीर्णं पादपलतादिभिः परिक्षीण-तया भग्नविरलप्रायम् अरण्यं वनं छायाभावात् जीवसङ्करसेवितं विफलमिवाभाति। संसारोऽपि असारः,—सारहीनः; सती भार्य्या सत्पुत्रश्च संसारे सारं, तद्विनाकृततया अहेतुकतत्त्यागस्य च शोकोत्पादहेतुतया अरमणीयः समजनि। कष्टानां क्लेशानां प्रायो बाहुल्यं यत्र तथाविधं सन्तापभूयिष्ठमित्यर्थः शरीरं, तदभावस्य सर्वस्यैव वस्तुनः दुःखहेतुभूतत्वादिति भावः। [अस्मिन् सन्दर्भे अतिशयोक्तिरलङ्कारः]।

(घ) अशरणोऽस्मि—नास्ति शरणं रक्षिता यस्य तथाभूतः, ("शरणं गृहरक्षित्रोः"

दुःखसंवेदनायैव रामे चैतन्यमर्पितम्।
मर्मोपघातिभिः प्राणैर्वज्रकीलायितं स्थिरैः॥ ४७॥

इति यादवः) निराश्रयो भवामि, अनवलम्बोऽस्मीत्यर्थः। दुर्विषहदुःखहस्तादात्मानं रक्षितुमिति शेषः। "गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ" या हि वैदेही पुरा मे आसीत्, तया विना अहमधुना सर्वैरेव विरहितोऽस्मीति भावः। का गतिः,—कोऽभ्युपायः? समाश्वासं प्रतीति भावः; आश्वासोपाया-न्वेषणमिदानीं निष्फलमिति हृदयम्। इह स्त्रीविरहितत्वात् परत्र च एवंविधपात-किनः नरकपातस्यावश्यम्भावित्वात् नास्ति निष्कृतिः इति वाऽऽशयः, क्व गच्छामि? —किमरण्यम्? उत पातालविवरम्? अथवा निधनं व्रजामीति विकल्पिताशयः।

इदानीं पश्चान्तरमधिकृत्य आत्मनः सुमहत् दौर्भाग्यमावेदयन्, स्वभाग्य-विपर्य्ययवशात् सर्वमेतदसम्भाविता दुःखसन्ततिः आपततीति सूचयति, दुःखे-त्यादि।—दुःखानां क्लेशानां संवेदनमनुभवः तस्मै, [निरवच्छिन्नदुःखसमूहमुपभोक्तु-मेवेत्यर्थः न तु सुखभोगाय इति ध्वनिः। निमित्तार्थे तुमर्थे वा चतुर्थी]। रामे—[हतभाग्ये मयीति ध्वनिः] चैतन्यं—संज्ञा [न तु कदापि ज्ञानहीनता इति ध्वनिः] अर्पितम्—आहितम्। दुर्दैवभूतेन विधात्रेति शेषः, [न तु स्वयं जातम् इति ध्वनिः] सत्यपि चेतनधर्मे सुखदुःखादौ अधन्यस्य मे भाग्यविपर्य्ययात् नियतं दुःखानु-भूतिरेव भवतीति बोध्यम्। काश्चित् सुखानुभूतिं विना प्राणैः कथमपि न स्थीयते, अतस्त्वया सुखसम्भिन्नमेव दुःखं नूनमुपभुज्यते इत्याशङ्कामपनेतुमाह, मर्मेत्यादि।—म्रियते यस्मिन्नाहते इति मर्म [म्रियतेः मनिन्-प्रत्ययः] जीवन-स्थानम्। मर्मणि उपघातो विद्यते येषां तैस्तथोक्तैः, यद्वा मर्माणि उपघ्नन्ति विव्यथयन्ति ये ते: अरुन्तुदैः [हन्तेः णिनिः। न तु सुखप्रदैः इति ध्वनिः] तथापि स्थिरैः,—निश्चलैः [न तु तदसहनात् चञ्चलैः इति ध्वनिः] प्राणैः [न तु शरीरैः इति ध्वनिः] वज्रकीलः वज्रमयः शङ्कुः इत्यर्थः, तेनेवाचरितं [न तु वंशदण्डादिवत् भुग्नमिति ध्वनिः]। अहो कठिनता प्राणानां यन्मर्माहता अपि न देहान्निर्गता इति भावः। एवञ्च प्राणविगम एवेदानीं श्रेयानिति रामाशयः। केचित् तु "प्राणैः चैतन्यं वज्र-कीलायितम्" इति अन्वित्य "सतः प्राणरूपैः वज्रकीलैः कीलितं चैतन्यम्, अतो बहिर्निर्गन्तुं नेष्टे" इति व्याख्यानयन्ति, तदसत्,—अन्वयानुपपत्तेः। केचित् तु "वज्रकील-अयितम्" वज्रकीलत्वं गतम्, इति व्याचक्षते,—तदपि न विचारसहम्, समासाभावात्। अन्ये तु "वज्रकीलयितम्" इति पठन्ति, व्याख्यान्ति च—वज्र-

हा अम्ब अरुन्धति ! हा भगवन्तौ वशिष्ठविश्वामित्रौ ! हा भगवन् पावक ! हा देवि भूतधात्रि ! हा तात जनक ! हा तात ! हा मातरः ! हा प्रियसख महाराज सुग्रीव ! हा सौम्य हनूमन् ! हा परमोपकारिन् लङ्काऽधिपते विभीषण ! हा सखि त्रिजटे ! दूषिताः स्थ परिभूताः स्थ रामहतकेन । अथवा को नामाहमेतेषामाह्वाने ? (थ) ।—

कीलविशिष्टं कृतम्—[ वज्रकीलवत् शब्दात् तत्करोत्यर्थे णिचि:, मतुपो लुक् ] अयमेव पक्षः साधीयान् इति मन्यामहे वयम् इति दिक् । [ अत्र गद्योक्त- "अथवा"-पदेन अन्वयात् आक्षेपालङ्कारः, तथा वज्रकीलायितमित्यत्र तु कष्टा सादृश्यबोधनात् उपमाऽलङ्कारः, अनयोः तिलतण्डुलवन्नैरपेक्ष्येणावस्थानात् संसृष्टिः वेदितव्या ] ॥ ४७ ॥

( थ ) हेति ।—हा अम्ब मातः ! ["अम्बार्थनद्योः ह्रस्वः" (७।३।१०७ पा०) इति सूत्रेण ह्रस्वः ] । गुरुपत्न्याः मातृसमत्वादिति भावः । सतीनामप्यग्रण्याः अरुन्धत्याः सीतायाः पातिव्रत्यानुमोदनात् तद्वचसामप्यप्रमाणीकृतत्वेन, तां सम्बोध्य इयं सखेदोक्तिः । भगवन्ताविति ।—आर्षप्रतिभचक्षुष्मतां भगवतामपि वशिष्ठविश्वामित्राणां दिव्यदृष्टिः दुर्जनेषु प्रतिहता अभूदित्याशयः । पिशुनाः तत्रभवतां वाचः सुविमलास्वपि न प्रतियन्तीत्याशयः । पावकेति ।—हा भगवन् हिरण्यरेतः ! तव पावनानि वचांसि अपि दुर्जनाः न विश्वसन्ति, त्वत्प्रवेशपरीक्षा च व्यर्थीभूता । देवीति ।—हा देवि द्युतिमति ! भूतानां सर्वेषां प्राणिनां धात्रि ! रक्षयित्रि ! कथं त्वमेवंविधान् दुर्जनान् कल्याणरहिताय त्वत्सुताय अयथाऽसूयतः विफलं वक्षसि सततं वहसि इति भावः । तातेति ।—हा तात पितः जनक ! ( पत्युः पितृत्वात् श्वशुरेऽपि तद्व्यपदेशः ) विदेहाधिपते ! हा तात ! पितः दशरथ ! हा मातरः कौशल्यादयः, युष्माकमपि वचनानि दुर्जनाः न विश्वसन्ति, मया तु अधन्येन तदनुरञ्जनमभीप्सया गुरुजनपूतवचनानि अपि परिहृतानि इति भावः । प्रियसखेति ।—हा प्रियसख ! परमसुहृत् ! महाराज ! किष्किन्धाधिपते ! सुग्रीव ! तव एतावान् प्रयासः यत् स्वसहोदरमपि विनाश्य मम साहाय्यकसम्पादनञ्च कृतं सर्वमप्येतत् विफलमभूदित्याशयः । सौम्येति ।—हा सौम्य ! साधो ! पूतचरित ! हनूमन् ! भवान् बहुना आयासेनाऽधिगतं सीतासंवादं मह्यं निवेद्य, समरशिरसि च

ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना।
मया गृहीतनामानः स्पृश्यन्त इव पाप्मना॥ ४८॥

सुमहाक्लेशं संविधाय, मम यदभूतपूर्व्वमानन्दमजीजनत्, तेन च महार्थिकृतसौभाग्यभागासीः, तत्सर्व्वमधुना विफलमभूदित्याशयः। परमेति।—हा परमोपकारिन्, स्वसहोदरस्यापि जीवनमनादृत्य किं पुनः स्वपत्नम्, आत्मभूतं पुत्त्रमपि विनाश्य सीतोद्धरणे मे महोपकारकारक! तवाऽपि मद्दोदकं कार्य्यजातं किमपि फलं नाऽसूतेति भावः। सखौति।—सखि! प्राणसमे! त्रिजटे! त्रिजटा नाम अतीव सीतायां वत्सला काचित् राक्षसी अशोकवनिकायां रावणेन सीतापरिरक्षणाय नियुक्ताऽपि रामविरहशोकार्त्ताया भीतिविह्वलायाः वैदेह्याः सान्त्वनाप्रवणैः वचोभिः प्रतप्तं तन्मानसं कियच्च समतीतपत्; इयं हि सीतामनुकूलयितुं नियुक्तानां चेटीनामेकतमाऽऽसीत्, अतस्तामुद्दिश्यत्वमभिधानं वेदितव्यम्। रामहतकेनेति।—हत एव हतकः, सीताविवासनात् विगतश्रीकतया दुर्भगः, [ "कुत्सितानि कुत्सनैः" (२।१।५३ पा०) इति सूत्रे "विशेषणं विशेष्येणेति परनिपाते प्राप्ते विशेष्यस्य पूर्व्वनिपातार्थ आरम्भः" इति काशिकावचनात् रामः इति विशेष्यस्य पूर्व्वनिपातः कुत्सितार्थाभिधायकत्वात् ]। महाभागानामरुन्धतीप्रभृतीनां वचांसि अविगणय्य दुर्जनवाक्यानुसारतः सीतायाः विवासनादात्मनः अधन्यत्वमभिहितम्। दूषिताः,—संसर्गादिना अपावित्रीकृताः, परिभूताः,—तिरस्कृताः; अवमानिताः इति यावत्। यूयं सर्व्व एव सीताचरिते विशुद्धे किमपि अविशङ्कमानाः सममेव तां स्वीकर्त्तुमबोचत, दुरात्मना मया तु तां पांशुलामाशङ्क्य वने विवास्य युष्मद्वचांसि न प्रमाणीकृतानि, प्रत्युत तानि मिथ्याभूतानीति निरधारि; किमतः परं खेदकरमस्तीति भावः। [ "मुषिताः" इति पाठे—सीतारूपापहृतसर्व्वस्वतया विनष्टधनाः वञ्चिताश्च इत्यर्थः। मुष्णातेः क्तप्रत्ययः।] अथवा—पश्चान्तरे, नामेति कुत्सायाम्। ("नाम प्राकाश्य-सम्भाव्य-क्रोधोपगमकुत्सने" इत्यमरः।) तेषां—पूतात्मनाम्, आह्वाने—आकारणे, कोऽहं—किं योग्यः अहम्? इत्यर्थः। अहमेतादृशः पापात्मा यत् तादृशानां पुण्यचरितानां महात्मनां नामापि आत्ममुखेनोच्चारयितुं नाधिकारी भवामीति भावः। [ अत एव आक्षेपालङ्कारः ]।

पापकृतां संसर्गेण पापोत्पत्तिश्रवणात् महाऽऽत्मनां तेषां नामोत्कीर्त्तने वाचिकसंसर्गात् दूषितत्वशङ्कायां हेतुं निर्दिशति, ते हीति।—हि—यतः; महात्मानः,—पवित्रचरिताः, ते—महाभागवशिष्ठविश्वामित्रादयः, कृतं प्रत्युपकारं घ्नन्तीति [ मूल-

योऽहम्—

विश्रम्भादुरसि निपत्य लब्धनिद्राम्
उन्मुच्य प्रियगृहिणीं गृहस्य शोभाम्।
आतङ्कस्फुरितकठोरगर्भगुर्व्वीम्
क्रव्याद्भ्यो बलिमिव निर्घृणः क्षिपामि!॥ ४९॥

विभुजादित्वात् कप्रत्ययः] तेन—पूर्व्वकृतोपकारविस्मरणात् अकृतज्ञेनेत्यर्थः, कृतघ्न-लक्षणमाह स्कन्दपुराणम्—

"कृतस्य दोषं वदति सत्कारान्न करोति यः।
न स्मरेच्च कृतं यस्तु आश्रमान् यस्तु दूषयेत्।
सर्व्वांस्तानृषिभिः सार्द्धं कृतघ्नानब्रवीन्मनुः॥" इति।

तस्य चाऽनिष्कृतिमाह अन्यत्र—

"ब्रह्मघ्ने च सुरापे च चौरे च गुरुतल्पगे।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः॥" इति।

दुरात्मना—दुर्वृत्तेन मया, गृहीतम् उच्चारितं नाम येषां ते,—गृहीतनामानः, उच्चारितनामाक्षराः इत्यर्थः, अत एव पाप्मना—किल्बिषेण, स्पृश्यन्ते—संसृज्यन्ते इवेति मन्ये—चिन्तयामि [इत्युत्प्रेक्षा] अतिघोरपापानुष्ठानात् मे वाक्कृतसंसर्गादपि स्वभावपरिपूताः ते नूनं दूषिता इति तु सन्दर्भसङ्क्षेपः। [अत्र स्पृश्यन्ते इवेत्यत्र वाच्या क्रियोत्प्रेक्षा अलङ्कारः; मया गृहीतनामानः इत्यस्य यतः गृहीतनामानः अत एव पाप्मना स्पृश्यन्ते इति रीत्या पापोत्पादं प्रति हेतुत्वोत्कीर्त्तनात् पदार्थहेतुकं काव्यलिङ्गम्, अनयोरङ्गाङ्गिभावेन सङ्करः]॥ ४८॥

किमस्मात् पापेभ्यः आत्मनः कृतघ्नत्वं समुद्भूतं तदेवानुशोचनाभूयिष्ठेन वचसा विशदीकृत्य उपपादयति, विश्रम्भादिति।—विश्रम्भात्—विश्वासातिशयात्; अयं मे प्राणभूतः मन्मथजीवितः प्रियतमः पतिः इति विश्वासातिरेकादित्यर्थः, उरसि—वक्षसि, निपत्य—शयित्वा समालिङ्ग्येत्यर्थः, लब्धा निद्रा यया तथाविधाम्, अति-विश्वासेन झटिति प्रसुप्ताम्; अतः एतस्याः परित्यागे न केवलं कृतघ्नता, अपि तु मित्रद्रोहिता विश्वासघातकता च।—"अङ्कमारुह्य सुप्तं तु हन्तुः किं नाम पौरुषम्" इति न्यायात् "मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः। त्रयस्ते नरकं यान्ति यावच्चन्द्रदिवाकरौ॥" इति च स्मरणादिति भावः। गृहस्य—भवनस्य, शोभाम्—

[सीतायाः पादौ शिरसि कृत्वा।] देवि! देवि! अयं पश्चिमस्ते रामस्य शिरसा पादपङ्कजस्पर्शः। (द) [इति रोदिति।]

[नेपथ्ये।] अब्रह्मण्यम् अब्रह्मण्यम्!! (ध)

---

अधिदेवताभूततया सुषमाविधायीं, प्रियां प्रियवादिनीं गृहिणीञ्च—द्वितीयहृदयभूतां भार्य्याम्, आतङ्केन लज्जोद्वेगेन स्फुरितः दीर्घमुच्छ्रसता हृदयेन समं चाञ्चल्यं गतः कठोरः परिणतः यो गर्भस्तेन गुर्व्वीं मन्थरां—गर्भभाराक्रान्ततया नितान्तविधुरां, वने श्वापदभयात् आत्मपरित्राणार्थं पलायितुमप्यक्षमामिति भावः। निर्घृणः निः नास्ति घृणा करुणा यस्य स तथोक्तः, निर्दयः इत्यर्थः। ("कारुण्यं करुणा घृणा इत्यमरः")। अहमिति शेषः। क्रव्यम् आममांसमदन्तीति क्रव्यादः श्वापदाः व्याघ्रादयः, ["क्रव्ये च" (३।२।६९ पा०) इति विट्; पक्वमांसभोजने तु क्रव्यादः अणन्तो बोध्यः। तथा च काशिका—"कथं तर्हि क्रव्यादः? क्रत्तविकृत्तशब्दे उपपदे अण्, तस्य च पृषोदरादिपाठात् क्रव्यभावः" इति] तेभ्यः, बलिमिव—ग्रासार्थोपहारमिव,—("बलिर्दैत्यप्रभेदे च करचामरदण्डयोः। उपहारे पुमान् स्त्री तु जरया श्लथचर्म्मणि। गृहदारुप्रभेदे च जठरावयवेऽपि च॥" इति मेदिनी।) क्षिपामि—क्रव्यादः प्रीणयितुं परित्यजामि। [अत्र "क्रियार्थोपपदस्य कर्म्मणि स्थानिनः" (२।३।१४ पा०) इति अप्रयुक्ततुमुनः कर्म्मणि चतुर्थी]। अहमिदानीमेवमकरुणोऽस्मि—यत् वराकीं प्रियतमां जानकीं श्वापदसङ्कुले महारण्ये आमिषशकलमिव अनायासेनैव विकिरामीति भावः। [अत्रोपमालङ्कारः स्फुटः]। प्रहर्षिणी वृत्तम्॥ ४९॥

(द) पश्चिम इति।—पश्चात्-शब्दात् डिमच्प्रत्ययः। पश्चिमः,—अन्तिमः। एतादृक्पवित्रचरिताऽसि त्वं यत्तव पादपङ्कजं मम शिरसा स्पर्शनयोग्यम् अतः शिरसा एव तत् स्पृशामि, एष च स्पर्शः शेषः। ["शिरसि" इति क्वाचित्कः पाठः; तत्र अवच्छेदे सप्तमी]। "पतिरेको गुरुः स्त्रीणां सर्व्वत्राऽभ्यागतो गुरुः" इति नियमात्, पत्न्याः पादस्पर्शः शिरसि आपाततः अनुचितः इव यद्यपि प्रतिभाति, तथापि,—"पृथिव्यां यानि तीर्थानि सतीपादेषु तान्यपि। तेजश्च सर्वदेवानां मुनीनाञ्च सतीषु च॥" इत्यादिवचनात्, स्त्रीसम्माननार्थ्योतनार्थं सतीनामरुण्याः अरुन्धत्या अपि अधिकायाः सीतायाः पादस्पर्शः शिरसा रामकृतः न विरुध्यते इति मन्यामहे।

(ध) नेपथ्ये—अभिनेयवेशरचनागृहाभ्यन्तरे। अब्रह्मेति।—ब्रह्मभ्यः हितं ब्रह्मण्यं, तत् न भवतीति अब्रह्मण्यं, विप्राणां वेदानाञ्चाविनाश्यानां नाशो जातः

रामः । त्रायतां भोः ! किमेतत् ।

[ पुनर्नेपथ्ये । ]—

ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ।
लवणत्रासितः स्तोमस्त्रातारं त्वामुपस्थितः ॥ ५० ॥

इदानीम् इत्यर्थः । तदधुना साम्प्रतमित्याशयः । यद्वा,—ब्रह्मणे विप्राय वेदाय वा साधु यत् तद् ब्रह्मण्यं, नास्ति ब्रह्मण्यं वेदविप्रहितं यत्र तदब्रह्मण्यम् ; सर्वनाशकृत् उत्पातो जात इति भावः, तत्र सम्प्रति प्रतिकर्त्तव्यमिति अवध्यताप्रार्थना ; यथा अस्मान् दैत्यजीन् न निघ्नन्ति, तथा विधीयतां भवद्भिरिति फलितार्थः । [“अब्रह्मण्य-मवध्योक्तौ इत्यमरः । सप्तमे विभक्तिः, अतिशयकातरताद्योतनार्थं वा ] ।

किमत्याहितमभूत् तदेव सुविशदं व्यनक्ति, ऋषीणामिति ।—यमुनायाः नदी-विशेषस्य तीरे तटभूमौ वसन्ति ये तथाभूतानां तदुपकूलवास्तव्यानाम्, [ एतेन तेषां कोमलप्रकृतित्वं सूचितम् ] उग्रं सुमहत् तपः येषां तथोक्तानां तपःसिद्धि-सम्पन्नानाम् [ एतेन तेषां शापदानादिना प्रतीकारयोग्यत्वमस्तीति गम्यते, एव-मेवाह रघौ कालिदासः,—“बाधाभावे हि शापास्त्राः कुर्व्वन्ति तपसो व्ययम्” इति ] । ऋषीणां—तपोधनानां, [ का कथा तच्छिष्यभूतमुनीनामिति अर्थापत्तिः ध्वन्यते ] स्तोमः,—समवायः, लवणेन मधुदैत्यात्मजेन रावणभागिनेयेन, [ लुनाति इति लवणः, नन्द्यादित्वात् ल्युः, निपातनात् णत्वम् ] त्रासितः,—भीषितः सन्, त्रातारं—रक्षितारं शरण्यमिति यावत्, त्वाम् उपस्थितः,—प्राप्तः । तपःप्रत्यूह-माचरता विबुधद्विषा लवणेन भीषिताः तपोधनाः विघ्नप्रतिक्रियार्थिनः राममुपाययुः इति फलितार्थः । [ पुरा किल दिग्विजयार्थं बहिर्गतस्य रावणस्य मातृष्वसेयी रूपयौवनवती कुम्भीनसी दैत्यपतिना मधुना अपजह्रे, तद्गर्भाज्जातोऽयं लवणः इति रामायणी कथा अनुसन्धेया । लवणो हि स्वमातुलस्य सुरासुराणां विजेतुः रावणस्य वधवार्त्ताश्रवणेन नितान्तवितप्तहृदयः भगवतः राघवस्य किमपि अपकर्त्तुम् अक्षमः प्रत्यनीकालङ्कारवत् सरलचेतःसु तपोधनेषु अत्याहितमकरोदिति । अयं हि लवणवधोद्यमः सीताविवासनात् पश्चिमः अपि सीताविरहविधुरस्य असह्यपीडं सीता-निर्वासनं कथमपि कर्त्तुमक्षमस्य रामस्याऽपसारणाय आदावेव विनिवेशितः कविनेति विभाव्यम् । रामस्य निष्क्रमणात् परं कुमारः लक्ष्मणः दोहदपूरणमिषेण दुर्वह-गर्भगुर्व्वीं तां सीतां दण्डकारण्ये विजह्रौ ; रामस्य सन्निधौ तत्तु असम्भावितमभूदि-त्यतः अन्यथा उपवर्णितं मन्ये । एवमेव रघौ कालिदासः,—

राम:। आ:! कथमद्यापि राक्षसत्रास:!! तद् यावदस्य दुरात्मन: कुम्भीनसीपुत्रस्य समुन्मूलनाय शत्रुघ्नं प्रेषयामि। [कतिचित् पदानि गत्वा पुन: प्रतिनिवृत्य।] हा देवि! कथमेवंविधा गमिष्यसि! भगवति वसुन्धरे! श्लाघ्यां दुहितरमवेक्षस्व जानकीम् (न)।—

"कृतसीतापरित्याग: स रत्नाकरमेखलाम्।
बुभुजे पृथिवीपाल: पृथिवीमेव केवलाम्॥
लवणेन विलुप्तेज्या: तामिस्रेण तमभ्ययु:।
मुनयो यमुनाभाज: शरण्यं शरणार्थिन:॥" इति ]।

पथ्यावक्त्रं वृत्तम्॥ ५०॥

(न) आ: इति कोपपीडोभयसूचकमव्ययम्। ("आस्तु स्यात् कोप-पीड़यो:" इत्यमर:)। अद्यापि—इदानीमपि रावणवधाव्यवहितोत्तरकालेऽपि नि:शेषितराक्षसकुलत्वादित्याशय:। कथं—किमिति विस्मये, दुरात्मन:,—दुर्वृत्तस्य, कुम्भीनसी नाम रावणस्य स्वसा, कुम्भीव उखेव कट्फलमिव वा क्षुद्रकलस इव वा नासिका यस्या इति विग्रहे ["पद्दन्नोमास्—" (६।१।६३ पा०) इति सूत्रेण नसादेश: स्त्रियां ङीप् च निपात्यते।] तस्या: पुत्रस्य लवणस्य, समुन्मूलनाय —समूलमुच्छेदाय, यावत् प्रेषयामि—प्रेरयिष्यामि ["यावत्पुरानिपातयोर्लट्" (३।३।४ पा०) इति सूत्रेण लट्।] कतिचित्—कियन्ति पदानि गत्वा सीतां परिहायेति शेष:, पुन: प्रतिनिवृत्य—प्रत्यागत्य विहाय गन्तुमशक्यतयेति भाव:। कथमेवंविधेति।—एवंदशामापन्ना गर्भिणी मया च वञ्चिता सती एकाकिनी, कथं जनशून्यामरण्यानीं गमिष्यसीति भाव:। यद्वा,—एवमज्ञातकारणा विस्रब्धनिद्राऽपि, अचिरेण तु वनगमनाय आहूता अस्मान् परित्यज्याऽपुनर्दर्शनाय असहायैव गमिष्यसीति भाव:। ["कथमेवङ्गता भविष्यसि" इति पाठे तु,—एवङ्गता—ईदृशीम् अवस्थामापन्ना, कथं—केन उपायेन, भविष्यसि—वर्त्तिष्यसे जीविष्यसीत्यर्थ:]। मन्दभाग्या पुनरस्तु मत्परित्यागात् अस्मात् क्षणादेव नि:सहाया त्वमिति, तत् किमत्र विशेषमित्याह, भगवतीति।—भगवति!—सर्वज्ञे! वसुन्धरे!—पृथ्वि! श्लाघ्यां—महनीयमहीज्ज्वलचरितां, दुहितरं—कन्याम्, अवेक्षस्व—विपद: त्रायस्व। त्वमिदानीं मैथिलीसहाया भवेत्यर्थ:।

जनकानां रघूणाञ्च यत् कृत्स्नं गोत्रमङ्गलम् ।
यां देवयजने पुण्ये पुण्यशीलामजीजनः ॥ ५१ ॥

[ इति निष्क्रान्तः । (प) ]

सीता । हा सोम्य अज्जउत्त ! कहिं सि ! [ सहसोत्थाय । ] हद्दी ! हद्दी ! दुस्सिविणरणरणअविप्पलद्धा अहं अज्जउत्तं

---

अथेदानीं सीतायां कथङ्कारं श्लाघ्यत्वमित्थं सम्यक् सम्भूतं, तदेव विशदीकृत्य प्रकटयितुं तामुभयवंशैकशुभकरत्वेनोपवर्णयति, जनकानामिति ।—जनकानां—विदेहाधिपवंशप्रसूतानां, रघूणां—रघुकुलसमुद्भूतानाञ्च [ तद्राजत्वात् संज्ञायामञि "तद्राजस्य बहुषु तेनैवास्त्रियाम्" ( २।४।६२ पा० ) इति बहुषु अञो लुक् ]। कृत्स्न—समग्रं, गोत्रस्य वंशस्य मङ्गलं शुभं, [ विधेयप्राधान्यात् यदित्यस्य क्लीबत्वम् ]। या हि जानकी पुरा पूततमस्य निमिवंशस्य पुरञ्जयान्ववायस्य च अखिलशुभैकविधात्री अधिदेवताभूता आसीत् इति भावः। यां—सीतां, पुण्यं पवित्रं शीलं सदाचारः यस्याः तां—पूतचरितां, पुण्ये—अतिपवित्रे, देवाः इज्यन्तेऽस्मिन्निति देवयजनं यज्ञभूमिः, तस्मिन्, आकर्दोषलेशरहिते इत्यर्थः ; तथाविधायां वसुन्धरायाम् इति यावत्, अजीजनः—उदपीपदः ; हे वसुधे ! त्वमिति शेषः। जनककुलस्य रघुकुलस्य च इयं मूर्त्तिमती श्रीः। विश्वम्भरे ! त्वमपि इमां प्रसूय श्लाघनीया संवृत्ता ; अतस्तद्रक्षणं ते सर्वथैवोचितमित्यभिप्रायः। [ अत्र पुण्यशीलायां जनकतनयायां जनकरघुकुलयोः निखिलकुशलत्वारोपात् उभयकुलयोर्वास्तवत्वेन तस्या मङ्गलभूततया प्रकृतोपयोगित्वाच्च परिणामालङ्कारः ]। पथ्यावक्त्रं वृत्तम् ॥ ५१ ॥

(प) [ शाकुन्तले यथा शकुन्तलाप्रणयलीलापयोधिलहरीनिमग्नं नरपतिं सपदि ततः सम्यक् समुद्धर्त्तुमशक्नुवन् महाकविकुलशेखरः तत्रभवान् कालिदासः मदोद्धतस्य गजस्य कस्यचिदाश्रमपीड़ां जनयतः समागमं संसूचयन् आश्रमबाधनव्याजेन नरपतिं निष्क्रामयन् वैचित्र्यातिशय्यमजनयत्, तथैवात्र सम्भावितवैदेहीविरहविधुराशयस्यापि राघवस्याशरण्यस्य धर्मसंरक्षणधृतपरिकरस्य यमुनातीरभाजां शरणार्थिनां मुनीनां रक्षणाय विबुधविद्विषः लवणस्य वधाय च निष्क्रमणसमारम्भः प्रतिच्छायतया सन्निवेशितः तत्रभवता कविना ; पुनरच्छेदकारामसीतागतविशेषविच्छेदकारणत्वात् इदं बिन्दुनामकं सम्यक्‌ वेदितव्यम्। तथा चोक्तम्—"अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्।" इति ]।

आक्कन्दामि। (विलोक्य।) हद्धी! हद्धी! कधं एआइणीं मं पसुत्त उज्झिअ गदो अज्जउत्तो!!—ता किं दाणीं एदं? भोदु से कुविस्सं—जइ तं पेक्खन्ती अत्तणो पहविस्सं। को एत्थ परिअणो? * (फ)

---

* हा सौम्य आर्य्यपुत्र! क्वासि! हा धिक्! हा धिक्! दुःस्वप्नरणरणक-विप्रलब्धाऽहमार्य्यपुत्रमाक्रन्दामि। हा धिक्! हा धिक्! कथम् एकाकिनीं मां प्रसुप्तामुज्झित्वा गतः आर्य्यपुत्रः!! तत् किमिदानीमेतत्? भवतु तस्मै कोपिष्यामि—यदि तं प्रेक्षमाणा आत्मनः प्रभविष्यामि। कोऽत्र परिजनः?

---

(फ) स्वप्ने प्रलापबहुलं वचः उच्चार्य्य निद्रावेशविधुरतया प्रथमतः चक्षुषी निमील्यैव इदमाह, हा सौम्येत्यादि। दुःस्वप्नेत्यादि।—दुःस्वप्ने विप्रलम्भादिभूयिष्ठे स्वापसमये इत्यर्थः, यः रणरणकः प्रियतमविरहात् जायमान उद्वेगः तेन विप्रलब्धा। रामभद्रोऽत्र नास्तीति विमृश्य क्रन्दितुमारब्धत्वात्, वस्तुतः तत्र तदानीं रामो नास्तीति न विज्ञातवती, अतः विप्रलब्धेत्युक्तं, तत्तु अनुपदमेव व्यपगमिष्यति इति बोध्यम्। आर्य्यपुत्रं—रामम्, आक्रन्दामि—आकारयामीत्यर्थः। पश्चात्तु चक्षुः उन्मील्य, दृष्ट्वा च प्राणाधिकविरहितं तल्पं, तुषारवर्षिसहस्यचन्द्रमुखी अभीक्ष्णं विग्ना कुररीव रोरुद्यमाना सतारं चक्रन्द,—"हा धिक्! हा धिक्! कथमेकाकिनीम्" इत्यादि। एकाकिनीम्—असहायाम्। उज्झित्वा—विहाय। तत् किमिदानीमेतत्?—पुरा हि कदापि भवान् एकाकिनीं मां विहाय क्वापि न गतवान्, तत् कथं हि मे इदानीम् असम्भावितमेतत् दुःखमापतितमिति भावः। भवत्विति।—तत् यदेवास्तु इत्यर्थः। तस्मै—रामभद्राय, कोपिष्यामि—कपटकोपं करिष्यामि, अस्याऽपराधस्य चालनाय इत्यर्थः, यदि तं—रामं, प्रेक्षमाणा—पश्यन्ती सती, आत्मनः,—स्वस्मै इत्यर्थः, [सम्बन्धविवक्षया षष्ठी] प्रभविष्यामि—प्रभुर्भविष्यामि; आर्य्यपुत्रस्य मोहनीयरूप-लावण्यदर्शनादिना तद्गतहृदया विमुग्धा च भूत्वा सपद्येव तदधीना भवामि, अतः मामरूपकोपनाशे प्रभुत्वं सुदूरपराहतमेव का कथा कोपस्येत्याशयः। सत्यं ह्येतत् सतीनामेवं भवति पतिसन्दर्शनादिति। [अत्र "दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने" इत्युदाहृतवतः तथा "अनुनयपर्य्यन्तासहत्वे तु अस्य न विप्र-लम्भभेदता, किन्तु सम्भोगसञ्चार्य्याख्यभावत्वम्" इत्युक्तवतो दर्पणकारस्य वाक्यमत्र रसभावनाचतुरैः बोद्धव्यम्]।

दुर्मुखः। [प्रविश्य।] देइ! कुमारलक्खणो विसवेदि, सज्जो रहो, आरुहदु देई त्ति। * (ब)

सीता। इअमहं आरुहम्मि। [उत्थाय परिक्रम्य।] परि-प्फुरइ विअ मे गब्भभारो, ता सणिअं गच्छह्म। † (भ)

दुर्मुखः। इदो इदो देई। ‡

सीता। णमो णमो तवोधणाणं, णमो णमो रहुउल-देवदाणं, णमो णमो अज्जउत्तचरणकमलाणं, णमो णमो सअलगुरुअणाणं। § (म) [इति निष्क्रान्ताः सर्वे]।

इति चित्रदर्शनो नाम प्रथमोऽङ्कः॥ १॥

* देवि! कुमारलक्ष्मणो विज्ञापयति, सज्जो रथः, आरोहतु देवीति।

† इयमहमारोहामि। परिस्फुरतीव मे गर्भभारः, तत् शनैर्गच्छामः।

‡ इत इतो देवी।

§ नमो नमस्तपोधनेभ्यः, नमो नमो रघुकुलदेवताभ्यः, नमो नमः आर्य्यपुत्र-चरणकमलेभ्यः, नमो नमः सकलगुरुजनेभ्यः।

(ब) कुमारलक्ष्मणः—सौमित्रिः, देवावरजत्वेनैवमभिधानम्। विज्ञापयति—आदिशति। सज्जः,—तव दोहदमापूरयितुं वनप्रयाणाय प्रगुणीकृतः, सुखगमनोप-योगिवाहनादिभिः संनद्धः इत्यर्थः।

(भ) परिस्फुरति—स्पन्दते। गर्भभारः—भारभूतः गर्भः, उदरस्थः शिशुः इत्यर्थः। शनैः—मन्दंमन्दम्। ["सिढिलम्" इति पाठे—शिथिलमिति तस्यार्थः]।

(म) रघुकुलेत्यादि।—देवताः हि विष्णोरंशाः, अतः प्रयाणकाले तासामभि-वन्दनमुचितमेव।—"आदित्यमण्डले विष्णुं ध्यात्वा यात्रां प्रवर्त्तयेत्" इति स्मरणात्। यद्यपि सतीनां पत्युरेव केवलं गुरुत्वेनादौ आर्य्यपुत्रचरणकमलान्यभिवन्द्य पश्चात् सकलगुरुजनानां वन्दनमुचितं, तथाप्यत्र प्रथमं तपोधनादीनां वन्दनन्तु पति-कृतवन्दनदर्शनात् इति वेदितव्यम्। [मूले, "तवोधणाणं," "रहुउलदेवदाणं" इत्यादि पाठदर्शनात् "तपोधनानां" "रघुकुलदेवतानाम्" इत्यवमेतद्भाषान्तरं समी-चीनमेव विभावयामः। "क्वचिदपवादविषयेऽप्युत्सर्गोऽप्यभिनिविशते" इति न्यायात् चतुर्थीं बाधित्वैव षष्ठी प्रसक्ता। अथवा—"चतुर्थ्यर्थे षष्ठी" इति पिङ्गलाचार्य्यमतेन चतुर्थीस्थाने षष्ठी अपि अनुशिष्टा इति ध्येयम्। सर्वत्र गौरवात् बहुवचनम्]।

# प्रथमाङ्कस्य विवृतिः ।



अथ तत्रभवान् निखिलमहाकविकुलसततोपगीयमानतुहिनाचलामलतुषारावदातविधौतपवित्रकीर्त्तिः काविदकलापकुञ्जरशिरःशेखरः भवभूतिः, अदृष्टचरमभूतपूर्वमेकमभिनवं करुणविप्रलम्भाख्यशृङ्गारमयं नाटकमुपनिबद्धुमभीप्सुरादौ जनवगीतशिष्टाचारपरिप्राप्तां सज्जनसदाचारसञ्चरणपरिपूतविशोधिताञ्च कविकुलवन्दनाविधायिनीं द्वादशपदविनिबद्धां देवस्तुतिमयीं सभ्यानां महाऽऽनन्दसन्तानविधायिनीं नान्दीमेकामाजक्रे ।

अथ सूत्रधारनटौ भगवत्कालप्रियनाथोत्सवसमये समवेतान् सभ्यसङ्घान् कवेः तत्रभवतः भवभूतेः कृतिमपूर्वामेकामभिनेष्याव इति विज्ञापयन्तौ अवान्तरे वितथाम् आयोध्यिकभूमिकामधिगत्य सूत्रधारः "यथा स्त्रीणां तथा वाचां साधुत्वे दुर्ज्जनो जनः" इत्यादिना स्ववाक्यदोषमुररीकुर्व्वन् भगवतः ससीतस्य रामभद्रस्य नवे राज्ये अभिषेकं प्रस्तोतुमारब्धवान् तत्कालसमुचितां लोकपद्धतिञ्च निरूपयितुं न्ययुङ्क्त । अथ यदा हि दशमुखं निहत्य सीतामुद्धृत्य च उत्तरकोशलमुपगम्य अभिषेकसदाचारम् अनुतष्ठिवान् भगवान् रामभद्रः, ततः प्रभृति एव स्वानां लङ्कासमरसुहृदां तपोधनानाञ्च विसर्जनात् तदैव वशिष्ठाऽधिष्ठितानामरुन्धतीसहितानां श्वश्रूणां जामातुः ऋष्यशृङ्गस्य द्वादशवार्षिकं सत्रं प्रति दोहदवतीं कठोरगर्भगुर्व्वीं जानकीं विहाय प्रयाणात् च विमनायमानां सीतामनुमोदयितुं वासभवनप्रयाणं भगवतः रामभद्रस्याऽभिनयन्तौ प्रस्तुतकथाक्षेपिकां प्रस्तावनामुपन्यास्यतां निरक्रमिष्टाञ्च तौ ।

अथ भगवान् करुणामयः रामभद्रः तत्रभवतां जनकानां विदेहगमनात् गुरुशोकसागरनिमग्नां सीतां सान्त्वयितुं शुद्धान्तागारमध्युवास । अवान्तरे महर्षिरष्टावक्रः ऋष्यशृङ्गाश्रमात् रामं विज्ञापयितुं वशिष्ठसंवादमादायाऽयोध्यामुपाययौ । अथ मुनिप्रवरः प्राक् शान्तायाः भगवत्याः अरुन्धत्याश्च निदेशात् सीतादोहदमापूरयितुमावेद्य उदीर्य्य च पश्चात् जानकीसमाश्वासनभूयिष्ठां भगवतः वशिष्ठस्य वाचम्, ऊर्जस्वलं रघूणां कुलं प्रजासमाराधनेषु एव प्रसितमिति उपादिशत्, तच्छ्रुत्वैव भगवान् रामभद्रः प्रजाः अनुरञ्जयितुं स्नेहं दयां सुखं सर्वं हि जीवलोकं विसृष्टुमीशे, अन्येषां का कथा प्राणसमामपि जानकीं परित्यज्यतः नास्ति मे व्यथेति सपदि विषीदन्नेतन्नाटकबीजभूतं सीताविवासनं प्रत्यशृणोत् ।

अथ कियता गच्छता कालेन, कुमारः सौमित्रिः दुर्मनायमानां सीतां प्रीणयितुं भगवता रामभद्रेण पुरतः आदिष्टान् चित्रकरान्, ताड़कानिधनाय भगवते रामभद्राय कौशिकेन सानुग्रहं प्रसादीकृतानि सरहस्यानि जृम्भकास्त्राणि आरभ्य सीतायाः आ हुताशनविशुद्धेः चित्राणि अङ्कापितानि, तानि समादाय च तान् समुपस्थितान्, व्यजिज्ञपत्। तदाकर्णनसमकाल हि रघुमणिः परिम्लानाननकान्तिः सखेदमाह, देवि! एष हि अलीकलोकापवादः त्वां जीवितव्यशेषमपसारयिष्यति, अधन्येन च कुलधनभूतं यशः एव केवलमभीप्सुना मया प्रसूनमालायितायाः ते कियन्ति चरणावमर्द्दनानि कृतानि इति बहुधा सवाष्पगद्गदं विललाप।

अत्र स्वभावधीरः रामभद्रः तपोधनतपस्तेजःसम्भूतानि दिव्यास्त्राणि सीतायै प्रादीदृशत्, मा ह्यवनतमुखी तानि सगौरवं ववन्दे। ततः मिथिलावृत्तान्तं प्रादर्शय। तदा तु जानकी प्रियतमसौम्यमुखमण्डलम् अचिरप्रभाद्युतिविद्योतितमपि चिरसुषमं निरीक्ष्य गद्गदकण्ठी अभाषीत्, स्मरामि खलु सर्वं यत् यूयं चत्वारः भ्रातरः गृहीतमाङ्गलिकोपचाराः तत्र वर्त्तन्ते इति। अथ लक्ष्मणः विवाहात् परम् अयोध्यागमनपथे भगवद्भार्गवविजयं दर्शितवान्। तत् दृष्ट्वा विनयमाहात्म्यपरीतमूर्त्तिः रघुवंशकीर्त्तिः गुरूणामवमाननाञ्च श्रोतुमशक्नुवन् स्वविजयवार्त्तोपवर्णनं च स्वस्य पुरत एवोपगीयमानमवलोक्य वैलक्ष्याऽवनतमुखः "बहुतरं द्रष्टव्यमस्ति—अन्यत्र दर्शय" इति लक्ष्मणाय निदिदेश।

अथ सौमित्रिः मिथिलातः वयमयोध्यामुपगता इति प्राह। ततः नवजलधरविनिन्दितध्वनिः रघुमणिः तातपादजीवितदशायां मातॄणामनुपमस्नेहपीयूषधारानिषिक्तानां तेषां दिवसाः कियत्सुखेन हि व्यतीता इति विभाव्य परं मोहमुपागतः। जानकी च तदा कियन्ति सुखानि अदित, तदनिशमनुस्मरन् सीतायां रतिं प्रकटीकृत्य शृङ्गाररसं समगीधाचक्रे। ततस्तु लक्ष्मणः मन्थराप्रस्तावं प्रासौत्। रामभद्रस्तु गुरुभिरभ्यनुज्ञातं स्ववनविवासनं सर्वथैवाऽस्तुदमपि मातुः कैकय्याः अकीर्त्तिकरत्वेन तत् तदैव विजह्नौ। अनुपदं हि निषादाधिपतिनिषेवितं शृङ्गवेरपुरमिङ्गुदीपादपसनाथमदर्शयत्। तत्र पुनः यौवराज्यभाजं देवं राघवं जटासंयमनिरतमवलोक्य सती सीता कियदपि खेदमगत्वा स्वभाग्यविपर्य्ययादेवमसम्भावितं दुःखमापतितमिति परं विसिस्माय। ततश्च प्रसन्नपुण्यसलिलां रघुकुलदेवतां भगवतीं भागीरथीमवलोक्य युगपदेव सर्वे प्रणेमुः। अथ भगवान् रामभद्रः "अम्ब! सीतायां शिवानुध्यानपरा भव" इति ययाचे, एतेन च स्ववंशकुलाङ्कुरयोः कुशलवयोः भागीरथीपरिपालनं सीतायाः प्राणवियोगव्यवसितायाः कथञ्चित् समाश्वासनं च विवव्रे। अथ लक्ष्मणः

भरद्वाजाश्रमं कियत्कालमध्युष्य, ऋषिप्रदर्शितमार्गेण गच्छन् कालिन्दीतटस्थितं श्यामनामकं वटपादपं प्रदर्शितवान्।

अथ "किमिमं स्मरसि आर्य्यपुत्र"! इत्येवं जानकीजिज्ञासया सर्वथा-प्रकृति-रञ्जनो रामचन्द्रः अध्वसञ्जातश्रमापहं मन्दमधुरशीतलानिलसम्पादितसंवाहनक्रियम् इमं कथं विस्मरामीति अपि च यस्य सुशीतलतलप्रान्ते अलसविलसितपरिक्लमगात्रैः अशिथिलपरिरम्भमादधती त्वं मम अमन्दोरसि विस्रब्धं विश्रामसुखं लभेथाः, तत् न विस्मृतं मया इत्युक्तवान्। ततो विन्ध्याटव्यां विराधोपरोधमाव्यत् लक्ष्मणो जन-स्थानप्रस्थानसमारम्भञ्च। तस्मिंश्च गिरिसरिन्निर्झराणामनिर्वचनीयानि सौभाग्य-चिह्नानि वैखानसनिषेवितवनोपान्तानि, गोदावरीकीलालकल्लोलकोलाहलमुखरित-कन्दरम् अविरतवारिधाराविवर्षिवारिधरैरमलश्यामलं प्रस्रवणं नाम पर्वतमुपावर्णयत्। वर्णितानि पुनः गोदावरीतीरे प्रसूनसुरभीणि स्वच्छन्दनिमज्जनानि, तदुपान्त-तीरवनवर्त्तनानि च। पुष्पशय्यारमणीये तस्मिन्नशिथिलपरिरम्भव्यापृतानां स्वैषां विभावरी गोदावरीतटविटपिपादप्रान्ते धरणिजानिन्दिताङ्गसङ्गमङ्गाविनाऽपीरणीय-सीवाऽभूत्।

अतः परं पञ्चवट्यां विकटमुखनासाया: शूर्पणखायाः संवादमवलम्ब्य कमल-कोमलमानसा सीता विगतवियोगविपुलक्लेशः पुनरापतितः इति मत्वा विरहविनय-नम्रा बभूव। रामस्तु स्वयं वियोगवक्तां तथाविधां सीतां, "न चेयं पञ्चवटी न चापि शूर्पणखा, चित्रमेतत्" इति परिसान्त्वयन् पञ्चवटीवनानिवासविवशस्वान्त-मद्भुतात्ममपरीक्षमिव विज्ञाय स्वयं चौणोजायाः पञ्चवटीप्रस्थानरूपविगतेतिहासं सस्मार। ततस्तु कनकमृगमायया वैदेहीं मोहयित्वा अतुलैश्वर्य्यबलवपुलो रावणः समपहृत्य च तां कियतां रामरोदनकरुणहृदयानां विवर्त्तनानामपि विशिषक्लेशं सञ्जनयामास इत्युपवर्णिते तदानीं पतिपरायणा पविनम्रचित्ता सीता मन्निमित्तमेवं दुर्विषहं विषमक्लेशजालं बुभुजे भगवान् रामचन्द्रः इति विचिन्त्य नितरामनुतप्तवती। ततश्च सीताहरणमनुस्मृत्य गलदश्रु विलपती लक्ष्मणस्य शोकोक्ति-प्रवणार्द्रमानसस्य रामस्य च विलापवर्णनम्। अतश्च मन्वन्तरवृद्धगृध्रराजस्य जटायुषो विशिषविक्षोभकरं चरितञ्चाभिदधे।

अनन्तरं जनस्थानपश्चिमाशास्थितमञ्जुलकुञ्जमञ्जितं दण्डकारण्यभागं दर्शया-मास। ऋष्यमूकनामनगे महामुनेः मतङ्गस्याश्रमपदं सिद्धशबरीं श्रमणां पम्पासरोवरञ्च प्रदर्शितवान्। ततस्तु मदमत्तमल्लिकाक्षपक्षिणां पक्षपवनं लङ्घित-चञ्चलनालश्वेतसरोजसमूहोपशोभिताम् परमरमणीयकुवलयचयाञ्चिताने कानन्द-

प्रदर्शनतत्परा वरश्चांशुभागान् स्वाम्प्रवाल्दीर्घमनपतनशीलन्तरालमवलोकितवान्। ततः सौमित्रिः सीतापरिहरणजन्यशोकसागरमग्नजीवलोकमहोपकारकं महाभागं मारुतिं प्रदर्शितवान्। सर्वजनरञ्जनाञ्जनानन्दनस्य साक्षात्कारः सौभाग्यवशात् प्राप्तः मत्कृतार्थतया सर्वं जगत् कृतार्थतामवापेति दाशरथिर्जगाद।

अथ सुरभिकुसुमसुशोभितकदम्बसरलशाखामण्डनमयूरीकृतनृत्यभाजि यत्र चानुभावमात्रावशिष्टप्रनष्टधूलिमलिनशरीरश्चीरार्यपुत्रः कथं विगतचैतन्यवत् तरुतले पतितः साश्रुनेत्रसौमित्रिणा विधृत इति विचित्रचित्रनगस्य किं नाम? इत्येवं वैदेही प्रश्नवणोपवर्णित-कुसुमित-लततति-विराजमान-मञ्जुकुञ्जाभभिदि-तुङ्गशिखरोपकण्ठस्य विनदन्नबलाकवलाहककाकलीकलितकुञ्जर्मालतस्य तस्य माल्यवतः अरण्याऽऽवहिषाना रामेण निवारितौ लक्ष्मणः चित्रप्रदर्शनव्यापारात्। कौशल्यानन्दनस्य तथा "बहुमानास्पदकपिरत्नसामुद्रगीरप्रवर्द्धमानाद्भुतयुद्धचित्रमतः परं परिश्रान्तेयं विश्राम्यताम्" इति लक्ष्मणोक्तिरुपवर्णिता।

ततश्चित्रदर्शनतो जानक्या प्रसन्नगम्भीरारण्यश्रेणीभ्रमणसुशीतलशुभ्रगर्सलिलाभागीरथीपरमपूतजलावगाहनवाञ्छायां विज्ञापितायां "गुरुजनाज्ञापालनाय चास्याः मनोरथपूरणं करणीयमिति ससारथी रथः सज्जीकृत्यानेतव्यः" इत्थं समादिदेश दाशरथिः। ततस्तु निद्रावशवर्त्तितया परमप्रियस्वपतिपरितोषमातन्वती भयश्रमजनितघर्मबिन्दुरश्मित-निशाकरकिरणसंस्पर्शप्रसुतजलबिन्दुनिचित चन्द्रकान्तमणिनिर्मितहारप्रतिमबाहुलतां स्वकण्ठगतामित्यनुभूयाऽनिर्वचनीयभावं बुभुजे रामभद्रः। चित्रप्रदर्शनव्याजेन इत्थं पूर्वरामचरितं प्रदर्शितं महाकविश्रीकण्ठेन।

अथ दुर्मुखोपस्थितौ विज्ञापितायां प्रतीहार्यां पौरजानपदानां कार्य्यपरिज्ञानाय नियुक्तो गूढचर इति विचार्य्य प्रकाशमन्तःपुरप्रवेशनाज्ञां ददौ दाशरथिः। "परमपवित्रचरित्राया जनकतनयाया अचिन्तनीयमिमं लोकापवादं कथं स्वामिनि निवेदयामि!! अथवा नियुक्तोऽहं मन्दभाग्यस्तादृशे कर्म्मणि" इति दुर्मुखः समचिन्तयत्। तदानीन्तु रणरणकविधायि-विरहभावनया उद्विज्यमानायाः सीतायाः स्वप्नोद्वेगमाकर्ण्य विचलितचेता रघुपतिः सस्नेहं परिस्पृशन् तदङ्गं, "निरुपधिनिर्म्मलं दुर्लभमिदं सज्जनप्रेम कथं हि प्राप्यते" इति चिन्ताऽऽकुलितचेता आसीत्।

अत्रान्तरे दुर्मुखः पौरजानपदप्रशंसामुपवर्ण्य रामस्य स्वदोषजिज्ञासावसरे अयोध्यावासिनः दुर्जनाः सीताया रावणभवनवासकृतदूषणमाशङ्कन्ते इति भगवती राघवस्य कर्णे निभृतमभिदधे। तत् श्रुतिसमकालमेव सहजधीरो रघुवीरः तथाविधं तीव्रसंवेगं वाग्वज्रं समाकर्ण्य सपदि मोहमुपागतः।

अथ राघवः "रघूणां प्रजारञ्जनमेव राजधर्मः भगवद्वशिष्ठादेशश्च सम्प्रति तादृशीं निष्कलङ्कातिपूतरविवंशगौरवे मलयेत् कलङ्कस्तर्हि दौर्भाग्य किमस्मात्? धिङ्मां जीवितान्तरतुल्यदारपरित्याग्यम्!! हे राममयजीविते! तव जन्मपरिग्रहरूपानुग्रह-प्रकाशेन धरित्री पवित्रीभूता" इत्यादि बहु विलप्यापि स्वकर्त्तव्यवशात् "त्याज्या-ऽसि" इति उक्त्वा स्वयं लक्ष्मणमानेतुं दुर्मुखं समादिदेश। सोऽपि लक्ष्मणा-नयनायोन्मुखो दुर्मुखः सीताविवासनशोकसन्तप्तधीः "कथं हि भगवान् दुर्जन-वचसा अतीव पवित्रायां गर्भस्थितपवित्ररघुकुलाङ्कुरायां सीतायामेवं व्यवस्यति" इति तदाकर्णनसमकालमुवाच। ततो विवशबुद्धिस्वभावो राघवः दुर्भाग्यवशात् स्वकुले लोकापवादकलङ्कबीजं समुद्भूतमिति विभाव्य घृणितनृशंसाद्यतिवादैरात्मानमवमन्य स्वनिलयपरिपालितपक्षिपललविक्रयिवत् व्यवसितमतिकष्टञ्च इति मेने। सर्व्वतः पवित्रामिमां स्पृष्ट्वा कथं पापभागिनीं करोमीत्यपूर्व्वकर्मचण्डालं मां विमुञ्चेत्याद्य-भिधाय तस्या मस्तकोपधानभूतं स्वबाहुमाकर्षन् सम्प्रति विपर्य्यस्तं जीवलोकस्य निजजीवनधारणानर्थक्यञ्च चिन्तयन् वशिष्ठारुन्धतीविश्वामित्रादीन् लक्ष्यीकृत्य स्वदुर्जनतामुपालब्धवान्। "विश्वासविशेषसञ्जातनिद्रां गर्भभारविनम्रां वराकीं वैदेहीं कथं रात्रिञ्चरेभ्यो विनियोजयामि?" इति साश्रु विललाप।

अथ यमुनातीरवासिभिर्ऋषिभिर्विज्ञापिते लवणत्रासे शत्रुघ्नं लवणहननार्थ-मादिश्य सीतात्यागदुःखितो रामचन्द्रः गृहात् प्रतस्थे। अतान्तरे स्वप्नोत्थिता अजानती तु शोकसम्भारपूर्णं स्वभाग्यविपर्य्ययं रघुकुलकुलाधिदेवताभूता सती सीता चिराय स्निग्धगम्भीरनिर्घोषं स्पन्दनं लक्ष्मणाधिनायकमधिरुह्य "रघुकुलदेवताभ्यः आर्य्यपुत्र-चरणकमलेभ्यः तपोधनेभ्यश्च नमः" इति अभीक्ष्णमुदीर्य्य चिराय वनाय प्रतस्थे। इत्यञ्च समाप्तिमगमत् प्रथमाङ्कः।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन कुलपतिकल्प-"बि,ए" इत्युपनामक-
श्रीमज्जीवानन्दविद्यासागर-भट्टाचार्य्यविरचितायां तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण-श्रीमन्नित्यबोधविद्यारत्नाभ्यां
परिवर्त्तित परिवर्द्धितायां सुखबोधिनीसमा-
ख्यायाम् उत्तररामचरितव्याख्यायां
प्रथमोऽङ्कः॥ १॥

# द्वितीयोऽङ्कः ।

( पञ्चवटीप्रवेशः । )

[ नेपथ्ये । ] स्वागतं तपोधनायाः ? (क)

अध्वगवेशा तापसी । [ प्रविश्य । ] अये ! वनदेवता—इयं फलकुसुमपल्लवार्घ्येण मामुपतिष्ठते !! (ख)

( क ) स्वागतमिति ।—सु सुखेन आगतमागमनं, सुखस्य आगतं प्राप्तिर्वा, भवतीति शेषः । निरुपद्रवमागमनं विज्ञातुमेव हि लोकसदाचारसिद्धः कुशलप्रश्नः ; तवागमने किं क्लेशो जात इत्याकूरिकः । ( "स्वागतं कुशलप्रश्ने" इत्यमरः । ) [ आत्रेयी-वासन्त्योः अनीचपात्रत्वात् संस्कृतभाषाप्रयोगः न दोषावहः ] ।

( ख ) अध्वनि पथि गच्छन्तीति अध्वगाः पथिकाः, तदुपयुक्तः वेशो यस्याः सा । अध्वगानां पथिकानां वेशः इव वेशः यस्याः तथाविधा, इति वा व्यासवचनम् । ( "अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि" इति कोषः ) । वनेति ।—वनदेवता—वनाधिदेवताभूता काचित् तापसी, (इयं हि वासन्ती नाम सीतायाः प्रियसखी, तत्तु तृतीयाङ्के व्यक्तं भविष्यति ) । फलेति ।—अर्घ्यम् [ अर्हतेः करणे घञ्, न्यङ्क्वादित्वात् कुत्वम् ; ततो देयार्थे यत् । अयं शब्दस्तु सामगैः सयकारः क्लीवलिङ्गश्च पठ्यते ; निर्यकारस्तु वेदान्तरपारगैः इति ] । पूजार्थोपचारः,—दूर्वाक्षतादिः ( "मूल्ये पूजाविधावर्घः" इत्यमरः ) फलानि च कुसुमानि च पल्लवाश्च तैरुपचितेन अर्घ्येण, फलकुसुमकोमलकिसलयपरिकल्पितेनार्घ्यपात्रेण उपरुद्धहस्तेत्यर्थः । उपतिष्ठते—पूजयति, मामिति शेषः । अतिथिपूजनस्यावश्यकर्त्तव्यतया, वेदविदमभ्यागतां मामवलोक्य अर्घ्यपात्रव्यस्तहस्ता मदभिमुखमागच्छतीत्यर्थः । "सर्वदेवमयोऽतिथिः" इत्यादिवचनात् तेषां देवत्वं बोध्यम् । [ "उपाद्देवपूजा—" इति वार्त्तिकराद्धान्तेन आत्मनेपदम् ] । प्राक्तनविधापकरणैः यद्यपि शास्त्रेषु अर्घ्यरचना विहिता, तथापि वनौकसां तापसीनां वनभूमिसुलभैः फलकुसुमपल्लवादिभिरर्घ्यदानं न विरुध्यते ।—"उक्तानुक्तैस्तथा पुष्पैर्जलजैः स्थलजैरपि । पत्रैः सर्वैः यथालाभं भक्तिमान् सततं यजेत् ॥" इत्यादिवचनात् । अर्घ्यद्रव्याणि यथा—"आपः क्षीरं कुशाग्राणि दधि सर्पिश्च तण्डुलाः । यवाः सिद्धार्थकश्चैवमष्टाङ्गार्घ्यं प्रकीर्त्तितम् ॥" सिद्धार्थकः,—श्वेतसर्षपः ।—"रक्तबिल्वाक्षतैः पुष्पैः दधिदूर्वाकुशैस्तिलैः । सामान्यः सर्वदेवा-

वनदेवता। [ प्रविश्य अर्घ्यं विकीर्य्य (ग) ]—

यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति।
तरुच्छाया, तोयं, यदपि तपसो योग्यमशनम्,
फलं वा, मूलं वा, तदपि न पराधीनमिह वः॥ १॥

नामधेयोऽयं परिकीर्त्तितः॥" इति देवीपुराणम्। रक्तविल्वं—कुङ्कुमं "जाफ्रान्" इत्यपभाषा। "अभावे दधिदुग्धादेर्मानसं वा प्रकल्पयेत्" इत्याचारादर्शः। "चन्द-नोदकसंमिश्रं दत्त्वाऽर्घ्यंकुसुमं रवेः। मधुपर्कः—" इत्यादि स्मृतिः। "दधिसर्पिर्जलं क्षौद्रं सिता चैतैश्च पञ्चभिः। प्रोच्यते मधुपर्कस्तु—" इत्यादि च शास्त्रदर्शनात् प्राक्कालप्रथितपूजार्थद्रव्याण्येतान्यवगम्यन्ते ]।

( ग ) अर्घ्यमिति।—विकीर्य्य—विक्षिप्य, तापसीं प्रतीति शेषः।

विवासितायाः सीतायाः द्वादशपरिवत्सरेषु व्यतीतेषु किं हि कुशलमयम् अकुशलं वा उदन्तजातं समजनि, तत् तावत् नीरसं वस्तु विष्कम्भकेणावेदयितुम् अभीप्सुः तत्प्रियसखी वनदेवता वासन्ती, इदानीं प्रसङ्गतः वेदविदमात्रेयीमतिथि-समुचितं सत्कृत्य तस्याः स्वच्छन्दचारित्वं सुमनायमानत्वञ्च प्रार्थयते, यथेच्छमिति।—इदं—मदीयमित्यर्थः, वनं, वो—युष्माकमेवेति विनयोक्तिः। [ न तु युष्मदनुरूपमेतत् स्पृहणीयप्रासादादिपरिशोभितमिति गम्यते, "युष्मदो गौरवे" इति बहुत्वम् ]। सत्य-प्येवं, यथाशक्ति सज्जनसभाजनस्य समुचितत्वात् आह, यथेच्छमिति।—यथेच्छम्—इच्छानतिक्रमेण, यथारुचि इत्यर्थः, भोग्यम् एतत्—मम परस्य वेति विभाव्यात्र नाभिलाषसङ्कोचः करणीय इत्यर्थः। यद्यपि वनभूमेः साधारणधनत्वेन यथेच्छ-मित्यादि शङ्काऽवसरः नोदेति, तथापि स्वस्य वनाधिदेवतात्वेन वने मदीयत्वं वर्त्तते इति प्रतिपादनाय तथोक्तिः। शङ्काकारणं किमपि नास्तीति ज्ञापयितुमाह, अयमिति।—अयम्—उपस्थितः इत्यर्थः, मे सुदिवसः,—भवत्याः समागमात् शुभ-दिनं समुदितमित्यर्थः। कथमस्य समागमात् सुदिवसः?—तत्रार्थान्तरन्यासपूर्वकमाह, सतामिति।—सन्तीति सन्तस्तेषां सतां—प्राणिनां, पुण्येन—सुकृतेन, कथमपि—देवानुग्रहादिकारणादित्यर्थः, सद्भिः,—साधुभिः, सङ्गः,—समागमः, भवति—जायते। [एतेन साधुसङ्गस्य दुष्प्रापत्वं ध्वनितम्]। हि एवार्थे। तत्र पुण्यप्रकर्षानुकूलदेवादन्यत् साधनान्तरं नास्तीति भावः। एवञ्च जन्मान्तरीयशुभकर्मपरिपाकवशादेव भवादृशीनां पुण्यश्लोकानां सन्दर्शनं भवति, तेन ज्ञायतेऽयं मे सुदिवस इति फलितार्थः। अतः

ताप। किमतोच्यते ? (घ)—

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः।

मयाऽद्य दुर्लभः साधुरेवाऽवसरः प्राप्त इत्याशयः। ("सत्ये साधौ विद्यमाने" "प्रशस्तेऽभ्यर्हिते च सत्" इत्युभयत्राप्यमरः)। यथेच्छभोग्यप्रकारं प्रदर्शयति, तरुच्छायेति।—तरोः छाया [जातानेकवचनाभावेन समासः। तरूणां छाया इति विग्रहे "छाया बाहुल्ये" (२।४।२२ पा०) इति सूत्रेण क्लीवत्वप्रसक्तिः]। तोयं जलं यदपि तपसः तपश्चरणस्य इन्द्रियसंयमादेर्वानुकूलतया योग्यं फलं वा मूलं वा अशनं, यत्किञ्चित् फलमूलादि भोज्यमस्तीति, तदपि तपस्विनोयोग्यं तपःसाधकानां समुपयुक्तम् इत्यर्थः, ["नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम्" (१।२।६९ पा०) इति सूत्रेणैकशेषैकवद्भावौ]। इह वने वो युष्माकं न पराधीनम् अनन्यायत्तं, स्वाधीनमिति निष्कर्षः, ततश्च आत्मद्रव्यवत् सर्वमेतत् यथेच्छं यथासुखमुपभुज्यतेति भावः। अत्र तपश्चरणयोग्याशनानि सुलभानि कुतः ? तदेव दर्शयति,—तथा हि अत्र प्रच्छायशीतले तरुतले निषद्याऽध्वखेदं विनोदय ; वनप्रसूनसुरभि स्वादु निर्मलञ्च निर्झरिणीसलिलं निपीय तृषामुपशमय ; कन्दमूलफलानि च भुक्त्वा बुभुक्षां वारयेति तात्पर्य्यम्। [अत्र पूर्व्वार्द्धे, "सतां सद्भिः" इत्यादिना सामान्यरूपेणार्थेन सुदिवसरूपस्य विशेषार्थस्य सोपपत्तिकत्वकरणात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। अपि च, परार्द्धे यथेच्छभोग्यत्वरूपकार्य्यस्य "न पराधीनम्" इत्यादिना अपराधीनत्वरूपकारणेन समर्थनात् कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासश्च। इत्यनयोः सजातीयसङ्करः। तथा "अयं मे सुदिवसः" इत्यादिकं प्रति अधिकहेतोरनभिधानात् जायमाननिर्हेतुकत्वदोषशङ्का, "भवत्सन्दर्शनात्" इत्यादि गम्येन हेतुना निरसनीया]। शिखरिणी वृत्तं—"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात्। अस्य प्रस्तारस्तु ५९३३० तमः॥ १॥

(घ) अत्र भवदनुपालिते वने आगमनात् सुदिवसोत्पादविषये इत्यर्थः, किमुच्यते ? किञ्चित् वक्तव्यं नास्तीति भावः। सतां समागमादन्यत् नास्ति किमपि प्रियतरमिह सुधियामिति तु तात्पर्य्यम्।

सतां सङ्गाज्जायमानेन पुण्यसमुच्चयेन किं हि फलं न प्रसूयते, सुहृत् तत्प्रतिपादनपुरःसरं प्रथमतः समभ्यर्थनपरितुष्टा तापसी वनदेवतायाः साधुत्वं सर्वथा प्रशंसितुमारभते, प्रियेति।—साधूनां सतां भवादृशीनामिति भावः, वृत्तिर्वर्त्तनं स्वभाव इत्यर्थः,

पुरो वा पश्चाद्वा तदिदमविपर्य्यासितरसम्
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २ ॥

[ इत्युपविशतः । ]

कायकृतव्यवहार इति यावत्,प्रायेण बाहुल्येन प्रिया निरतिशयप्रीतिजनिका। तथापि वाचां क्रौर्य्यं दोषः स्यात् तदाशङ्कामपनयति, मधुर इति।—वाचि वाक्ये नियमः संयमनप्रकारः, सत्याय मितभाषित्वरूपः इत्यर्थः, विनयेन शिष्टाचारभूयिष्ठतया अनौद्धत्येनेति यावत्, मधुरः सुखदः, न तु अशिक्षितानां सदम्भा वागिव नितरां चेतांसि व्यथयतीति भावः। साधवो हि नितरां कर्णामृतमेव भाषन्ते इत्याशयः। सत्यप्येवं मनोवृत्तेः कलुषत्वे सर्वमेव गतमत एवाह प्रकृत्येति।—मतिर्बुद्धिः प्रकृत्या स्वभावेन कल्याणी जीवानां शुभकरी, सततं जगतां शुभोत्पादने व्यापृता इत्यर्थः। तथापि असत्सङ्गवशात् तदन्यथा भवितुमर्हतीति शङ्कां निरस्यति, अनवगीत इति।—परिचयः प्रणयः अनवगीतः कपटादिदोषरहितत्वादनिन्दितः समधिकतृप्तिसाधक इत्यर्थः। सतां चरिते गर्हालेशविनाकृतत्वेनाकलुषं तेषां प्रणयित्वमाधिहरश्चेति भावः। तत् तस्मात् पूर्व्वोक्तबहुलगुणयोगादित्यर्थः, पुरः अग्रे सतां प्रणयस्येति शेषः पश्चात् परस्मिन् वा प्रणयात् परतः वा तत्र कश्चित् विशेषो नास्तीति भावः ; परिचयस्य तदभावस्य च उभयत्रैव समत्वात् अकलुषत्वात् प्रार्थनालेशरहितत्वाच्च सर्वदैकरूपमिति यावत्। अविपर्य्यासितः विपर्य्ययमप्राप्तः रसः अनुरागो यस्मिन् तत् तथोक्तं समरसं नित्यप्रीतिकरमित्यर्थः ; यत्र हि काचित् प्रार्थना विद्यते तत्रैव पुरः वा पश्चाद्वा इति शङ्का आयाति, साधौ आचरिते साध्वाचरणमसाधौ तु असाध्वाचरणमिति दर्शनात्, यत्र तु नैवं तत्र तु किमस्ति फलं पुरो वा पश्चाद्वा इति भावनाशाः इति तु तात्पर्य्यम्। अनुपधि अकपटं विशुद्धं सर्व्वथा निर्द्दोषमिदं रहस्यं साधारणैरज्ञेयमनिर्वचनीयं चरितमित्यर्थः, विजयते सर्व्वोत्कर्षेण वर्त्तते [ "विपराभ्यां जेः" ( १।३।१९ पा० ) इति सूत्रेण आत्मनेपदम् ]। साधुचरितवत् नान्यत् किमपि अवदातमखिललोकहितकरञ्चात्र इति भावः। ("कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे" इत्यमरः)। [ अत्र प्रस्तुतवनदेवताचरित्रोत्कर्षवर्णनप्रसङ्गेन सच्चरित्रवर्णनादुदात्तालङ्कारः। अपि च सतां चारित्र्योत्कर्षं प्रति प्रियप्रायवृत्तित्वादिरूपैककारणस्य पर्य्याप्तत्वेऽपि कारणान्तराणां तत्करत्वेनोपादानात् समुच्चयालङ्कारश्च, इत्यनयोः सापेक्षत्वेन सङ्करः। साधूनामित्यनेन वनदेवतायां साधुत्वाभि-

वन। कां पुनरत्रभवतीमवगच्छामि ? (ङ)

ताप। आत्रेयी अस्मि। (च)

वन। आर्य्ये आत्रेयि! कुतः पुनरिहागम्यते, किं प्रयोजनं वा दण्डकारण्यप्रवेशे ? (छ)

धानाभिप्रायात् प्रस्तुतत्वप्रतीतेः नात्राप्रस्तुतप्रशंसा शङ्कनीया, तत्र हि केवलाप्रस्तुतात् प्रस्तुतावगम इत्यवगन्तव्यम् ]। शिखरिणी वृत्तम् ॥ २ ॥

( ङ ) कामिति।—अत्रभवती का इति विज्ञातुमिच्छामीत्यर्थः।

( च ) आत्रेयीति।—ब्राह्मणोचितसंस्कारोपपन्ना, आत्रेयी-नामाऽहमस्मीत्यर्थः। अविगीतसम्भूतत्वात् तस्याः तथैव प्रसिद्धिः। तथा हि, आत्रेयः शुक्लयजुःसम्प्रदाय प्रवर्त्तकः, वंशगणनायां "भरद्वाजः आत्रेयात्, आत्रेयी माण्टेः" इति शतपथब्राह्मणे दर्शनात्; शुक्लयजुषां सम्प्रदायप्रवर्त्तकवंशगणनायाम् "आत्रेयीपुत्रादात्रेयीपुत्रः" इत्यपि प्रोक्तब्राह्मणे दृश्यते, अत एव भारतेऽप्युक्तं—"पुत्रमन्थनकर्म्मणः स्त्रीसंस्कारत्वेनोक्तत्वात् तत्सन्निधानादयं वंशः स्त्रीप्रधान उच्यते" इति। आत्रेयीपदस्य गर्भिण्याद्यर्थाभिधायकत्वेन रूढ़ित्वमपि दृश्यते, तथा हि यमः,—

"जन्मप्रभृतिसंस्कारैः संस्कृता ब्रह्मवञ्च या।
गर्भिणी वा तथा या स्यात् तामात्रेयीं विनिर्दिशेत् ॥" इति।

( छ ) आर्य्ये इति।—भो आत्रेयि! विदुषि! कुतः कस्मात् स्थानात् इह अत्र वने आगम्यते भवत्येति शेषः। किमिति।—दण्डकारण्यागमनं भवत्या किमर्थं स्वीकृतमित्यर्थः।

इदानीमात्मनः दण्डकारण्यप्रवेशप्रयोजनमभिधत्ते, अस्मिन्निति।—अस्मिन् प्रदेशे दण्डकारण्ये भूयांसो बहवः उद्गीथं प्रणवं सामवेदान्तर्गतगानविशेषञ्च विदन्तीति तथोक्ताः सगुणब्रह्मविदः उद्गीथवाच्यपरब्रह्मविदः सामोपासनाशीलाश्च अगस्त्य-प्रमुखाः अगस्त्यप्रभृतयो मुनयः इत्यर्थः, वसन्ति तिष्ठन्ति।

[ तथा हि,—छान्दोग्योपनिषत्;—"ओमित्येतदक्षरमुद्गीथमुपासीत" 'ओमित्ये-तदक्षरमुपासीत। ओमित्येतदक्षरं परमात्मनोऽभिधानं नेदिष्ठम्। तस्मिन् हि प्रयुज्यमाने स प्रसीदति। प्रियनामग्रहण इव लोकः,' इति भाष्यम्। "ओमि-त्युद्गायति तस्योपव्याख्यानम्", इति च प्रोक्तोपनिषत्; ओमित्यारभ्य हि यस्मा-दुद्गायति अतः उद्गीथः ओङ्कारः इत्यर्थः। इति रीत्या परस्मिन् ब्रह्मणि उद्गीथदृष्टिं कुर्वन्तः ये उपासते ते, दहरविद्याया अपि उपलक्षणत्वात् तद्विद्याजुषः वा इत्यर्थः,

आत्रेयी। अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति।
तेभ्योऽधिगन्तुं निगमान्तविद्याम्
वाल्मीकिपार्श्वादिह पर्य्यटामि ॥ ३ ॥

---

तथा हि छान्दोग्ये—"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इति। साम्नः हि पञ्चविधाः सप्तविधाः वा अवयवाः सन्ति। तत्र तावत् साम्नः आद्यः भागः प्रस्तोत्रा गेयः प्रस्तावनामा, द्वितीयः भागः उद्गात्रा गेयः उद्गीथनामा, तृतीयो भागः प्रतिहर्त्रा गेयः प्रतिहारनामा, चतुर्थो भागः पुनरुद्गात्रा गेयः उपद्रवनामा, पञ्चभिः युगपद्गेयः निधननामा इति पञ्चविधः। गानारम्भकाले सर्वैः ऋत्विग्भिः मिलित्वा हुङ्कारकरणरूपो हिङ्कारः। ओङ्कारपूर्वकत्वात् सर्वेषां वेदानां प्रणवरूपः प्रथमावयवः। इति सप्तावयवत्वमेतद्धि सप्रपञ्चमुक्तं छान्दोग्ये। अगस्त्यप्रमुखाणां तेषामुद्गीथविद्यायां प्रोक्तायां पारदृश्वत्वात् तथाऽभिधानं सङ्गच्छते इति बोध्यम्। तत्र हि छान्दोग्ये उद्गीथोपासना बहुधा प्रपञ्चिता, "वृष्टौ पञ्चविधं सामोपासीत" इत्यारभ्य "वर्षति स उद्गीथः" इत्युक्तम, "ऋतुषु पञ्चविधं सामोपासीत" इत्यारभ्य "वर्षा उद्गीथः" इत्युक्तम्। "पशुषु पञ्चविधं सामोपासीत" इत्यारभ्य "गावः उद्गीथः" इत्युक्तम्। "प्राणेषु पञ्चविधं परोवरीयः सामोपासीत" इत्यारभ्य "चक्षुरुद्गीथः" इत्युक्तम्। इति बहुधा उद्गीथोपासना विहिता। एवं हि "द्यौः उद्गीथः" "गावः उद्गीथः" "आदित्यः उद्गीथः" इत्यादिना तत्तद्दृष्ट्योपासना बहुधा उक्ता, विस्तरभयात् सर्वशः नोदाहृताः। एष हि सगुणब्रह्मोपासनाविधिः। एतेन तथाविधाः हि दण्डकारण्यवासिनः अगस्त्यप्रमुखाः बहवः ऋषयः सामगाः सगुणब्रह्मोपासनशीलाः कर्म्मिणः आसन्निति ज्ञायते ]।

तेभ्यः अगस्त्यप्रमुखेभ्यः [ "आख्यातोपयोगे" ( १।४।२६ पा० ) इत्यपादानत्वात् पञ्चमी ] निगमान्तविद्यां निगमाः वेदाः तेषामन्ताः चरमभागाः उपनिषद इत्यर्थः, तत्प्रतिपादितां ब्रह्मविद्यामधिगन्तुमध्येतुं वाल्मीकिपार्श्वात् वाल्मीकेः अन्तिकादिह दण्डकारण्ये पर्य्यटामि तेषामाश्रममन्वेष्टुं भ्रमामीत्यर्थः। ( पुरा हि द्विविधाः स्त्रियोऽनुभूयन्ते ; गृहमेधिन्यः ब्रह्मवादिन्यश्चेति। तथा हि हारीतः,—"द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च ; तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं

वन। यदा तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणाय उपासते, तत् कोऽयमत्र आर्य्याया दीर्घप्रवासप्रयासः? (ञ)

आत्रे। तत्र महान् अध्ययनप्रत्यूह इति दीर्घप्रवासोऽङ्गीकृतः। (झ)

वन। कीदृशः?

---

स्वगृहे च भैक्षचर्य्या" इति। यमोऽपि,—"पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते। अध्यापनञ्च वेदानां सावित्रीवाचनं तथा॥" इति। अतः गृहवधूनामेव केवलं वेदाध्ययनं निषिध्यते इति गम्यते। नृसिंहतापनीयश्रुतिस्तु इत्थमेवाह, तथा हि,—"सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति" इति। "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्री शूद्रो यदि जानीयात् मृतः सोऽधो गच्छति" इति निबन्धकृतामभिमतं व्याख्यानन्तु गृहिणीविषयकमेव, न तु ब्रह्मवादिनीपरमवधेयम्। अतः आत्रेय्याः परमब्रह्मवादिन्याः वेदाध्ययनं न विरुध्यते इति बोध्यम्)। इन्द्रवज्रा वृत्तम्॥ ३॥

(ञ) यदेति।—यदा—यतः, यदि पुनरित्यर्थः। [तावत् वाक्यालङ्कारे] अन्येऽपि मुनयः बहवः अध्येतारः, पुराणः प्राचीनः प्राचीनत्वादिहेतुकः प्रथितः पूजितश्च यो हि ब्रह्माणि वेदान् परमात्मानं वा वदति उपदिशतीति ब्रह्मवादी तं तथोक्तम्। तमेव प्रसिद्धमेवेत्यर्थः, प्रचेतसः वरुणस्यापत्यं पुमानिति प्राचेतसो वाल्मीकिस्तम्। ब्रह्मणो वेदस्य पारमन्तस्तत्र अयनं गमनं, प्रथमतः प्रभृति आ समाप्तेरविच्छेदेनाध्ययनं, तद्धि साङ्गोपाङ्गवेदेषु सम्यग्व्युत्पत्तिसाधनमित्यर्थः, तस्मै। दृश्यते हि बहवः अन्तेवासिनः गुरुसकाशमुपगम्य सममेव एवं वेदमभ्यस्यन्तीति; यद्वा—ब्रह्मणः वेदस्य पारे अन्ते अयनं गमनं तस्मै, अखिलसाङ्गवेदानध्येतुमित्यर्थः। उपासते—सेवन्ते। दीर्घप्रवासः महान्तं कालं व्याप्य सुदूरे प्रदेशे अवस्थानमित्यर्थः, तत्र प्रयासः यत्नः उद्यमः इति यावत्। किं फलमभिप्रेत्य भवत्या स्वदेशमुत्सृज्य क्लेशबहुलविदेशवासोऽङ्गीक्रियते इत्याशयः।

(झ) तत्रेति।—अध्ययनस्य वेदपाठस्य प्रत्यूहो विघ्नः, "विघ्नोऽन्तरायः प्रत्यूहः" इत्यमरः। महान् बलवत्तरः जातः इति शेषः। अतः तद्विघ्नोपशमार्थं, दीर्घप्रवासः,—सुदूरे विदेशे अवस्थानमङ्गीकृतः स्वीकृतः। [अङ्ग इति स्वीकारार्थकमव्ययम्। अनङ्गः अङ्गः कृत इति अभूततद्भावे च्वौ रूपम्]।

आत्रे। तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्त्तमानं दारकद्वयमुपनीतम्। तत् खलु न केवलमृषीणामपि तु चराचराणां भूतानामान्तराणि तत्त्वानि उपस्नेहयति। (ञ)

वन। अपि तयोर्नामसंविज्ञानमस्ति? (ट)

आत्रे। तयैव किल देवतया तयोः कुशलवौ इति नामनी प्रभावश्च आख्यातः। (ठ)

---

(ञ) तस्य भगवतः वाल्मीकेः सविधे इत्यर्थः, केनापि देवताविशेषेण—भगवत्या भागीरथ्येत्यर्थः, सर्व्वेषु प्रकारेषु निखिलेषु विषयेषु, अद्भुतमाश्चर्य्यजनकमिति यावत्। स्तन्येति—स्तने भवं स्तन्यं क्षीरं तस्य त्यागः मातृस्तन्यपरित्यागोपलक्षितः कालः इत्यर्थः, स एव मात्रा कालपरिमाणं यस्य तस्मिन्, तदुचिते वयसि बाल्ये इति यावत्, वर्त्तमानं, यस्यामवस्थायां शिशुभिः स्तन्यपरित्यागः क्रियते तावत्यावयस्कमित्यर्थः। दारकद्वयं—शिशुयुगलम्। उपनीतम्—आनीय प्रदत्तम्। तत्—दारकद्वयम्। खलु—निश्चये। ऋषीणां तत्रत्यानाम् अपूर्वप्रतिभासन्दर्शनेन विमोहितानां तपोधनानां, न केवलं तेषामपि तु चराचराणां भूतानां स्थावरजङ्गमाद्यखिलजीवसहितभुवनत्रयस्य। आन्तराणि—अभ्यन्तरवर्त्तीनि, तत्त्वानि—भावान् अन्तःकरणवृत्तीरिति यावत्, उपस्नेहयति—स्नेहवन्ति करोति, [ स्नेहवच्छब्दात् "तत्करोति" (ग०) इति णिचि इष्ठवद्भावात् मतुब्लोपे उपपूर्वकात् स्नेहिधातोः लटि रूपमेतदिति ज्ञेयम् ]। तयोः दारकयोरवलोकितयोः सतोः सर्वेषामेव चेतांसि सममेव वात्सल्यरसाप्लुतानि भवन्तीति भावः। [ "महानध्ययनप्रत्यूहः" इतः प्रभृति "तस्य भगवतः केनापि" इत्यन्तेन सन्दर्भेण, पुरा अष्टावक्रस्यर्षेः प्रवेशात् प्रथमाङ्कोपक्षिप्तस्य अत एव किञ्चित् ज्ञायमानतया लक्ष्यस्य सीताविवासनबीजस्य इदानीन्तु आत्रेयीवृत्तान्तेन कथञ्चिदुन्नीयमानस्य दृश्यादृश्यरूपतया उद्भेदात् अयं प्रतिमुखसन्धिरिति प्राञ्चः। तथाहि दशरूपकम्।—"लक्ष्यालक्ष्य इवोद्भेदस्तस्य प्रतिमुखं भवेत्" इति ]।

(ट) अपीति।—अपीति—प्रश्ने। तयोः,—दारकयोः। नामसंविज्ञानं—नाम्नोरभिधानयोः संविज्ञानम् अवगतिः।

(ठ) तयैवेति।—देवतया—भागीरथ्येति भावः। तयोः,—दारकयोः, कुशश्च

वन। कीदृशः प्रभावः ?

आवे। तयोः किल सरहस्यजृम्भकास्त्राणि आजन्मसिद्धानि इति। (ड)

वन। अहो नु भोः ! चित्रमेतत् !

आवे। तौ च भगवता वाल्मीकिना धात्रीकर्म्मवत्सलतां परिगृह्य पोषितौ परिरक्षितौ च, वृत्तचौड़कर्म्मणोश्च तयोः त्रयीवर्जमितराः विद्याः सावधानेन परिनिष्ठापिताः ; समनन्तरञ्च गर्भैकादशे वर्षे चात्रेण कल्पेन उपनीय तौ त्रयीविद्यामध्यापितौ, न ह्येताभ्यामतिप्रदीप्तप्रज्ञाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति। (ढ) यतः,—

---

लवश्च इति तौ नामनी अभिधाने, तदभिधानप्रवृत्तौ हेतुमाह रघौ तत्रभवान् कालिदासः, तथा हि,—"स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया। कविः कुश लवावेव चकार किल नामतः॥" इति। प्रभावश्च—लोकातिशायिशक्तिश्च। आख्यातः,—उदीरितः। तौ किन्नामधेयौ लोकविलक्षणप्रभावभूषितावास्तामिति तु आवेद्य भगवत्या भागीरथ्या तौ वाल्मीकये विद्यामध्येतुं प्रतिपादितौ इत्यर्थः।

(ड) इदानीं तयोः अलौकिकं प्रभावं विशदीकर्त्तुमवतारयति, तयोरिति।—तयोः दारकयोः कुशलवयोः, सरहस्येति—रहसि भवं रहस्यं गोप्यं प्रयोगसंहारकुशलं मन्त्रजातमित्यर्थः, तत्सहितानि, जृम्भकास्त्राणि—जृम्भयन्ति विपक्षान् जृम्भोपलक्षितनिद्रावेशविवशान् कुर्वन्ति यानि, तथाभूतानि अपूर्वाणि अस्त्राणि, तानि हि कौशिकोपसंक्रान्तानि कृशाश्वतनयभूतानि। पुरा किल वेदानां रक्षणाय ब्रह्मादिभिः तपोधनैः तपस्तेजसा समेधिततया ज्योतिर्मयाणि अभवन्निति श्रूयन्ते, आजन्मसिद्धानि किलेति सम्भावनायां, सम्भावयामीत्यर्थः ; जन्मतः प्रभृति लब्धानि, सहजतः एव सम्भूतानि इत्यर्थः। [ अत्रेदं, मुखसन्धिनिवेशिनः प्रथमाङ्कोपक्षिप्तस्य "सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति" इत्यादिरूपस्य बीजीभूतवस्तुनः लक्ष्यालक्ष्यरूपतया समुत्पन्नः प्रतिमुखं नाम सन्ध्यङ्गं वेदितव्यम्। तथा चोक्तं दर्पणे—"फलप्रधानोपायस्य मुखसन्धिनिवेशिनः। लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत्॥" इति। ]।

(ढ) ताविति।—तौ कुशलवौ भगवता अणिमाद्यैश्वर्य्यशालिना वाल्मीकिना आदिकविना, धात्रीकर्मवत्सलतां—धात्र्याः उपमातुः यत् कर्म परि[illegible]दिकं तथा-

भूतकर्मणा जायमानेति शेषः, या वत्सलता—वात्सल्यं स्नेह इत्यर्थः, तां परिगृह्य—प्राप्य, स्वीकृत्येति यावत्, पोषितौ परिलालितौ परिरक्षितौ परित्रातौ च ; भगवान् वाल्मीकिः विगतस्पृहः सन्नपि तौ हि अलौकिकलावण्यप्रतिभाशालिनौ बालकौ सदयं स्वीकृत्य ततः प्रभृति तत्स्नेहवागुरया विनिबद्धः सादरं लालयति परिरक्षति च इत्याशयः। [“धात्रीकर्मवस्तुतः” इति पाठान्तरं दृश्यते, तदर्थस्तु—धात्रीकर्म-रूपात् वस्तुतः व्यापारात् तथाविधव्यापारमारभ्येति यावत् इति ल्यबर्थे पञ्चमी ]। वृत्तेति।—वृत्तं सम्पादितं चौड़ं कर्म ययोः तयोः, यथाविधिनिष्पादितचूड़ा-कर्मणोरित्यर्थः सतोः ; [ चूड़ा प्रयोजनमस्य इति चूड़ाशब्दात् अण्, चूड़ाकरणरूप-संस्कारविशेषः। तत्कालमाह वशिष्ठः,—

“तृतीये पञ्चमेऽब्दे वा स्वकुलाचारतो द्विजम्।
चौलं शिशूनां यत्नेन स्वगृह्योक्तविधानतः।
आधानतो जन्मतो वा सप्तमाब्देऽपि कारयेत्॥”

गुरुरपि,—“तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः।
पञ्चमे सप्तमे वापि स्त्रियाः पुंसोऽथवा समम्॥” इति।

“वृत्तचूड़ौ” इति पाठे—वृत्ता यथाविधिनिष्पादिता चूड़ा ययोः तौ, तृतीयाब्दे चूड़ाकरणसंस्कारसंस्कृतौ, स्वस्वकुलाचारानुसारतः एकां तिस्रः पञ्च वा शिखा वर्जयित्वा स्वगृह्योक्तविधिना शिरसो वापनं हि चूड़ाकरणसंस्कारः अभिधीयते ]। त्रयीति।—त्रयी सामऋग्यजूंषि, तां वर्जयित्वा, [ वर्जयतेः णमुल् ] यद्वा—त्रय्याः वर्जो वर्जनं यस्मिन् कर्मणि तद् यथा तथा, उपनयनं विना वेदपाठानधिकारात्, तथा हि मनुः,—“नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते। शूद्रेण हि समस्तावद् यावद्वेदे न जायते॥” इति। उपनयनात् प्रभृति एव वेदाध्ययनस्य विधानादिति भावः। इतराः विद्याः दण्डनीतिधनुर्वेदादयः सावधानेन—अवधानेन सह वर्त्तमानः तेनावहितचित्तेन यत्नेनेत्यर्थः, ऋषिणा इति शेषः। परिनिष्ठापिताः,—यथाविधि साकल्येन समुपदिष्टाः इत्यर्थः ; समनन्तरञ्च—इतरविद्योपदेशात् परमित्यर्थः। क्षात्रेण कल्पेन—क्षत्रियाणामुपदिष्टेन विधिना ; उपनीय—उपनयनसंस्कारेण संस्कृत्य। अत्र मनुः,—“गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्। गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥” इति। तौ—बालकौ, त्रयीविद्यां—श्रुतिम्, अध्यापितौ—पाठितौ ; [“गतिबुद्धि—” (१।४।५२ पा०) इति सूत्रेण कर्मत्वम् ]। अतीति।—अतिप्रदीप्ता विमला तीक्ष्णा च प्रज्ञा बुद्धिः ययोः ताभ्यां कुशाग्रैकधीभ्यां [ “प्रज्ञामेधाभ्याम्” इति पाठे तु—नवनवोन्मेषशालिनी बुद्धिः प्रज्ञा, धारणावती धीः मेधा, तत्त्वार्थव-

वितरति गुरुः प्राज्ञे विद्यां यथैव, तथा जडे
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति च तयोर्भूयान् भेदः फलं प्रति, तद् यथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः ॥ ४ ॥

---

बोधकुशला वा इति विग्रहः । एताभ्यां—दारकाभ्यां सह, अस्मदादेः,—मम अन्येषाञ्च जडधियामित्यर्थः, अध्ययनयोगः सतीर्थीभवनम्, एकस्मिन् गुरौ सम्भूय ताभ्यां सहाध्ययनं न अस्ति न सम्भवति ; अस्मात् प्रागेव बालाभ्यां ताभ्यां द्राक् पाठस्यावबोधात्, एतन्नो नितरां वैलक्ष्यमादधातीति भावः ।

अस्माकन्तु जडधियां तथाविधविवेकाभावादेव निरपेक्षस्य गुरोः सदुपदेश-ग्रहणापाटवं, न तु तत्र तस्य कोऽप्यणीयान् पक्षपातोऽस्तीति सूचयितुमवतारयति, वितरतीति ।—गुरुरध्यापकः प्राज्ञे प्रज्ञावति शिष्ये यथा विद्यां वितरति ददाति, जडे अल्पबुद्धावपि शिष्ये तथैव अविशेषेणैव इत्यर्थः वितरति उपदिशति ; न तु तयोः प्राज्ञ-जडयोर्ज्ञाने शास्त्रार्थबोधे शक्तिं सामर्थ्यं करोति जनयति, वा—अथवा, शक्तिम् अपहन्ति—विनाशयति । [ खलु निश्चये वाक्यालङ्कारे वा ]। ( "निषेधवाक्यालङ्कारजिज्ञासानुनये खलु" इत्यमरः )। प्राज्ञस्य ज्ञाने अपूर्व्वां शक्तिं न सञ्चारयति, जडस्य च ज्ञाने स्वाभाविकीं तदीयां शक्तिं न नाशयति, द्विविधावपि शिष्यौ गुरुणा यथाविधि अविशेषेणैवाध्याप्येते इत्यर्थः। यदि तत्र कोऽपि भेदो नास्ति तर्हि फलं प्रति कथं वैषम्यमागच्छति, फलभेदस्यैव हि कारण-तावच्छेदकभेदग्राहकत्वनियमात्, अतस्तत्र कारणान्तरप्रतिपादनमुखेनाह, भव-तीति ।—तयोः प्राज्ञ-जडयोः फलं प्रति फले शास्त्रज्ञानरूपे इत्यर्थः, भूयान् महान् भेदो विशेषो भवति। धीमान् हि अनायासेन गुरूपदेशं लब्ध्वा झटित्येव तदवबोधकुशलः भवति, जडस्तु अमेधस्तया सर्वथैव तदवबोधविहीनः, तत्र तु स्वस्वविवेकस्यैव नियामकत्वमिति वेदितव्यम्। तत्—भेदभवनं, यथा ["तद्-यथा" इत्यत्र "तत्तथा" इति पाठान्तरे तत्—भेदभवनं, तथा—निश्चितमित्यर्थः । एतादृशपाठस्वीकारे तु यथाशब्दाभावात् फलभेदभवनं मणिमृत्तिकाचययोः बिम्ब-ग्राहभेदभवनमिवेति बिम्बप्रतिबिम्बत्वावगमात् दृष्टान्तालङ्कारः ]। शुचिः स्वच्छो निर्मलः इत्यर्थः, मणिः हीरकचन्द्रकान्तादिः बिम्बोद्ग्राहे प्रतिबिम्बग्रहणे तद्धारणे प्रतिफलने इत्यर्थः, प्रभवति समर्थो भवति, मृदां मृत्तिकानां चयः स्तूपः न प्रभवती-

वन। अयमसौ अध्ययनप्रत्यूहः?

आत्रे। अपरश्च।

वन। अथ अपरः कः?

आत्रे। अथ स ब्रह्मर्षिरेकदा मध्यन्दिनसमये नदीं तमसामनुप्रपन्नः; तत्र च युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन विध्यमानं ददर्श। आकस्मिकप्रत्यवभासाच्च दैवीं वाचमानुष्टुभेन छन्दसा परिणतामभ्युदैरयत्। (ग)—

त्यर्थः। सत्यपि समाने सर्वत्र गुरोरुपदेशे अन्तेसदां स्वस्वधियः तैक्ष्ण्यातैक्ष्ण्यादिवशात् फलवैषम्यं दृश्यते; तत्र तु गुरोः नापराध इति भावः। [अत्र भेदभवनं शुचिमणिरित्यादि साम्यावगमात् यथाशब्दोपादानाच्च श्रौती उपमा। परन्तु एकवाक्यगतसादृश्यप्रतीतौ उपमा, सादृश्यस्य भिन्नवाक्यगतत्वे तु दृष्टान्त एव इति नवीनानां मतम्। "शुचिर्मणिर्बिम्बोद्ग्राहे इव प्राज्ञ एव उपदेशग्रहणे प्रभवति मृदां चय इव जड़ो न प्रभवति" इति तत्पदेन उपमेयावगमादेकवाक्यगतत्वात् उपमा स्यात्, अन्यथा तु दृष्टान्तः। दण्डिमते दृष्टान्ताख्योऽलङ्कारभेदो नास्ति। तन्मते तु—प्रतिवस्तूपमाख्य उपमाभेदोऽङ्गीक्रियते।—"साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमा" इति लक्षयता दर्पणकृता तन्मतं नाङ्गीकृतमिति नव्यमते उपमा-प्रतिवस्तूपमयोर्विविक्तविषयता स्फुटैव। यथासंख्यञ्चानयोः प्राज्ञजडयोः अन्वयबोधात् यथासंख्यालङ्कारः; तथा "विद्यां ददाति" "शक्तिं नापहन्ति" "मणिः प्रभवति" "मृदां चयो न" इति अन्यव्यपोहनात् शाब्दीपरिसङ्ख्याऽलङ्कारश्च; इत्येषां सापेक्षत्वेन सङ्करः। "न खल्वेताभ्यामतिप्रदीप्तप्रज्ञाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति। यतः" इत्यत्र गद्यांशे "यतः" इत्यनेन कारणतया पद्यप्रतिपाद्यार्थस्यावबोधनादप्रस्तुतप्रशंसायाः नात्यवसरः। गद्यांशे स्वयमेव प्रज्ञा जडत्वेनाङ्गीकारात् प्रत्युत तेषां प्रस्तुतत्वादित्यवधेयम्]। हरिणी वृत्तम्।—"नसमरसला गः षड्वेदैः हयैः हरिणी मता" इति लक्षणात्। प्रस्तारस्यास्य ९२२३४तमः इति॥ ४॥

(ग) अथेति।—अथशब्दः आरम्भार्थकः, ("मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः)। ब्रह्मर्षिः,—वाल्मीकिः, ब्रह्मा चासौ ऋषिश्चेति विग्रहः ("ब्रह्मा विधः प्रजापतिः" इत्यमरः)। मध्यन्दिनसमये—मध्यं दिनस्य [इत्येकदेशी षष्ठीसमासः अलुक् च] तदेव समयस्तस्मिन् मध्याह्नसमये इत्यर्थः। ["माध्यन्दिन-

"मा निषाद! प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्" ॥ ५ ॥

इति।

---

सवनाय" इति क्वाचित्कः पाठः, तदर्थस्तु—मध्यन्दिनसवनाभ्यवगाहनकर्मणे इति]। तमसां—तन्नाम्नीं नदीम्। अनुप्रपन्नः,—स्नातुं गतः इत्यर्थः। युग्मचारिणोः,—युग्मं द्वन्द्वं यथा तथा चरतः [इति णिनिः] युग्मीभूय चरतोः, मिथुनभावेन स्थितयोरित्यर्थः। क्रौञ्चयोः,—जलचरविहङ्गविशेषयोः। [क्रौञ्ची च क्रौञ्चश्चेति तयोः "पुमान् स्त्रिया" (१।२।६७ पा०) इति पुंलिङ्गैकशेषः]। एकं—पुंलिङ्गोद्दिष्टात् क्रौञ्चम्। व्याधेन—पुलिन्देन। विध्यमानं—बाणेन निहन्यमानम्। आकस्मिकः अकस्मात् दृष्टकारणं विनापि सम्पद्यमानः अचिन्ताप्रसूत इत्यर्थः, प्रत्यवभासः प्रकाशो यस्यास्तां तथोक्तां निर्हेतुकाविर्भावाम्। ["दैवीं वाचमव्यतिकीर्णवर्णाम्" इत्यधिकः पाठः क्वचित् दृश्यते; तदर्थस्तु,—अव्यतिकीर्णाः निराकाङ्क्षत्वादिदोषरहिततया सुविस्पष्टाः वर्णाः अक्षरपङ्क्तयः यस्यां तथाभूतामिति। "परिणताम्" इत्यत्र तु "परिच्छिन्नाम्" इति पाठः दृश्यते, उभयत्र तु विनिबद्धामित्येवार्थः]। आनुष्टुभेन—तत्सम्बन्धिना [स्वार्थिकोऽण्प्रत्ययः] अष्टभिः अष्टभिः अक्षरैः संख्यातैकैकचरणेन छन्दसा—पद्यरूपेण ("छन्दः पद्येऽभिलाषे च" इत्यमरः)। परिणतां—नियमिताम्। अभ्युदैरयत्—उच्चारयामास।

तद्धि, कथम्भूतमासीदित्यपेक्षायामाह, मा निषाद इति।—रे निषाद! त्वं शाश्वतीः [शश्वत् भवाः इत्यर्थे शैषिकः अण्] निरन्तराः बह्वीः, समाः,—वत्सरान् चिरकालमिति भावः, [अत्यन्तसंयोगे द्वितीया] प्रतिष्ठां स्थितिमाश्रयमित्यर्थः, "ब्रह्मपुच्छं प्रतिष्ठा" इत्यादिश्रुतौ अन्यत्र च काव्यादिषु तथैव दर्शनात्। मा अगमः न प्राप्नासि, न कदाचिन् त्वं निरुद्वेगमेकत्र वासं प्राप्स्यसीति भावः। [अडागमश्छान्दसः, अथवा नाऽयं माङ् किन्तु तत्प्रतिरूपकः माशब्दः; माशब्दयोगादतीतप्रयोगः सार्वकालिकः। अतः "न माङ्योगे" (६।४।७४ पा०) इति नैव अडागमप्रतिषेधः। यद्वा,—"प्रतिष्ठां, तु, अम, गमः" इति च्छेदः। नास्ति मा लक्ष्मीर्यस्य, तत्सम्बोधने, भो अम! अलक्ष्मीक! निषाद! प्रतिष्ठां तु मा गमः, कदापि न प्राप्स्यसीत्यर्थः। एवञ्च सति न काचिदनुपपत्तिरिति विभाव्यम्] यत् यस्मात् त्वं क्रौञ्चमिथुनात् क्रौञ्चाभिधेयपक्षिद्वन्द्वात्। (क्रौञ्च इत्यस्य "कौंच् बक" इति भाषा)। काममोहितं कामासक्तचेतसं रममाणमित्यर्थः, एकं क्रौञ्चमवधीः हतवानसि।

वन। चित्रमाम्नायादन्योऽयं नूतनश्छन्दसामवतारः। (त)

यद्वा,—श्लोकोऽयं रामायणस्य बीजभूतत्वेन व्याख्यायते। तथा हि,—मा लक्ष्मीः निषीदति अस्मिन्निति वञ्। मानिषाद! लक्ष्मीपते! राम! भगवतः रामस्य विष्णोरंशभूतत्वात् सीतायाश्च लक्ष्मीरूपत्वादिति भावः। यत् यस्मात् त्वं क्रौञ्चमिथुनात् मन्दोदरी-रावणरूपात् राक्षसद्वन्द्वात् काममोहितम् एकं रावणम् अवधीः हतवानसि, तस्मात् शाश्वतीः समाः वत्सरान् यावत्संसारमिति भावः, प्रतिष्ठां नित्यसुखाभिव्यक्तिसमनन्तज्ञानन्दमित्यर्थः, अगमः लभस्व। [ "भाव्यर्थो भूतवदङ्गीक्रियते" इति न्यायात् प्रार्थनायां लङ् ]। अथवा—हे अनिषाद! निषाद सदृश! (सादृश्यार्थे नञ्, वनवासित्वात् निषादबन्धुत्वाच्च रामस्य निषादतुल्यता)। क्रौञ्चमिथुनात् इति सङ्केतेन तारा-वालिनोः सूचना। भ्रातृपत्न्यां रुमायां रममाणत्वात् तस्य काममोहितत्वं वेदितव्यम्। अपरञ्च—नितरां सादयति ध्वंसयति लोकानिति निषादः रावणः, तत्सम्बुद्धौ, हे निषाद! रावण! यत् यस्मात् त्वं क्रौञ्चमिथुनात् अल्पीभावार्थात् क्रुञ्चतेः पचाद्यचि क्रुञ्चः ततः स्वार्थे अण्-प्रत्ययेन क्रौञ्चः इति सिद्धः, तयोर्मिथुनं तस्मात् राज्यच्यवनवासादिदुःखेन परं कार्श्यं गतात् स्त्रीपुंसयुगलात् सीतारामरूपादित्यर्थः, एकं काममोहितं पतिरतं स्त्रीजनं सीतामित्यर्थः, अवधीः हरणादिना वधतुल्यमतिघोरदुःखं प्रापितवानसि, तस्मात् त्वं शाश्वतीः समाः प्रतिष्ठां स्वस्त्रीसाहित्येनेहलोकस्थितिमित्यर्थः, मा अगमः न प्राप्नुहि, अचिरेण स्त्रिया वियुज्य म्रियस्वेति काव्यार्थः सूचितः। यथा भगवान् रामभद्रः त्वया सीताविरहितः कृतः, सा च सती रामविनाकृता, तथा त्वमपि स्वभार्यया विरहितो भव, सा च त्वया विरहिता चिरं वियोगशोकार्त्ता भूयादिति तु निर्गलितार्थः।

अत्र करुणो रसः, आलम्बनविभावः क्रौञ्चः, तस्य च निषादकृतः वधः उद्दीपनविभावः, सहचरीक्रन्दितञ्च अनुभावः, विषादचिन्तादयश्च व्यभिचारिणः, एतैश्चायं रसः परिशेषत्वमगात् इति। तथा हि ध्वनिकारः,—

"काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥"

विविधविशिष्टवाच्यवाचकरचनाप्रपञ्चचारुणः काव्यस्य स एवार्थः सारभूतः सन्निहितसहचरीविरहकातरक्रौञ्चाक्रन्दजनितः शोक एव श्लोकतया परिणतः॥ ५॥

(त) चित्रमिति।—आम्नायते गुरुपरम्पराक्रमेण अधिगत्य यथाविधि अभ्यस्यते,

स्नाने। तेन खलु पुनः समयेन तं भगवन्तमाविर्भूतशब्द-ब्रह्मप्रकाशमृषिमुपसङ्क्रम्य भगवान् भूतभावनः पद्मयोनिः अवोचत्;—"ऋषे! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि, तद् ब्रूहि

इत्याम्नायो वेदस्तस्मात इत्यर्थः. अन्यः,—अन्यविधोऽयं, नूतनः,—अभिनवः। छन्दसा-मवतारः,—प्रकाशः। मन्त्रादिरूपवेदभागानामपि छन्दोबद्धतया, वैदिकानि यावन्ति एव छन्दांसि अनियतपादवर्णस्वरयतिदोषदुष्टानि, ततः पुराऽनुष्टुप्छन्दसोऽनियत-प्रयोगात प्रतिपादम् अक्षराणां नियतत्वेन वैषम्यात् सम्यक् संस्काराभावाच्चास्य तु श्लोकस्य तद्विलक्षणतया नूतनत्वनिर्देशः। यद्यपि श्रुतौ एवंविधे बहूनि छन्दांसि अनुष्टुप् पङ्क्त्यादौ, लौकपथितवस्तुष तथाप्रसिद्धेरभावात् "आम्नायादन्योऽयम्" इत्युक्तम्। एवंविधानां वृत्तानां श्रुतौ प्रायशः प्रसिद्धिर्दृश्यते, तथाहि मुण्डकोपनिषत्,—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।

क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे॥" इति।

(च) तेनेति।—तत्समयमभिव्याप्येत्यर्थः [प्रकृत्यादित्वात् तृतीया]। आवि-र्भूतेत्यादि।—आविः सम्यक् भूतः शब्दरूपब्रह्मणः प्रकाशः अनुष्टुप्छन्दोरूपेण "मा निषाद।"इत्यादिरूपाम्नायकल्पस्य उदयः भवोभूततया प्रथमावतारः यस्मात् तं तथो-क्तम्। ऋषिं—वाल्मीकिम्। उपसङ्क्रम्य—तत्समीपमेत्य। भूतभावन इति।—भूतेन अनुध्यानेन अभिध्यायेत्यर्थः स्वात् शरीरादिति शेषः, तथा च मनुः—"सोऽभिध्याय शरीरात् स्वात् सिसृक्षुः विविधाः प्रजाः" इति। भावयति सृजतीति तथोक्तः; यद्वा भूतं सत्यमप्रतिहतमिति यावत् भावना अध्यवसायः सङ्कल्पः वा यस्य तथाविधः, अथवा, भूतानि प्राणिसङ्घान् भावयति सृजति पालयति च यः तथोक्तः, सर्वप्राणि-स्रष्टेत्यर्थः। पद्मयोनिरिति,—पद्मं विष्णुनाभिकमलं योनिः उत्पत्तिस्थानं यस्य स तथोक्तः ब्रह्मा इत्यर्थः। [पुरा किल "अहं श्रेष्ठः, यतो मदुदरमध्ये ब्रह्माण्डमस्ति" इत्युक्त्वा विवदमानयोः विष्णुब्रह्मणोः मध्ये ब्रह्मा उदरमध्यं दृष्ट्वा निर्गत्य विष्णुरुवाच— "भोः त्वदुदरे एकं ब्रह्माण्डं, मदुदरे अनन्तब्रह्माण्डानि पश्य।" अथ तथेत्युक्त्वा ब्रह्मा यावत् विष्णोरुदरं प्रविवेश, विष्णुस्तावत समस्तानि इन्द्रियद्वाराणि निरुद्धवान्। ततः निर्गमनाशक्तं ब्रह्माणमुवाच विष्णुः—"भोः ब्रह्मन्! मत्पुत्रत्वं गच्छसि चेत्, तदहं त्वां बहिष्करिष्यामि, नान्यथा बभ्रमस्व"। अथ तथेत्युक्ते ब्रह्मणि स्वनाभिपद्मेन पुत्ररूपं तं निर्गमयामास विष्णुः। अतः ब्रह्मणः पद्मयोनित्वम्। इति ब्रह्मवैवर्त्तवार्त्ता अत्र अनुसन्धेया]। प्रबुद्धः,—प्रकृष्टज्ञानवान्। वागात्मनि—वाङ्मये। ब्रह्मणि—

रामचरितम्। अव्याहतज्योतिरार्षं ते चक्षुः प्रतिभातु, आद्यः कविरसि" इत्युक्त्वा तत्रैवान्तर्हितः। अथ भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्त्तमितिहासं रामायणं प्रणिनाय। (घ)

---

शमादिसमन्विते, ("वेदस्तत्त्वं तपो ब्रह्म, ब्रह्मा विप्रः प्रजापतिः" इत्यमरः।) अव्याहतेति।—अव्याहतम् अप्रतिहतं ज्योतिः प्रकाशो यस्य तत्, अकुण्ठितं देदीप्यमानञ्च। आर्षम्—ऋषीणामिदं मनुष्येषु अदृष्टचरं योगजमित्यर्थः। ते चक्षुः प्रतिभातु—अव्याहतं सत् ते ज्ञानचक्षुषो ज्योतिर्दुरवगाहमप्यर्थं प्रविशतु प्रकाशयतु चेत्यर्थः। इतः परं तव किमपि अज्ञातं न स्यास्यति, योगजसन्निकर्षेण भवान् सर्वमपि परोक्षं वस्तु, प्रत्यक्षवत् द्रक्ष्यतीति भावः। ["ते प्रातिभं चक्षुः" इति पाठः क्वचित् दृश्यते; तदर्थस्तु—प्रतिभा, नवनवोन्मेषशालिनी प्रज्ञा, तदात्मकमित्यर्थः]। अन्तर्हितः,—अदृश्यतां गतः। अथ—अनन्तरम्। प्राचेतसः—वाल्मीकिः। शब्दब्रह्मणः,—वेदस्य। तादृशम्—"मा निषाद" इत्यादिरूपम्। विवर्त्तं—परिणामं रूपान्तरमिति यावत्। यद्यपि वेदान्तेषु विवर्त्तशब्दस्य "अतत्त्वतः अन्यथा प्रथा" इति व्याख्यातं, तथापि तस्य तत्र अन्यथाख्यातिरूपतया, पारिभाषितत्वात्, तत्-सादृश्यमादायैव प्रकरणानुरोधादेवं व्याख्यातम्। इतिहासं—पुरावृत्तम्। [इतिह पारम्पर्य्योपदेशः आस्ते अस्मिन्निति व्युत्पत्त्या इतिहशब्दात् आस्तेः घञ्]। रामायणं—राम एवायनम् उपजीव्यत्वेन आश्रयो यस्य तथाभूत करुणरसमयं महाकाव्यमित्यर्थः। प्रणिनाय—रचयामास। महात्मना वाल्मीकिना इदानीं रामायणरचनयैव कालो नीयते, अध्यापनावसरः तस्य इदानीं नास्तीति गम्यते, अयञ्चापरः प्रत्यूहः इति भावः। तथा च रामायणम्—

"तमुवाच ततो ब्रह्मा प्रहसन् मुनिपुङ्गवम्।
श्लोक एव त्वया बद्धो नात्र कार्य्या विचारणा॥
मच्छन्दादेव ते ब्रह्मन्! प्रवृत्तेयं सरस्वती।
रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम!॥
* * * *
न ते वागनृता काव्ये मत्प्रसादात् भविष्यति।
कुरु रामकथां दिव्यां श्लोकबद्धां मनोरमाम्॥" इति १।२।३८।

वन। हन्त तर्हि पण्डितः संसारः !! (द)

आत्रे। तस्मादवोचं, "तत्र महानध्ययनप्रत्यूहः" इति।

वन। युज्यते।

आत्रे। विश्रान्ताऽस्मि, भद्रे! सम्प्रति अगस्त्याश्रमस्य पन्थानं ब्रूहि।

वन। इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरी-तीरेण। (ध)

आत्रे। [सवाष्पम्।] अपि एतत् तपोवनम्? अपि एषा पञ्च-वटी? अपि सरिदियं गोदावरी? अपि अयं गिरिः प्रस्रवणः? अपि वनदेवता जनस्थानवासिनी वासन्ती त्वम्? (न)

---

(द) हन्तेति। हन्त—हर्षे, ("हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः" इत्यमरः)। तर्हि—तदा। संसारः,—पण्डितो जात इति शेषः। अधुना स भगवान् जगदुद्धरणे प्रवृत्त इति भावः। भगवतः वाल्मीकेः रामायणरचनायां प्रवृत्तिदर्शनात् संसारस्य पण्डितत्वं बोध्यम्। यद्यपि सामादयः वेदाः सन्ति, तथापि "स्त्रीशूद्र-द्विजबन्धूनां त्रयी न श्रुतिगोचरा" इत्यादिदर्शनात् त्रैवर्णिकानामेव तत्र श्रवणाधि-कारश्रुतेः, न सर्वेषामेव तत्रानधिकारित्वेन विद्यावत्त्वं, परन्तु इतिहासस्य रामा-यणस्य अभ्युदयेन जगतामेव यावतीयानां वर्णानां तुल्यतया श्रवणाधिकारात् संसारस्यैव पण्डितत्वमायातमित्यभिप्रायः। एवञ्च नानेतिहासात्मकस्य रामायणस्यानु-शीलनात् वेदान् अतीवैतस्य सुगमत्वाच्च सर्वे एव समं भोत्स्यन्ते इति निष्कर्षः।

(ध) इतः इति।—पञ्चानां वटानां समाहारः पञ्चवटी, ["द्विगोः" (४।१।२१ पा०) इति ङीप्]। सा च,—"अश्वत्थो बिल्ववृक्षश्च वटधात्रावशोककः। शास्त्रे पञ्चवटीत्युक्ता—" इति। तदुपलक्षिता भूमिरपि "पञ्चवटी" इत्यभिधीयते; बाहुल्येनैतादृशवटानां तत्र विद्यमानत्वात् तद्वनस्य पञ्चवटीति प्रसिद्धिरासीत्। गोदा-वरीतीरेण—गोदावर्य्यास्तीरं, तटभूमिः तेन, तत्तटप्रान्तवर्त्तिना पथेत्यर्थः।

(न) सवाष्पमित्यादि।—रामपरित्यक्तायाः सीतायाः स्मरणात् अश्रुप्रवाहोद्गमः समजनि, ततः सकरुणमभिदधे, अपीति।—प्राक् बहुशः दृष्टानां तेषां तेषां सर्वेषां परिचयात् इदानीं स्थिरनिश्चयार्थमेकैकशः प्रष्टुमारभते, तपोवनमिति।—( अत्र

वास। अस्ति एतत् सर्वम्। (प)

आत्रे। वत्से जानकि!—

स एष ते वल्लभबन्धुवर्गः प्रासङ्गिकीनां विषयः कथानाम्।
त्वां नामशेषामपि दृश्यमानः प्रत्यक्षदृष्टामिव नः करोति॥६॥

सर्व्वमेव अपि प्रश्नार्थबोधकमव्ययम्। "गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" इति)। विन्ध्याटव्याः दक्षिणाहि जनस्थानप्रान्तवर्त्तिप्रस्रवणगिरिनिर्झरिणीतीरस्थैः श्रमिभिः वैखानसैः निषेवितं प्रसिद्धं तपसे वनम्। तद्दक्षिणा गोदावरीतीरस्थायिनी पञ्चवटी। अपि च, तद्देशं निकषा, यदुपत्यकापरिसरारण्यकल्लोलिनी नाना-विहगकुलनिषेविता स्निग्धसलिला गोदावरी यत्कन्दरमुखरा प्रवहन्ती, स जन-स्थानमध्यगतः सततवर्षुकमेघमेदुरितः गिरिः प्रस्रवणः; तयोः सीतारामयोः निरतिशयं प्रीतिमुत्पादयामास, तत्र किलैषा अधिदेवताभूता वासन्ती तौ शुश्रूष-माणा आत्मानं विनोदयन्ती सुचिरं सुखेन कालं निनाय, एतदखिलमनुध्यायन्ती परमविदुषी आत्रेयी मुहुः सबाष्पगद्गदं विललापेति तात्पर्य्यम्। [अत्राभीष्टस्य तपोवनस्य बहुकालमदृष्टत्वेन नष्टप्रायत्वात्, तस्येदानीमन्वेषणपरत्वेनैतद्वचनम् "अप्येतत् तपोवनम्" इति। एतत्, परिसर्परूपं प्रतिमुखाङ्गं वेदितव्यम्। तथा च दर्पणे—"इष्टनष्टानुसरणं परिसर्पश्च कथ्यते" इति]।

(प) अस्तीति।—एतत् तु सत्यास्वीकारवाचकमव्ययम्। यदात्थ तत् तथैव इत्यर्थः।

इदानीमननुभूतायाः विवासितायाः सीतायाः अत्याहितमाशङ्कमाना परं निर्व्विण्णा आत्रेयी तदुद्बोधकानि तानि तानि वस्तूनि सन्दृश्य निर्भरं विलपति, स इति।—प्रसङ्गादागताः प्रासङ्गिक्यः तासां प्रसङ्गादुत्थितानामित्यर्थः, कथानां प्रश्नप्रतिवचनक्रमेण प्राप्तानामिति यावत्, त्वत्सम्बन्धिवाक्यानां विषयः प्रतिपाद्यः त्वया एवमेवमित्यादि-प्रकारेण वर्णितः सम्प्रति तु प्रत्यक्षविषयीभूत इत्यर्थः, स एष ते तव वल्लभः प्रियो बन्धुवर्गः वासन्तीप्रमुखः [ "वल्लभशाखिवर्गः" इति पाठे—सीतायाः स्वहस्तवर्द्धित-त्वात् प्रीतिप्रदत्वम् ] दृश्यमानः विलोक्यमानः सन् नामैव शेषो यस्यास्तां तथोक्तां नाममात्रावशिष्टां न तु शरीरेणेति यावत्, मृतामपीत्यर्थः, त्वां नः अस्माकं प्रत्यक्ष-दृष्टामिव प्रत्यक्षं दृष्टा तामिव साक्षात् दृक्सम्बद्धामिव साक्षादुपस्थितामिवेति यावत्, करोति। अत्र पुनः वनदेवतां जनस्थानसम्बद्धं गोदावरीप्रभृतिञ्च तत्तत्

वास । [ सभयं स्वगतम् । ] कथं नामशेषामित्याह !! [प्रकाशम् ।] आर्य्ये ! किम् अत्याहितं सीतादेव्याः ? (फ)

आत्रे । न केवलमत्याहितं सापवादमपि । (ब)

वास । कथमिव ?

[ आत्रे । कर्णे एवमेवम् । ] (भ)

वास । अहह ! दारुणो दैवनिर्घातः । (म) [ इति मूर्च्छति । ]

आत्रे । भद्रे ! समाश्वसिहि समाश्वसिहि ।

वास । हा प्रियसखि ! हा महाभागे ! ईदृशस्ते निर्माण-

---

प्रियवस्तुव्रातञ्च संदृश्य, मृतामपि तां स्नेहातिशयात् जीवितामिवावलोकयामीति भावः । [ अत्र वाच्या क्रियोत्प्रेक्षा, करोतीवेति परात्मना सम्भावनात् ] । अत्र प्रथममुपेन्द्रवज्राङ्गत्वात् कीर्त्तिर्नाम उपजातिः वृत्तम् ॥ ६ ॥

(फ) नामशेषामिति श्रुत्वा सोत्कण्ठं प्रकाशमभिधत्ते, आर्य्ये ! इति ।—किमिति प्रश्ने । अत्याहितम्—अमङ्गलं, प्राणहानिरिति भावार्थः । अत्यर्थमाधीयते मनो यन्निवारणाय तदित्यर्थः । तथा चामरः,—"अत्याहितं महाभीतिः कर्म जीवानपेक्षि च" इति ।

( ब ) न केवलमिति ।—अत्याहितन्तु जातमेव, नैतावदत्र पर्य्याप्तं परन्तु अपवादसहितमेव तदुदीयमानमभूत् इत्यर्थः । अपवादसहितमेव तदत्याहितम् अस्माद्भाग्यविपर्य्ययादजायतेति चूर्णकाभिप्रायः ।

(भ) एवमेवमिति ।—सीताविवासनव्यापारस्य पौनरुक्त्यपरिहाराय आलङ्कारिकाम्नानुरोधाच्च कर्णे कथनम् । एतत् प्रपञ्चितं प्राक् ।

( म ) अहहेति ।—अतीवखेदसूचकमव्ययमेतत् । दारुणः,—दुःसहः, अरुन्तुद इति यावत् । दैवनिर्घातः,—दैवस्य भाग्यस्य निर्घातः निग्रहः, न केवलं सीतायाः इदानीं ममापि । दैवकृतवज्राघातसदृशोऽयमाघात इत्यर्थः । ("निर्घातो विद्युदुल्काद्यैराघातः" इत्यमरः) ।

( य ) हेति ।—प्रियसखि ! अभिन्नहृदये ! इत्यर्थः । महाभागे—महाभाग्यवति ! कथं तव आयाता ईदृशी विषमा परिणतिरिति भावः । ते—तव, निर्माणस्य सृष्टेर्भागो विधात्राऽवधारितोऽंशः, ईदृशः ? एतदसीमशोकसन्ततिसहनार्थमेव त्वं सृष्टासीरिति भावः । अतः त्वयि तादृग्लोकातिशायिगुणसम्पत्समावेशयितुः विधातुः नितरां निर्विवेकत्वं निष्करुणत्वञ्चापतितमिति तात्पर्य्यम् । [ अत्र

भाग: !! रामभद्र! रामभद्र! अथवा अलं त्वया !! आर्य्ये आत्रेयि! अथ तस्मादरण्यात् परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्या: किं वृत्तमिति काचिदस्ति प्रवृत्ति: ? (य)

आत्रे। नहि नहि।

वास। हा कष्टम्! आर्य्यारुन्धती-वशिष्ठाऽधिष्ठिते रघुकुलगृहे जीवन्तीषु च प्रवृद्धराज्ञीषु कथमिदं जातम्? (र)

करुणो रस:, दैवनिन्दादिभिरनुभावै: विषादचिन्तादिभिश्च व्यभिचारिभि: स्थायिभाव: शोक: स्फुटीक्रियते ]। रामभद्र! इति शोकाद्विरुक्ति:। [अत्र "हा... रामभद्र!" इत्यादिवचनस्य साक्षात् निरतिशयशोकोद्वेगकरत्वेन वज्रवत् दुर्विषहदु:खप्रदत्वात् अतिकठोरवचनमेतत् वज्रनामकं प्रतिमुखाङ्गमुदीर्य्यते।—"प्रत्यक्षनिष्ठुरं वज्रम्" इति साहित्यदर्पणे ]। केवलमलीकलोकापवादमाकर्ण्य प्राणसमाम् अकलुषां जानकीं विजने वने विहाय अतीव विगर्हितं कृत्यमनुष्ठितवानसीति भाव:। अथवेति।—अलं त्वया निन्दितेनेत्यर्थ:, निर्म्ममस्य तव निन्दया इदानीं किमपि फलं नास्तीति भाव:। अथ कथञ्चित् शोकसङ्क्षोभमपनीयाह, आत्रेयीति।—अथ—अत: परं, तस्मादरण्यात्—वाल्मीकिवनोपकण्ठात्, परित्यज्य सीतामिति शेष:। अतिशोकोद्दीपकत्वेन जानकीनामग्रहणं नाकारीति सुधीभिरवधेयम्। निवृत्ते लक्ष्मणे—सौमित्रौ प्रस्थिते सतीत्यर्थ:। किं वृत्तं—का दशा समजनि। इति काचिदस्ति प्रवृत्ति,—तद्विषयिणी काऽपि कथा तव विदिता अस्ति किमु? इत्यर्थ:। ("वार्त्ता-प्रवृत्तिर्वृत्तान्त:" इत्यमर:)। तद्विषयिणी कापि कथा श्रूयते किल इति प्रश्नार्थ:।

(र) हा कष्टमिति।—अतिविषादसूचकमव्ययम्। आर्य्येत्यादि।—आर्य्याभ्यां कर्त्तव्याकर्त्तव्यनिर्णयपूर्व्वकप्रकृताचारस्थिताभ्याम्, अतस्तैर्नियन्त्रितेषु गृहेषु काऽपि अशुभोत्पत्तिर्भवितुं न हि अर्हतीति भाव:। अरुन्धत्या कुलगुरुपत्न्या, वशिष्ठेन गुरुणा, अधिष्ठिते अधिनायकभूमिकामेत्य सततं सदुपदेशदानेन सुपथि प्रवर्त्त्य सौभाग्यलक्ष्मीभानीयमाने इत्यर्थ:। ["अधिष्ठितम्" भावे निष्ठायां बहुव्रीहि:। यत्र अतीन्द्रियप्रभाववान् गुरु: स्वयं सम्माननापुर:सरं स्वपत्नीं पुरस्कृत्य सर्व्वदा तिष्ठति, तत्र कुले कथमेवं पत्नीनिग्रह: जात:, इति सूचयितुं प्रथममरुन्धतीनामग्रहणं कृतम्]। रघुकुलगृहे—रघूणां रघुवंशीयानां यत् कुलमन्वाय: तेषां यद् गृहं तस्मिन्, रघुसन्ततितितिभूषितोदवसिते इत्यर्थ:। तर्हि कथं वृद्धमतेषु श्रुतिन: कृतिनश्च रामभद्रस्य अशरणाया: सीताया: विवासनरूपं सुघोरम्

षाते। ऋष्यशृङ्गसत्रे गुरुजनस्तदा आसीत्। सम्प्रति तु परिसमाप्तं तद् द्वादशवार्षिकं सत्रम्, ऋष्यशृङ्गेण च सम्पूज्य विसर्जिता गुरवः; ततो भगवती अरुन्धती "नाहं वधूविरहिताम् अयोध्यां गमिष्यामि" इत्याह, तदेव राममातृभिः अनुमोदितम्। तदनुरोधाद्भगवतो वशिष्ठस्य परिशुद्धा वाचः,—"यथा वाल्मीकि-तपोवनं, गत्वा तत्र वत्स्यामः" इति। (ल)

---

एतदन्याय्यं समाचरितमिति तात्पर्य्यम्। ["रघकदम्बकेषु" इति पाठान्तरं दृश्यते; तदर्थस्तु,—रघूणां रघवंशीयानां कदम्बकानि समूहाः तेषु]। प्रवृद्धासु—वर्षीयसीषु ज्ञानवृद्धासु वयोवृद्धासु चेति प्रशब्दार्थः, राज्ञीषु महाराजस्य स्वर्गगतदशरथस्य पत्नीषु कौशल्यादिषु [अतः तासामाज्ञा अनुल्लङ्घनीयेति सूच्यते]। जीवन्तीषु—प्राणितीषु, अतस्तासु वर्त्तमानासु किमपि अकृत्यमुत्पादयितुं नालमित्याशयः। कथमिदं जातं—केन हेतुना तैः सीताविवासनात् रामभद्रः न निवारितः? इति। [सन्दर्भे-णानेन प्रथमाङ्कोपक्षिप्तबीजमुद्घाटितम्। विष्कम्भकस्य हि वृत्तानां वर्त्तिष्यमाणानाञ्च कथांशानां निदर्शकत्वात्]।

(ल) अथ वर्त्तिष्यमाणकथांशं चतुर्थाङ्कोपक्षिप्तं प्रस्तोतुमारभते, ऋष्यशृङ्ग-सत्रे इत्यादिना।—गुरुजनः,—पूज्यवर्गः, वशिष्ठकौशल्याप्रभृतयः इत्यर्थः। ऋष्य-शृङ्गसत्रे—जामातुः द्वादशवार्षिके यज्ञे। तदा—रामकृतसीताविवासनसमये। परिसमाप्तं—सम्पूर्णम्। द्वादशवार्षिकं—द्वादशभिः वर्षैः सम्भूतं [तद्धितार्थो द्विगुः "कालात् ठञ्" (४।१।११ पा०) इति ठञ्प्रत्ययः] सत्रं—यज्ञः। विसर्ज्जिताः,—स्वगृहं प्रति प्रयाणाय अनुमोदिताः। गुरवः,—वशिष्ठादयः। वधूविरहितां—वध्वा स्नुषया सीतयेत्यर्थः, विरहितां—शून्याम् अधिदेवतापरित्यक्तामिति यावत्। राम-मातृभिः,—कौशल्यादिभिः, तदेव—तथाविधमरुन्धतीवचनमेव, अनुमोदितं—सादरं स्वीकृतं, सर्व्वान्तःकरणेन समर्थितञ्चेत्यर्थः। तदनुरोधात—तासामरुन्धती-कौशल्यादीनाम्, अनुरोधात्—अभ्याग्रहात्। परिशुद्धाः,—सर्वथा निर्दोषाः, स्पष्टा इति यावत्। यथा—यत्र प्रदेशे इत्यर्थः, वाल्मीकितपोवनम् अस्तीति शेषः। यत्र हि सीता निवसति तत्रैव वयं वत्स्यामः, अन्यत्र गत्वा अलम् इति। एतानि महर्षेः भगवतः वशिष्ठस्य सर्वथैव तथ्यानि वचनानि उपरिष्टात् चतुर्थाङ्के सुस्फुटं विवृतानि।

वास। अथ स राजा किमारब्धः सम्प्रति ? (व)

आत्रे। तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः।

वास। हा धिक्! परिणीतमपि!! (श)

आत्रे। शान्तं पापम्। (ष)

वास। का तर्हि यज्ञे सहधर्मचारिणी ? (स)

आत्रे। हिरण्मयी सीताप्रतिकृतिः। (ह)

---

(व) अथेति।—आरभ्यते क्रियते इत्यारब्धः कर्म, कः आरम्भोऽस्येति किमारब्धः, कस्मिन् कर्मणि व्यापृतः इत्यर्थः। प्रजानुरञ्जनार्थं गृहलक्ष्म्या अपि सीतायाः विवासनात्, नवे राज्येऽभिषिक्तस्य रामस्य राजेति विशेषणं साक्षेपोल्लुण्ठनोक्तिपरं वेदितव्यम्। सीताविवासनसमये, "एष ते नूतनः राजा रामः समाज्ञापयति" इति स्वयमेवोक्तं रामभद्रेणेति विभाव्यम्।

(श) हेति।—हा धिक्—कष्टसूचकमव्ययम्। परिणीतमपि!—विवाहोऽपि कृतः! न केवलं निरपराधां पत्नीं वनाय विसृज्य कृतकप्रणयित्वेन आत्मनः लघुचेतस्त्वं प्रख्यापितम् अपि तु स्थ्यन्तरस्वीकारोऽपि कृतः इत्यपिशब्दार्थः। [एतदेव नः निरतिशयाक्षेपकारणमिति गम्यते। "सस्त्रीको धर्ममाचरेत्" इति स्मरणादश्वमेधादिषु च क्रतुषु अपत्नीकस्याधिकारविरहात्, "अश्वमेधः प्रक्रान्तः" इति आत्रेयीवचनेन राज्ञः सस्त्रीकत्वमपि ध्वनितम्। अत एवैतद्वासन्तीवचनस्य परिणयान्तरमन्तरेण तादृशयज्ञानुष्ठानस्यावैधत्वमित्याशयः स्वीकृतः]।

(ष) शान्तमिति।—पापं—पापोत्पादकमित्यर्थः, पापवदिति यावत्, श्रवणादपि पूतचेतसं सपापं करोति, अत एतत्, शान्तम्—अलीकम्, न वक्तव्यमित्यर्थः। रामेण सहधर्मचारिणीं सीतां विवास्य न हि परिणयान्तरं कृतं, तथात्वे चैतत् मौ निर्भरं मनस्तापमासादयेत इति सन्दर्भार्थः। ["शान्तं शान्तम्" इति पाठे—एतादृशाऽशिष्टाचारनिर्वचनं न कदाचित् सम्भवति रामभद्रस्य]।

(स) केति।—तर्हि—यदि, रामेण न परिणीतं तदेत्यर्थः। यज्ञे—अश्वमेधे, का सहधर्मचारिणी—धर्मं वेदविहितम् इष्टसाधनं कर्मेत्यर्थः, चरति अनुतिष्ठति या, सह पत्येति शेषः, सा, अभिन्नतया धर्मकारिणी धर्मपत्नीत्यर्थः।

(ह) हिरण्मयीति।—हिरण्यस्य विकारः इति [विकारार्थे मयट्, "दाण्डिनायन—" (६।४।१७४ पा०) इत्यादिना यलोपः निपातः] सुवर्णमयी,

वास। हन्त भोः!—(क)

वज्रादपि कठोराणि मृदूनि कुसुमादपि।

लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति!! ॥ ७ ॥

स्वर्णनिर्म्मितेति यावत्, सीताप्रतिकृतिः,—सीतायाः प्रतिमूर्त्तिः। विहितद्रव्याऽसम्पत्तौ प्रतिनिधिमाह कात्यायनः;—

"यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत्।

यवानामिव गोधूमाः व्रीहीणामिव शालयः॥" इति।

अपि च गरुड़पुराणम्—"भार्य्या भर्त्तृव्रतं कुर्य्याद् भार्य्यायाश्च पतिस्तथा।

असामर्थ्ये द्वयोस्ताभ्यां व्रतभङ्गो न जायते॥" इति।

[ अत्र "हिरण्मयी सीताप्रतिकृतिः" इत्येतद्वचनस्य उत्कृष्टतरोत्तरभूतत्वेनात्यनुराग-प्रकाशकत्वात् प्रगमन नाम प्रतिमुखाङ्गं वेदितव्यम्। "—प्रगमनं वाक्यं स्यादुत्तरोत्तरम्" इति साहित्यदर्पणे ]।

(क) हन्तेति।—हर्षविषादस्नेहविस्मयोक्तिरियम्। वराकीं जानकीं चिराय वहिः वनाय विसृज्याऽपि स्वभावधीरः रामभद्रः स्वहृदयतत्वात् तां नाहासीत्, एतत् सारभूतं कर्णामृतायमानं वचः समाकर्ण्य हृष्टाभूत् वासन्ती। एतदेव स्फुटतया विवृणुमः परवर्त्तिश्लोके।

महोदारचरितानां चेतांसि अनिर्वचनीयानि इति जानती, मृणालकोमलानि अपि तानि द्रव्यान्तरसंयोगमेत्य कालायसकठोराणि भवन्तीति वर्णयति, वज्रादिति।—वज्रादपि कठोराणि अतिकठिनानि, लोकनिन्दया केवलं प्राणभूतायाः सीतायाः विवासनादित्यर्थः, अपि च, कुसुमादपि मृदूनि मृदुतमानि, रावण-कृतापहारात् परं वृत्तं लतिकामपि समालिङ्ग्य निर्भररोदनकरणादित्यर्थः। अत्र पुनः तदीयाममलां प्रतिकृतिमादाय धर्माचरणाच्च। अश्वमेधादिकृतौ सावकाश-तया सीतासदृशप्रतिमाकरणं हि मृदुत्वापादकमेव। पुरा हि यानि सीतायाः पुष्पाघातदुःखमपि सोढुमशक्तानि आसन्, तानि राममनांसि पुनः प्राणेभ्योऽपि प्रियतरां निरतिशयस्नेहभावितां स्वकृताग्निपरीक्षया निर्द्दोषतया ज्ञातां सतीमपि पत्नीं प्राकृतजननिन्दामात्रेण परित्यक्तुं पटीयांसि अभवन्, अतः लोकेभ्यः उत्तराणामलौकिकगुणवतां महतां जनानां चेतांसि हृदयानि विज्ञातुं विशेषेण ज्ञातुं बोद्धुमित्यर्थः, कः अर्हति योग्यो भवति ? न कोऽपीति भावः। दुरवगाह-चित्तवृत्तयः खलु महान्तः इति सन्दर्भसारः। स्निग्धा सीता विसर्जितेति विषादः,

ग्रामे। विसृष्टश्च वामदेवानुमन्त्रितो मेध्योऽश्वः, उपकल्पिताश्च यथाशास्त्रं तस्य रक्षितारः, तेषामधिष्ठाता च लक्ष्मणात्मजश्चन्द्रकेतुः दत्तदिव्यास्त्रसम्प्रदायः चतुरङ्गसाधनान्वितोऽनुप्रहितः। (ख)

---

स्निग्धो रामो न निष्करुणः पापकारीति विश्वजनीनप्रवृत्तिरेव प्रमाणमिति न्यायात् निर्दोषामपि साधारणजनविगर्हितां सीतां विहाय महती निःस्वार्थता प्रजावत्सलता न्यायपरता च दर्शिता रामेणेति खेदविषादहर्षविस्मयविकाशकारणम्। [ अत्र एकस्मिन् धर्मिणि लोकोत्तरचेतसि अन्योऽन्यविरुद्धयोः धर्मयोः कठोरत्वमृदुत्वयोः सङ्घटनात् विषमालङ्कारः। अपि चाप्रस्तुतात् सामान्यात् प्रस्तुतस्य रामभद्ररूपविशेषस्य प्रतीतेः अप्रस्तुतप्रशंसा, अपि च उत्तरार्द्धगतेन सामान्येन विशेषस्य रामभद्ररूपवस्तुनः समर्थनात् अर्थान्तरन्यासालङ्कारः। इत्येषामङ्गाङ्गिभावेनावस्थितेः सङ्करः। अत्र आरब्धहयमेधं रामभद्रमाकर्ण्य धर्मपत्नीं विहाय तदनुष्ठानस्यासम्भवं विज्ञाय च अकृपेण रामभद्रेण स्वप्रियसखीं जानकीं विवास्य स्त्र्यन्तरं परिगृहीतमिति निश्चित्य भगवति रामभद्रे वासन्त्याः कियदवचिरजायत, अथ हिरण्मयीं सीताप्रतिकृतिं यज्ञे सहधर्मचारिणीं विदित्वा तस्या एवं रामभद्रे तथाभूतायाः अरतेः उपशमोऽभूत् इत्ययं "वज्रादपि कठोराणि" इत्यादिसन्दर्भः अरत्युपशमनात्मकः प्रतिमुखाङ्गभूतः शम एवेति दशरूपकम्। दर्पणकृन्मते तु एष रागजनकत्वेन विशेषवचनतया पुष्पनामकं प्रतिमुखाङ्गं वेदितव्यम्। "—पुष्पं विशेषवचनं मतम्" इति वचनात्। केचित्तु दर्पणकृन्मते तापन नामैतत् प्रतिमुखाङ्गमिति व्याचक्षते। "उपायादर्शनं यत्तु तापनं नाम तद्भवेत्" इति दर्पणलक्षणात्। एतस्यैव "शमः" इति नामान्तरं वदन्ति च ]। पथ्यावक्त्रं वृत्तम्॥ ७॥

(ख) विसृष्ट इति।—वामदेवेन—तदाख्येन केनचित् ऋत्विजामन्यतमेन, कुलगुरोः वशिष्ठस्यासान्निध्यात् एतेनैवार्त्विज्यं कृतमिति भावः। अनुमन्त्रितः,—मन्त्रसंस्कृतः। मेध्यः,—मेधाय यज्ञाय हितः, यज्ञीयः इत्यर्थः। [ मेध्—वधे; मेध्यते वध्यते असाविति मेधतेः भौवादिकस्य ण्यत् मेध्यः, यज्ञे वध्यः इत्यर्थः ]। अश्वः,—यज्ञीयतुरङ्ग इत्यर्थः। विसृष्टः,—अव्याहतस्वैरगतये विमुक्तः। उपकल्पिताः,—निर्दिष्टाः नियोजिता इत्यर्थः। अधिष्ठाता—अधि अधिनायकत्वेन, स्थाता—स्थितिशीलः प्रधानपदारूढः; अधिनायकः सेनापतिरित्यर्थः। दत्तदिव्यास्त्रसम्प्रदायः,—दत्तः दिव्यानाम् अलौकिकानाम् अस्त्राणां सम्प्रदायः समूहः प्रयोगसंहार-

वाम। [ सस्नेहकौतुकास्रम्। ] कुमारलक्ष्मणस्यापि पुत्रः !! हन्त मातर्जीवामि। (ग)

नावे। अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारि, सोरस्ताड़नमब्रह्मण्यमुद्घोषितं, ततो "न राजापचारमन्तरेण प्रजासु अकालमृत्युश्चरति" इति आत्मदोषं निरूपयति करुणामये रामभद्रे, सहसैव अशरीरिणी वाक् उदचरत्। (घ)—

---

मन्त्रसहितः यस्मै स तथोक्तः, तथा चतुरङ्गसाधनान्वितः,—चत्वारि अङ्गानि येषां तैस्तथोक्तैः साधनैः हस्त्यश्वरथपादातरूपोपकरणैः रणसाधनैः इत्यर्थः, अन्वितः अनुगतः, ("हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्" इति, "निवर्त्तनोपकरणानुव्रज्यासु च साधनम्" इति चामरः)। अनुप्रहितः,—प्रेरितः। [ "विसृष्टश्च वामदेवानुमन्त्रितः" इत्याद्यारभ्य "जनस्थान एव तपश्चरति" इत्यन्तेन सन्दर्भेणात्र ब्रह्मक्षत्रशूद्रादिवर्णानां मेलनात् वर्णसंहारनामकं प्रतिमुखसन्ध्यङ्गं वेदितव्यम्,—"चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते" इति दर्पणोक्तेः ]।

(ग) सस्नेहकौतुकास्रम्—कुमारलक्ष्मणस्य वार्त्ताश्रवणात् वात्सल्योदयः, तत्तनयस्य च सेनानायकत्वश्रुतेः हर्षाधिक्यात् कौतुकाविर्भावः, तेषाञ्चेदानीमदर्शनात् अश्रुपातः, स्नेहकौतुकास्रैः सह वर्त्तमानं यथा तथेति विग्रहः ; प्राग्भगवतः रामभद्रस्य पुत्रयोः कुशलवयोः संवादश्रवणसमकालं हि अतिहर्षः आसीत्, अथ कुमारस्य लक्ष्मणस्य सौमित्रेः पुत्रः जातः इति श्रवणात् स हर्षः अतिभूमिं गतः इति अपिकारतात्पर्य्यम्। हन्त—हर्षे। मातर्जीवामि—प्रत्युज्जीवितास्मि। वराक्याः प्रियसख्याः सीतायाः दारुणपरिणामश्रवणसमकालमेवाहं मृतकल्पाऽभवम्, इदानीन्तु निरतिशयप्रेमवतः सौमित्रेः तनयजननसंवादमसृतायमानमाकर्ण्य पुनरागतप्राणा एवास्मि इत्याशयः।

(घ) अत्रान्तरे इति।—अत्र—अस्मिन्, अन्तरे—अवकाशे। मृतम्—अकाले गतप्राणम्। राजद्वारि—राज्ञः रामभद्रस्य प्रासादद्वारभूमौ ; उत्क्षिप्य—आरोप्येत्यर्थः। सोरस्ताड़नम्—उरसो वक्षसस्ताड़नेन प्रहारेण सहितम् ; पुत्रशोकार्दिततया कराभ्यां स्वकीयं वक्षः अभीक्ष्णं विताड्य इत्यर्थः। अब्रह्मण्यम्—अवध्योक्तिरूपम् अमङ्गलम् ; असमञ्जसमिति सरलार्थः। उद्घोषितम्—आर्त्तार्थम् उच्चैरुच्चारितम्। ततः—तत्श्रवणानन्तरम्। राजापचारं—राज्ञः तदधिकृतस्य पुरुषस्य वा यः

"शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः।
शीर्षच्छेद्यः स ते राम! तं हत्वा जीवय द्विजम्" ॥ ८ ॥

---

अपचारः धर्म्मव्यतिक्रमः तम्। अन्तरेण—विना, [अन्तरेणेत्यव्ययं तदर्थयोगे "अन्तराऽन्तरेण युक्ते" (२।३।४ पा०) इति द्वितीया]। प्रजासु—प्रकृतिपुञ्जेषु। अकालमृत्युः,—अनुचिते वयसि विनाशः। न चरति—न प्रसरति, प्रजाः नाऽकाले म्रियन्ते इत्यर्थः। तथा च रामायणम्—

"राजदोषैर्विपद्यन्ते प्रजा ह्यविधिपालिताः।
असद्वृत्ते हि नृपतावकाले म्रियते जनः॥" इति।

भारतेऽपि—"असाधुशासनाद्राज्ञो महाभौतिकपप्लवः।
प्रवर्त्तते च नियतमकालमृत्युरीतयः॥" इति।

आत्मदोषम्—आत्मनः स्वाधिकृतस्य राजपुरुषस्य वा शासनदोषं प्रकृतिपुञ्जानाम् अयथापरिपीड़नरूपमित्यर्थः। निरूपयति—निश्चिनोति, न हि मम दोषादृते ब्राह्मण-बालः अकाले मृतः इति अवधारयति इत्यर्थः। करुणामयी—परदुःखदुःखित्वरूपाऽनु-कम्पाप्रचुरे, नो चेदेवं तदा सर्व्वाधीश्वरस्य अनेककोटिसङ्ख्यातप्रजापालकस्य भगवतः राघवस्य कस्यचिदेकस्य द्विजशिशोः निधनात् नितरामाधिर्नाऽभविष्यदित्यर्थः। अशरीरिणी—न विद्यते शरीरं ताल्वोष्ठपुटाघातादिकं यस्यां सा ["सर्वधनी" इत्यादिवत् इन्नन्तो बहुव्रीहिः]। "अशरीरिणीवाक्" इत्येकपदत्वे—शरीरं देहः विद्यते अस्याः इति शरीरिणी, सा न भवति इत्यशरीरिणी देवत्वेन मनुष्यैरलक्षित-शरीरा, सरस्वती इत्यर्थः, तस्याः वाक्; उभयथापि आकाशवाणी इति भावः। उदचरत्— उदतिष्ठत। दैवी वाणी उद्भूतेत्यर्थः।

कथं सा दैवी वाणी? इत्याह, शम्बूको नामेति।—शम्बूको नाम तदाख्यः कश्चित्, वृषलः शूद्रः, वृषं धर्म्मं लुनाति छिनत्ति, उपदेशनात् उपसेवनाद् वा इत्यर्थः इति व्युत्पत्तिः, त्रैवर्णिकानां सुकृतापहारकः; तथा च मनुः,—

"न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति।
नास्याधिकारो धर्म्मेऽस्ति न धर्म्मात् प्रतिषेधनम्॥" इति।

पृथिव्यां भूम्यां तपः तप्यते तपस्यति ["तपस्तपःकर्म्मकस्यैव" (३।१।८८ पा०) इति आत्मनेपदं यक् च।] हे राम! स वृषलः ते तव ["कृत्यानां कर्त्तरि वा" (२।३।७१ पा०) इति सूत्रेण वैकल्पिकी षष्ठी।] शीर्षच्छेद्यः शीर्षं तदवच्छेदे इत्यर्थः, छेद्यः छेदयितुमर्हः, यद्वा—शिरश्छेदमर्हति शीर्षच्छेद्यः। ["शीर्षच्छेदात् यच्" (५।१।६५

इति उपश्रुत्यैव आकृष्टकृपाणपाणिः पुष्पकं विमानमारुह्य सर्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः सञ्चरितुमारब्धवान्। (ङ)

वास। शम्बूको नाम धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति, तत् अपि नाम रामभद्रः पुनरपि इदं वनम् अलङ्कुर्य्यात्!! (च)

---

पा०) इति सूत्रेण यत्प्रत्ययः, शिरसः शीर्षादेशस्तु निपात्यते ; तेन च शीर्षच्छेद्यः सिध्यति इति व्याचक्षते प्राञ्चः। अत्र तु "ते" इत्यत्र सम्बन्धे षष्ठी]। शूद्रस्य तपसि अनधिकारश्रुतेः, वर्णधर्म्ममुल्लङ्घयतः शम्बूकस्य शिरश्छेद एव न्याय्य इत्यवधेयम्। तम् एवम्भूतं दण्डार्हं शम्बूकमित्यर्थः, हत्वा विनाश्य द्विजं गतप्राणं विप्रबालं जीवय रक्ष, प्रत्युज्जीवयेत्यर्थः॥ ८॥

(ङ) इत्युपश्रुत्यैवेति।—इति पूर्व्वोक्तां दैवीं वाचम्, उपश्रुत्यैव—समाकर्ण्यैव। आकृष्टकृपाणपाणिः,—आकृष्टः कोशादुद्धृतः कृपाणः खड्गः पाणौ यस्येति विग्रहः, उद्धृतखड्गहस्त इत्यर्थः ; ["प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" वा० इति सप्तम्यन्तस्य परनिपातः] जगत्पतिः,—जगतां पतिः पालकः, रामभद्रः इति यावत्। शूद्र-तापसान्वेषणाय—शूद्रतापसस्य शम्बूकस्य अन्वेषणाय, कुत्र स तपस्यतीति मार्गणा-यैत्यर्थः। पुष्पकं—पुष्पकनाम्ना प्रसिद्धं, [पुरा किल पुष्पकं नाम मनोहर-नवरूपं विमानं धनाधिपतये यक्षराजाय कुवेराय ब्रह्मणा दत्तम् ; तं विजित्य गृहीतवन्तं रावणं निर्जित्य राघवस्तत् प्राप्तवान्। इति रामायणी कथा]। विमानं—व्योम-यानम्। विदिशः,—आग्नेय्यादयः, ताः, दिशः प्राच्यादयः ताश्च सर्वाः।—["काल-भावाध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्म्मकैर्योगे कर्म्मत्वमुपजायते॥" इति कर्मसंज्ञायां हरिकारिका]। ("दिशोर्मध्ये विदिक् स्त्रियाम्" इत्यमरः)। सञ्चरितुं—परिभ्रमितुम्। आरब्धवान—प्रचक्रमे।

(च) धूमपः इति।—धूमं पिबतीति ["आतोऽनुपसर्गे" (३।२।३ पा०) इति कप्रत्ययः] वृक्षशाखादौ पादौ बद्धा धूमपानार्थम् अधोमुखः इत्यर्थः, यज्ञीय-धूममात्रसेवित्वात् नित्योपवासित्वाच्चेति भावः। तत्—तस्मात्, अस्मिन्नेव दण्डकारण्ये तपश्चरणहेतोः, [अपिः अत्र प्रथमः सम्भावनायां, द्वितीयस्तु समर्थाथकः। तद्योगे लिङ्]। अलङ्कुर्य्यात्—शोभयेत्, तर्हि भगवतः अहं संवर्द्धनां कर्त्तुमर्हामीत्याशयः।

आत्रे। भद्रे! गम्यतेऽधुना?

वास। एवमस्तु, कठोरीभूतोऽयं दिवसः। (छ)

तथा हि—

कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभि-
र्घर्मस्रंसितबन्धनैः स्वकुसुमैरर्चन्ति गोदावरीम्।

(छ) एवमस्त्विति।—तर्हि इदानीं गम्यतां भवतीभिरित्यर्थः। कुतः? तदेवोच्यते,—कठोरीभूत इति।—अकठोरः कठोरः सम्पद्यमानो भूतः इति कठोरीभूतः पूर्णतां गतः, मध्याह्नोऽभूदित्यर्थः; प्रचण्डचण्डांशोरंशुसन्तापस्य सोढुमशक्यत्वादित्याशयः।

अथेदानीं निदाघातपस्यातीवासहनीयत्ववर्णनमिषेण प्राकृतिकैतादृशदृश्यदर्शनादनुमीयमानं घर्मातपतापं विशदीकृत्य वर्णयति, कण्डूलेति।—कूले गोदावरीतीरे स्थिता इति शेषः; मृदुस्निग्धशाद्वलमालाघातैः शिशिरीकृतरुचिरगोदावरीतीरतरूणामपि परमरमणीयकमवलोक्य तेषामेव प्राधान्येनातपतापोद्वेगोपवर्णनमित्यवधेयम्। छायेत्यादि—छायायामनातपे, विश्रामजसुखमुपभुज्येति शेषः। अपस्किरमाणाः कीटनिष्कोषणार्थं तरुचरणाश्च हर्षेण तरुवल्कलेषु चञ्च्वाघातं कुर्वन्तः नखैरालिखन्तश्च इत्यर्थः, ["किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्" इति वक्तव्यात् शानच्। "अपाच्चतुष्पाच्छकुनिष्वालेखने" (६।१।१४२ पा०) इति सूत्रेण अपात् परस्य किरतेः सुट्]। ये विष्किराः पक्षिणः। ("खगे विहङ्ग" इत्याद्यारभ्य "नगौकोवाजि विकिर-वि-विष्किरपतत्रयः" इत्यमरः।) तैर्मुखैः चरणैर्व्याकृष्टा आकर्षणेन बहिष्कृताः कीटाः याभ्यस्तथोक्तास्त्वचो वल्कलानि येषां ते तथोक्ताः; येषां हि प्रच्छायसुशीतले तले विश्रामजसुखमुपभुञ्जानाः विविधाः विहगाः सानन्दं तरुत्वग्भ्यः चञ्चुभिः चरणैश्च कीटान् निष्कोष्य उपभुञ्जते इति भावः। [एतेन च मुनीनां गृहेषु अतिथयः नित्यमेव स्वयमागत्य भोज्यानि भुञ्जते इति प्रतीयते]। कूजत्क्लान्तेत्यादि।—तथा कूजन्ति मधुरमव्यक्तञ्च शब्दं कुर्वन्ति क्लान्तानि मध्याह्नमार्त्तण्डस्य आतपतापात् खेदमुपगतानि कपोतानां कुक्कुटानां चरणायुधविशेषाणाञ्च कुलानि येषु तथोक्ताः; अपि च येषां तथाविधेषु विटपेषु तलेषु च विशिष्टा पारावताः वन्यकुक्कुटाश्च मधुरं रुवन्तः निद्रालसाश्च अन्तर्निर्भरमानन्दं लभन्ते इति भावः। [एतेन च मध्याह्ने प्रोद्दण्डमार्त्तण्डोत्तापवितप्तानां श्रान्तानां बटूनां नानाशाखाश्रितानाम्

छायाऽपस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः ॥ ९ ॥

( इति परिक्रम्य निष्क्रान्ते । )

[इति विष्कम्भकः (ज) । ]

---

भाम्नायाभ्यसनम् उद्गीथाद्युपासनञ्च निर्बाधं भवतीति व्यज्यते ]। कुलायद्रुमाः विहगावासभूततरवः। [ कुलायभूताः द्रुमाः इति शाकपार्थिवादिवत् समासः। "कुलायस्तु पुमान् स्थानमात्रे स्यात् पक्षिवासके" इति मेदिनी। एतेन च तेषां गृहमेधिनां बहुकुटुम्बभरणे प्रसितत्वं ध्वन्यते ]। कण्डूलेत्यादि ।—तथा कण्डूलानां कण्डूयुतानां तद्वहुलानां वा, [ कण्डूः कण्डूतिः विद्यते येषाम् इति "सिध्मादिभ्यश्च" ( ५।२।९७ पा० ) इति सूत्रेण लच्प्रत्ययः ]. द्विपगण्डपिण्डानां द्वाभ्यां मुखनासिकाभ्यां पिबन्तीति द्विपा हस्तिनः ("दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः" इत्यमरः । ) तेषां गण्डा एव पिण्डाः तेषां करिकपोलभागानामिति यावत्; कर्षणेन कण्डूतिनिवारणार्थं घर्षणेन यः उत्कम्पः परिचालनं तेन सम्पातिभिः समूहेन स्खलद्भिः पतद्भिरित्यर्थः, [ एतेन तत्र तपोवने दुरूहशास्त्रतत्त्वानि निर्णेतुं सततम् उपगतानां भूभुजां लब्धोपदेशतया च विगतसंशयानां तेभ्यः सगौरवद्रव्यदानानि अनिशमेव भवन्तीति व्यज्यते ]। तथा घर्मेण आतपेन ("घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्भसोरपि" इति मेदिनी । ) स्रंसितानि शिथिलितानि बन्धनानि वृन्तानि येषां तैस्तथोक्तैः स्वकुसुमैः, [ एतेन च निवृत्तवर्षैः तैः अधिगतद्रव्याणि दैवसात् अतिथिसाच नियतं क्रियन्ते, इति प्रतीयते ]। गोदावरीम् अर्चन्ति पूजयन्ति, मातृत्वबुद्ध्येति भावः। [अर्चन्तीति भ्वादिगणीयार्चधातोः प्रयोगः। एतैः सर्वैः श्रौतक्रियानिरतानां गृहमेधिनां माध्यन्दिनवृत्तं ध्वन्यते। अत्र कुसुमपतनस्य गोदावरीपूजनत्वेन सम्भावनात्, तद्वाचकशब्दाभावाच्च प्रतीयमानोत्प्रेक्षाऽलङ्कारः। स च स्वभावोक्त्या सङ्कीर्य्यते। इत्यनुप्रासश्च शब्दालङ्कारः ]। वृत्तं शार्दूलविक्रीडितम् ॥ ९ ॥

( ज ) विष्कम्भकः इति ।—वर्णितानां भूतानां वर्णनीयानाञ्च भाविनामित्यर्थः, कथानामंशतः सङ्क्षेपतश्च निदर्शी विष्कम्भः, स च अङ्कादौ प्रयोज्यः। तथाहि,—"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥" इति। अयन्तु शुद्धः, मध्यमाभ्यां पात्राभ्यामात्रेयी-वासन्तीरूपाभ्यां प्रयोजितत्वात्। तथा

ततः प्रविशति पुष्पकस्थः सदयोद्यतखड्गी (क) रामभद्रः।

राम:। रे हस्त दक्षिण! मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम्।

चोक्तं,—"मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः। शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः॥" इति च साहित्यदर्पणे। तथा चात्र सीताविवासनं, कुशलवोत्पत्तिः, भगवतः वाल्मीकेः सविधे च तेषां समर्पणं यथाविधि शिक्षा चेत्याद्यतीतविषयाणामुपस्थापनम्; अपि च शम्बूकहननाय दण्डकारण्यमभितः भगवतः राघवस्य पर्य्यटनं इयमेवास्यैवायोजनञ्च इत्यादीनां वर्णिष्यमाणविषयाणाञ्च निर्द्देशः वेदितव्यः। [केचित्तु, चूलिका नाम अर्थोपक्षेपकोऽयमिति वदन्ति; नेपथ्यस्थितया वनदेवतया वासन्त्या आत्रेय्याः प्रवेशस्य सूचितत्वात्। तत्तु न सम्यक्, अर्थोपक्षेपकेषु पञ्चसु एकत्रैव चूलिका-विष्कम्भकयोर्द्वयोरेवार्थोपक्षेपकयोरवस्थानासम्भवात्। यद्यपि महावीरचरिते "भो भो वैमानिकाः! प्रवर्त्त्यन्तां प्रवर्त्त्यन्तां मङ्गलानि,—कृशाश्वान्तेवासी जयति भगवान् कौशिकमुनिः" इत्यादौ एकत्रैव द्वयोरेव समावेशः दृश्यते, तथापि तत्र नेपथ्यपात्राणि इन्द्रादिदेवाः, विष्कम्भकपात्रे च शूर्पणखा-माल्यवन्तौ इति पात्रभेदो दृश्यते, अत्र तु तथाऽभावादित्यवधेयम्]।

———

(क) तत इति।—पुष्पकस्थः,—पुष्पकविमानारूढः। सदयं सकृपमुद्यतः शूद्रकवधार्थम् उत्तोलितः खड्गः कृपाणः येन, तथाविधः, करुणामयत्वेन वर्णधर्म्माचारमुल्लङ्घयतः अपराधिनः अपि शम्बूकस्य उपरि कृपाणनिपातने सदयत्वं वेदितव्यम्।—

["त्रिभ्यो युगेभ्यस्त्रीन् वर्णान् धर्मश्च परिनिष्ठितः।
न शूद्रो लभते धर्मं युगतस्तु नरर्षभ!॥
हीनवर्णो नृपश्रेष्ठ! तप्यते सुमहत् तपः।
भविष्यच्छूद्रयोन्यां हि तपश्चर्य्या कलौ युगे।

* * * *

स त्वं पुरुषशार्दूल! मार्गस्व विषयं स्वकम्।
दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर॥
एवं धर्मविवृद्धिश्च नृणाञ्चायुर्विवर्द्धनम्।
भविष्यति नरश्रेष्ठ! बालस्यास्य च जीवितम्॥"

रामस्य गात्रमसि, दुर्वहगर्भखिन्न-
सीताविवासनपटोः करुणा कुतस्ते ? ॥ १० ॥

इत्यादि नारदवचनमाकर्ण्य दिनकरकुलेन्दुः भगवान् भार्गवविजेता वृषल-तपस्विनः शम्बूकस्य वधायोद्यममकरोत् प्रसादञ्च कृतवान् । हारीतस्तु तपश्चरणे शूद्र-स्यानधिकारमावेदयन् पापमेव भवति इत्यभिधत्ते ; तथा हि,—

"अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम् ।
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥
इष्टापूर्त्तौ द्विजातीनां धर्मः सामान्य इष्यते ।
अधिकारी भवेच्छूद्रः पूर्त्तधर्मे न वैदिके ॥" इति ।

तथा चात्राधिकारविरहात् तदनुतिष्ठतः अपराधः अस्त्येव, स तु न प्राणदण्ड-प्रयोजकः ; सत्यप्येवं, नारदवाक्यात् विप्रबालस्य पोज्जीवनाय भगवानित्थं विदधे इति मन्यम् । तथा च मनुः,—

"न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति ।
नास्याधिकारी धर्मेऽस्ति न धर्म्मात् प्रतिषेधनम् ॥" इति ] ।

अथेदानीं दण्डकारण्यमागतस्य रामभद्रस्य तपस्यन्तं निरपराधमपि अनयकारिणं शूद्रकं जिघांसितुं प्राक् घृणा प्रवृत्ता, तस्य तु दण्डस्य द्विजशिशोः जीवनार्थमाहितत्वेन कथञ्चित् अगर्हणीयत्वेऽपि अनपराधदण्डविधानस्य नृपाणाम् अयशस्करत्वेन, वराकीं सीतां विवासयतः अकृपस्यात्मनः नास्ति तत्र कापि व्यपेक्षेति उपवर्णयितुमाह, रे इति ।—रे हस्त ! दक्षिण ! रे अपसव्य हस्त ! [ रामावयवत्वेन श्रेष्ठत्वेऽपि तपस्विहनना-पराधे प्रवृत्तत्वेन अतीव निष्करुणत्वख्यापनाय रे इति नीचसम्बोधनपदमुपात्तम् ] मृतस्य अकाले कालेन वैवस्वतक्षयं नीतस्य ; तथा च रामायणे उत्तरकाण्डम्—

"ततः कतिपयाहःसु वृद्धो जानपदो द्विजः ।
मृतं बालमुपादाय राजद्वारमुपागमत् ॥
* * * *
अप्राप्तयौवनं बालं पञ्चवर्षसहस्रकम् ।
अकाले कालमापन्नं मम दुःखाय पुत्रक ! ॥
* * * *
नेदृशं दृष्टपूर्व्वं मे श्रुतं वा घोरदर्शनम् ।
मृत्युरप्राप्तकालानां रामस्य विषये ह्ययम् ॥" इति ।

[ अथ कथञ्चित् प्रहृत्य (ञ) ]। कृतं रामसदृशं कर्म्म, अपि जीवेत् स ब्राह्मणशिशुः ? (ट)

द्विजस्य शिशोः विप्रबालस्य, जीवातवे प्रत्युज्जीवनाय ("जीवातुर्रास्त्रयां भक्ष्ये जीविते जीवनौषधे" इति मेदिनी)। शूद्रमुनौ वृषलतापसे तद्बधायेत्यर्थः, कृपाणं खड्गं विसृज मुञ्च तदुपरि पातयेत्यर्थः। अनपराधस्य तपस्विनः विशसने कथं हि जगति करुणामयेतिख्यातस्यापि उपलोपमह्रद इव ते करुणा नोदेति ? इत्याशङ्कायामाह, रामस्येति।—दुर्व्वहः प्रगुरुत्वात् दुःखेन वोढुं शक्यः यो गर्भः तेन खिन्ना क्लिष्टा तथा विधा या सीता तस्याः विवासनपटोः निर्वासनसमर्थस्य, रामस्य अकरुणरसस्येत्यर्थः, [ अत्र रामपदम् अकरुणत्वरूपार्थान्तरसङ्क्रमितं, सर्व्वलोकरमणत्वेन करुणामयराम-पदस्य अकरुणरामपरत्वेन मुख्यार्थस्य स्वविशेषरूपार्थान्तरसङ्क्रमितत्वादर्थान्तरसङ्क्र-मितवाच्यो ध्वनिः, इत्यवधातव्यम्। अकरुणत्वातिशय्यश्चात्र व्यङ्ग्यम् ] गात्रम् अङ्गम् असि भवसि, तं तव करुणा दया कुतः ? अतिकठिनस्य कठोरगर्भभारालसायाः सीतायाः विवासनपटुत्वेन निर्घृणस्य, अतिबीभत्सकर्म्मकृतः रामस्याङ्गत्वात् त्वयि करुणा न सम्भाव्यते एवेति भावः। तर्हि कथमिदानीं शूद्रतापसबधाय अयथा शङ्कसे ? इति शङ्कासन्दर्भार्थः। रामस्य गात्रत्वात् तव किमपि अकृतं नास्ति इति सखेदोक्तिः इत्यवधेयम्। [ अत्र करुणाभावं प्रति सीताविवासनपटुत्वस्य हेतुत्वोक्तेः पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, अर्थापत्तिश्चेत्यनयोः सङ्करः। अपि चात्र "रामस्य गात्रमसि" इति वचनमनुपयुक्तं सत् रामस्येत्यनेन स्वस्यात्यन्तनिष्करुणत्वं गर्भी-करोति। तच्च "दुर्वहगर्भखिन्नसीताविवासनपटोः" इति वाक्यात् प्राचीनमतेन विध्य-लङ्कारः। तथाच—"सिद्धस्यैव विधानं यत्तदाहुर्विध्यलङ्कृतिम्"। यथा—"पञ्चमोद्दञ्चने काले कोकिलः कोकिलो भवेत्॥" इति ]। वसन्ततिलकं वृत्तम् ॥ १० ॥

(ञ) कथञ्चिदिति।—दयासमुद्रस्य रामभद्रस्य तदानीम् अनपराधस्य शम्बूकस्याधोमुखस्य ग्रीवायां कृपाणक्षेपणे सुमहत् कष्टमापतितं, सत्यमेवं द्विज-शिशोरुज्जीवनार्थमेवैतदध्यवसितं वेदितव्यम्। सत्यं हि भवति एवं सामान्य-पुरुषस्य, का कथा कृपाऽवतारस्य ? कथञ्चित्—दयार्द्रचित्ततया अतिकष्टेनेत्यर्थः ;—"दूराह्वानं बधो युद्धम्" इत्यादि वचनेन रङ्गमध्ये बधप्रदर्शननिषेधात् वा "कथञ्चित्" इत्युक्तं कविना।

(ट) रामसदृशमिति।—अहं यादृशः क्रूरस्तादृशं क्रूरं कर्म्म कृतवानित्यर्थः, न तु पितुः सदृशमिति भावः। [ पिता हि पुरा मृगयार्थं वनं प्रयातः भ्रमात् अन्धक-

दिव्यपुरुषः। [प्रविश्य]। (ठ) जयति जयति देवः। (ड)—

दत्ताभये त्वयि यमादपि दण्डधारे
सञ्जीवितः शिशुरयं, मम चेयमृद्धिः।

---

मुनेः बालस्य वधमकरोत्, "पितुः शतगुणं पुत्रः" इति न्यायादाह पितुः महनीयगुण-सङ्घातं परित्यज्य दोषेषु एव चित्तः अभवमिति, रामस्य स्वोपालम्भः व्यज्यते, येन हि पुरा वराकी सीता अनायासेनैव विसृष्टा, तस्यातीव नृशंसस्य तपस्विनः शम्बूकस्य प्रतिघातनं समुचितमेव उभयोस्तुल्यरूपत्वादित्याशयः। एषा हि अरुन्तुदोक्तिः रामस्य]।
अपीत्यादि।—अपिरत्र अवधारणे। इदानीं स बालको निश्चितं जीवितवान् इति भावः। अथवा सम्भावनायाम् अपिः। तेन यदि न जीवति तदा वृथेदं हत्याकर्म इत्याशङ्कावचनमेतत्। पावकवचसा सीतायाः पवित्रत्वनिश्चय इव दैववाण्या शिशुजीवनस्य निश्चितत्वेऽपि मन्दभाग्यात् विसदृशघटनसम्भवात् इति भावः।

(ठ) दिव्यपुरुष इति।—शम्बूकशरीरं विहाय देवत्वमधिगत्य स्वर्गीयवपुषा विराजमानः इत्यर्थः। भगवदवतारस्य रामभद्रस्य हस्तेन तादृशनिकारं साम्मुख्यञ्च अधिगतस्य शम्बूकस्य नश्वरपार्थिवशरीरनाशात् मनोहरदिव्यवपुषोऽवाप्तिः, न तु तपश्चर्ययेत्यवधेयम्।

(ड) देवः,—भगवान्, जयति—सर्वोत्कर्षेण वर्त्तताम्। [सर्वोत्कर्षवाचकस्य जयशब्दस्य अत्यादरं द्योतयितुं हर्षात् वीप्सायां द्विर्वचनम्]।

सत्यपि स्वस्य शिरश्छेदरूपनिकारे, तस्य तु द्विजशिशोः प्रत्युज्जीवनफलकत्वेन आत्मनश्चापि उत्कर्षाधायकत्वेन, भगवत्कृतनिधनमपि महोदर्कं भवतीति प्रतिपाद-यितुं शूद्रकस्याऽनपराधस्य हननात् भृशं दुःखितं रामभद्रं विजयनादेन प्रस्तौति,
दत्तेति।—यमात् कृतान्तादपि, दत्तम् अभयं येन तस्मिन् दत्ताभये (नारायणरूपत्वात् यमलोकादानीय ब्राह्मणशिशोः पुनरुज्जीवनात् यमादभयदातृत्वं सिद्धम्) यमशासितुः रावणस्य शासनात् वा, यमभयनिवारके इत्यर्थः, हतस्य शिशोः सञ्जीवनात् मम चोद्धारात् त्वं यमादपि परित्राणे क्षम इति वा भावः। कुतो यमादप्य-भयप्रदत्वम्? इति, तद्दर्शयति,—त्वयि, दण्डं धारयति शासनं विदधातीति [अण्, अच् वा, णिचो लुक्] तथोक्ते सति, मदीयशिरश्छेदरूपं शासनं कुर्वति सति, अयं शिशुर्ब्राह्मणपुत्रः सञ्जीवितः प्रत्यागतप्राणः, [दिव्यवपुर्लाभात् योगसन्निकर्षेण द्विज-शिशोः प्रत्यक्षीकरणात् "अयम्" इति प्रत्यक्षनिर्देश इत्यवधेयम्; तदुक्तम्—

शम्बूक एष शिरसा चरणौ नतस्ते,
सत्सङ्गजानि निधनान्यपि तारयन्ति ॥ ११ ॥

राम:। इयमपि प्रियं न:, तदनुभूयतामुग्रस्य तपस: परिपाक:। (ढ)—

"इदमन्तु सन्निकृष्टं समीपतरवर्त्ति चैतदो रूपम्" इति] मम च तपस्याकारिण: शूद्रस्य, परधर्म्मस्वीकारात् पापस्येत्यर्थ:, इयम् ऋद्धि: समुन्नति: दिव्यवपु:-प्राप्ति: इत्यर्थ:, [यस्मिन् एव काले भगवता अयं दण्डी विहित:, तदैव मृतबालकस्य मम चेदं दशान्तरं जातमिति भावविहितसमन्या सूच्यते]। ननु कस्त्वम् ? इत्याशयेनाह, एष: इति।—एष: एवं दैवत्वप्राप्तिहेतुकत्वादुपकृत इत्यर्थ:, शम्बूकोऽयं शिरसा ते तव चरणौ नत: नमस्यति, [नमते: वर्त्तमाने कर्त्तरि क्त:]। ननु नाहं ते उपकारी, प्रत्युत संहारकत्वादपकारक एव, तत् कुत: अप्रियकारिणि एवं विनय: क्रियते ? इत्यर्थान्तरन्यासेन विशदीकरोति, सदिति।—सत्सङ्गजानि साधुसंसर्गजातानि, निधनान्यपि मरणान्यपि, तारयन्ति संसाराब्धेरिति शेष:, उद्धारकारणानि भवन्ति इति सङ्क्षेप:,—"समुन्नयन् भूतिमनार्य्यसङ्गमात् वरं विरोधोऽपि समं महात्मभि:" इत्यादिदर्शनात्। सत्पुरुषसंसर्गकृतं सर्व्वमेव कर्म्म हिताय भवतीत्यहो सत्संसर्गमाहात्म्यम् ! इति तु सन्दर्भतात्पर्य्यम्। [अत्र दण्डरूपात् कारणात् "कारणगुणा हि कार्य्यगुणमारभन्ते" इति न्यायात्, तद्विरुद्धस्य सम्पत्प्राप्तिरूपस्य कार्य्यस्योत्पाददर्शनात्, हेतुविरुद्धकार्य्योत्पत्तिरूपो विषमालङ्कार:, तस्य च द्वितीयार्द्धगतेन सामान्येन प्रथमार्द्धगतस्य विशेषार्थस्य सोपपत्तिकत्वकरणात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास:, अनयोश्चाङ्गाङ्गिभावतया संस्थिते: सङ्कर:]। वसन्ततिलकं वृत्तम् ॥ ११ ॥

(ढ) इयमिति।—एकं द्विजपुत्रप्रत्युज्जीवनमपरञ्च तव दिव्यदेहावाप्तिरिति। यदि हि पुन: द्विजशिशोरुज्जीवनार्थमेव शम्बूकवधोद्यमात् तदुज्जीवनमेव मुख्यमासीत्, अन्यच्च गौणं, तथापि, शम्बूकस्य दिव्यदेहावाप्ति: भगवत: रामस्य निरतिशयानन्ददायिका अभूत्, परेषामभ्युदयदर्शनात् सतां स्वाहजिकहर्षोदयदर्शनाच्च। उग्रस्य तपस.,—अतीव दुष्करस्य तपश्चरणस्य, परिपाक:,—परिणाम: फलसिद्धि: दिव्यवपुरधिगतिरूपेत्यर्थ:। अनुभूयतां—भुज्यतां, प्राप्यतामित्यर्थ:।

यत्रानन्दाश्च, मोदाश्च, यत्र पुण्याश्च सम्पदः।
वैराजा नाम ते लोकास्तैजसाः सन्तु ते ध्रुवाः ॥ १२ ॥

शम्बूकः। युष्मत्पादप्रसादोपाय एष महिमा, किमत्र तपसः फलम्, अथवा महदुपकृतं तपसा ; (ख)—

अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यो
मामन्विष्यन्निह वृषलकं योजनानां शतानि।

भगवतः रामभद्रस्य हस्तात् शिरश्छेदरूपं दण्डमधिगतस्य तपस्वतः शूद्रकस्य किं फलमासीत्? तदेव विवृणोति, यत्रेति।—यत्र येषु लोकेषु आनन्दाः, प्रियसन्दर्शनजनितानि सुखानि, आत्मसाक्षात्काराज्जायमानाः दुःखासम्भिन्नाः सुखसमुदायाः वा, यत्र च मोदाश्च स्वाभिलाषमात्रोपनीतप्रियवस्तुलाभजन्याः हर्षाः दिव्यविषयोपभोगजनिताः तृप्तयश्च, अपि च, यत्र पुण्याः पवित्राः अकल्मषा इत्यर्थः, सम्पदः, अणिमादिविभूतयः, ["पुण्याभिसम्भवाः" इति पाठे—पुण्यात् तपस्याद्युद्भूतात् सम्भवः उत्पत्तिः येषाम्। इति आनन्दादेः विशेषणम्]। विराजो ब्रह्मण इमे ते वैराजा नाम ते तैजसाः तेजोमया नित्यालोकसम्पन्ना इत्यर्थः, लोकाः ब्रह्मलोका इति यावत्, ते तव सम्बन्धे, ध्रुवाः सुचिरभोगाय सन्तु भवन्तु ; एवम्भूतं ते तपसः फलमस्त्विति भावः। अनुष्टुप् वृत्तम् ॥ १२ ॥

(ख) युष्मत्पादेत्यादि।—युष्मत्पादानां भगवच्चरणानामित्यर्थः, यः प्रसादः अनुग्रहस्तस्मादुपायः आगमो यस्य ; यद्वा,—स एव उपायः प्राप्तिद्वारं कारणं वा यस्य तथोक्त एष महिमा माहात्म्यं वैराजलोकप्राप्तिरूपं दिव्यदेहावाप्त्यादिरूपश्च,—"धातुः प्रसादान्महिमानमीशम्" इति श्रुतेः। अत्र—एतादृशसिद्धिलाभविषये, तपसः फलं किम्? (काकूक्तिः) न किञ्चिदित्यर्थः। इयमचिन्तनीया पुण्यलोकावाप्तिः तवानुग्रहादेव भूता, न तु तपसः इति भावः। अथवेति।—पक्षान्तरे। तपस एवैतत् फलं, कुतः?—यद्देवदुर्लभेन भवद्दर्शनेन भवाभिसन्तारकेण मे ईदृशः महोपकारः कृतः; तपस्यां विना भगवत्साक्षात्कारस्य असम्भवात् इति भावः।

कियद्वा तपसा उपकृतं, तदेव सप्रश्रयं विशिष्य विवृणोति, अन्वेष्टव्य इति।—भुवने त्रिलोक्यां, भूतानां प्राणिनां नाथः पतिः, अत एव शरणे रक्षणे साधुः शरण्यः त्वं दुःखबहुलात् संसारात् निष्कृतमैरपि नियतमाश्रयणीय इत्यर्थः। ("शरणं रक्षणे गृहे" इति वैजयन्ती)। भवान् एव अन्वेष्टव्यः सततं हि श्रवणमनननिदिध्यासनादिभिः योगिभिरपि नितरां साक्षात्करणीयः असि भवसि ; मानुषरूपेण

क्रान्त्वा प्राप्तः स इह तपसां सम्प्रसादोऽन्यथा चेत्
क्वाऽयोध्यायाः पुनरुपगमो दण्डकायां वने वः ? ॥१३॥

रामः। किं नाम दण्डकेयम् ? [सर्वतोऽवलोक्य] आम्; (त)—

स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः
स्थाने स्थाने मुखरककुभो झाङ्कृतैर्निर्झराणाम्।

साक्षान्नारायण एव भवानिति भावः। वृषलकं शूद्राधमम्, [कुत्सायां कन्, स्वधर्म्मं यथाभूतरूपं विहाय परधर्म्मस्य स्वतन्त्रतपश्चरणरूपस्यानुष्ठानात् वृषलकत्वेन निर्देशः]। मामन्विष्यन्—मृग्यन्, योजनानां शतानि, [दण्डकाऽयोध्ययोः दूरत्वेयत्तानिर्णय-स्थलेऽपि शतयोजनविप्रकर्षावस्थायित्वमनयोः कथं सङ्गच्छते ? इति तु न शङ्कनीयं, "पृथिव्यां तप्यते तपः" इत्युक्तौ स्वशरीरिणीं वाचमाकर्ण्य भगवतः शतयोजन-मिताया: भुवः पर्य्यटनादिति ध्येयम्।] क्रान्त्वा अतिक्रम्य, इह अस्मिन् प्रदेशे दण्डकायां, यत् प्राप्तोऽसि आगतोऽसि, स तपसां तपोनिमित्तक इत्यर्थः, सम्प्रसादः अनुग्रहः परिपाकः इति यावत्, अन्यथा चेत् तन्नो यदि स्यादित्यर्थः, वो युष्माक-मन्वेष्ट्यानामित्यर्थः, अयोध्यायाः शतयोजनदूरवर्त्तिन्याः इति भावः, दण्डकायां वने दण्डकारण्ये पुनरुपगमः रावणादिवधानन्तरं पुनरागमनं क्व ? कुतः ? न सम्भवेदेवे-त्यर्थः [विवक्षातः सार्वविभक्तिकः अच्प्रत्ययः क्वादेशश्च]। अत्यन्तासम्भवितमेतदित्यर्थः; अतस्तपस एवैतत् फलं यदन्वेष्ट्योऽपि भवान् मदीयतपसैव इह प्राप्तः इति भावः। यद्यहं तपो नाचरिष्यं तदा कथमपि भवान् इयद्दूरवर्त्तिन्यां दण्डकायां नागमिष्य-दिति तात्पर्य्यम्। [अत्र भगवति रामभद्रे एकस्मिन् वस्तुनि जगज्जनान्वेष्ट्यत्व-वृषलकाऽन्वेषकत्वरूपविरुद्धधर्मयोः एकत्रात्यन्तमसम्भवतोः समावेशात्, विरूपयोः संघटनारूपः विषमाऽलङ्कारः; अपि च वधार्थं भगवदागमनस्य वधोद्देश्यकस्य तपःफलभूततयाऽध्यवसितत्वात्, भेदेऽभेदाध्यवसानरूपाऽतिशयोक्तिः; अपि च चतुर्थ-पादस्य पादत्रयवाक्यार्थं हेतुत्वेनाभिधानात् वाक्यार्थहेतुकं काव्यलिङ्गम्। इत्येषा-मङ्गाङ्गिभावात् सङ्करः]। मन्दाक्रान्ता वृत्तम्। लक्षणादिकमुक्तं प्राक् ॥ १३ ॥

(त) आमिति।—अनुभूतस्यापि अतिविस्मृतस्य द्रव्यस्य चिह्नदर्शनादिना यत् स्मरणं तत्प्रतिपादकमिदम् अव्ययम्; निश्चयेऽपि,—("आम् ज्ञाननिश्चययोः" इति उभयत्र मेदिनी)।

अथेदानीं पूर्व्वपरिचितां दण्डकारण्यभूभागसम्पदं विशिष्योपवर्णयितुमारभते, स्निग्धेति।—क्वचित् कुत्रचित् दिशि प्रदेशे वा, स्निग्धश्यामाः,—स्निग्धाः मसृणाः

एते तीर्थाश्रमगिरिसरिद्गर्त्तकान्तारमिश्राः
संदृश्यन्ते परिचितभुवो दण्डकारण्यभागाः ॥ १४ ॥

शम्बूकः। दण्डका चेयम्, अत्र किल पूर्व्वं निवसता देवेन,—
चतुर्दशसहस्राणि रक्षसां भीमकर्म्मणाम्।
त्रयश्च दूषणखरत्रिमूर्द्धानो रणे हताः ॥ १५ ॥

नयनप्रीतिकराः सौम्यदर्शनतया इत्यर्थः, तथा श्यामाः श्यामवर्णाः कोमलतरु-लतादिकिसलयानां सद्भावादित्यर्थः, अपरतः अन्यस्यां दिशि प्रदेशे वा भीषणो यः आभोगः पूर्णता, असीमविस्तार इति यावत्, तेन रूक्षाः अस्निग्धतया नयन-क्लान्तिकराः, तरुलतिकादिभिः केनचिदपि सत्त्वेन विरहिततया प्रथमदर्शनेन नितरां मानसोन्माथकाः इति भावः। तथा स्थाने स्थाने यत्र कुत्रचित्, निर्झराणां शैलादधः-पतितानां वारिप्रवाहाणां ("वारिप्रवाहो निर्झरो झरः" इत्यमरः)। झाङ्कृतैः अव्यक्त-शब्दविशेषैः मुखरककुभः मुखराः ध्वनिताः ककुभः दिशो यासु तथोक्ताः, ("दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः)। तीर्थेत्यादि।—तथा तीर्थानि ऋषिजुष्टजलादिसंयुक्तस्थानानि, तथा चोक्तम्,—"प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसाम्। परिग्रहान्मुनीनाञ्च देशानां तीर्थता स्मृता॥" इति। आश्रमाः मुनीनां निवासाः, गिरयः पर्व्वताः, सरितो नद्यः, गर्त्ताः कन्दर्य्यः, खातानि अवटाः वा, तथा हि—"धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते। न ता नदीशब्दवहा गर्त्तास्ताः परि-कीर्त्तिताः॥" इति। ["गर्त्त" इत्यत्र "गर्भ" इति क्वचित् पाठः, तदर्थस्तु ताः गर्भे अभ्यन्तरे येषां तथाविधाः] तैः परिशोभिता इत्यर्थः, ये कान्ताराः दुर्गमवर्त्मानि, ("महारण्ये दुर्गपथे कान्तारः पुन्नपुंसकम्" इत्यमरः) तैर्मिश्रा मिश्रिताः, युक्ता इति यावत्, परिचितभुवः, परिचिताः अनुभूतपूर्व्वा भुवः स्थानानि येषां तथोक्ताः, एते अग्मुखस्था इत्यर्थः, दण्डकारण्यभागाः, दण्डकारण्यस्य भागाः अंशाः प्रदेशा इत्यर्थः, संदृश्यन्ते विलोक्यन्ते, मयेति शेषः। [अत्र स्वभावोक्त्यलङ्कारः। भयानको रसश्च, भीषणाभोगरूक्षाः भूभागाः आलम्बनविभावाः, मुखरककुभं चीत्कार-झाङ्कृतयश्चोद्दीपनविभावाः, गद्गदस्वरभाषणदिक्प्रेक्षणादयः अनुभावाः, आवेगमोह-दैन्यादयश्च व्यभिचारिणः, एतैरभिव्यक्ता सहृदयमात्रसंवेद्या भीतिः भयानकरसतां भजते]। मन्दाक्रान्ता वृत्तम् ॥ १४ ॥

दण्डकायाः खरेजकानां घोररूपाणां रक्षसां विनाशात् अत्र जनस्थाने सर्व्वेषां स्वच्छन्दप्रचारः भगवता विहितः इत्यावेदयति, चतुर्द्दशेति।—पुरा वनवासाऽवसरे

येन सिद्धक्षेत्रेऽस्मिन् जनस्थाने मादृशानामपि भीरुजानपदानामकुतोभयः सञ्चारो जातः। (थ)

रामः। न केवलं दण्डकेयं, जनस्थानमपि !! (द)

(अत्र निवसता देवेन इत्यध्याहार्य्यम्) भीमम्‌अतीव क्रूरं कर्म्म प्राणिहिंसनरूपं येषां तथाविधानां, रक्षसां राक्षसानां, [सम्बन्धे षष्ठी] चतुर्द्दशसहस्राणि चतुर्दशगुणितानि सहस्राणि, तेषामधिनायकभूताः दूषणखरत्रिमूर्द्धानः इति त्रयश्च, रणे हताः विनाशिताः। (रामस्य शौर्य्यातिशयप्रकटनार्थं "रणे" इति पदप्रयोगः।) [समासान्तविधेरनित्यत्वात् "त्रिमूर्द्धानः" इत्यत्र "द्वित्रिभ्यां षो मूर्द्धः" (५।४।११५ पा०) इति न समासान्तः षः। अत एवात्र न च्युतसंस्कारता दोषः इति केचित्। केचित् तु तमेव दोषं मत्वा कथयन्ति तदुद्धारप्रकारं,—"त्रयश्च दूषणखरत्रिमूर्द्धाः समरं हताः" इति पाठं परिकल्प्य, यदि पुनः, "............त्रिमूर्द्धा, नः" इति छेदः स्यात्, तदा नः अस्माकं, रणे भवत्कृतसमरे इत्यर्थः, इत्यभिप्रेत्य व्याख्यातवन्तः, एके तु "नो" किम्? इति काक्वर्थयोजनया सिद्धान्तानुभवसगौरवप्रत्यभिज्ञापनं समाद्रियन्ते; तदा न भवति प्राक्तदोषस्पर्शः इति ध्येयम्]। पथ्यावक्त्रं वृत्तम्॥ १५॥

(थ) येनेति।—येन—खरदूषणादिराक्षसनिधनेनेत्यर्थः। सिद्धानाम् अणिमादिसिद्धिमतां मुनीनां देवयोनिविशेषाणां वा ("पिशाचो गुह्यकः सिद्धः भूतोऽमी देवयोनयः" इत्यमरः)। क्षेत्रं स्थानं तस्मिन्। भीरुजानपदानां—भीरवो भयशीलाः ये जानपदाः जनपदवासिनः तेषाम्। ["भीरुजनानाम्" इत्यपि पाठः दृश्यते, तस्य तथैवार्थः।] अकुतोभयः,—नास्ति कुतोऽपि कारणात् भयं यस्मिन् सः। ["मयूरव्यंसकादयश्च" (२।१।७२ पा०) इति निपातनात् समासः]।

(द) न केवलमित्यादि।—अस्ति हि विन्ध्यशैलपादाददूरस्थितायाः दण्डकायाः उपान्ते महारण्यं जनस्थानं, तत्र पुरा भगवान् सीतया सौमित्रिणा च सह साम्राज्योपभोगजं सुखमपि तृणाय मत्वा कियन्तं कालं निनाय, तत् सर्व्वमधुना स्मृतिपथमुदीयमानं समिद्धाग्निशिखानिभं निर्व्वासितायाः सीतायाः स्मरणात् जीवजीवनपरिहाराच्च शुष्केन्धनप्रायं रघुमणेः चेतः निर्दहति स्म। एष हि सन्दर्भसारः। दण्डकायाः दर्शनस्य भृशं दुःखाकरत्वेन सा एव पुरा दुर्दशा आसीत्, इदानीन्तु हतदैवस्य मे कर्म्मविपर्य्यासात् ततोऽप्यधिकतरं दुःखस्थानमासादितम् इत्यपिशब्दार्थः। ["दण्डकेव" इति पाठे—एवशब्दोऽवधारणार्थकः]।

शम्बूकः। बाढ़म्। एतानि खलु सर्व्वभूतलोमहर्षणानि उन्मत्तचण्डश्वापदकुलसङ्कुलगिरिगह्वराणि जनस्थानपर्य्यन्तानि दीर्घारण्यानि दक्षिणां दिशमभिवर्त्तन्ते। (ध)

तथाहि—

निष्कूजस्तिमिताः क्वचित्, क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः,
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः।

---

(ध) बाढ़मिति।—स्वीकारसूचकमव्ययमेतत्। ("भृशप्रतिज्ञयोर्बाढ़म्" इत्यमरः) "ओम् एवम्" इत्यादिवत्। सर्व्वभूतेत्यादि।—सर्व्वेषां भूतानां प्राणिनां लोमानि हर्षयन्तीति लोमहर्षणानि, येषु दृष्टेषु प्रभूतेन भयेनाभिभूतानां सर्व्वेषामेव जीवानां रोमाञ्चो जायते इति भावः, भीतिप्रदानि इत्यर्थः। उन्मत्तेत्यादि।—उन्मत्तानां क्षिप्तानाम् अत एव चण्डानामतिकोपनानां श्वापदानां [शुनः पदानीव पदानि येषां तथाभूतानाम्] हिंस्रपशूनां कुलानि सजातीयसमूहाः तैः सङ्कुला आकीर्णाः, ("सङ्कीर्णः सङ्कुलाकीर्णे" इत्यमरः) गिरिगह्वरा येषां तानि तथोक्तानि। जनस्थानेत्यादि।—जनस्थानं पर्य्यन्तः सीमा येषु तानि तथोक्तानि, जनस्थानस्य सीमारूपतया अवस्थितानीत्यर्थः। दीर्घारण्यानि—अत्यायतानि महावनानि। दक्षिणां दिशमभिवर्त्तन्ते—अवाचीं दिशं व्याप्य तिष्ठन्तीत्यर्थः, दक्षिणदिग्विलम्बितत्वात् तेषामतीव दीर्घत्वमिति भावः।

अथेदानीं जनस्थानस्य गम्भीरत्वं भीषणत्वञ्च प्रतिपादयितुं तत्स्थानतरुकोटरस्थानां कलकलप्रियाणां विहगानामपि हिंस्रकेभ्यः भयात् निःशब्दावस्थानं परिभ्रमणप्रियाणां सञ्चारवर्जनञ्च सूचयति, निष्कूजेति।—क्वचित् कुत्रचित् प्रदेशे जनस्थानस्येत्यर्थः, निष्कूजं कूजनस्याभावः [नञर्थेऽव्ययीभावः] तेन स्तिमिताः निश्चलाः, हिंस्रकाणां भयात् स्वभावसुलभं कलकलमपि विमुच्य यत्र तिर्य्यञ्चः मूकाः सन्तः नियतमासते, का कथा अन्येषामित्यर्थः; यद्वा,—निः नास्ति कूजः कूजनम् अव्यक्तमधुरध्वनिः येषां तथाभूताः, अत एव स्तिमिताः निश्चलाः हिंस्रकसञ्चारदर्शनादिति भावः, [इति विशेषणसमासः। एतेन सिंहव्याघ्रादिश्वापदसञ्चारो व्यज्यते]। क्वचिदपि, प्रोच्चण्डा आमिषालाभात् रौद्रतराः सत्त्वानां सिंहव्याघ्रप्रमुखाणां श्वापदानां स्वनाः शब्दा यासु तास्तथोक्ताः, श्वापदघोरगर्ज्जनैः प्रतिध्वनिताः इत्यर्थः। क्वचिच्च, स्वेच्छया सुप्ताश्च ते गभीरा अपरिमेया भोगाः शरीराणि येषां ते तथोक्ताः ("भोगः सुखे, धने चाहेः शरीरफणयोरपि" इति विश्वः) ["भोग" इत्यत्र क्वचित् "घोर" इति पाठः—तदर्थश्च

सीमानः प्रदरोदरेषु विलसत्स्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्य्यकैरजगरस्वेदद्रवः पीयते ॥ १६ ॥

सुगमः । क्वचिच्च "घोष" इति पाठः दृश्यते । तत्र—गभीरः घोषः शब्दो येषां ते इति भुजगविशेषणम् ] ये भुजगा अजगराः, तेषां श्वासैर्विषमरुद्भिरित्यर्थः, प्रदीप्ताः प्रज्वलिता अग्नयो दावानलाः यासु तास्तथोक्ताः ; यत्र हि यथेच्छ प्रगाढ़ं निद्रितानां भीषणवपुषाम् अजगरव्यालानां गभीरघोषाः श्वासमारुताः कुत्रचित् पादपसङ्घर्ष-जनितानां दावानलानां समेधकाः भवन्ति । तथा प्रदराणां गर्त्तानां भूविदाराणां ( "फाट" इति भाषा ) विदीर्णभूखण्डानामित्यर्थः, ( "प्रदरो रोगभेदे स्यात् विदारे शरभङ्गयोः" इति मेदिनी, "प्रदरं स्त्रीरुजी भेदे प्रदरः शरभीतयोः" इति च विश्वः ) उदरेषु मध्येषु विलसत् सुशीतलतया स्वच्छतया च शोभमानं, दुष्प्रापतया च स्वल्प-मम्भो जलं यासु ताः, तथोक्ताः सीमान्तो भागा इत्यर्थः, विद्यन्ते इति शेषः [एतेन भुवः प्रचण्डातपतापशुष्कत्वं व्यज्यते ] यासु सीमासु दण्डकारण्योपान्तभूमिषु इत्यर्थः, तृष्यद्भिः आतपोल्लङ्घनात् बलवदस्वस्थतया तृषाऽऽर्त्तैः, सुपेयसलिलपूर्णकूपाद्यभावा-दित्यर्थः, तत्तत्स्थलेषु जलानां सुदूरकूपतलस्थितत्वेन तेषां तत्र पानासम्भवादित्याशयः। प्रतिसूर्य्यकैः क्रकलासैः ("सरटः क्रकलासः स्यात् प्रतिसूर्य्यशयानकौ" इति हलायुधः ) अजगराणाम् आतपोत्तापजक्लेशोपशमाय शीतलपादपतलेषु गाढ़ं प्रसुप्तानां व्याल-विशेषाणां पूर्व्वोक्तानां वृहत्सर्पाणामित्यर्थः, स्वेदद्रवः घर्म्मवारि, ("स्विदस्तु स्वेदने घर्म्मः" इति मेदिनी ) पीयते । यस्यां हि जनस्थानसीमाश्रयिण्यामरण्यान्यां क्वचिदविरतं चङ्क्रम्यमाणानां श्वापदकुलानां भीषणगर्जनमाकर्ण्य भयात् विहगाः तूष्णीभूय स्थिताः, नराश्च निःशब्दपदसञ्चारं क्रामन्ते, अत एव निःशब्दगभीराः वनभूमयः दृश्यन्ते । क्वचिच्च क्षुत्पीड़िताः सिंहशार्दूलादयः भृशं गर्जन्तः क्रमं बध्नन्ति, अत एव कोलाहल-मुखरिताः, कुत्रचिच्च प्रसुप्ताः दन्दशूकाः घोरं निश्वसन्तः घर्म्मातिशयात् शाखि-सङ्घर्षोद्भूतं दावानलं समेधयन्ति, प्रचुरजलाशयाद्यभावात् तृष्यन्तश्च सरटाः तृषावेगं विसोढुमशक्नुवानाः अजगरस्वेदद्रवं निपीय कथञ्चित् तृषां वारयन्ति, इत्यतो रौद्रत्वं वनस्थल्या इति तात्पर्य्यम् । [ अत्र मन्दारण्यस्य यथायथोपवर्णनात् स्वभावोक्त्यलङ्कारः, अपि चात्र, बीभत्सो रसः भयानकरसस्याङ्गभूततयोपवर्णितः, इति रसवदलङ्कारः । तथाहि,—"रसभावौ तदाभासौ भावस्य प्रशमस्तथा । गुणीभूतत्वमायान्ति यदा-ऽलङ्कृतयस्तदा । रसवत् प्रेय ऊर्ज्जस्वि समाहितमिति क्रमात् ॥" इति दर्पणे । अत्रा चाङ्गिनः भयानकरसस्य आलम्बनविभावाः शीर्णकृष्णसर्वाः अजगराश्च,

राम:। पश्यामि च जनस्थानं भूतपूर्वखरालयम्।
प्रत्यक्षानिव वृत्तान्तान् पूर्वाननुभवामि च ॥ १७ ॥

[सर्वतोऽवलोक्य।] सर्वथा प्रियारामा हि वैदेही आसीत्, एतानि तानि नाम कान्ताराणि, किमत: परं भयानकं स्यात्!! (न)।—

---

तेषाञ्चोद्दामविचेष्टनानि घोरतरनिश्वासाश्चोद्दीपनविभावा:, नरविहगादीनां दीनाश्चोत्कम्पकूजितादयश्चानुभावा:, ते ते त्रासदैन्यशङ्कादयश्च व्यभिचारिणो भावा:, एवमेतै: व्यज्यमाना भीति: भयानकरसतामेति ; अपि चाङ्गभूतस्य बीभत्सस्य आलम्बनविभावा: अजगरस्वेदद्रवादय:, तत्र च दौर्गन्ध्यक्रिम्यादयश्चोद्दीपनविभावा:, सुपुर्णं तद्द्रवपानादयश्चानुभावा: तै: ; मोहावेगादिभिश्च व्यभिचारिभावै: परिपुष्टा जुगुप्सा बीभत्सरसतामादत्ते इति ध्येयम्। अत्र भिन्नार्थशक्तस्य गभीरशब्दस्याऽपरिमेयार्थे वाचकत्वाऽभावात् रूढिप्रयोजनादिभावेन लक्षणया तदर्थप्रतीते: नेयार्थत्वदोष:, निम्नलेत्यादितदर्थवाचकशब्देन परिहरणीय: ]। शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

अथ जनस्थानस्थितानां द्रव्यनिचयानां परिचयात् अनावेदितमपि अनन्यसाधारणतया तदेतदिति प्रत्यभिज्ञापयति इत्यभिप्रेत्याह, पश्यामि इति।—पूर्व्वं भूत:, [सुप्सुपेति समास: ], यद्वा,—पूर्व्वस्मिन् काले भूत: [राजदन्तादित्वात् परनिपात: ] खरस्य राक्षसविशेषस्य आलयो यस्मिन् तथाविधं, जनस्थानं पश्यामि, अरण्यान्यातेतस्या अधुनाऽपि एतादृगेव भीमाकारकत्वं यत् तेषां राक्षसकण्टकानां समूलमुन्मूलनेऽपि सर्व्वथैव तथाविधं भीत्यावहत्वं नापसरतीति भाव:। अत: पूर्व्वान् पूर्वकालिकान्, वृत्तान्तान् उदन्तान्, प्रत्यक्षानिव अक्षमिन्द्रियं प्रतिगता: प्रत्यक्षा: (गतिसमास:) तानिव साक्षाद्दृश्यमानानिवेत्यर्थ:, अनुभवामि प्रतीतिपथं पातयामि, साक्षात्करोमीति समुदितार्थ:, [तेषां तेषामतीतविषयाणामिदानीं समुद्बोधकवशात् तत्सजातीयवस्तुसन्दर्शनाच्च अभ्युदयात् प्रत्यक्षदृश्यमानत्वमित्युत्प्रेक्षा तथा क्रिययो: एकस्मिन् कर्त्तरि रामेऽन्वयात् दीपकालङ्कार:, अपि च भूतविषयाणां प्रत्यक्षायमाणत्वेन निर्देशात् भाविकालङ्कारध्वनि:, एताभ्यां सङ्कीर्य्यते।—"अप्रस्तुतप्रस्तुतयो: दीपकन्तु निगद्यते। अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥" इति साहित्यदर्पणे ]। पथ्यावक्त्रं वृत्तम् ॥ १७ ॥

(न) सर्वथेत्यादि।—सर्वैरेव प्रकारै:, स्वच्छन्दानुवर्त्तनं विनैव आत्मन: तत्तद्दर्शनोत्सुक्यातिशयसत्त्वादित्यर्थ:। प्रियारामेति।—आ विशेषेण रम्यते यस्मिन्

त्वया सह निवत्स्यामि वनेषु मधुगन्धिषु।
इति हा रमते सीता सोऽहस्तस्याः स तादृशः॥ १८॥

---

इत्याराम उपवनम् [ आरमते: घञि रूपम् ] प्रियः आरामो यस्याः सा तथोक्ता वनदर्शनोत्सुका इत्यर्थः। पक्षान्तरे—आरामप्रिया, [ बहुव्रीहौ प्रियशब्दस्य पाक्षिकपरनिपातदर्शनादिति ध्येयम् ]। ("आरामः स्यादुपवनं कृत्रिमं वनमेव यत्" इत्यमरः); अत्र लक्षणया वनमात्रपरत्वमवधेयम्। यद्वा,—प्रियः आरामः [ भावे घञ् ] आरमणं यस्याः तथाविधा। एतानि तानि—तया सीतया सह मया प्रीत्या अनुभूतपूर्वाणि, सा हि मे महारण्यवासप्रियसखी आसीदित्याशयः। कान्ताराणि महाऽरण्यानि, ("कान्तारोऽस्त्री महाऽरण्ये विले दुर्गमवर्त्मनि" इति मेदिनी)। अतः परम्—एभ्यः अधिकं, किं—वस्तु, भयानकं स्यात्?—दुःसहदुःखावेगावहत्वादित्यर्थः. सीताविरहितया जनस्थानप्रवेशस्य नितरामेव मर्म्मस्पृक्त्वमत एव सीतां विना अद्य सकलमेव भीषणं दुःखास्पदमिति भावः। यासु यासु हि वनस्थलीषु पुरा सीतया लक्ष्मणेन च सहाऽहमक्लेश महामोदेन च सार्द्धमनिशं बभ्रमितवान्, कथमिदानीं तद्विनाकृतः असहायः सन् तासु तासु भ्रमिष्यामीति महादुःखकरमेतदिति तात्पर्य्यम्।

तदीयामकलुषामप्रार्थितोपनतां प्रत्यर्पणाशालेशनिर्म्मुक्ताञ्च प्रीतिं प्रदर्शयितुं स्वसहवासप्रणयित्वं प्रस्तौति, त्वयेति।—अहं त्वया सह मधुगन्धिषु [ मधुनः गन्धः लेशः येषु ईषन्मधुगन्धविशिष्टेषु इत्यर्थः ("गन्धो गन्धक आमोदे लेशे सम्बन्धगर्व्वयोः" इति विश्वोक्तेः) "अल्पाख्यायाम्" ( ५।४।१३६ पा० ) इति इदन्ताऽऽदेशः ]। "प्रचुरमधुविशिष्टार्थत्वे" तु मधुनः पुष्परसस्य बहुलगन्धः एषु, इति मत्वर्थीय इनिः "भूमनिन्दाप्रशंसासु" इत्युक्तेः ] विविधवनप्रसूनसुशोभितव्रततिमण्डयेत्यर्थः, वनेषु निवत्स्यामि अवस्थास्ये, न मे राज्यादिसुखेषु प्रयोजनमिति भावः, इति सचिह्नं सौत्सुक्यञ्च उक्त्यर्थः, हा शोकावेगसूचकध्वनौ, सीता रमते सततम् आनन्दं प्रकाशितवती, दोहददशायान्तु सुतरामेवेत्यर्थः। [ कारणस्य कार्य्याऽव्यवहितपूर्व्वसत्त्वस्यापेक्षितत्वात् रामसहकृतवनवासानन्तरमेव कार्य्यभूतसीतारमणं युक्तम्, अत्र तु तथाविधपौर्वापर्य्यविपर्य्ययदर्शनात् कार्य्यहेत्वोः पौर्व्वापर्य्यात्ययरूपातिशयोक्त्यलङ्कारः चिन्तनीयः। अत्र क्वचित् "इति वारमतीवासौ" एवं पठ्यते; तदर्थस्तु पूर्ववत्, परं "व्याङ्परिभ्यो रमः" ( १।३।८३ पा० ) इति परस्मैपदम्। "इति ह्यारमतैवासौ" पाठे तु—"ह"शब्दयोगात् "हशश्वतोर्लङ् च" ( ३।२।११६ पा० ) इति लङ् विशेषस्त्वेवम्। ] तदनुरागस्याकृत्रिमत्वमनुपमत्वञ्च व्यक्तीकरोति सोऽह इति।—तस्याः

अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।
तत् तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः॥ १८॥

स स्नेहः मयि आहिता निरतिशया अनन्यसाधारणी च प्रीतिस्तादृशः तथैव आसीत् इति शेषः। मदेकसुखा सीता आसीदिति भावः। यद्वा, स तु तादृशः, स इव आसीत्, तस्य सदृशं किमपि इह जगति नासीति तात्पर्य्यम्। तत्सादृशस्य वस्त्वन्तरस्यासत्त्वात् केऽपि सुभगैः पुरा तस्यातीयसुखस्यानास्वादितत्वादित्याशयः। ["हृदयन्त्वेव जानाति प्रीतियोगं परस्परम्" इत्यादि वक्ष्यमाणवचसा तस्य परिच्छेदातीतत्वं गम्यते। अत्र सीतास्नेहस्यैकस्यैव वस्तुनः उपमानोपमेयत्वपरिकल्पनात् अनन्वयाऽलङ्कारः; "उपमानोपमेयत्वमेकस्यैव त्वनन्वयः" इति साहित्यदर्पणात्; तेन च सीतास्नेहस्याऽलौकिकत्वमसाधारणत्वञ्च व्यज्यते, इत्यलङ्कारेण वस्तुध्वनिरिति ध्येयम्। अपि चात्र कारणभूतस्य सीतायास्तादृशस्नेहस्य तथाविधवनवासरमणादिकार्य्यं प्रति समर्थकत्वेनोपन्यासात्, कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, एतयोः अन्योऽन्यनैरपेक्ष्येणैकत्रावस्थानात् संसृष्टिः वेदितव्या]॥ १८॥

कथं हि सा धीरा जानकी तथाविधेषु मधुगन्धिषु वनेषु अभीक्ष्णं दोहदवती आसीत्? कथं वा किञ्चिदपि अकुर्वाणे, प्रत्युतातिविषमदुःखदायके अतीवदारुण निष्कृपे त्वयि इत्थं प्रणयिनी आसीत्? इत्याक्षेपे, तस्याः मुग्धायाः अहैतुकस्नेहवत्त्वं, दर्शनमात्रादेवामीषां, तस्याः व्यलीकशतापहरणात् तेषु तेषु मयि च अकपटनिरतिशयस्नेहवत्त्वमित्यभिदधाति, अकिञ्चिदिति।—अकिञ्चिदपि कुर्वाणः किमपि प्रीतिकरं कर्म अकुर्वन्नपि प्रियो जनः इति शेषः, [यद्यप्यत्र क्रियया सह नञः साक्षादन्वितत्वेन प्रसज्यप्रतिषेधत्वात्, तेन नञा सार्द्धं तत्पुरुषसमासः अयुक्तः, पर्य्युदासेनैव तत्समासस्येष्टत्वादिति मन्यते, तथापि, क्वचित्, अश्राद्धभोजी असूर्य्यम्पश्या अपुनर्गेयाः श्लोका इत्यादिवत् स्थलविशेषेषु तस्य पर्य्युदासत्वमङ्गीकृत्य तेन साकं समासोऽपि अङ्गीकृत आचार्य्यैरिति; तथाहि, यथा अश्राद्धभोजी इत्यत्र भोजनरूपक्रियया नञोऽन्वयमस्वीकृत्य कर्त्तरि णिनेः प्रयोगात् कर्त्रंशेनैवान्वयोऽभिमततया स्वीकृतः, तथा च न प्रोक्तदोषावकाशः; तद्वदिहापि अकिञ्चिदपि कुर्वाणः इत्यत्र कर्त्तरि अपि-करोतेः शानच्विधानदर्शनात् तत्कर्त्तरि एव तदन्वयलाभात् तस्य किञ्चिदुपकृति कर्त्तुः भिन्नात् जनात् इत्यर्थपरत्वेन तत्र न काऽपि समासानुपपत्तिः न वा अविमृष्टविधेयांशदोषाऽवकाशः इति केचित्। नात्र अभवन्मतसम्बन्धदोषस्य अवसरः, तस्य हि सर्वथाक्यार्थगतत्वेन प्रायशः सम्भवात् तत्सत्त्वे तु सर्वथाक्यार्थस्य भटिति बोधासुदयात्

आत्रेयी। तदलमेभिर्दुरासदैः। अथैतानि मदकलमयूर-कण्ठकोमलच्छविभिः अवकीर्णानि पर्व्वतैः अविरलनिविष्ट-नीलबहुलच्छाय-तरुण-तरुषण्ड-मण्डितानि असम्भ्रान्तविविध-मृगयूथानि पश्यतु महानुभावः प्रशान्तगम्भीराणि मध्यमा-रण्यकानि (प)।—

विधेयाविमर्शदोषस्तत्रद्भायान्तु यदेवाविमृष्टं भवति तस्यैव दुष्टत्वात्, अत्र तु जनः विशेषणत्वेनान्विततया गुणीभावात् अविमृष्टविधेयांशरूपत्वमेव, तदुद्धारोपायस्तु प्रदर्शितः इति नव्यम्]। सौख्यैः सुखसमूहैः दर्शनस्पर्शनसम्भाषणमात्रात्समापतितै-रित्यर्थः, दुःखानि शरीरिभिरपरिहार्य्यान् शोकसन्तानान् अपोहति, नाशयति। प्रियजनानामेवं हि सम्मोहिका अन्तर्निगूढ़ा प्रीतिरासाद्यते, यत् तैः कदाऽपि किमपि अकुर्वद्भिरपि नेत्रमोहनैः तदीयप्रीतिदर्शनैः प्रियजनाः नितराम् अनुरज्यन्ति इत्याशयः। एतदेव विशदीकृत्य उपपादयति, तद्धिति।—यो हि यस्य प्रियो वल्लभो जनः भव-तीत्यर्थः, तत् तथाभूतः स्निग्धः जनः [विधेयप्राधान्यात् क्लीवत्वम्] तस्य अपोढ़-नीयदुःखवतः नितरां प्रेमवतः जनस्य इत्यर्थः, किमपि द्रव्यं कश्चिदनिर्वचनीयः पदार्थः भवति, कथम्भूतः भवतीति वचसा विवेचयितुं न शक्यते इत्यभिप्रायः। सान्निध्य-मात्रेणैवालौकिकसुखसम्भारस्य जननादित्याशयः। तादृशस्निग्धजनस्य संसर्गात् दुःखसमूहस्य समूलोपघातदर्शनात् प्रियजनस्य किञ्चित्कारणेनाशून्यस्यापि मे तद्दुःख-निवर्त्तकसन्निधिमात्रमेत्य वराकी जानकी वनवासजनितासीमदुःखसन्ततिं कदाऽपि कथमपि मनसि नानीनयत्, अवाक्प्रसरमखिलं विवेद इति तु तात्पर्य्यम्। अतः निखिलविपत्पातहेतुः तस्याः मया सार्द्धं कान्तारागमनदीर्घदमपि तद्वदिदं तस्यां युक्तमेवेति सन्दर्भसङ्क्षेपः। [अत्राप्रस्तुतात् प्रियसामान्यात् प्रस्तुतस्य सीतारूप-प्रीतिकरस्य वस्तुनः प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः। अपि चात्र कारणभूतस्य अनिर्वचनीयद्रव्यभूतस्य प्रियवस्तुनः, तद्दर्शनसमुत्थसुखप्रवाहेण दुःखसमूहनाशरूपस्य कार्य्यस्य समर्थकत्वेनोपन्यासात् कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, एतयोः परस्परसापेक्ष्येण संस्थितेः सङ्करः]॥ १९॥

(प) अथ रामस्य अभावनीयामुत्कण्ठामालोक्य सा च दण्डकारण्योपान्तस्य-गभीरारण्यस्य कठोरतासन्दर्शनजनितेति बुद्ध्वा पुनस्तदुपशमार्थं कठोरतां परित्यज्य जनस्थानमध्यमारण्यस्य स्निग्धत्वं वर्णयते, तदिति।—तत्—तस्मात्, एभिः,—दुःख-मासाद्यते एभिरिति दुरासदैर्दुःखोत्पादकैर्भीषणानामातपक्लान्त्यादिसूचकैर्वनविवरणै-

इह समदशकुन्ताक्रान्तवानीरवीरुत्-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति।

रित्यर्थः, भीषणतया दुष्प्रेक्षणीयैरिति यावत्, अलं—प्रयोजनं नास्ति। [व्यर्थार्थकाऽल-मव्ययशब्दयोगात् तृतीया, समर्थार्थकतद्योगे तु चतुर्थी भवति] ("अलं भूषणपर्याप्ति-शक्तिवारणवाचकम्" इत्यमरः)। अथ पुनर्वाक्यारम्भे। पश्यतु महानुभावः एतानि प्रशान्तगम्भाराणि मध्यमारण्यानि। प्रशान्तत्व गम्भीरत्वञ्च व्यापयति, मदेति।—मदेन हर्षातिरेकेण कला: येषाम् अव्यक्तमधुरं केकारवं कुर्वन्तः इति यावत्, ये मयू-रास्तेषां परमानन्दप्रफुल्लानामित्यर्थः ये कण्ठास्तद्वत् कोमला पेशलतया मनोमुग्धकारिणी इति यावत्, छविः कान्तिर्येषां तैस्तथोक्तैः पर्वतैः अभ्यन्तरारण्यावच्छेदेन सुभगैः [पर्यन्तैः इति पाठे—पर्यन्तैः परिसरैः मध्यमारण्यस्येति शेषः]। जनस्थानोपान्तवनस्य अतीव भयावहत्वेऽपि दूरत एव परमरमणीयतया तस्याभासमानत्वात् इयमुक्तिः, मध्यमा-रण्यस्यैव आरण्यकैः रमणीयविविधविहङ्गमैश्चाध्युषितत्वात् सुषमाऽतिशयवत्त्वं वेदि-तव्यम्। अवकीर्णानि—सङ्कुलानि। अविरलेत्यादि।—तथा अविरलं निविडं यथा तथा निविष्टाः स्थिताः अत एव नीलेन बहला गाढश्यामा: छाया: येषां तैः; एवम्भूता ये तरुणाः नवीनाः समधिकवीर्य्यादिवत्त्वात् मनोहराः तरवः पादपाः तेषां षण्डानि समूहाः ("षण्डं पद्मादिसङ्घाते न स्त्री स्यात् गोपतौ पुमान्" इति मेदिनी। "पद्मादि" इत्यादिशब्दात् वृक्षादेः परिग्रहः) तैर्मण्डितानि भूषितानि, तथा असम्भ्रान्तानि भयादिरहितत्वात् स्वच्छन्दचराणि विविधानां मृगाणां पशूनां यूथानि येषु तानि तथोक्तानि। प्रशान्तगम्भीराणि—प्रशान्तानि हिंस्रकसङ्घातसञ्चारणाय-भावात् अनुद्वेगकराणि, गम्भीराणि विशालतरुषण्डमण्डितत्वात् सुविस्तृतत्वाच्च तरसा विस्मयसम्भ्रमकराणि, मध्यमारण्यकानि—जनस्थानस्य मध्यभूमिभागस्थितानि विशालकानि विस्तृतविपिनानि, तदभ्यर्णोपान्तारण्यमेव नितरां भीषयते हिंस्रक-परिपूर्णत्वात्, तस्य तु तथात्वाभावात् सौम्यदर्शनत्वं वेदितव्यम्।

अथ विषादमलीमसं राघवस्य मानसं प्रीणयितुमाह, इहेति।—इह अस्मिन् मध्यमारण्यभूमिभागे, समदैः यौवनोद्दामजनितमदातिरेकात् सततपुलकितैः शकुन्तैः विहङ्गमैः आक्रान्ताः अध्युषिताः अत एवानारतं व्याधूतश्चेति भावः, या वानीर-वीरुधः वेतसलतिकाः तासां प्रसवैः मनोहरप्रसूनैः सपदि शकुन्ताक्रमणात् अनारतमेव हन्तच्युतैः इत्यर्थः, सुरभीणि सुरभीकृतानि शीतानि शीतलानि स्वच्छानि निर्म्मलानि तोयानि सलिलानि यासां तथाविधाः। तथा फलभराणां फलसमूहानां परिणामात्

फलभर-परिणाम-श्याम-जम्बूनिकुञ्ज-
स्खलन-मुखर-भूरि-स्रोतसो निर्झरिण्यः ॥ २० ॥

अपि च।—दधति कुहरभाजामत्र भल्लूकयूनाम्
अनुरसितगुरूणि स्त्यानमम्बूकृतानि।
शिशिरकटुकषायः स्त्यायते शल्लकीनाम्
इभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ २१ ॥

परिपाकाद्धेतोः श्यामाः श्यामवर्णाः, यद्वा फलभरेण स्तवकपूर्णप्रसवभारावनम्रतया इति भावः, परिणामाः परिणामवन्तः ईषदवनताः अत एव वेपमाना इत्यर्थः, ये श्यामजम्बूनिकुञ्जाः श्यामायमानजम्बूलतिकापिहितोदराः गर्भगृहाः इति यावत्; तेभ्यः स्खलनेन पतनेन मुखराणि शब्दायमानानि भूरीणि स्रोतांसि बहवः प्रवाहा यासां तास्तथोक्ताः, निर्झरिण्यो गिरिनद्यो वहन्ति गच्छन्ति। फलानां परिणामः कुञ्जानां श्यामत्वे फलानां पतने च हेतुः। [अत्र स्वभावोक्त्यलङ्कारः]। मालिनी वृत्तम् ॥ २० ॥

कुर्वचिद्वैतस्य मध्यमारण्यस्य हिंस्रकभूयिष्ठतया तद्गर्जनप्रतिध्वानैः भीषणतां, वन्य-कुञ्जरोपसेविततया च मनुजानां स्वच्छन्दसञ्चाररहित्यं स्त्यानवर्णशपादपानाञ्च निर्यासगन्धैः मृदुमधुरामोदकारित्वञ्चोपवर्णयितुं प्रक्रमते, दधतीति।—अत्र मध्यमारण्यकोपान्तभूविभागेषु कुहरभाजां गिरिगह्वरस्थितानां भल्लूकयूनां तरुण-भल्लूकानाम्, अनुरसितेन गर्जनाव्यवहितोत्तरं जायमानेन प्रतिध्वनिना गुरूणि प्रतिशब्ददीर्घाणि अम्बूकृतानि सनिष्ठीवध्वनयः, ("अम्बूकृतं सनिष्ठीवम्" इत्यमरः)। स्त्यानं वृद्धिं दधति। ("स्त्यानं स्निग्धे प्रतिध्वाने घनत्वालस्ययोरपि" इति विश्वः)। भल्लूका हि शौर्यादिवशात् ज्वरादिकाले वा स्वभावत एव निष्ठीवनसहितं ध्वनिं कुर्वन्ति। स तु ध्वनिः अनुरणनसहायकमेत्य वृद्धिं गत्वा नितरां पथिकमनांसि भीषयते इति भावः। अपरतस्य मध्यमारण्यकस्य गजयूथसञ्चारभयावहत्वञ्चोपपाद-यति, शिशिरेत्यादि।—तथा शल्लकीनां गजभक्ष्यलताविशेषाणां ("गन्धिनी गजभक्ष्या तु सुवहा सुरभी रसा। महेरणा कुन्दुरुकी शल्लकी ह्लादिनीति च" इत्यमरः)। शिशिरः शीतलः कटुस्तीव्रः कषायः कषायरसोद्गारी सुरभिश्च, ("कटुतिक्तकषायास्तु सौरभे च प्रकीर्तिताः" इति हलायुधः)। इभैर्हस्तिभिर्मदस्राविभिरित्यर्थः, ("दन्ती" इत्याद्यारभ्य "इभः स्तम्बेरमः पद्मी" इत्यमरः)। दलिता विदारिताः मर्दिता इत्यर्थः, अत एव विकीर्णाः परितो विक्षिप्ताश्च ये ग्रन्थयः पर्वाणि तेषां

रामः। [ सबाष्पस्तम्भम्। ] भद्र! शिवास्ते पन्थानो देवयानं प्रतिपद्यस्व पुण्येभ्यो लोकेभ्यः। (फ)

शम्बूकः। यावत् पुराणब्रह्मवादिनमगस्त्यमृषिमभिवाद्य शाश्वतं पदमनुप्रविशामि। (ब)

[ इति निष्क्रान्तः। ]

---

निष्यन्दस्य निस्रवस्य रसक्षरणस्येत्यर्थः, गन्धः स्यायते वर्द्धते। इभमदगन्धैर्मिश्रितः सन् द्विगुणीभूय परितः प्रसरतीति भावः। एतदपि रामस्य सीतावियोगविधुराशयस्य मनःप्रसादनार्थं वर्णितः। विकाशकवस्तुवर्णनाश्रवणसमकालं हि प्रायशः मानसी व्यथा कियच्छोपशाम्यतीति प्रसिद्धिः। [ अत्राऽपि स्वभावोक्त्यलङ्कारः ]। मालिनी वृत्तम्॥ २१॥

(फ) सबाष्पस्तम्भमिति।—बाष्पाणामश्रूणां सीतावियोगजनितानामित्यर्थः, स्तम्भः स्तम्भनं कथञ्चित् प्रियजनसंलापजनितेन हर्षेण उपशमीकरणं तेन सह वर्त्तमानं यथा तथा। रामस्य तु सीताविरहशोकावेगः तत्तद्दृष्टवन्यवस्तुसन्दर्शनात् एभिरपि शम्बूकवचनैर्न उपशमितः, अपि तु एकाग्रतया वर्द्धित एवेति स कथञ्चिद्वाष्पं स्तम्भयित्वा शम्बूक विसृजति, शिवा इति।—ते तव पन्थानः शिवाः सुखजनकाः सन्त्विति शेषः, पुण्येभ्यः पवित्रेभ्यो लोकेभ्यः भुवनेभ्यः पुण्यान् लोकान् गन्तुमित्यर्थः [ "क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः" ( २।३।१४ पा०) इति सूत्रेण चतुर्थी ]। [ "देवयानाः" इति पाठान्तरं दृश्यते, तदर्थस्तु पुण्यलोकप्रयाणोपयोगिनः शुभाः सुखाय पन्थानः ते सन्तु इति, ते च पन्थानः "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्" इति विविधाः उपदिष्टाः। अथवा देवयानं देवविमानं भगवत्करकमलसंस्पर्शजनितपुण्यसन्ततिविपाकवशेन समुदीयमानं, प्रतिपद्यस्व पावनलोकगमनार्थं आरोहेत्यर्थः। यद्वा देवयानं ज्योतिष्मता वर्त्मना अर्च्चिरादिमार्गेणेति यावत् हिरण्यगर्भलोकगमनमित्यर्थः, साष्ट्यादिमोक्षावाप्तये प्राप्नुहि, ब्रह्मानन्दसहोदरं मोक्षं भजेति भावः। तद्गमनप्रकारो यथा छान्दोग्ये—"मासेभ्यः संवत्सरं संवत्सरादादित्यम् आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनां गमयत्येष देवयानः पन्थाः इति"। इति। ] यद्यपि व्रतादिषु शूद्रस्य तपस्यधिकाराभावात् नैतादृशः फललाभः सम्भवतीति शङ्क्यते, तथाऽपि भगवद्दर्शनस्य महिमभूयस्त्वादेवमुक्तमित्यूहनीयम्।

(ब) पुराणेत्यादि।—यावदवधारणे। ब्रह्मवादिषु वेदोपदेष्टृषु तपोधनेषु पुराणं प्राचीनं सतामपि पूजितमित्यर्थः, तस्य अतीव ब्रह्मपरायणोपासकेषु हृद्यत्वात्

राम:। एतत् तदेव हि वनं पुनरद्य दृष्टम्
यस्मिन्नभूम चिरमेव पुरा वसन्त:।
आरण्यकाश्च गृहिणश्च रता: स्वधर्मे
सांसारिकेषु च सुखेषु वयं रसज्ञा:॥ २२॥

इति भाव:। यद्वा—पुराण: पुरातनोऽसौ ब्रह्मवादी वेदतत्त्वोपदेष्टा तमित्यर्थ:। अगस्त्यमृषिं—तपोधनम्, अभिवाद्य—सत्कृत्य वन्दित्वा। शाश्वतं—शश्वद्भवं क्षय-रहितमपुनरावर्त्तनीयं, पदं—स्थानं ब्रह्मपदमिति यावत्, देवीपुराणमेतस्य पतन-राहित्यमावेदयति। तथा हि,—"सत्यस्तु सप्तमो लोको ह्यपुनर्भववासिनाम्। ब्रह्मलोक: समाख्यातो ह्यप्रतीघातलक्षण:"॥ इति। अनुप्रविशामि—अनुगच्छामि, पूज्यानां पूजाव्यतिक्रमे श्रेयोलाभस्य प्रत्यूहभूतत्वादित्याशय:।

अथेदानीं भगवान् रघुमणि: सुदु:सहं तादृशं वनवासदु:खमिवहमपि सस्मृत्य वनी भूत्वाऽपि गृही भवन् सीतया सह कियता सुखेन कालं निनायेति विचिन्त्याह, एतदिति।—तदेव प्रियया सह पूर्वं सुखेनाध्युषितं तथा विना भृशं पुनर्दु:खकर-मित्यर्थ:, एतद्वनम् अद्य पुन: दृष्टं बहो: कालात् परं नयनपथं समागतमित्यर्थ:। यस्मिन् वने पुरा पूर्वं चिरमेव चतुर्दश समा: व्याप्य वयं सीता लक्ष्मण: अहञ्चेत्यर्थ:, वसन्त: कृतनिवासा अत एव स्वधर्मे स्वोचिते रता वनिनामसकलमाचारमनुपालयन्त: गृहिणश्च गृहस्थाश्च आरण्यका वानप्रस्थाश्च सन्त: सांसारिकेषु गृहाश्रमसमुचितेषु एकदेव मनुष्यजन्मलभ्येषु सर्वेषु सुखेषु इत्यर्थ:, रसज्ञा अभूम आस्वादज्ञा भूता:। ("शृङ्गारादौ बले वीर्य्ये सुवर्णे विषशुक्रयो:। आस्वादे च रसं प्राहु:" इति शब्दा-र्णव:।) प्रकृते वनवासिन: अभवन्त: अपि वयं सीतया सह तासु तासु वनस्थलीषु सुचिर विहरन्त: गृहिणां यावद्भोगसाधनमुपभुञ्जाना: अविदितगतयामा: चिराय सुखेनानुपमेन कालं यापितवन्त:। अत्रास्माकं सुखभोगानां परा काष्ठा जाता इति तु सङ्क्षेप:। पितुराज्ञया अरण्यनिषेवणात् वनित्वं, सीतया सह गृहस्थोचितसुख-सन्तानोपभोगाच्च गृहित्वमवधेयम्। अत: कारणभेदात् समुपजायमानयो: विरुद्धयो-रपि आश्रमयोरेकत्राऽवस्थानं सङ्गच्छते इति वेदितव्यम्। गृहस्थवनस्थाश्रममधि-कृत्याह देवीपुराणम्,—"पञ्चभिश्च महायज्ञै: श्रद्दधानो यजेदिह। देवताऽतिथि-शिष्टाशी नियतो वेदकर्मसु॥" इत्यादि। पञ्चमहायज्ञाश्च स्वाध्यायाग्निहोत्रातिथि-पूजनपितृतर्पणबलिकर्मरूपा:। "भूमौ मूलफलाशित्वं स्वाध्यायस्तप एव च। संवि-भागो यथान्यायं धर्म्मोऽयं वनवासिन:॥" इत्यादि च। वसन्ततिलकं वृत्तम्॥ २२॥

अपि च।—एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि।
आमञ्जुवञ्जुललतानि च तान्यमूनि
नीरन्ध्रनीलनिचुलानि सरित्तटानि॥ २३॥
मेघमालेव यश्चायमारादपि विभाव्यते।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी नदी॥ २४॥

निसर्गशोभाऽऽकरीभूतानां तासां हि वनस्थलीनां कियत् मानसोन्मादकत्वमासीत्, सखीतेरस्माभिरुपभुक्तासु स्वभावलीलास्थभूमिषु तासु तासु च मत्तहरिणाः विश्रामजसुखोपभुक्तये निचुललतिकाकुञ्ज निर्भयमधिशय्य रोमन्थायमानाः सीतया कथं हि सस्नेहमालोकिताः ? इति अनुध्यायन् रघुमणिः सगद्गदं पुनरभिधत्ते,एत इति।—ते एव पूर्वपरिचिता इत्यर्थः,पुरा सीतया सार्द्धं मया सुचिरं सुखमध्युषिताः इति यावत्, विरुवन्तः मधुर केकारवं कुर्वन्तः मयूराः बर्हिणः येषु तथाविधाः सुमधुरकलालापकलापिशालिनः इति यावत्, एते पुरतः दृश्यमानाः गिरयः पर्वताः ; तान्येव सीतया पूर्वदृष्टानीत्यर्थः, मत्ताः मदातिरेकात् अभिवातं धावन्तः अत एव प्रफुल्लाः इत्यर्थः,हरिणा येषु तानि तथोक्तानि वातमजहरिणान्वितानि वनस्थलानि वनभूमयः ; तानि च भ्रमणादिनोपभुक्तानीत्यर्थः,अमूनि सम्मुखवर्त्तीनि,आ अत्यर्थं मञ्जवोऽधिकमनोहरा इत्यर्थः, वञ्जुला अशोकवृक्षा वेतसाः तिनिशाः वा तेषां ते एव वा लताः येषु तानि तथोक्तानि, ("वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि" इति मेदिनी) नीरन्ध्रा निरवकाशा अविरलनिविष्टा इति यावत्, नीलाः श्यामवर्णा अनूपप्रदेशजायमानतया अतिसरसकिसलयोपशोभिताः इत्यर्थः, निचुला स्थलवेतसलतिका येषु तानि तथोक्तानि सरित्तटानि ; सर्व्वत्र सन्तीति क्रियया अन्वयः। ("वानीरे कविभेदे स्यान्निचुलः स्थलवेतसे" इति शब्दार्णवः)। [ अत्र क्रियापदस्याध्याहार्य्यत्वेनान्वयात् न्यूनपदत्वदोषः नाशङ्कनीयः, प्राचीनैरालङ्कारिकाचार्य्यैः क्रियापदस्याध्याहारादिस्थले तथाविधदोषस्यानङ्गीकारादिति विभावनीयम्। अत्र प्रस्तुतानां गिरिवनस्थलादिपदार्थसङ्घानाम् एकेन क्रियारूपधर्म्मेणान्वयात् प्रस्तुतपदार्थैकधर्म्माभिसम्बन्धरूपः तुल्ययोगिताऽलङ्कारः। —"पदार्थानां प्रस्तुतानामन्येषाञ्च यदा भवेत्। एकधर्म्माभिसम्बन्धः स्यात् तदा तुल्ययोगिता॥" इति दर्पणात् ]। वसन्ततिलकं वृत्तम्॥ २३॥

जनस्थानोपान्तवर्त्तिनः नियतवर्त्तुकाकादम्बिनीभिः इतस्ततसमुपवीततया मेघमालामयस्येव दूरतः आभासमानस्य गोदावरीजन्मभुवः प्रस्रवणगिरेः उपान्तभूमौ सीतया

अस्यैवासीत् महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद् वयमपि रतास्तेषु पर्णोटजेषु।
गोदावर्य्याः पयसि विनतश्यामलानोकहश्री-
रन्तःकूजन् मुखरशकुना यत्र रम्यो वनान्तः॥ २५॥

---

सहात्मनः विहरणमुपस्मृत्य इदानीं विरहसीततया अभीक्ष्णं विलपन्नाह, मेघमाले-वेत्यादि।—अयं पुरतः दृश्यमानः यः मेघमालेव कादम्बिनीव आरादपि दूरादपि ("आराद्दूरसमीपयोः" इत्यमरः) विभाव्यते पर्व्वतत्वेन प्रतीयते, सोऽयं प्रस्रवणो नाम गिरिः पर्व्वतविशेषः, इति वेदितव्यः। यत्र पर्वतापान्तभूमौ इत्यर्थः, इयं गोदावरी नाम नदी प्रवहतीति शेषः, अस्यैव पाददेशप्रवाहिणी इयमवधातव्या इति भावः। अत्युन्नततया अस्यैव गिरेः सजलजलदपङ्क्तिरिव अतिदूरात् तथाविधप्रतीयमानत्व-मित्यवधेयम्। [ अत्रोपमाऽलङ्कारः स्फुट एव। अत्र चोपमानोपमेययभावे लिङ्गव्यत्यास-दर्शनात् "सुधेव धवलश्चन्द्रः" इत्यादिवत् भग्नप्रक्रमतादोषो नाशङ्कनीयः; उपमानोप-मेयगतसाधारणधर्म्मस्यान्यथाभावादर्शनात् मेघमालत्वस्याजहल्लिङ्गतया लिङ्गविभेदे-ऽपि नोक्तदोषावसरः। "अयम्" इति पदस्य वारद्वयं प्रयोगात् पुनरुक्तिदोषस्तु अस्त्येव इति विभावनीयम् ]। पथ्यावक्त्रं वृत्तम्॥ २४॥

तस्यैव शैलस्याधस्तात् सुमधुरारावैभिः विविधैः विहङ्गमैरध्युषिते तस्मिन्नेव वनान्ते रम्यां पर्णशालां विरचय्य सीतया सहाऽहं सुचिरं सुखमुषित्वा तत्पर्वतमधि-शयानेन परमोपकारिणा पितृसुहृदा जटायुषा सस्नेहं निरीक्ष्यमाणः कालम् अनैषं, गोदावर्य्याश्च नद्याः विमलं कलधौतधवलञ्च सलिलं भृशमवगाह्य सीता कामपि वन-वासजां वेदनामननुभूय कियता हि सुखेन दिवसं यापितवती तत् तदेवेदानीं बहुधा विलप्याह राघवेन्द्रः, अस्येति।—अस्यैव गिरेः प्रस्रवणस्येत्यर्थः, महति अत्युन्नते विशाले च, शिखरे शृङ्गे,("शिखराऽस्त्री द्रुमाग्रेऽद्रिशृङ्गे पुलककर्य्ययोः" इति मेदिनी)। गृध्राणां (दाक्षिणात्यानां "शकुनि" इति भाषा) राजा गृध्रराजः तस्य,["राजाहःसखिभ्यष्टच्" (५।४।९१ पा०) इति टच् समासान्तः] गरुडात्मजस्य पितृसखस्य अस्मत्पूजितस्य जटायुष इत्यर्थः, वासः वसतिरासीत्। तस्य तद्वासस्य तच्छिखरस्य वाऽधस्तान्निम्न-प्रदेशे, तन्निम्नस्थेष्वित्यर्थः, [ अधस्तादिति पदम् अधरशब्दादस्तातिप्रत्ययेन, अधर-शब्दस्याधादेशेन च सिद्धम् ] तेषु पूर्वाध्युषितेषु पर्णोटजेषु पर्णानाम् उटजेषु पर्ण-शालासु [ अत्र उटजशब्दस्यैव पर्णशालार्थकत्वेऽपि पुनः पर्णपदग्रहणं कुटीरस्य प्रचुरपर्ण-विरचितत्वद्योतनार्थं, कुण्डलशब्दस्यैव कर्णभूषणार्थकत्वेऽपि श्रवणकुण्डलादिशब्द-

आ, तदत्रैव सा पञ्चवटी, यत्रातिचिरनिवासेन विविध-विस्रम्भातिप्रसङ्गसाक्षिणः प्रदेशाः (भ) प्रियायाः प्रियसखी च

प्रयोगवत् ।) वयमपि सीतारामलक्ष्मणाः रता अत्यासक्ताः सन्तः न्यवसामेति शेषः ; नियतसहजसौन्दर्य्यावलोकनतत्पराणामस्माकं पर्णावासेष्वपि अत्यासक्तिरासीदिति भावः। यत्र यस्मिन् प्रदेशे गोदावर्य्याः तन्नामधेयायाः सरितः पयसि जले विनतानां फलभरावनतानां सलिलपर्य्यन्तपतितानामित्यर्थः, श्यामलानां श्यामैः पल्लवैर्विराजमानानामनोकहानां वृक्षाणां श्रीः शोभा यस्मिन् स तथोक्तः, [ "विनत" इत्यत्र "वितत" इति पाठे—विततानां पयसि प्रतिविम्बितानां श्यामलानाम् अनोकहानां श्रीः शोभा यस्मिन् सः तथोक्तः इत्यं वार्थः । "अनोकहः" इत्यस्य अनसः शकटस्य अकं गतिं हन्तीति व्युत्पत्तिलभ्योऽर्थः पर्य्यालोचनीयः, ( अनस् + अक + हन् + डः । "अनोकहः कुटः सालः पलाशी द्रुद्रुमागमाः" इत्यमरः ) । एकदेशान्वयस्य सर्व्वत्र साधुत्वाभावेऽपि "प्रतियोगिपदादन्यद् यदन्यत् कारकादपि । वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते ॥" इति नियमेन अत्र कारकेण पयसीत्यनेन वृत्तिशब्दैकदेशीभूतविनतशब्दस्यान्वयेऽपि न क्षतिरिति सुधीभिर्भाव्यम् ] तथा मुखराः शब्दायमानाः शकुनाः पक्षिणः, ( "शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः" इत्यमरः ) यस्मिन् स तथोक्तः, अत एव अन्तर्मध्ये कूजन् प्रतिध्वननिव स्थित इत्यर्थः, [ केचित्तु—"अन्तःकूजन्मुखरशकुनः" इत्येकपदं मन्यमानाः अन्तः अभ्यन्तरे कूजन्तः रुवन्तः मुखरशकुनाः गीतपराः पक्षिणः यत्र स तथोक्तः इत्येवं व्याचक्षते ] रम्यः रमणीयः सुदृश्यसुश्राव्यसुसेव्यत्वादिना मनोहर इत्यर्थः, वनान्तो वनस्वरूपम् । ( अत्र अन्तशब्दः स्वरूपवाचकः, तथा च मेदिनी—"अन्तः स्वरूपे नाशे नाऽस्त्री शेषे चान्तिके त्रिषु" इति ) दृश्यते इति शेषः । [ अत्र कूजनस्य अप्राणिवनकर्त्तृकत्वासम्भवेऽपि अन्तःकूजन्निवेत्यर्थतः वने कूजनकर्त्तृत्वस्य प्रतीयमानतया भावाभिमानिनी प्रतीयमाना क्रियोत्प्रेक्षा नामालङ्कारो बोध्यः ] । मन्दाक्रान्ता वृत्तम् ॥ २५ ॥

( भ ) पूर्वदृष्टदण्डकारण्यरामणीयकमधुना पुनरवलोकयन् भगवान् रामचन्द्रः स्थानसान्निकर्षेण सम्प्रति समुद्दीपितया पञ्चवटीप्रत्यभिज्ञया नितरां दूयमानो विलपति, आ इति ।—आ इति प्रत्यभिज्ञानसूचकमव्ययं ( "आ प्रगृह्यं स्मृतौ वाक्ये" इति मेदिनी ) तत्—तदा, यद्यतदेव बहुतरप्रत्यभिज्ञानेन दण्डकारण्यमिति सुस्थितमित्यर्थः । अत्रैव—अस्मिन्नेव प्रदेशे, यत्र—पञ्चवट्याम्, अतिचिरनिवासेन,—अतिचिरं बहुकालं व्याप्य यो निवासः तेन ; ["अत्यन्तसंयोगे च"(२।१।२९ पा०) इति द्वितीयया

वासन्ती नाम वनदेवता प्रतिवसति। तत् किमिदमापतितमद्य रामहतकस्य !! (म) सम्प्रति हि (य)—

चिरोद्वेगारम्भी प्रसृत इव तीव्रो विषरसः
कुतश्चित् संवेगात्प्रचित इव शल्यस्य शकलः।

---

समासः ] बहुकालावस्थानेनेत्यर्थः, यत्र हि लोकैर्बहुकालमवस्थीयते कालेन तदवस्था-ऽवस्था सुष्ठु परिज्ञाता भवेदिति तत्र विश्रम्भातिप्रसङ्गस्य सर्वथा सम्भव इत्याशयः।
विविक्तेति।—विश्रम्भेण कार्य्यान्तरप्रस्थितस्य लक्ष्मणस्य सत्वरप्रत्यावर्त्तनं लोकप्रचार-विरहिते चात्र अपरस्य कस्यचिदप्यागमनञ्चात्यन्तमसम्भवीति न कस्यापि दर्शनसम्भव इति विश्वासेन, ("समौ विश्रम्भविश्वासौ" इत्यमरः) ये अतिप्रसङ्गा लज्जासङ्कोचादि-वर्ज्जितविलक्षणप्रेमालापविहारादीनामत्याकूढयः अधिकसम्बन्धा इत्यर्थः, ते विश्रम्भातिप्रसङ्गाः, विविधानां अनेकप्रकाराणां विश्रम्भातिप्रसङ्गानां साक्षिणः साक्षाद्द्रष्टारः, आधारभूता इत्यर्थः, [ साक्षीतिपदं "साक्षाद्द्रष्टरि संज्ञायाम्" (५।२।९१ पा०) इति इनि-प्रत्ययेन निपातनात् सिद्धम् ] प्रदेशाः,—स्थानानि सन्तीति शेषः।

(म) सहजं कृत्रिमं वा यदेव रामणीयकं प्रियजनसङ्गतस्य चेतसि नितराम् अननुभूतपूर्वमानन्दमुत्पादयति, काले तदेव प्रियजनविरहिणो दृष्टिपथमापतितमधिक-तरं चेतो दुनोतीति नियमस्यायत्तो रघुमणिरपि प्रियाविरहितस्तासाम् सम्प्रत्यव-लोकयन् नितरां दुःखितो विलपति, तदिति।—तत्—तस्मात्। आपतितम्—उपस्थितं, प्रियया सार्द्धं पूर्वं सानन्दमवलोकितानामेतेषां दर्शनं सम्प्रति तया विर-हितस्य मे नितरामन्तुदं जातमिति समुदितार्थः।

(य) अरण्यवासकाले प्रियया सङ्गतो रघुनाथः पर्य्यटन्नपि यामेव दण्डकारण्यरमणीयतामवलोक्य वनवासजमपि क्लेशजातं विसस्मार, सम्प्रति तया विरहितोऽसौ तामेव रमणीयतामवलोक्य समुद्दीपितपूर्वस्मृतिरनुभूयमानां मर्म्मयातनां वक्ष्यमाणश्लोकेन विज्ञापयन्नाह, सम्प्रति हीति।

चिरोद्वेगेति।—चिरादुद्वेगं हृदयदाहमारभते उत्पादयतीति चिरोद्वेगारम्भी, चिरकुष्ठरादिविषस्येव कालान्तरपरिणामीत्यर्थः, ( इह लोकोपमायामेव विशेषणमिद-मुत्तरोत्तरेष्वपि वाक्येषु अन्वेति ) प्रसृतः सर्व्वावयवेषु व्याप्तः तीव्रः अत्युग्रः विषरसः इव विषद्रवः इव। ("रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोः। शृङ्गारादौ द्रवे वीर्य्ये देहधात्वम्बुपारदे॥" इति विश्वः) अत्र रसशब्देन विषगतः कश्चिदुत्कर्षो बोध्यः ; तथा

व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुन-
र्घनीभूतः शोको विकलयति सम्मूर्च्छयति च ॥ २६ ॥
तथापि तान् पूर्वसुहृदो भूमिभागान् पश्यामि। [निरूप्य]
अहो! अनवस्थितो भूमिसन्निवेशः (र)। तथा हि—(ल)

कुतश्चित् यस्मात् कस्मादपि स्थानादागत्येत्यर्थः, संवेगादतिवेगात् निखातः अन्तः-प्रविष्टः शल्यस्य शङ्कोः तीक्ष्णाग्रस्य अस्त्रविशेषस्येत्यर्थः, ("वा पुंसि शल्यं शङ्कुर्ना" इत्यमरः) शकलः इव खण्डः इव ("भित्तं शकलखण्डे वा पुंसि" इत्यमरः) तथा हृन्मर्मणि हृदेव मर्म हृन्मर्म तस्मिन् हृदयरूपजीवस्थाने, रूढग्रन्थिः जातसन्धिः, सन्नद्धमूलः इति यावत्; पुनः स्फुटितः विदीर्णः व्रणः इव ईर्मेमिव ("व्रणोऽस्त्रियामीर्म्ममरुः क्लीवे" इत्यमरः) शोकः प्रियाविरहजं दुःखं पुनर्घनीभूतः [अघनो घनः सम्पद्यमानो भूतः इति घनीभूतः इत्यभूततद्भावे च्विप्रत्ययः] कालवशेन नष्टप्रायोऽपि पञ्चवट्यादिबहुविधोद्दीपकवस्तुसन्दर्शनात् पुनः सान्द्रतामधिगतः सन् विकलयति व्याकुलीकरोति (विकलं करोति इति विकलयति "तत् करोति तदाचष्टे" ग० इति णिच्) सम्मूर्च्छयति च सम्मोहयति च, मामिति शेषः। यथा तीव्रो हालाहलः कालक्रमेणान्तःशरीरं प्रसर्पन्नेतो विकलयति, तथा मनसि विलीनप्रायोऽपि प्रियाविरहजः शोकोद्वेगः सम्प्रति सुचिरपरिचितानां वनगहनपर्वतादीनामवलोकनेन पुनः स्मृतिपथमारूढो नवीभूत इव मामतितरां विह्वलयतीति भावः। [अत्र केचित् द्वितीयपादे "निखातः" इत्यत्र "चलितः" इति पाठं मन्यमाना व्याचक्षते—कुतश्चित् यस्मात् कस्माच्चित् संवेगात् सम्भ्रमादिजन्यात् सङ्घट्टनात् चलितः कम्पितः शल्यस्य अन्तःशरीरप्रविष्टस्येति भावः, शकलः खण्ड इवेति। अत्र एकस्मिन्नेव शोकरूपोपमेये विषशल्यव्रणरूपाणां बहूनाम् उपमानानां दर्शनात् मालोपमानामालङ्कारः स्फुट एव; तथा विकलनसम्मूर्च्छनरूपयोरुभयोरेव क्रिययोः शोकरूपैककर्तृकत्वाद्दीपकञ्चाप्यलङ्कारो बोध्यः]। शिखरिणी वृत्तम् ॥ २६ ॥

(र) ननु "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति शोकोद्वेगहेतुभूतानामेतेषामवलोकनं यत्नतः परिहीयतामित्याह, तथाऽपीति। तथाऽपि—एतेषां भूभागानां शोकोद्दीपकत्वेऽपि। पूर्वसुहृदः,—पूर्वं सुहृद्वत् कान्तप्रियाचरणाः; एते हि पूर्वं नित्यसान्निध्येन बहुविधानुकूल्येन चास्माकं वनवासजमपि दुःखजातमपाकुर्वन्तः सुहृद्भूताः इति भावः। निरूप्य—इतस्ततो विशेषेणावलोक्य। अनवस्थितः,—विपर्यस्तः, पूर्वावस्थातो वैषम्यमधिगतः इत्यर्थः। भूमिसन्निवेशः,—भूमीनां सन्-

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्य्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥ २७ ॥

स्थानीयानां भभागानां सन्निवेशः अवस्थानम्; पुरा यादृशं भूमिसंस्थानं दृष्टम् अधुना न तथाऽवस्थितमित्यर्थः।

(ख) सुचिरकालानन्तरं कार्य्यानुरोधात् दण्डकारण्यमनुप्रविष्टो दाशरथिः पञ्चवट्यादिसन्दर्शनात् समुद्बोधितपूर्वस्मृतिरालम्बनविभावस्वरूपाणामेषां सरिद्वन-भूधराणां सहजसौन्दर्य्यसन्दर्शनेन समुद्दीप्तप्रियाविरहजशोकोऽपि कमप्यनिर्वचनीय-मानन्दसन्दोहमनुभवन्नितस्ततः समालोकयंश्च यदेवावस्थावैषम्यमन्वभवत्, तदेवेदानीं वक्ष्यमाणश्लोकेन विशन्नुमाह,—तथा हीति।

कीदृशमवस्थावैषम्यम्? इत्याह, पुरेति।—पुरा प्राक् अस्मिन्नेव वने प्रियतमया सीतया सहावस्थानकाल इत्यर्थः, यत्र यस्मिन् स्थाने सरितां नदीनां स्रोतः प्रवाहः आसीदिति शेषः, अधुना सम्प्रति, सुचिरकालानन्तरं मम वर्त्तमानदर्शनावस्थाया-मित्यर्थः, तत्र तस्मिन्नेव स्थाने पुलिनं सलिलसमुत्थितं सिकतासनाथं तटं सम्पन्नमिति शेषः; पूर्वं यत्र स्रोतस्ततोप्रवाहः प्रवहन्नविरतं कलं निनदं च सन्ततमस्मानभ्यनन्दयत्, स एव सम्प्रति कुटिलकालवशेन सलिलसमुत्थितभूमिरूपेण सर्वथा परिणमन् कादाचित्कमपि स्वकीयं तदात्वमस्तित्वं न कथमपि प्रमाणयतीति भावः। क्षिति रुहां तरूणां [ क्षितौ रोहन्ति उत्पद्यन्ते ये ते क्षितिरुहः तेषां, क्षिति + रुह् + क्विप्] घनविरलभावः निविड़त्वं प्रतनुत्वञ्चेत्यर्थः, विपर्य्यासं वैपरीत्यं यातः प्राप्तः; पुरा यत्र घनसन्निविष्टाः पादपाः आसन्, तत्र ते कालवशेन विरलतामुपगताः, यत्र पुनरपरे पादपाः विरलसन्निवेशमधिगता आसन्, सम्प्रति त एव घनीभूता इति नैव ते समुपयुज्यन्ते प्रत्यभिज्ञायामिति भावः। अत एव बहोः कालात् सुचिर-समयात् परमिति शेषः [बहुशब्दस्य सङ्ख्याप्रचुररूपोभयार्थकत्वेन सङ्ख्यावाचकात् नित्यं बहुवचनं प्रचुरार्थकात्त्वेकवचनमपीति बहोरित्यत्र एकवचनप्रयोगः "किं बहुना" इत्यादिबहुतरशिष्टप्रयोगवत न कमपि दोषमावहतीति सुधीभिर्विभाव्यम्। "कालात" इत्यत्र अनन्तरार्थे पञ्चमी, परमितिशब्दस्याध्याहारेण समर्थनीया] दृष्टम् अवलोकितम् इदं परिदृश्यमानं वनमरण्यम् अपरमिव अन्यद् वनमिव मन्ये अनु-भवामि इत्यर्थः। नन्वेवं प्रत्यभिज्ञापकानां स्रोतःपादपप्रभृतीनामन्यथाभावात्

हन्त परिहरन्तमपि मामितः पञ्चवटीस्नेहो बलादाकर्ष-
तीव। (व) [सकरुणम्।]—

यस्यां ते दिवसास्तया सह मया नीता यथा स्वे गृहे
यत्सम्बन्धिकथाभिरेव सततं दीर्घाभिरास्थीयत।

तदेवेदमरण्यमिति विनिश्चये कस्मादव्यभिचरितो हेतुः? इत्यपेक्षायामाह, निवेश इति।—शैलानां पर्वतानाम् अनतिपरिवर्त्तनशीलतया सम्प्रत्यपि पूर्ववदवस्थितानामित्यर्थः, निवेशः संस्थानम्, अपरिवर्त्तितमवस्थानमित्यर्थः, इदं परिदृश्यमानं वनं तत् पूर्वदृष्टम् इति बुद्धिं ज्ञानं द्रढयति दृढीकरोति [दृढां करोति इति द्रढयति"तत्करोति तदाचष्टे"गु० इति णिचि "भृशक्रशदृढपरिवृढानामेव रत्वं" वा० इति ऋकारस्य रत्वम्।] तदेवेदं वनमिति निश्चयज्ञानं जनयति इत्यर्थः। सर्वत्रैवानुमितेः प्रमात्वं प्रति साधनगतस्याव्यभिचरितत्वादेरपेक्षिततया अत्रापि पूर्वदृष्टतद्वनगततत्तच्छैलादिसाधनेन सुचिरकालेनाप्यनतिपरिवर्त्तनशीलतयाऽव्यभिचारिणा इदन्त्वावच्छिन्नपञ्चवटीत्ववत्त्व-साध्यकानुमितौ कस्यचिदपि हेत्वाभासस्य असत्त्वान्नेदमनुमानमप्रमात्वशङ्काकलङ्कितमिति भावः। [अत्र प्रकृते पञ्चवटीवने तादात्म्यसंसर्गकापरवनत्व प्रकारकोत्कटैककोटिकसंशयप्रदर्शनादुत्प्रेक्षानामालङ्कारः; सा अपरवनत्वरूपभावपदार्थप्रकारकतया भावाभिमानिनी, इवशब्दोत्थापिततया च वाच्या। तथा तस्मिन्नेव वने अन्यवनवद्बुद्धिं प्रति प्रथमद्वितीयपादोक्तसरिद्वृक्षादिगतावस्थावैषम्यार्थप्रतिपादकवाक्यार्थद्वयस्य हेतुतयोपन्यासात् काव्यलिङ्गमलङ्कारः। तथैतदलङ्कारद्वयप्रतिपादितवैचित्र्यविशेषवशेन च तद्वनगततत्तच्छैलादिसाधनेन इदन्त्वावच्छिन्नपञ्चवटीत्ववत्त्वसाध्यकानुमित्युत्पत्तेरनुमानालङ्कारश्चेत्येतेषामलङ्काराणाम् अङ्गाङ्गिभावेन सङ्करः]। शिखरिणी वृत्तम् ॥२७॥

(व) हन्तेति।—हन्तेति खेदसूचकमव्ययम्। परिहरन्तमपि—परित्यजन्तमपि, पञ्चवटीं परिहृत्य गच्छन्तमपीत्यर्थः। पञ्चवटीस्नेहः,—पञ्चवटीं प्रति प्रबलः अनुरागः। आकर्षतीव—प्रत्यावर्त्तयतीव [इति क्रियोत्प्रेक्षा]; पूर्वमतिदीर्घकालवसतिसंवर्द्धितानुरागः पुनरेतद्वनसन्दर्शनात्प्रबलीभूतः सम्प्रत्येतद्वनत्यागे महान् प्रत्यूहः सञ्जात इति भावः।

वियोगे हि रमणीयवस्तुमात्रदर्शनस्यैव दुःसहतया पूर्वानुभूतपञ्चवटीरामणीयकसन्दर्शनमिदानीमतिदुःसहं भवेदिति पूर्वसुहृदः एताम् सुचिरमिदानीमवलोकयामि न वेत्यं किङ्कर्त्तव्यविमूढो रामभद्रः सशोकमाह, यस्यामिति।—यस्यां पञ्चवट्यां स्वे गृहे यथा स्वकीये राजभवने इव ("यथा यथा तथैवैवं साम्ये" इत्यमरः) सर्वथा निरुप-

एकः सम्प्रति नाशितप्रियतमस्तामद्य रामः कथं
पापः पञ्चवटीं विलोकयतु वा, गच्छत्वसम्भाव्य वा ॥ २८ ॥

इवत्वरामणीयकादिभिः राजभवनतुल्यायां यस्यामिति यावत। मया तया प्रियतमया सीतया सह ते धर्मसुखहेतुतया विश्रम्भतः प्रसिद्धाः दिवसाः दिनानि नीताः यापिताः, [अत्र दिवसपदेन न केवलं रजन्यः समधिकसुखेन यापिताः, परन्तु दिवसाः अपीति ध्वन्यते, तेन च राजधान्यपेक्षयाऽस्याः किञ्चिद्वैशिष्ट्यमपि द्योत्यते ; तथा हि तत्र राजकार्य्यादिना दिवसेषु सहावस्थानमसम्भवम्, इह तु कार्य्यान्तरगुरुजनसान्निध्याद्यसम्भवतयाऽहर्निशं निःसङ्कोचप्रणयाभिव्यक्तिरिति स्वगृहाद्विशेषः।] तथा दीर्घाभिः प्रशंसाबाहुल्याद्घटनाबाहुल्याद्वा अतिविस्तृताभिः तत्सम्बन्धिकथाभिः यस्याः पञ्चवट्याः सम्बन्धिन्यः विषयिण्यः कथाः आलापाः ताभिः एव यां पञ्चवटीमधिकृत्य प्रवृत्तैरालापैरेवेति यावत्, [एवकारेण च कथान्तरप्रसक्तिव्युदासः। यत्कथाभिरित्यनुक्त्वा यत्सम्बन्धिकथाभिरिति कथनात् पञ्चवटीवनसमीपवर्त्तिनामपि रम्यता व्यज्यते] सततम् अहर्निशम् आस्थीयत स्थितम् आवाभ्यामिति शेषः ; वनवासाद् गृहं प्रतिनिवृत्य प्रेयस्या सह दिवानिशं पञ्चवटीविषयकालापमेवाकरवमिति भावः। [अत्र आस्थीयते इति पाठेऽपि व्याख्यानं सुकरमेव, किन्तु प्रक्रमभङ्गः, भूतकालनिर्देशोपक्रमे वर्त्तमानकालिकप्रत्ययनिर्देशस्यानुचितत्वात्।] सम्प्रति इदानीं नाशिता नाशं प्रापिता नाशार्थं विपिने विसृष्टेत्यर्थः, प्रियतमा प्राणेभ्योऽपि प्रिया पत्नी येन स तथोक्तः, [अत्र नाशितप्रियतमः इत्यनेन प्रियतमायाः विनाशो यदि दैवाधीनः स्यात्, तदा यथाकथञ्चित् सह्यते, अत्र तु विनाशोऽसौ मयैव प्रापितः इति क्लेशातिशय्यं, "सम्प्रति" इत्यनेन दुःखस्य नवीभावश्च व्यज्यते] अत एव अद्य एकः एकाकी सीताविरहितः इति यावत्, पापः पापात्मा नृशंसकर्म्मा इत्यर्थः, रामः तां चिरसहचरीभूतामित्यर्थः ; सामान्यतो रमणीयवस्तूनां सन्दर्शनमेव विरहे क्लेशकरं किं पुनः प्रियया सह प्रागनुभूतानामेतेषामिति भावः। पञ्चवटीं कथं केन प्रकारेण वा विलोकयतु पश्यतु, विलोकयितुं शक्नुयादित्यर्थः, कथं वा असम्भाव्य किञ्चित्कालं दर्शनावस्थानादिना असमाहृत्य गच्छतु अन्यतो व्रजतु ? उभयमपि सुदुष्करमित्यभिप्रायः। कदाचित् प्रियायाः सम्बन्धबलात् तदाहृतत्वाच्च पञ्चवटी प्रिया ततः सा सुखकरी, किन्तु यत्सम्बन्धबलात् पञ्चवटी प्रिया आसीत्, सेदानीं नष्टा, अतः सा दुःखकर्य्येव पञ्चवटी सदर्शनेन सीतास्मरणकारणतया दुःखाय च सुखाय च भवतीति अत्र किञ्चित्कालमवस्थानमिदानीमितो गमनं वैतदुभयमपि अशक्यं रामस्येति

शम्बूकः । [ प्रविश्य । ] जयति जयति देवः । देव ! भगवानगस्त्यो मत्तः श्रुतभवत्सन्निधानः त्वामाह,—"परिकल्पितविमानावतरणमङ्गला प्रतीक्षते वत्सला लोपामुद्रा, सर्वे च महर्षयस्तदेहि सम्भावयास्मान् । अथ प्रजविना पुष्पकेण स्वदेशमुपगम्याश्वमेधाय सज्जो भविष्यसि" इति । (श)

भावः । [ अत्र रामस्य पापवत्तायां नाश्रितप्रियतम इति पदार्थस्य हेतुतयोपन्यासात् काव्यलिङ्गमलङ्कारः ; तथा प्रथमपादे "यथा स्वे गृहे" इत्यत्र उपमाऽलङ्कारश्च, सा च यथा शब्दवाच्यतया श्रौती । तथैव च स्वभवन इव पञ्चवट्यां निरुपद्रवमुखविहरणादिकमासीदिति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिरूहणीयः ] । शार्दूलविक्रीडितं वृत्तम् ॥ २८ ॥

( श ) भगवान्—भगः ऐश्वर्य्यादिषड्गुणाः विद्यते यस्य स भगवान्, ऐश्वर्य्यादिशालीत्यर्थः, "ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः । ज्ञान-वैराग्ययोश्चैव षसां भग इतीङ्गना ॥" मत्तः —मत्सकाशात् मन्मुखादित्यर्थः । श्रुतेति ।—श्रुतम् आकर्णितं भवतः सन्निधानम् उपस्थितिः येन स तथोक्तः, आहेत्यस्य "सज्जो भविष्यसीति" पर्य्यन्तप्रतीकान्तस्थेन इति शब्देनान्वयः । परिकल्पितेति ।—परिकल्पितानि सज्जीकृतानि, आयोजितानीति यावत् ; विमानात् पुष्पकाद् अवतरणे मङ्गलानि अवतरणकालोचितमङ्गलजनकदूर्व्वाक्षतादिवस्तूनि यया सा तथोक्ता । वत्सला—त्वयि सस्नेहा [ वत्सं कामः अस्या अस्तीति वत्सला, "वत्सांसाभ्यां कामबले" ( ५।२।९८ पा० ) इति लच्प्रत्ययः ] लोपामुद्रा—तन्नाम्नी अगस्त्यपत्नी । प्रतीक्षते—भवद्दर्शनार्थमवतिष्ठते, त्वां द्रष्टुं त्यक्तसर्व्वव्यापारा तिष्ठतीत्यर्थः । सर्व्वे च—सकलाश्रमवासिनः, [ अत्र "आगस्त्याश्रमाः" इति पाठे—अगस्त्याश्रमवासिनः, अगस्त्यगोत्रापत्यानि वेत्यर्थः ] । सम्भावय—आगमनेन सम्मानयेत्यर्थः । प्रजविना—प्रकृष्टो जवो विद्यते यस्य तेन, महावेगशालिनेत्यर्थः, अस्माकं सम्भावनायां यत् किञ्चित्कालक्षेपो भवेत् स रथे किञ्चिदधिकवेगोत्पादनेन पूरणीयः इति भावः ; [ "न कर्म्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इत्यनुशासनात् तादृशस्थले कर्म्मधारयान्मत्वर्थीयप्रत्ययस्यासाधुत्वेऽपि प्रजविनेत्यत्र मत्वर्थीयेन इनि-प्रत्ययेनाधिकस्यातिशय्यरूपार्थस्य वाच्यतया न दोषः इति सुधीभिर्विभाव्यम् ] । अश्वमेधाय—अश्वमेधनामानं क्रतुं सम्पादयितुमित्यर्थः, [ अत्र "क्रियार्थोपपदस्य च" (२।३।१४ पा०) इति चतुर्थी ] सज्जः,—उद्योगीत्यर्थः ।

रामः। यथाऽऽज्ञापयति भगवान्। (ध)

शम्बूकः। इतस्तर्हि देवः प्रवर्त्तयतु पुष्पकम्। (न)

रामः। भगवति पञ्चवटि! गुरुजनानुरोधात् क्षणं क्षम्यतामतिक्रमो रामस्य। (प)

शम्बूकः। देव! पश्य पश्य।—

कूजत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः।

---

(ध) यथेति।—भगवान्—तपःसमुद्भूतैश्वर्य्यादिगुणशाली अगस्त्यः। यथाऽऽज्ञापयति—यथैवादिशति, तद्वदेवानुतिष्ठामीत्यर्थः।

(न) तर्हीति।—यदि भवान् भगवतोऽगस्त्यस्यादेशः पालनीयः इति मन्यते तदेत्यर्थः। इतः,—अनेन पथा। प्रवर्त्तयतु—प्रेरयतु, चालयत्वित्यर्थः।

(प) भगवतीति।—दुष्करतपःप्रभावोद्भासितानामृषीणामाश्रमस्वरूपतया पञ्चवट्याः भगवतीति सम्बोधनम्। गुरुजनानुरोधात्—गुरुजनस्य पूजनीयस्यागस्त्यस्य अनुरोधः छन्दानुवर्त्तनं तस्मात्। अतिक्रमः,—असम्भावनया युक्ताचारस्य उल्लङ्घनम् उचिताचारं विना अतिक्रम्य गमनं वा। क्षम्यताम्—मृष्यताम्, भगवतोऽगस्त्यस्यादेशेन तच्छन्दानुवर्त्तनार्थमेवायमतिक्रमो न त्विच्छाकृत इति भावः।

अगस्त्यादेशेनालङ्घनीयेन सुचिरं पूर्वसुहृत्पञ्चवटीशोभासन्दर्शनसुखमनुभवितुमसमर्थो रामभद्रस्तच्चिन्ताव्याकुलो भवेदिति शङ्कमानः शम्बूकः स्वभावशोभासन्दर्शनेन तस्य चित्तविक्षेपमनाकुर्वन् पथि प्राकृतशोभामुपवर्णयन्नाह,कूजदिति।—कुञ्जाः लताद्याच्छन्नानि स्थानान्येव कुटीराः क्षुद्रगृहाः तेषु स्थिताः कौशिकघटाः पेचकसमूहाः ("महेन्द्र-गुग्गुलूलूकव्यालग्राहिषु कौशिकः" इत्यमरः) कूजन्तीनाम् अव्यक्तं शब्दायमानानां कुञ्जकुटीरकौशिकघटानां कुञ्जस्थपेचकसमूहानामित्यर्थः, ये घुत्काराः घुत्घुत् इत्याकाराः रवाः तद्वन्तस्तद्विशिष्टा ये कीचकस्तम्बाः वेणुविशेषगुच्छाः (बाँशझाड़ इति भाषा। "वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इति "अप्रकाण्डे स्तम्बगुल्मौ" इति चामरः) तेषां आडम्बरेषु समूहेषु ("आडम्बरो गजानां पटहरवे गर्जिते प्रारम्भे च" इति हलायुधः) मूकानि कौशिकभयाद्भिःशब्दमवतिष्ठमानानि मौकुलीनां वायसानां ("एकदृग् बलिभुग् ध्वाङ्क्षो मौकुलिर्वायसोऽप्यथ" इति कोषः) कुलानि समूहाः यस्मिन् स तथोक्तः, अयं पुरतः परिदृश्यमानः क्रौञ्चावतः तन्नामधेयः

एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणचन्दनतरुस्कन्धेषु कुम्भीनसाः ॥ २९ ॥

अपि च ।—

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालम्बितमौलिनीलशिखराः क्षोणीभृतो दक्षिणाः ।

गिरिः पर्वतः विद्यत इति शेषः ; एवमयं गिरिर्विद्यते तं, पश्य पश्येति गद्यांशेनान्वयः । यत्र कुञ्जेषु शब्दायमानानां पेचकानां घुत्कारशब्दमाकर्ण्य चञ्चलस्वभावा अपि वायसा-स्तेभ्योऽनिष्टमाशङ्कमानाः तासाभिःशब्दमवतिष्ठन्ते, तादृशोऽयं क्रौञ्चावताभिधेयो गिरि-रस्माकं पुरतः प्रतिभातीति पश्येति समुदिताशयः । एतस्मिन् दृश्यमाने क्रौञ्चावता-ऽभिधेये गिरौ प्रचलताम् इतस्ततः परिधावतां प्रचलाकिनां—प्रचलाकः शिखण्डः, स एषामस्तीति प्रचलाकिनः मयूराः तेषां ( "प्रचलाकिसितापाङ्गशिखावलगतव्रताः" इति त्रिकाण्डशेषः ) कूजितैरव्यक्तशब्दैः केकाभिरित्यर्थः, उद्वेजिताः उद्वेगं नीताः सन्त्रस्ता इति यावत्,कुम्भीनसाः भयङ्करसर्पविशेषाः ("कुम्भीनसः क्रूरसर्पे स्त्रियां लवण-मातरि" इति मेदिनी ) [ कुम्भी इव नासिका येषां ते कुम्भीनसाः "अञ् नासिकायाः संज्ञायां नसञ्चास्थूलात्" ( ५।४।११८ पा० ) इति नासिकायाः नसादेशः, समासान्तः अच्प्रत्ययश्च ] पुराणानां प्राचीनानां जीर्णानामित्यर्थः, चन्दनतरूणां चन्दनपादपानां, [ "चन्दनतरु" इत्यत्र "रोहिणतरु" इति पाठे—रोहिणतरुः,—वटवृक्षः इत्यर्थः ] स्कन्धेषु प्रकाण्डेषु उद्वेल्लन्ति इतस्ततश्चलन्ति, अतिमात्रं व्याकुलीभवन्तीति यावत्, [ उत्पूर्वकस्य "वेल्ल चलने" इति भ्वादिगणीयवेल्लधातोरयं प्रयोगः ] विषधराणां हि खादका मयूरा इति अतितरां सौरभामोदिता च प्रसिद्धा, तथाप्राचीनावस्थायां चन्दनपादपस्य च सौरभातिशय्यमिति । अत्र चन्दनगन्धानन्दिताः कुम्भीनसाः शत्रुभीत्या एतमेव पादपमाश्रित्य स्थातुं सौरभातिप्रीत्या सहसा तं विहाय गन्तुं वाऽशक्नुवन्तः किंकर्त्तव्यविमूढतयाऽतितरां व्याकुलीभवन्तीति भावः । [ अत्र प्रधानतया स्वभावोक्तिः ; तथा कलापिकूजितरूपपलायनकारणसत्त्वेऽपि कुम्भीनसानां पलायनरूपस्य फलस्यानुत्पत्तेः सति हेतौ फलाभावरूपा विशेषोक्तिः, तथा कुञ्ज-कुटीरेत्यत्र रूपकञ्चेति त्रयाणामर्थालङ्काराणामङ्गाङ्गिभावेन सङ्करः । स्वभावोक्त्या च गिरेरस्य अनेकविधजीववसतिरूपं वस्तु ध्वन्यते इति अलङ्कारेण वस्तुध्वनिरप्यत्र-नीयः ] । शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

पुनरपि स्वभावशोभामुपवर्णयन्नाह, एत इति ।—कुहरेषु गह्वरेषु, गद्गदं तादृग-

अन्योऽन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः ॥ ३० ॥

इति निष्क्रान्ताः सर्वे। (क)

इति पञ्चवटीप्रवेशो नाम द्वितीयोऽङ्कः।

---

विस्पष्टं यथा तथा नदन्ति शब्दं कुर्वन्ति गोदावर्य्याः स्वनामधन्यायाः सरितः वारीणि सलिलानि येषु ते तथोक्ताः गोदावरीजलकल्लोलितकुहरा इति यावत्; तथा मेघैः सजलजलदैरित्यर्थः, आलम्बिताः आक्रान्ताः मौलयः अग्रभागाः येषां तानि अत एव नीलानि जलदाश्रिततया श्यामायमानानि शिखराणि शृङ्गाणि येषां ते तथोक्ताः; (अत्र शिखराग्रभागो मौलिः, पर्वताग्रभागश्च शिखरमिति भेदः) बहुविधैर्धातुजातैः निखचितान्यपि एतेषां शृङ्गाणि अत्युन्नततया सजल-जलदसम्पर्कातिशयवशात् निरतिशयं श्यामायमानानि प्रतिभान्तीति भावः। [एते-नैतेषां निरतिशयमौन्नत्यं प्राकृतिकसौन्दर्य्यशालित्वञ्च व्यज्यते] ते भवतां परि-ज्ञातपूर्व्वा एते परिदृश्यमानाः दक्षिणाः भारतवर्षस्य दक्षिणदिग्भागवर्त्तिनः क्षौणीभृतः पर्वताः। क्षौणीं पृथिवीं बिभ्रति धारयन्ति ये ते (क्षौणी+भृ+क्विप्) सन्तीति शेषः; तथा अन्योऽन्यप्रतिघातेन परस्परप्रतिरोधेन सङ्कुलम् उच्छृङ्खलं यथा तथा चलन्तः गच्छन्तः ये कल्लोलाः महातरङ्गाः तेषां कोलाहलैः उप-लक्षिताः ["इत्थम्भूतलक्षणे" (२।३।२१ पा०) इति तृतीया] उत्तालाः उत्कटाः, भीषणा इति यावत्; ("उत्ताल उत्कटे श्रेष्ठे विकराले प्लवङ्गमे" इति मेदिनी) तथा गभीरमगाधं पयो जलं येषां ते तथोक्ताः, अगाधसलिलाः इत्यर्थः; पुण्याः पवित्राः ते पूर्वपरिचिताः इमे परिदृश्यमानाः सरित्सङ्गमाः नदीसन्निपाताः विद्यन्ते इति शेषः। ["सरित्सङ्गमा" इत्यत्र "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति न्यायात् सङ्गताः सरितः इत्यर्थो लभ्यते इति बोध्यम्। अत्र शिखराणां जलद-चुम्बितमौलितया नानाविधधातुसम्भूतस्वकीयाभ्यवर्णपरित्यागेन जलदगतश्यामलता-ग्रहणकथनात् तद्गुणो नामालङ्कारः]। शार्दूलविक्रीडितं वृत्तम् ॥ ३० ॥

(क) इतीति।—अत्र रामशम्बूकयोरेवेह अवस्थानात् "सर्वे निष्क्रान्ताः" इति बहुत्वं कथं युज्यते? इति नाशङ्कनीयम्; सारथिसाहित्येनैवानयोर्बहुत्वसम्भवा-दिति।

# द्वितीयाङ्कस्य सङ्क्षिप्तविवृतिः।



अथास्याङ्कस्यारम्भ एवाध्वगवेशा तापस्यात्रेयी नेपथ्योच्चारितवनदेवतास्वागतवचनमाकर्ण्य समधिगत्य च तदुपकल्पितमातिथ्यं तदीयविनयमधुरव्याहारव्यवहारविनिमयेन स्वकीयामन्तर्गतां कृतज्ञतामतितरां विज्ञापयन्ती स्वसमीपमागतया तया समं तत्रैवोपविष्टा पृष्टा चात्रागमनकारणं तयैव, "सामान्यमृषिवेदविद्भिरगस्त्यप्रमुखैस्तपोधनैरध्युषितेऽस्मिन्नरण्ये तेभ्यो वेदान्तविद्यामधिगन्तुं वाल्मीकिपार्श्वादिहोपस्थिता" इति प्रत्यवोचत्।

अथ वेदवेदान्ताद्यशेषविशेषशास्त्रकाननसञ्चरणपञ्चाननमहावाल्मीकेरनायासाबाधाध्ययनसम्भवेऽपि तमनादृत्य कथमेतादृग्दूरतरप्रवासप्रयासस्त्वभवतीनामितीत्थं वनदेवतया तया जिज्ञासिताऽसौ अलोकसामान्यप्रज्ञामतोः कुशलवाभिधेययोः कयोश्चित् तदन्तेवासिनोरन्यतः प्रतिभातिशय्यं, तथा तस्यैव महर्षेर्मुखात् सुरतरलबकवधोद्यतव्याधाभिशापार्थे झटिति विनिर्गतेनानुष्टुभेन छन्दसा पद्यान्यनुरोधेन तेनैव विरचितस्य रामायणस्य बहुलप्रचारञ्च तत्रत्यमध्ययनप्रत्यूहमचीकथत्, अपृच्छच्चागस्त्याश्रममार्गं वनदेवतां तामेव।

अथ तत्कृतपथपरिचायककथाप्रसङ्गसङ्गतपञ्चवट्यादिनामश्रवणोद्बोधितातीतसीतास्मृतिस्तामेव वनदेवतां सीतासहचरीयं वासन्तीति प्रत्यभिजानत्यभिदधती च प्रलापवशाज्जानकीं नामशेषाम्, आपृच्छ्यमाना च तयैवासकृन्नामशेषा-कथनाभिप्रायं, विवृण्वाना चालीकलोकापवादतः सीताविवासनवृत्तं, तथा सुवर्णविनिर्मितसीताप्रतिकृतिप्रतिनिधिना शास्त्रविधिनानुष्ठीयमानमश्वमेधाभिधेयक्रतुञ्च सकरुणमसौ विललाप ; आललाप च पुनः पुनरेतमेव विषयमधिकृत्यातिविस्तरतः।

अथ कथाप्रसङ्गेन वासन्ती, अकालकालकवलितमात्मसुतमुरसा समुद्वहतः सौधद्वाराङ्गनमब्रह्मण्यमुद्घोषयतः कस्यचिद् ब्राह्मणस्य सकरुणरोदनमाकर्ण्यात्मापराधमाशङ्कमानो रघुनाथः सहसैव शम्बूकाख्यस्य तपश्चरणसमुत्थाधर्म्मविघातिनीमाकाशवाणीमाकर्ण्य समुपजातात्मावष्टम्भस्तद्वधाय कृपाणपाणिः पुष्पकं विमानमारुह्य समन्वेष्टुमितस्ततः पर्य्यटतीत्यवगम्य संश्रुत्य च जनस्थानमेवास्य शम्बूकाख्यस्य तपश्चरणस्थानं, निश्चित्य चैतेनैवोपलक्षेण रामभद्रस्यात्र शुभागमनं क्षणमननुभूतपूर्व्वमानन्दसन्दोहमनुबभूव, विससर्ज च तामात्रेयीमगस्त्याश्रमाय वर्णयन्ती दारुणातपतापदुरतिक्रमत्वं दिवसस्य।

अथ शूद्रकमन्विष्यन् रामभद्रो जनस्थानमनुप्रविश्याहत्य च तमकृप: कृपाणेन दिव्यान्दशामनयत्। ततो मिलित: समभिनन्दितश्च पुन: पुर:स्थेन तेन कृतप्रणतिना दिव्याकृतिना शम्बूकेन सहसा समुद्बोधितदण्डकारण्यागण्यस्मृति:, समवलोकयन् पूर्व्वपरिचितानामरण्यानामशेषसन्तापहारिणीं चित्तविनोदकारिणीं शोभां, सञ्चिन्तयन् खरदूषणादिवधवृत्तान्तं, पर्य्यटंश्चेततत: सर्व्वत: शुभाशीर्वचनपुर:सरमनु विससर्ज दिव्यपुरुषम्।

अथासावपि शाश्वतपदावाप्तित: पूर्व्वमगस्त्यर्षिचरणयुगलमभिनन्दयितुं तदाश्रममुपेत: समादिष्टश्च स्वमुखात् श्रुतरामागमनवृत्तान्तेन तेनैव मुनिपुङ्गवेन वत्सलया लोपामुद्रया च रामभद्रं पुनरिहोपस्थापयितुं, पुनरपि पञ्चवटीमध्यस्थमवस्थं रामभद्रमुपागमत्, न्यवेदयच्च मुनिदम्पत्योर्वक्तव्यजातं विशेषेण।

सहसा शम्बूकमुखात् सश्लोकस्य जगद्गुरोरगस्त्यस्यादेशवचनमाकर्ण्य विचिन्त्य च सुदुष्करत्वं पूर्वसुहृदं प्रियसहचरीमिव प्रियाया: पञ्चवटीं सम्प्रति सुचिरावस्थानेनासम्भाव्य प्रस्थानस्य, नितरां सन्देहदोलामारूढ: किङ्कर्त्तव्यविमूढ: सर्व्वथाऽनिच्छन्नपि गुरुजनादेशस्यानतिक्रमणीयतया गृहीतानुमति: पञ्चवटीसकाशात् तेन समं तदंवाश्रमपदमभिप्रतस्थे।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन कुलपतिकल्प-"वि,ए" इत्युपनामक-
श्रीमज्जीवानन्दविद्यासागर-भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण-श्रीमन्नित्यबोधविद्यारत्नाभ्यां
परिवर्त्तित-परिवर्द्धितायां सुखबोधिनीसमा-
ख्यायाम् उत्तररामचरितव्याख्यायां
द्वितीयोऽङ्क:॥ २॥

# तृतीयोऽङ्कः ।

[ ततः प्रविशति नदीद्वयं—तमसा मुरला च ] । (क)

तमसा । सखि मुरले ! किमसि सम्भ्रान्तेव ? (ख)

मुरला । भगवति तमसे ! प्रेषिताऽस्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुं, जानास्येव यथा वधूत्यागात् प्रभृति, (ग)—

अनिर्भिन्नो गभीरत्वादन्तर्गूढ़घनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥ १ ॥

---

(क) ततः इति ।—अत्र चेतनकर्त्तृकस्य प्रवेशस्य सलिलप्रवाहरूपाचेतननदीकर्त्तृकत्वासम्भवात् नदीद्वयपदेन नद्यधिष्ठातृदेवताद्वयमेवावगमनीयम् ।

(ख) सम्भ्रान्तेव—व्याकुलेव, अस्थिरचित्तेवेति यावत् ।

(ग) भगवतीति ।—भगवति—ऐश्वर्य्यादिषड्गुणशालिनीत्यर्थः, तमसायास्तीर्थस्वरूपतया एवं सम्बोधनं प्रयुक्तम् । सरिद्वरां—स्रोतस्वतीश्रेष्ठां, श्रेष्ठत्वन्तु तस्या माहात्म्यातिशयाद्बोध्यम् । अभिधातुं—वक्तुं, प्रेषितास्मीति पूर्व्वेणान्वयः । वधूत्यागात् प्रभृति—वध्वाः पत्न्याः सीतायाः, त्यागात्प्रभृति—विवासनमुपक्रम्य, भार्य्यात्यागमारभ्येति यावत्, ("वधूर्जाया स्नुषा स्त्री च" इत्यमरः ) । [ वधूत्यागादित्यत्र प्रभृति-शब्दयोगे पञ्चमी ] ।

तमसया ससम्भ्रमप्रवेशकारणं पृष्टा मुरला भागीरथीं प्रति लोपामुद्रायाः वक्तव्यविज्ञापनप्रसङ्गेन रघुपतेस्तदानीन्तनमनोभावं विज्ञापयन्त्याह, अनिर्भिन्न इति ।—गभीरत्वात् गाम्भीर्य्यात्, धैर्य्यातिशयवशादित्यर्थः, पक्षे—घनप्रलेपशालित्वात्, अत्यन्ताभ्यन्तरस्थितत्वादिति यावत्, अनिर्भिन्नः अप्रकाशितः, लोकलोचनवहिर्भूतः इत्यर्थः, पक्षे—पावाग्निभेदं न प्राप्तः, अविदीर्ण इति यावत् ; अत एव अन्तः अन्तःकरणे गूढ़ा अप्रकाशं स्थिता घना गाढ़ा, अतिशयितेति यावत्, व्यथा वेदना यस्य स तथोक्तः, पक्षे--अन्तर्मध्ये गूढ़ा गुप्ता घना प्रगाढ़ा व्यथा सन्तापः यस्य सः तथोक्तः, रामस्य करुणो रसः सीताविरहसमुत्थः शोकः इत्यर्थः, पक्षे—रसः पारदः, पुटे वह्निमृत्तिलेपावबद्धपर्णादिनिर्म्मितपात्र-

तेन च तथाविधेष्टजनकष्टपातजन्मना (च) प्रकर्षगतेन दीर्घशोकसन्तानेन (ङ) सम्प्रति नितरां परिक्षीणो रामभद्रः,

विशेषे यः पाकः औषधादीनां सन्तापनं तत्प्रतीकाशः तत्तुल्यः प्रतिभातीति शेषः; [ "इकः काशे" (६।३।१२३ पा० ) इति दीर्घता ]; यथा वहिःप्रगाढ़तरमृत्प्रलेपावकद्धस्य पुटस्याभ्यन्तरवर्त्तिनो नितरां सन्तप्यमानस्य भेषजस्य सन्तापः कथमपि वहिर्नोपलक्ष्यते, तथा स्वयङ्कृतसीताविवासनसमुत्थः शोकसन्तापो नितरां दुःसहोऽपि रघुपतेर्निसर्गधीरतया कथमप्यन्तर्निगूढ़ो बहिर्न प्रकाशत इति भावः। पुटपाकश्चोक्तः परिभाषाप्रदीपे—

"पुटपक्कस्य द्रव्यस्य स्वरसो गृह्यते यतः।
अतोऽयं पुटपाकः स्यात् विधानं तस्य कथ्यते॥
द्रव्यमापेषितं जम्बू-वटपत्रादिसम्पुटे।
वेष्टयित्वा ततो बद्धा दृढ़ं रज्ज्वादिना तथा॥
मृल्लेपं द्व्यङ्गुलं कुर्यादथवाऽङ्गुलिमात्रकम्।
दहेत् पुटान्तरादग्नौ यावल्लेपस्य रक्तता॥" इति।

[ अत्र करुणविप्रलम्भाख्यो रसः स्वशब्देनोक्तः—"तामुद्दीक्ष्यकुरङ्गाक्षीं रसो न कोऽप्यजायत" इत्यादिवत् दोषमावहतीत्यापाततः प्रतिभाति; "रसस्योक्तिः स्वशब्देन" इति रसदोषकथनप्रसङ्गे दर्पणकृदभिधानात्। वस्तुतस्तु यत्रालम्बनविभावादिव्यङ्ग्यो रसः स्वशब्देन वाच्यः स्यात्तत्रैवासौ दोषपदवीमारोहेत्; इह तु केवलं रामस्य तदा भीत्तनावस्थावर्णनमुख[illegible]शब्दोल्लेखान्न कापि दोषशङ्केति ध्येयम्। इह उपमा नामालङ्कारः,सा च सामान्यधर्मादीनां वाच्यतया पूर्णा, श्रुतिमात्रेणैवोपमेयोपमानगतसादृश्यलक्षणसम्बन्धावबोधकतया प्रतीकाशशब्दार्थानुसन्धानसापेक्षतया चार्थीति ]। अनुष्टुप् वृत्तम्॥ १॥

( च ) तेनेति।—तेन—पुटपाकप्रतीकाशेनेत्यर्थः। तथाविधेति।—तथाविधस्तादृशः निर्व्वासनसमुत्थः इत्यर्थः, इष्टजने प्रियजने, जनकतनयारूपे इति यावत्, यः कष्टस्य अनिष्टस्य, पातः पतनं, संघटनमिति यावत्, तस्मात् जन्म उत्पत्तिर्यस्य तेन सीतानिर्वासनसम्भवेनेत्यर्थः।

( ङ ) प्रकर्षेति।—प्रकर्षमातिशय्यं, गतेन प्राप्तेन, निरतिशयेनेत्यर्थः। दीर्घशोकेति।—दीर्घेण बहुकालव्यापिना, निरवधिनेत्यर्थः, शोकसन्तानेन दुःखप्रवाहेण, निरवच्छिन्नशोकपरम्परयेत्यर्थः।

तमवलोक्य कम्पितमिव (च) मे हृदयम्। अधुना च प्रतिनिवर्त्तमानेन रामभद्रेण नियतमेव पञ्चवटीवने वधूसहनिवासविस्रम्भसाक्षिणः (छ) प्रदेशा द्रष्टव्याः ; तेषु च निसर्गधीरस्यापि एवंविधायामवस्थायाम् अतिगम्भीराभोगशोकक्षोभसंवेगात् (ज) पदे पदे महान्ति प्रमादस्थानानि शङ्कनीयानि रामभद्रस्य ; तद्भगवति गोदावरि! तत्र त्वया सावधानया भवितव्यम्,(झ)—

(च) सम्प्रतीति।—सम्प्रति—इदानीं, सीतानिर्व्वासनतः परमित्यर्थः। अतितराम्—अत्यर्थम्। परिक्षीणः,—अत्यन्तं कार्श्यमापन्नः। तं—तादृशं कार्श्यमापन्नं रामभद्रमित्यर्थः [ सर्व्वत्र क्त्वान्तक्रियायाः समापिकया क्रियया सहैककर्त्तृकत्वमावश्यकम्, इह तु "अवलोक्य" इत्यनन्तरं स्थितादिपदाध्याहारेण तत् समाधेयम् ]। कम्पितमिव—रामभद्रस्य भविष्यदनिष्टापातभीत्या सातिशयमस्थिरमिवेत्यर्थः।

(छ) प्रतिनिवर्त्तमानेनेति।—अगस्त्याश्रमादश्वमेधमनुष्ठातुमयोध्यां प्रतिगच्छता। नियतमेव—अवश्यमेव। वधूसहेति।—वध्वा सीतया सह सार्द्धं निवासे एकत्रावस्थाने ये विश्रम्भाः स्वच्छन्दविहरणादिविश्वस्तव्यापाराः तेषां साक्षिणः साक्षाद्द्रष्टारः, निर्जनत्वात् सीतारामयोः परस्परमसङ्कुचितचेष्टितानि यत्र अभवंस्तादृशाः इति यावत्।

(ज) भवन्तु ते द्रष्टव्याः, का क्षतिस्तेन रामचन्द्रस्येत्याह, तेष्विति।—तेषु—प्रदेशेषु, प्रकृत्यातिरमणीयेष्विति यावत्। निसर्गधीरस्यापि—प्रकृत्यातिगम्भीरस्यापि, का कथा चपलचेतसामिति भावः। एवंविधायां—सीतावियोगजशोकेनातिविषमायामित्यर्थः, अवस्थायां—दशायाम्। अतिगम्भीरेति।—अतिगम्भीरः प्रगाढ़ः, दुःसह इति यावत्, आभोगः, प्रसरो यस्य तादृशो यः शोकः प्रियाविरहजं दुःखं, तेन यः क्षोभः प्रकृतिविपर्य्ययः, मर्म्मव्याघात इति यावत्, तस्य संवेगात् प्राबल्यात्।

(झ) पदे इति।—पदे पदे—प्रतिपदं, इतस्ततः सर्व्वत्रैवेत्यर्थः। महान्ति—घोराणि। प्रमादस्थानानि—प्रमादः अनवधानता, कर्त्तव्याकर्त्तव्यबुद्धिविपर्य्ययजं महदनिष्टमिति यावत्, तस्य स्थानानि उत्पत्तिस्थानानि कारणानीति यावत्। शङ्कनीयानि—सम्भावनीयानि। रामस्य महान्ति अनिष्टानि सम्भविष्यन्तीत्यनुमन्यामहे इति भावः। तत्—तस्मात्, तेषु तेषु स्थानेषु सततविरहोद्दीपकवस्तुसन्दर्शनेनाकस्मिकविपदापातसम्भवादित्यर्थः। तत्र—तादृशेषु अतिभीषणेषु स्थानेष्वति यावत्। सावधानया—अप्रमत्तया सम्भावितापत्प्रतिकाराय नियतमाविष्टयेत्यर्थः।

वीचीवातैः शीकरक्षोदशीतै-
राकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
मोहे मोहे रामभद्रस्य जीवं
स्वैरं स्वैरं प्रेषितैस्तर्पयेति ॥ २ ॥

तमसा । उचितमेव दाक्षिण्यं स्नेहस्य; सञ्जीवनोपायस्तु मौलिक एव रामभद्रस्यात्र सन्निहितः । (ञ)

---

ननु समर्थस्यैव कर्मणि विनियोगो युज्यते, नासमर्थस्येति गोदावर्याः सलिलस्वरूपतया तयेदानीमवहितयापि रामस्य कीदृगुपकारसम्भावनेत्यपेक्षायां सलिलरूपाया अप्यवधानप्रकारमुपदर्शयन्नाह, वीचीति ।—शीकराणामम्बुकणानां ("शीकरोऽम्बुकणः स्मृतः" इत्यमरः) क्षोदेन चूर्णसम्पर्केण ("चूर्णे क्षोदः" इत्यमरः) शीतैः शीतलैः शीतलजलकणवाहिभिरित्यर्थः, पद्मकिञ्जल्कगन्धान् कमलकेशरसौरभाणि आकर्षद्भिः आकृष्य वहद्भिः, निरतिशयप्राणतर्पणैरित्यर्थः, स्वैरं स्वैरं मन्दं मन्दं यथा स्यात् तथा प्रेषितैः प्रेरितैः (एभिर्विशेषणैर्वायौ क्रमशः शैत्यं सौगन्ध्यं मान्द्यञ्च दर्शितम्) तव वीचिवातैस्तरङ्गसम्पृक्तवायुभिः रामचन्द्रस्य जीवं जीवनं मोहे मोहे प्रतिमुग्धावस्थायां तर्पय प्रीणय । रामो हि यदा यदा दुःसहशोकसन्तापेन समाकुलितः मूर्च्छामधिगच्छेत्, तदा तदैव त्वमवहिता मन्दस्निग्धसुरभिसमीरणसञ्चालनेन तस्य मूर्च्छामपनयेरिति भावः । [मोहलक्षणं यथा साहित्यदर्पणे,—"मोहो विचित्तताभीति-दुःखवेगानुचिन्तनैः । मूर्च्छनाज्ञानपतन-भ्रमणादर्शनादिकृत् ॥" इति । तर्पयेत्यत्र विध्यर्थे "विधिनिमन्त्रणामन्त्रण—" (३।३।१६१ पा०)] इति लोट् । इतीति ।—मुरलामुखेन अभिहितस्य अगस्त्यपत्न्या वाक्यजातस्य समाप्तिसूचकमव्ययम् । तच्च "गोदावरीमभिधातुं प्रेषितास्मि" इति पूर्वेण अन्वेति । शालिनी नाम वृत्तम्, तल्लक्षणं यथा—"मात् तौ गौ चेच्छालिनी वेदलोकैः" इति । एकादशाक्षरपादच्छन्दसः २८९ तमे प्रस्तारे शालिन्यन्तर्भावः ॥ २ ॥

(ञ) उचितमिति ।—योग्यमित्यर्थः, दाक्षिण्यम्—आनुकूल्यम् । स्नेहस्य—वात्सल्यस्य, रामं प्रति परमवत्सला लोपामुद्रा तस्य भविष्यदत्याहितमाशङ्कमाना इदानीं यत् आनुकूल्यं दर्शयति, तद् युक्तमेव, परन्तु सम्प्रति नास्ति तस्य किमपि आवश्यकमिति समुदिताभिप्रायः । कुतः एवम्? इत्याह, सञ्जीवनेत्यादि ।—तु—किन्तु । सञ्जीवनोपायः,—मूर्च्छितस्य रामस्य संज्ञाप्रतिपत्तिहेतुः । मौलिकः,—

मुरला। कथमिव ? (ट)

तमसा। श्रूयताम्।—पुरा किल वाल्मीकितपोवनोपकण्ठात् परित्यज्य गते लक्ष्मणे, सीतादेवी प्राप्तप्रसववेदना आत्मानम् अतिदुःखसंवेगाद्गङ्गाप्रवाहे निक्षिप्तवती ; तदैव तत्र दारकद्वयं प्रसूता, भगवतीभ्यां पृथ्वीभागीरथीभ्याम् अभ्युपपन्ना रसातलञ्च नीता ; स्तन्यत्यागात् परेण च तद्दारकद्वयं तस्याः, प्राचेतसस्य महर्षेर्गङ्गादेवी स्वयमर्पितवती। (ठ)

मूलीभूतः, रामस्य शोकमोहयोः यत् मूलं कारणं, तदेव अद्य शोकमोहापनोदनकारणं रामस्य निकटवर्त्तीत्यर्थः, सीता अद्य रामस्य अतिनिकटे वर्त्तते इति भावः।

(ट) कथमिवेति।—रामस्य सञ्जीवनोपायः सन्निहितः इत्युक्तं, स उपायः कीदृशः ? इति मुरलाप्रश्नाभिप्रायः।

(ठ) श्रूयतामिति।—इदं हि वृत्तव्यापारकथनरूपं विष्कम्भाङ्गं,—"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः" इति साहित्यदर्पणवचनात्। वाल्मीकीत्यादि।—वाल्मीकेः तपोवनस्य आश्रमस्य उपकण्ठात् समीपात्। परित्यज्य—विहाय, सीतामिति शेषः। प्राप्तेत्यादि।—प्राप्ता—आसादिता, प्रसववेदना—प्रसवकालीनयन्त्रणा यया सा तथोक्ता, असहनीयप्रसववेदनया नितरां क्लेशमापन्नेत्यर्थः। आत्मानं—स्वदेहम्, ("आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि" इति कोषः)। अतिदुःखसंवेगात्—दुःसहक्लेशातिशय्यादित्यर्थः। तदैव—निक्षेपाव्यवहितानन्तरमेव। तत्र—गङ्गाप्रवाहे। दारकद्वयं—शिशुद्वयं ("दारको बालकेऽपि स्यात्" इति मेदिनी) प्रसूता—प्रसूतवती [प्रसूता इत्यत्र कर्त्तरि निष्ठा]। अभ्युपपन्ना—धृता, अनुगृहीता वा ("अभ्युपपत्तिरनुग्रहः" इत्यमरः) रसातलं—पातालम्। नीता च—प्रापिता च। स्तन्यत्यागात्—स्तन्यस्य मातुःस्तनसम्भूतस्य पयसः त्यागात् परिहारात्। परेण—अनन्तरमित्यर्थः [ "परेण" इति न एनबन्तपदं, तथा सति तेन योगे "एनपा द्वितीया च" (२।३।३१ पा०) इत्यनेन द्वितीयाविधानात् "स्तन्यत्यागात्" इत्यत्र पञ्चमीविधानमयुक्तं स्यात् ; वस्तुतस्तु अत्र अपवर्गे तृतीयेति ]। तस्याः,—सीतायाः। प्राचेतसस्य—वाल्मीकेः [ वाल्मीकेरित्यत्र परस्वत्वोत्पादकत्यागाभावात् न सम्प्रदानता, अपि तु क्रियासम्बन्धमात्रविवक्षया षष्ठी ] स्वयम्—आत्मना, स्वयं गत्वा दत्तवती, गत्वार्पितवतीत्यर्थः। [ स्वयंशब्दप्रयोगात् शिशुद्वयं प्रति गङ्गादेव्याः स्नेहातिशय्यं सूचितम् ]।

मुरला। [सविस्मयम्]।—

ईदृशानां विपाकोऽपि जायते परमाद्भुतः।
यत्रोपकरणीभावमायात्येवंविधो जनः॥ ३॥

तमसा। इदानीन्तु शम्बूकवृत्तान्तेनानेन सम्भावितजनस्थानागमनं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी, यदेव भगवत्या लोपामुद्रया स्नेहादाशङ्कितं तदेवाशङ्क्य सीतासमेता, केनचिदिव गृह्याचारव्यपदेशेन (ड) गोदावरीं विलोकयितुमागता।

तमसया वर्णितं सीतावृत्तान्तमाकर्ण्य मुरला स्वं यद् विस्मितमिवादर्शयत्, तदेव विस्मयकारणमुपदर्शयन्त्याह, ईदृशानामिति।—ईदृशानां रामसदृशपरमाद्भुतचरितानामित्यर्थः, विपाकोऽपि दशाविपर्य्ययोऽपि, सम्पदः का कथा विपदपीत्यर्थः, परमाद्भुतः अत्यर्थं विस्मयजनकः, असाधारण इत्यर्थः, जायते भवतीत्यर्थः। यत्र विपाके एवंविधः पृथ्वीभागीरथीवाल्मीकिसदृशो जनः उपकरणीभावम् उपकारित्वम् आयाति प्राप्नोति, उपकरणार्थं सहायो भवतीत्यर्थः। येषां चाक्षिकं दर्शनं सततसमाराधनतत्परैः अपि न सुघटं तेऽपि एवंविधानां विपाके स्वतः एव उपकर्त्तुं यतन्ते इति परमाद्भुतत्वं विपाकस्येति भावः। [अत्र विपाकस्य परमाद्भुतत्वं प्रति उत्तरार्द्धवाक्यार्थस्य हेतुतयोपन्यासात् काव्यलिङ्गमलङ्कारः]। अनुष्टुप् वृत्तम्॥ ३॥

(ड) शम्बूकेति।—शम्बूकस्य वृत्तान्तः शिरश्छेदनविधानात्मको व्यापारः तेन। सम्भावितेति।—सम्भावितम् उत्प्रेक्षितं जनस्थाने आगमनम् उपस्थितिः यस्य स तम्। सरयूमुखात्—सरयूः अयोध्यासमीपवर्त्तिनी काचित् नदी तस्याः मुखात्। उपश्रुत्य—समाकर्ण्य, ज्ञात्वेत्यर्थः। [अत्र रामभद्रस्य श्रावणप्रत्यक्षकर्म्मतासम्भवेन "रामभद्रमुपश्रुत्य" इत्यस्य कथं सङ्गतिः? इति नाशङ्कनीयम्; श्रुधातोः शाब्दबोधवाचितया रामभद्रे तत्कर्म्मत्वसम्भवादिति चिन्त्यम्] यदेव—रामस्य अत्याहितमेव। सीतासमेता—सीतया जानक्या सह समेता सङ्गता, मिलिता सतीत्यर्थः। गृह्याचारेति।—गृहस्य यः आचारः कुलक्रमागतो व्यवहारः तस्य व्यपदेशेन व्याजेन, कुलोचितानुष्ठानच्छलेनेत्यर्थः। [गृह्याचारव्यपदेशेनेत्यत्र प्रकृतोपयोगिच्छलग्रहणरूपम् अभूताहरणं नाम सन्ध्यङ्गमुक्तं—"तत्र व्याजाश्रयं वाक्यमभूताहरणं मतम्" इति साहित्यदर्पणः]।

मुरला। सुविचिन्तितं भगवत्या, भागीरथ्या। राजधानी-स्थितस्य खलु तैस्तैर्जगतामाभ्युदयिकैः कार्य्यैर्व्यापृतस्य रामभद्रस्य नियताश्चित्तविक्षेपाः ; अव्यग्रस्य पुनरस्य (ढ) शोकमात्र-द्वितीयस्य पञ्चवटीप्रवेशो महाननर्थ इति ; तत् कथमिदानीं सीतादेव्या रामभद्र आश्वासनीयः स्यात् ? (ण)

तमसा। उक्तमेव भगवत्या भागीरथीदेव्या,—"वत्से ! देव-यजनसम्भवे सीते ! अद्य खलु आयुष्मतोः कुशलवयोर्द्वादशजन्म-संवत्सरस्य सङ्ख्यामङ्गलग्रन्थिरभिवर्त्स्यते ; (त) तदात्मनः पुराण-

(ढ) सुविचिन्तितं—साधुविवेचितम्। भगवत्या—ऐश्वर्य्यादिषड्गुणशालिन्या इत्यर्थः, सततशोकोद्दीपकवस्तुसन्दर्शनेन रामस्यावश्यम्भाविनि विपत्पाते सीतामेव सान्त्वनोपायत्वेनावधार्य्य भागीरथ्या युक्तियुक्तमाचरितमिति भावः। राजधानी-स्थितस्य—राजधान्याम् अयोध्यायां वर्त्तमानस्य, आभ्युदयिकैः,—उन्नतिसाधकैः बहुभिः प्रजाहितकरव्यापारैरित्यर्थः। चित्तविक्षेपाः,—चित्तस्य विक्षेपाः विविधदिक्षु क्षेपाः। नियताः,—नियन्त्रिताः, बद्धप्रसारा इति यावत्, भवन्तीति शेषः ; अतः शोकस्य न अवकाश इति भावः। अव्यग्रस्य पुनः,—सम्प्रति अविच्छिन्नचित्तस्य व्यापारान्तरा-सक्तिशून्यस्येत्यर्थः।

(ण) शोकमात्रेति।—शोकः एव इति शोकमात्रं केवलः शोकः इत्यर्थः, तत् द्वितीयं यस्य तथोक्तस्य, सीताविरहजदुःखैकसहचरस्येत्यर्थः। अनर्थः,—अनिष्टहेतु-रित्यर्थः। [ अत्र "अनर्थः" इत्यस्य कार्य्यकारणभावसम्बन्धेन लक्षणया "आयुर्घृतम्" इतिवत् अनर्थहेतुरूपोऽर्थो बोध्यः। एवञ्च पञ्चवटीप्रवेशो रामस्य अत्यन्तानिष्टसम्पा-दनरूपकार्य्ये अव्यभिचारी हेतुरिति सूच्यते ]। तत्—तस्मात्। आश्वासनीयः,—आश्वासयितुं शक्यः इत्यर्थः।

(त) उक्तमेव—कथितमेव [ अत्र एवशब्दः स्वार्थेन व्यवच्छिनत्ति इति बोध्यम्, उक्तमेवेत्यस्य "किं पुनर्मर्त्या इति" इति वक्ष्यमाणेनान्वयः ]। आयुष्मतोः,—दीर्घ-जीविनोरित्यर्थः. [ आयुः जीवनकालः, स प्रशस्ततया विद्यते ययोः तौ आयुष्मन्तौ तयोः, अत्र प्राशस्त्यार्थे मतुप्, "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्ति-विवक्षायां भवन्ति मतुबादयः॥" इत्यनुशासनात् ]। द्वादशेति।—जन्मसंवत्सरा-दारभ्य द्वाधिकदशपूरणीभूतस्य वत्सरस्येत्यर्थः [ द्वादशानां पूरणः इति द्वादशः "तस्य

श्वशुरम् एतावतो मानवस्य राजर्षिवंशस्य प्रसवितारं सवितारमपहतपाप्मानं देवं स्वहस्तावचितैः पुष्पैरुपतिष्ठस्व। (थ) न च त्वामवनिपृष्ठवर्त्तिनीमस्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति,

---

पूरणे डट्" (५।२।४८ पा०) इति डट्प्रत्ययः, स चासौ जन्मसंवत्सरश्चेति तस्य]। सङ्ग्रेति।—वयःकालनिरूपणार्थः मङ्गलार्थश्च हस्ते धारणीये सूत्रे ग्रन्थिरित्यर्थः, (प्रतिवर्षं जन्मतिथौ गणपतिं दिनपतिञ्च सम्पूज्य मात्रादिभिः बालकानां मङ्गलाय करे सूत्रमभिबध्यते इति आचारः; तच्च सूत्रं जन्मग्रन्थिरित्यभिधीयते। तदुक्तं कृत्यचिन्तामणौ—"गुड़दुग्धतिलान्नद्याज्जन्मग्रन्थेश्च बन्धनम्। गुग्गुलं निम्बसिद्धार्थ-दूर्वागोरोचनान्वितम्। सम्पूज्य भानुविघ्नेशौ महर्षिं प्रार्थयेदिदम्॥" इति)। अभिबध्यते—संनह्यते, वाल्मीकिनेति शेषः।

(थ) अथ तयोर्वाल्मीक्याश्रमस्थितत्वेन असमीपवर्त्तितया मया किमपरमिदानीमनुष्ठेयम्? इत्याह, तदिति।—तत्—तस्मात्, पुत्रस्य जन्मतिथौ जननीनां कस्यचित् मङ्गलाचरणस्य अवश्यकर्त्तव्यत्वादित्यर्थः। पुराणश्वशुरं—आदिमं श्वशुरं, श्वशुरवंशस्य आदिपुरुषमिति यावत्। [सीतायाः श्वशुरवंशस्य सूर्य्यादाविर्भूततया तदुपासनायां अस्याः फलावश्यम्भाव इति सूचनाय सवितुः पुराणश्वशुरत्वविशेषणं बोध्यम्]। एतावतः,—इयत्सङ्ख्यकस्य। मानवस्य—वैवस्वतमनुसम्बन्धिनः तदपत्यस्येत्यर्थः। (अत्र सवितुर्वैवस्वतो नाम मनुः, ततः इक्ष्वाकुः, ततः रघुरित्येवं वंशप्रवर्त्तकानामेषां वंशः समजनीति ज्ञेयम्)। प्रसवितारम्—उत्पादयितारम्। अपहतेति।—अपहतः विनाशितः, पाप्मा—पापं येन तं, स्वमहिम्ना निरस्तसमस्तपापतया सर्वैराराधनीयमिति भावः। सवितारं—देवं, सूर्य्यदेवमित्यर्थः। स्वहस्तेति।—स्वहस्तेन स्वकरेण अवचितैः अवलूनैः, स्वयं सङ्गृहीतैरिति यावत्। (तेन च पूजायां फलातिशय्यसम्भावना सूचिता;—"समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत्" इति पद्मपुराणीयवचने श्रोत्रियपदस्य उपलक्षणतया सर्वस्यैव पूजाधिकारिणः स्वयमुपचितकुसुमादिभिरर्चनायाः विहितत्वात्)। उपतिष्ठस्व—सेवस्व। [अत्र "उपाद्देवपूजा—" इति वार्त्तिकसूत्रेण देवपूजायाम् उपात् तिष्ठतेरात्मनेपदम्]।

(द) स्वयंकुसुमचयचयनार्थमितस्ततः पर्य्यटन्ती कदाचिच्चेदहं साधारणजननयनपथपथिका भवेयं तदा लोकालापपरम्परातः श्रुतमदागमनवृत्तान्तः आर्य्यपुत्रो नूनमत्यन्तमनर्थमुत्पादयिष्यतीति सीताशङ्कामाशङ्कमाना भागीरथी तां पूर्वत एव निरस्यति, न चेति।—अस्य च "द्रक्ष्यन्ति" इति परेणान्वयः। अवनिपृष्ठवर्त्तिनीं—

किं पुनर्मर्त्त्याः" इति। अहञ्च आज्ञापिता,—"तमसे! त्वयि प्रकृष्टप्रेमैव वधूर्वत्सा जानकीति; अतस्त्वमेवास्याः प्रत्यनन्तरीभव" इति। साहमधुना यथादिष्टमनुतिष्ठामि। (द)

मुरला। अहमप्यमुं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि। रामभद्रोऽप्यागत एवेति तर्कयामि। (ध)

तमसा। तदियं गोदावरीह्रदान्निष्क्रम्य (न)—

परिपाण्डुदुर्बलकपोलसुन्दरं

दधती विलोलकवरीकमाननम्।

पृथिवीतलस्थितां, ("गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही" इत्यमरः)। अस्मत्प्रभावात्—अस्माकं वरमहिम्ना इति यावत्। [अस्माकं प्रभावः अस्मत्प्रभावः, अत्र बहुवचनप्रयोगस्तु "अस्मदो द्वयोश्च" (१।२।५८ पा०) इत्यनेन सूत्रेण समर्थनीयः]। द्रक्ष्यन्ति—द्रष्टुं शक्ष्यन्तीत्यर्थः। "वनदेवता अपि" इत्यत्र अपिकारव्यवच्छेद्यं दर्शयति, किमिति।—मर्त्त्याः,—मर्त्ते पृथिव्यां भवाः इति मर्त्त्याः, मानवा इत्यर्थः। ("मनुष्या मानुषा मर्त्त्या मनुजा मानवा नराः" इत्यमरः) मम माहात्म्यादलौकिकशक्तिशालिनीभिर्वनदेवताभिरपि द्रष्टुमशक्यां त्वां मानवाः पुनर्न द्रक्ष्यन्तीत्यत्र किमु वक्तव्यम्? इति भावः। अह—तमसा। प्रकृष्टप्रेमा—प्रकृष्टं सातिशयं प्रेम प्रीतिर्यस्याः सा तथोक्ता, समधिकप्रणयशालिनीति यावत्। वधूः,—स्नुषा, ("—वधूः स्त्री सारिवौषधौ। स्नुषाशटीनवोढ़ासु। भार्य्यापृक्काङ्गनासु च॥" इति मेदिनी। अत्र स्वकीयपूर्वपुरुषभगीरथेनानीततया भागीरथी रामस्य मातृस्थानीयेति सा सीतां वधूरित्यभिहितवतीत्यवधेयम्) प्रत्यनन्तरीभव—अप्रत्यनन्तरा प्रत्यनन्तरा भव इति प्रत्यनन्तरीभव—सन्निहिता भव, सततं सीतासाहचर्य्यमुपगता, तदानुकूल्यं विधेहीति यावत्। यथादिष्टम्—आदिष्टम् आदेशः, तदनतिक्रम्य इति यथादिष्टम्, आदेशानुरूपमित्यर्थः।

(ध) अमुं वृत्तान्तमिति।—तमसामुखाच्छ्रुतं सीतासहिताया भागीरथ्या आगमनरूपं व्यापारम्। तर्कयामि—सम्भावयामि।

(न) तत्—तस्मात्, रामस्य अचिरादेव अत्रागमनसम्भवादित्यर्थः। इयं—परिदृश्यमाना, श्लोकस्थेन "जानकी" इत्यनेनान्वयः। निष्क्रम्य—निर्य्याय, उत्थायेति यावत्; "वनमेति" इति श्लोकांशेनान्वयः।

करुणस्य मूर्त्तिरथवा शरीरिणी
विरहव्यथेव वनमेति जानकी ॥ ४ ॥

मुरला । इयं हि सा ।—

सहजसौन्दर्य्यातिशयवशाग्मधुरतराकृतिरपि सम्प्रत्यहरहरसहविरहवेदनाऽतिदूना-क्षीणाप्यतितरां काममभिनवामतिरमणीयामभिख्यामधिगता सतीकुलललामभूता सीता सर्व्वेषामेव समवेदनाभाजनं जातेति वर्णयन्त्याह, परिपाण्डुत्यादि ।—परिपाण्डु दुर्भरप्रियपरित्यागशोकाभिभवात् पाण्डुवर्णौ दुर्बलौ क्षीणौ च कपोलौ गण्डौ यस्मिन् तत् तथोक्तं, तथापि सुन्दरं मनोहरं, तथा विलोला संस्काराभावात् श्लथ-लम्बिनी कबरी केशपाशः यस्मिन् तत् तथोक्तम् ("कबरी केशवेशोऽथ धम्मिल्लः संयताः कचाः" इत्यमरः) आननं मुखं दधती धारयन्ती जानकी जनकनन्दिनी सीता करुणस्य शोकस्य मूर्त्तिः आकृतिरिव, मूर्त्तिमान् शोक इवेत्यर्थः, अथवा शरीरिणी मूर्त्तिमती ; विरहव्यथेव रामवियोगवेदनेव, वनम् अरण्यम्, एति आग-च्छति, [ "मूर्त्तिरथवा" इत्यत्र "मूर्त्तिरिव वा" इति पाठेऽपि सुस्पष्ट एवार्थः ] । सततं प्रियतमविरहशोकसन्तप्ता चिन्ताक्षीणमाननमादधानापि सहजसौन्दर्य्यातिशय-वशात् सम्प्रत्यपि निरुपमरमणीयाकृतिरियं दृश्यते इति भावः । पतिव्रतायाः लक्षणमाह अङ्गिराः,—

"आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥"

अस्यानुरूपः कश्चित् श्लोकः यथा शाकुन्तले—

"वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्त्ति ॥"

प्रकृतिमार्यं निरपेक्षं समालोच्यते चेत् तदा सुललितशब्दसम्पच्यार्थसम्पच्यालङ्कार-सम्पच्या च सुकुमारचेतसां चेतसि विच्छित्तिविशेषाधायकतया इतः प्रकृतस्यैव गौरवातिशय्यदर्शनादनिष्कर्षितरम्यस्माभिः प्रकृतस्यैव साधीयस्त्वं वाच्यमिति सुधीभि-र्विचारणीयम् । [ सर्व्वत्र कपोलयोः पाण्डुता क्षीणता च सौन्दर्य्यहीनकारणतयैव प्रसिद्धा, इह तु तयोर्विद्यमानतायामपि सौन्दर्य्योत्पत्तिकथनात् प्रथमपादे विषमाल-ङ्कारः ; तथा तृतीयचतुर्थपादयोर्भावाभिमानि वाच्योत्प्रेक्षाद्वयस्येतेषां परस्परनिर-पेक्षतया संसृष्टिः ] । मञ्जुभाषिणीवृत्तं, तल्लक्षणं यथा—"सजसा जगौ च यदि मञ्जुभाषिणी" इति ॥ ४ ॥

किसलयमिव मुग्धं बन्धनाद् विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः।

सहजतः कुसुमसुकुमाराकृतिं लोकलोचनानन्दविधायिनीं जनकनन्दिनीमिदानीमतितरां प्रियविरहकातरामवलोक्य सातिशयमन्तर्दूयमाना मुरला तदीयां परिदृश्यमानामवस्थामुपवर्णयन्ती आह, किसलयमिति।—शरदिजः शरत्कालभवः [ अनेन घर्मस्य अतितापहेतुता व्यज्यते। "शरदिजः" इत्यत्र शरदि जायते यः इति "सप्तम्यां जनेर्डः" ( ३।२।९७ पा० ) इति डप्रत्ययः, ततः "प्रावृट्शरत्कालदिवाञ्जे" ( ६।३।१५ पा० ) इति सप्तम्याः अलुक् च ] घर्मः आतपः ( "घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्बुनोरपि" इति मेदिनी )। केतकस्य पुष्पम् [ "अवयवे च प्राण्योषधिवृक्षेभ्यः" ( ४।३।१३५ पा० ) इत्यण्, ततः "पुष्पमूलेषु बहुलम्" वा० इति तद्धितलुकि हरीतक्यादित्वात् स्त्रीत्वम् ] ( "हिङ्गौनं प्रसवे सर्व्वं हरीतक्यादयः स्त्रियाम्" इत्यमरोक्तेः ) तस्याः केतककुसुमस्य गर्भपत्रं कुसुममध्यगतदलमिव, [ अत्र गर्भशब्दग्रहणेन मृदुतातिशय्यं पाण्डुता च व्यज्यते ] हृदयं सुकुमारतया कुसुमम् इव [ अत्र व्याघ्रादेराकृतिगणत्वात् "उपमितं व्याघ्रादिभिः" ( २।१।५६ पा० ) इत्यनेन उपमितसमासः। ] तत् शोषयति यः स तथोक्तः; निरतिशयसुकुमारतया कुसुमसदृशमेतस्या हृदयमयमतितरां तापयतीति भावः। दारुणः विषमः, दुःसह इत्यर्थः, [ तपनातपविरहतापयोरयमेव विशेषो यदेतयोरादिमः स्वेन प्रखरतप्रभावेण म्लापयन्नितरपदार्थान् हतप्रभान् करोति, अन्तिमस्तु म्लापयन्नपि वियोगिनः केनाप्यभिनवेनानुभवैकगम्येन शोभाऽतिशय्येन पुनरलङ्करोतीत्ययमतिदारुणोऽप्यदारुण एवेत्यवगम्यते। ] दीर्घः सुचिरकालव्यापी, निरवधिरिति यावत्, यः शोकः प्रियविरहजः सन्तापः, मुग्धं मनोहरं, बन्धनात् वृन्तात् ( "वृन्तादीनां फलं शस्यं वृन्तं प्रसवबन्धनम्" इत्यमरः ) विप्रलूनं प्रसह्य विच्छिन्नं किसलयं नवपल्लवमिव, अस्याः सीतायाः परिपाण्डु परितः पाण्डुवर्णं, वियोगमलिनमिति यावत्, क्षामं कृशं [ "क्षामम्" इति पदं क्षैधातोः क्तप्रत्ययेन सिद्धम्; "क्षायो मः" ( ८।२।५३ पा० ) इति सूत्रेण क्तस्य मकारादेशः ] शरीरं, म्लपयति म्लानिं प्रापयति। यथा प्रचण्डतरैर्दिवाकरकरनिकरैः शनैः शुष्यमाणः कोमलकुसुमसुकुमारः किसलयसम्भारः सहृदयहृदयदाहं जनयति, तथा दुर्वहप्रियविरहशोकसन्तापैस्तप्यमानेयं जानकी नियतमनुशोचनीयतया मामातितरां दूनोतीति भावः। [ अत्र किसलयेन शरीरस्य, कुसुमेन हृदयस्य, घर्मेण च शोकस्य साधर्म्यकथनादुपमानामालङ्कारः; सा च

ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ ५ ॥

[ इति परिक्रम्य निष्क्रान्ते ]। (प)

इति विष्कम्भकः। (फ)

---

इवशब्दवाच्यतया श्रौती। अत्र लिङ्गादर्थूहनरूपम् अनुमानं नाम सन्ध्यङ्गमुक्तम् ]। वृत्तं मालिनी ॥ ५ ॥

( प ) इतीति।—इति इत्थमालपन्त्यौ इति शेषः। निष्क्रान्ते—तमसामुरले इति शेषः।

( फ ) विष्कम्भक इति।—विष्कम्भकस्य लक्षणादिकं विस्तरतः द्वितीयाङ्कप्रारम्भे उक्तमिति नात्र पुनरुच्यते। अत्रापि "प्रेषितास्मि भगवतीऽगस्त्यस्य पत्न्या लोपामुद्रया" इत्यादिना मुरलाकथितवाक्येन, तथा "श्रूयतां पुरा किल" इत्यादिना तमसाकथितवाक्येन च अतीतकथांशानां निदर्शनं, तथा "अहमाज्ञापिता, तमसे! त्वयि प्रकृष्टप्रेमैव" इत्यादिना तमसाकथितवाक्येन च वर्ण्यिष्यमाण-कथांशानां निदर्शनं वेदितव्यम्। तस्य च शुद्धसङ्कीर्णरूपत्वेन द्वैविध्यं, प्रकृतस्य तु तमसामुरलारूपाभ्यां मध्यमाभ्यां पात्राभ्यां सम्प्रयोजितत्वात् शुद्धरूपत्वमेव, "मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः। शुद्धः स्यात् स तु सङ्कीर्णो नीच-मध्यमकल्पितः॥" इति साहित्यदर्पणकृद्वचनात्।

अत्रेदं चिन्त्यते;—इह हि सकलकाव्यकलाऽऽलोचनलोललोचनानाम् अधुना-तनानां मनसि समुद्भवत्यभिनवः कश्चित् संशयः,—यत् सरसकवितारसपरवशमतिना कविकुलपतिना भवभूतिना विरचिते सुपरिचितेऽस्मिन्नुत्तररामचरिते कथमनल्पकल्पना-प्रसूतः सद्भावपूतः समुपनिबद्धोऽयं तृतीयोऽङ्कः?—तथाहि, सत्यप्यभिनवे कवेर्नवनव-भावोद्भावनपाटवे प्रयोजनमनुयुज्य चेन्न लभ्यते सदुत्तरं किञ्चित्, तदा व्यर्थपदार्थ-समावेशशङ्कापङ्कलङ्कितचेतसां चेतसि नैवोपजायते कियानपि परितोषलेशः, इत्थं-तेषाम् अत्यद्भुतं संशयाकूतं विज्ञाय यदि च तूष्णीम्भावम् एव साधीयस्त्वेन मन्यामहे, तथापि "तुष्यतु दुर्जनः" इति न्यायेन साम्प्रतमेवं ब्रूमः; तथाहि—अनितरसाधा-रणाः कल्पनैकधनाः कवयो हि कुटिलसमालोचकलोकलांछनपथमतिक्रममाणाः स्वातन्त्र्येणैवोपनिबध्नन्ति काव्यजातम्। तत्र च सरसकाव्यरसास्वादवञ्चितानां समालोचकानां कुटिलकटाक्षपातस्तैरपचापचनिचित एव भवति।

[ नेपथ्ये ] प्रमादः प्रमादः !! (ब)

[ ततः प्रविशति पुष्पावचयव्यग्रहस्ता सकरुणौत्सुक्यम् आकर्णयन्ती सीता ] । (भ)

परमार्थतस्तु विचार्यमाणे न ह्येवंविधाः कविकुलललामभूताः कालिदास-भवभूतिप्रमुखाः नियतं भावपारतन्त्र्येणास्वतन्त्रा अपि किमपि प्रयोजनमननुसन्दधानाः कुत्राप्युपनिबध्नन्ति किञ्चिदित्येव ब्रूमः । इहापि चेदतिनिपुणधियाऽतिसूक्ष्मम् ईक्ष्यते प्रयोजनं किञ्चित् तदाऽस्माकमपि लोचनपथमुपैति प्रयोजनत्रितयमेवापाततः ; प्रथमतस्तत्र तावदलोकसाधारणपूतचरितायाः सतीकुलललामभूतायाः सीताया अलौकिकपातिव्रत्यप्रदर्शनं, तथाहि प्रचुरतरप्रमाणावगतविशुद्धभावां सीताम् अतिशुद्धपूतचरितां विदित्वाऽपि अन्तरेणैव निर्वासनसाधकं कश्चिदपराधं केवलं लोकानुरञ्जनार्थं विजनकानने विवासयितरि भर्त्तरि रामचन्द्रे धर्म्मतः सापराधेऽपि कथमप्यनभिव्यञ्जयन्ती लेशतोऽपि विरागं, प्रकटयन्ती च प्रतिपदमेवावर्णनीयं कातरताऽऽतिशय्यं मुहुर्मोहमापन्ने भर्त्तरि सीता समदर्शयत् सम्प्रत्यपि परां कोटिं पातिव्रत्यधर्म्मस्य । द्वितीयतस्तावद्वासन्त्या सहालापावसरे राजकीयकठोरकर्त्तव्यपारतन्त्र्येणैवानिच्छताऽपि रामेण निरपराधा निर्वासिता सीतेति समन्तात् विज्ञापनम् । तथा तृतीयतः सर्वान्तर्यामिणा जगत्स्वामिना रामेण निर्दयं निर्वासिता सीता भर्त्रैवमवमता वनवाससहचरीणां वासन्त्यादीनां समक्षं मुखमपि दर्शयितुं लज्जमाना सम्प्रति तत्तत्सखीसमक्षमेवार्य्यपुत्रमुखात् "अस्ति चाश्वमेधाय हिरण्मयी सीताप्रतिकृतिः" इत्यादिकमाकर्णयन्ती जानकी परित्यक्तवत्यात्मन्यवज्ञाजातमिति प्रख्यापनञ्चेति सुधीभिर्विभाव्यम् ।

( ब ) प्रमाद इति ।—प्रमादः,—महान् अनिष्टापातः इत्यर्थः, (यदि च प्रमादशब्दस्य अनवधानतारूपोऽर्थः लोकप्रसिद्धः, तथापि अनिष्टापातरूपार्थेऽपि बहुतरप्रयोगदर्शनात् तत्रापि अयं भाक्तः इत्यवधेयम् ) ।

( भ ) पुष्पेत्यादि ।—पुष्पाणां कुसुमानाम् अवचये सञ्चयनकार्य्ये व्यग्रो व्यापृतो हस्तो यस्याः सा तथोक्ता । सकरुणेत्यादि ।—करुणा सहसा पूर्व्वपरिचितपञ्चवट्यादिदर्शनसमुद्बुद्धपूर्व्वस्मृतिजन्यः शोकः, औत्सुक्यं पूर्व्वसुहृदामेतेषां पुनः पुनर्दर्शनार्थम् उत्कण्ठा, ताभ्यां सहितं यथा स्यात् तथेत्यर्थः । आकर्णयन्ती—शृण्वन्ती, नेपथ्योक्तं प्रमादशब्दमिति शेषः ।

सीता। अम्महे! जाणामि पिअसही मे वासन्दी वाहरदि त्ति *। (म)

पुनर्नेपथ्ये।—

सीतादेव्याः स्वकरकलितैः शल्लकीपल्लवाग्रै-
रग्रे लोलः करिकरभको यः पुरा पोषितोऽभूत्।

सीता। किं तस्स? †

---

* अहो! जानामि प्रियसखी मे वासन्ती व्याहरतीति।

† किं तस्य?

---

(म) अहो इति।—[अहो इति विस्मयसूचकमव्ययम्]। अकस्माद्वासन्तीकण्ठ-स्वरश्रवणं विस्मयकारणम्। जानामि—मन्ये। व्याहरति—कथयति; परिचितपूर्व्व-तत्कण्ठस्वरत्वेन प्रतीयमानत्वादिति भावः।

"प्रमादः प्रमादः" इति नेपथ्योक्तवचनानवसान एव प्रविशन्त्यां जनकनन्दिन्यां तद्वासन्तीव्याहारत्वेनाशङ्कमानायाम् अनन्तरान्तरा सीतोक्तिव्यवहितं नेपथ्योक्तावशिष्टं नेपथ्यतः पुनरप्यर्द्धश्लोकेन व्याहरति, सीतादेव्या इत्यादि।—पुरा पूर्व्वस्मिन् काले, रामस्य अरण्यवाससमये इत्यर्थः, अग्रे सीतायाः सम्मुखे इति शेषः, लोलः पल्लव-ग्रहणार्थे चञ्चलः ("लोलश्चलसतृष्णयोः" इत्यमरः) यः करिकरभकः हस्तिशावकः, [अत्र यद्यपि करभशब्दस्यैव करिशावकार्थकत्वेन पुनः करिपदसमभिव्याहारः अधिकपदतादोषदुष्टत्वशङ्कामुत्थापयति, तथापि "विशिष्टवाचकपदानां सति विशेषणपदसमभिव्याहारे विशेष्यमात्रपरत्वं करिकलभादिशब्दवत्" इति वामन-सूत्रादत्र करभशब्दस्य करिरूपविशेषणशब्दसमभिव्याहृतत्वेन सामान्यतः शावकमात्र-परतया न कापि दोषशङ्केति, अत एव कलभशब्दार्थप्रदर्शनप्रसङ्गे "शावकमात्र-परत्वेन करिकलभकरभादितनमालकिशलया मेदिनी" इति वाचस्पत्यभिधानलेखो दृश्यते इत्यवधेयम्। "करभकः" इत्यत्र करभशब्दादनुकम्पायां कन्प्रत्ययः]। सीता-देव्याः जनकनन्दिन्याः स्वकरेण स्वहस्तेन कलितैः धृतैः अवचितैर्वा, न त्वन्येन केनचित् धृतैः सङ्गृहीतैर्वेति भावः [एतेन सीतायास्तस्मिन्नतिशयस्नेहप्रवणता सूचिता] शल्लकीनां तदाख्यानां गजप्रियाणां वृक्षविशेषाणां पल्लवाग्रैः अग्रकिशलयैरित्यर्थः, पोषितः पालितः अभूत्, सोऽयं करिकरभकः वध्वा निजभार्य्यया करेणुकया इत्यर्थः,

पुनर्नेपथ्ये ।—

बध्वा सार्द्धं पयसि विहरन् सोऽयमन्येन वेगा-
दुद्दामेन द्विरदपतिना सन्निपत्याभियुक्तः ॥ ६ ॥

सीता । [ससम्भ्रमं कतिचित्पदानि गत्वा] अज्जउत्त ! परित्ताआहि परित्ताआहि मम तं पुत्तअं । [स्मृतिमभिनीय सवैक्लव्यम्] । ह्द्धी ह्द्धी ताइं ज्जेव चिरपरिचिदाइं अक्खराइं पञ्चवटीदंसणेण मं मन्दभाइणीं अणुबन्धन्ति ; (य) हा अज्जउत्त !—"*

[इति मूर्च्छति] ।

*, आर्य्यपुत्र ! परित्रायस्व परित्रायस्व मम तं पुत्रकम् । हा धिक् हा धिक् तान्येव चिरपरिचितानि अक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनीमनुबध्नन्ति, हा आर्य्यपुत्र !—"

सार्द्धं सह पयसि जले विहरन् क्रीड़न्, जलकेलिं कुर्वन्नित्यर्थः, अन्येन अपरेण केनचित् उद्दामेन उच्छृङ्खलेन, मत्तेनेत्यर्थः, ("उद्दामो बन्धरहिते स्वतन्त्रे च प्रचेतसि" इति मेदिनी) द्विरदपदिना गजपतिना, अतिमहतेति भावः, वेगात् जवेन, [दर्पादिति पाठे—बलगर्वात् इत्यर्थः,] सन्निपत्य कुतोऽपि समागत्य, अभियुक्तः आक्रान्तः । अपत्यस्नेहाकृष्टा जानकी स्वकरावचितैः पल्लवैर्यमपत्यनिर्विशेषं पुपोष, स एवायं करिशावकः सम्प्रत्यपरेण केनचिदाक्रान्तोऽशरणो विपद्यते, इति तं परित्रायस्वेति समुदिताकूतम् । मन्दाक्रान्ता वृत्तम् ॥ ६ ॥

(य) ससम्भ्रममिति ।—सचकितं,ससाध्वसम् इत्यर्थः, सहसा पुत्रकाभिभवश्रवणादिति भावः । ("सम्भ्रमः साध्वसेऽपि स्यात् सवेगादरयोरपि" इति मेदिनी) । कतिचित्—कियन्ति, पदानि—पादन्यासानित्यर्थः, किञ्चिदग्रसरीभूय इति यावत् । पुत्रकं—पुत्रनिर्व्विशेषेण पालितं, पुत्रप्रतिकृतिमित्यर्थः, [अत्र "इवे प्रतिकृतौ" (५।३।९६ पा०) इति सूत्रेण कन्प्रत्ययः] । स्मृतिमभिनीय—पूर्ववृत्तान्तस्मरणसूचकं भावम् अभिनयेन दर्शयित्वा । सवैक्लव्यं—व्याकुलतासहितम्, आहेति शेषः । चिरपरिचितानि—चिराभ्यस्तानि, पूर्व्वं पुनःपुनः कथनादिति भावः । अक्षराणि—सम्मुखोच्चरितानि पदानि, "आर्य्यपुत्र" इत्येवंरूपा वर्णाः इत्यर्थः, मन्दभागिनीं—मन्दो भागः, सोऽस्या अस्तीति मन्दभागिनी तां, हतभाग्यां [अत्र यद्यपि "न कर्म्मधारयान्मत्वर्थीयः" इत्यनुशासनेन कर्म्मधारयान्मत्वर्थीय इनिप्रत्ययस्यासाधुत्व-

तमसा। [ प्रविश्य ] वत्से ! समाश्वसिहि समाश्वसिहि।

[ नेपथ्ये। ] विमानराज ! अत्रैव स्थीयताम्। (र)

सीता। [ससाध्वसोत्कम्पोल्लासम्।] अम्महे! जलभरिद-मेहत्थणिदगम्भीरमंसलो कुदो णु एसो भारदीणिग्घोसो भरन्तकण्णविवरं मं पि मन्दभाइणीं झत्ति उस्सावेदि ? * (ल)

* अहो ! जलभृतमेघस्तनितगम्भीरमांसल: कुतो नु एष भारतीनिर्घोष: भ्रियमाणकर्णविवरां मामपि मन्दभागिनीं झटिति उच्छ्वासयति ?

मेवापातत: प्रतिभाति, तथापि—"भूमनिन्दाप्रशंसासु" इत्यादिना मत्वर्थीयप्रत्ययानाम् अस्त्यर्थव्यतिरिक्तप्राशस्त्यादिरूपाधिकार्थबोधकतया केवलं बहुव्रीह्यादिना तदबोधकतया च अतिरिक्तस्य प्राशस्त्यार्थस्य विवक्षितत्वेन कर्मधारयादिनिप्रत्यय: कृत: ; तेन च अत्यन्तमन्दभाग्यवत्त्वरूपार्थो लभ्यते इत्येवं समाधेयम् ; यद्वा—मन्दं भजत इति णिनुप्रत्ययात् स्त्रियां सिद्धम् ]। अनुकुर्वन्ति—अनुसरन्ति, अभ्यासवशात् अधुनाऽपि मन्मुखात् उच्चरन्ति इति यावत्।

(र) विमानराज इति।—विमानेषु व्योमयानेषु रथेषु इत्यर्थ:, राजा श्रेष्ठ: इति विमानराज: तत्सम्बुद्धौ ; ( पुष्पकविमानस्य सम्बोधनम्। रामचन्द्रस्योक्तिरियम् )। स्थीयतां—निवर्त्त्यतां, त्वयेति शेष:। ( पुष्पकादे: स्वर्गीयविमानत्वेन तस्मिंश्चेतनवद्व्यवहार: )।

(ल) ससाध्वसेत्यादि।—साध्वसेन भयेन, उत्कम्पेन सात्त्विकभावरूपेण वेपथुना, उल्लासेन आनन्देन च सहितं यथा स्यात् तथा, आहेति शेष:। ( अत्र सहसा भर्तृकण्ठस्वराकर्णनेन स्त्रीस्वभावसुलभं साध्वसं, सुचिरकालानन्तरं लेशतोऽप्यसम्भावितं भर्तृकण्ठस्वरमाकर्ण्य पुन: प्रियस्मरणत: सात्त्विकभावोदयादुत्कम्प:, तथा यद्ययं तत्त्वत एव आर्य्यपुत्रकण्ठस्वर: स्यात्, तदा भाग्यादद्य पुनरपि प्रियसमागमसम्भावनेति पतिव्रताया: सीताया: पतिदर्शनलालसया उल्लास: इति बोध्यम् )। जलभृतस्य जलपूर्णस्य मेघस्य स्तनितमिव गर्जितमिव, [ "स्तनितं गर्ज्जितं मेघनिर्घोषे रसितादि च" इत्यमरोक्ते: "मेघस्तनित" शब्दस्य प्रयोगे मेघशब्दस्य वैयर्थ्यं न दोषाय इत्यादि विवेचितमस्माभि: "करिकरभ"शब्दे पूर्व्ववत् १९६ पृष्ठे १८ पङ्क्तौ ] गम्भीरो धीरो मांसलो वीर्य्यवान् एष श्रूयमाण:, भारतीनिर्घोष: वाक्यध्वनिरित्यर्थ:, सजलजलदनादसदृशधीरपुष्ट: वाक्शब्द इति यावत्। नु इति

तमसा। [सस्मितास्रम्।] अयि वत्से! (व)—

**किमव्यक्तेऽसि निनदे कुतस्त्येऽपि त्वमीदृशी।**
**स्तनयित्नोर्मयूरीव चकितोत्कण्ठिता स्थिता?॥ ७॥**

वितर्के, पृच्छायां वा, ("—नु वितर्कोपमानयोः। विकल्पानुनयातीते प्रश्ने हेत्वपदेशयोः" इति मेदिनी)। कुतः,—कस्मात् जनात् उत्पन्न इत्यर्थः। भ्रियमाणेत्यादि।—भ्रियमाणं पूर्य्यमाणं कर्णयोर्विवरं रन्ध्रं यस्याः तां तथोक्तां चिराकाङ्क्षितरवश्रवणपरितृप्तकर्णकुहरामिति यावत्। मामपीति।—का कथा अन्यासाम्? इत्यर्थः। भर्त्रा लोकापवादात् चिराय निर्वासिततया निरतिशयदुर्भाग्यवशया च कथमपि पुनः प्रियतमसमागमासम्भवात् नियतं भ्रियमाणाया मम पुनरार्य्यपुत्रचरणदर्शनाशा दूरापास्तैवेति अपिकाराशयः। झटिति—शीघ्रम्, उच्छ्वासयति—जीवयति, रामदर्शने आशां जनयतीति भावः।

(व) सस्मितेति।—अहो सुचिरपरिचितेऽप्यस्मिन् पतिकण्ठस्वरेऽस्याः सन्देहः इति चिन्तया स्मितम्। विरागहेतावपि पतिव्रतेयं पुनः पतिदर्शनाकाङ्क्षया हृष्यति, परन्तु एतयोः परस्परसाक्षात्कारो न स्यादिति चिन्तया अस्रं, ताभ्यां सहितं यथा स्यात् तथा, आहेति शेषः।

विदितसकलवृत्तान्ता अपि तमसा सखीसकाशं भावगुप्त्यर्थं सम्प्रत्यनभिज्ञेवाह, किमिति।—स्तनयित्नोर्मेघस्य, [स्तनयति यः सः स्तनयित्नुरिति अदन्तचुरादिगणीयात् स्तनधातोः इत्नुच्प्रत्ययेन सिद्धम्] ("अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः" इत्यमरः) निनदे शब्दे (अत्रापि "निनदे" इति पूर्व्वार्द्धादनुषञ्जनीयम्) मयूरी इव [मह्यां पृथिव्यां रौति या सा मयूरी (मही+रु+क.) पृषोदरादित्वात् साधुः] शिखिनीव, कुतस्त्ये [कुतो भवः इति कुतस्त्यः "अव्ययात् त्यप्" (४।२।१०४ पा०) इत्यनेन त्यप्प्रत्ययः] कस्मादपरिज्ञातस्थानादागतेऽपि; शब्दोत्पत्तिस्थानविशेषविज्ञाने हि शब्दानुसारेण पुरुषविशेषविज्ञानमपि सम्भवति, अत्र तु "कुतोऽयमागतः शब्दः" इति अनिरूपणादव्यक्तिनिरूपणमसम्भवीति भावः। अव्यक्ते अपरिस्फुटे, कस्यायमिति तत्त्वतः अनिश्चिते इत्यर्थः, निनदे "विमानराज! अत्रैव स्थीयताम्" इत्येवंरूपे शब्दे सति इत्यर्थः, किं कथम् ईदृशी एतादृशी, चकिता चञ्चला उत्कण्ठिता उत्सुका च सती स्थिता असि? वर्त्तसे इत्यर्थः। ["चकितोत्कण्ठितम्" इत्यपि क्वचित् पाठः, स्थितेत्यस्याः क्रियाया विशेषणत्वेनान्वयादर्थः सुस्पष्ट एव। अत्र सहसा पतिकण्ठस्वराकर्णनात् स्त्रीस्वभावसुलभा चकितता, तथा सुचिरकालानन्तरं पुनः

सीता। भअवदि! किं भणासि अपरिप्फुड़ त्ति? मए उण सरसंजोएण पच्चभिआणिदं, अज्जउत्तो ज्जेव वाहरदि त्ति। * (अ)

तम। श्रूयते, तपस्यतः किल शूद्रस्य दण्डधारणार्थमैक्ष्वाको राजा जनस्थानमागत इति। (ब)

* भगवति! किं भणसि अपरिस्फुटेति? मया पुनः स्वरसंयोगेन प्रत्यभिज्ञातम्, आर्य्यपुत्र एव व्याहरतीति।

पतिसमागमपदवर्शनसम्भावनात् उत्कण्ठितता चेति बोध्यम्। उत्कण्ठालक्षणं यथा—"रागे त्वलब्धविषये वेदना महती तु या। संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः॥" इति। अत्र उपमानामालङ्कारः, सा च इवशब्दवाच्यतया, श्रौती। तथाऽत्र "असि" इति क्रियापदस्य उपमानभूतया मयूर्य्या अन्वये "अस्ति" विपरिणामस्यावश्यकतया "लतेव राजसे तन्वि" इति साहित्यदर्पणधृतोदाहरणवत् उपमागतभग्नप्रक्रमताख्यालङ्कारदोषो बोध्यः; स च "निनदैः कथमव्यक्ते" इति "किमव्यक्ते नु निनदैः" इति वा पाठान्तरं कल्पयित्वा समाधातुं शक्यते इति चिन्त्यम्]। पथ्यावक्त्रं वृत्तम्॥ ७॥

(अ) भगवतीति।—तमसे इत्यर्थः। अपरिस्फुटेति।—अविस्पष्टेत्यर्थः। (पूर्व्वं "किमव्यक्तेऽसि" इति श्लोके तमसया अव्यक्तेति शब्दो व्यवहृतः, अत्र सीतावाक्ये तमसावाक्यप्रतीकत्वेन "अपरिस्फुटेति" इत्यमुल्लेखः तद्वाक्यार्थमात्रग्रहणेन, न तु स्वरूपत इति बोध्यम्)। स्वरसंयोगेन—श्रुतौ कण्ठरवसम्बन्धेनेत्यर्थः। प्रत्यभिज्ञातं—स एवायमिति ज्ञातं, (अनुभूतस्य उद्बोधकसहभावेन पुनः स्मरणं प्रत्यभिज्ञा, इति तार्किकाः)। व्याहरति—कथयति।

(ब) श्रूयते इति।—लोकपरम्परया इति शेषः। अस्य च—"आगत इति" इति वक्ष्यमाणेतिशब्देन अन्वयः। तपस्यतः,—तपश्चरतः, [तपश्चरतीत्यर्थे "कर्म्मणो रोमन्थतपोभ्यां वर्त्तिचरोः" (३।१।१५ पा०) इत्यनेन क्यङ्, तथा "तपसः परस्मैपदञ्च (वा०) इत्यनेन च परस्मैपदमिति शतृप्रत्ययः] शूद्रस्य—शम्बूकस्य। दण्डधारणार्थं—दण्डविधानाय इत्यर्थः, [दण्डधारणाय इदम् इति दण्डधारणार्थम् "अर्थेन सह नित्यसमासः विशेष्यलिङ्गता च" (वा०) इति

सीता । दिट्ठिआ अपरिहीणराअधम्मो क्खु सो राआ । * (स)

[ नेपथ्ये ]—यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रियासहचरश्चिरमध्यवात्सम् ।
एतानि तानि बहुनिर्झरकन्दराणि
गोदावरीपरिसरस्य गिरेस्तटानि ॥ ८ ॥

* दिष्ट्या अपरिहीणराजधर्मः खलु स राजा ।

---

नित्यसमासः ] ऐक्ष्वाकः,—इक्ष्वाकुकुलोत्पन्नः [ ऐक्ष्वाक इति, इक्ष्वाकोः गोत्रापत्यं पुमान् इति व्युत्पत्त्या "दाण्डिनायन—" ( ६।४।१७४ पा० ) इत्यनेन निपात्यते ] ।

( स ) दिष्ट्या—भाग्येन, [ दिष्ट्या इति तृतीयान्तप्रतिरूपकमव्ययम् ] अपरिहीणः अपरित्यक्तः राजधर्मो येन स तथोक्तः यथाशास्त्रमनुष्ठितराजकार्य्यः, दैववशात् विरहविधुरोऽपि राजधर्मात् न विचलित इत्यर्थः ।

सम्प्रत्यगस्त्याश्रमादयोध्यां प्रतिनिवर्त्तमानो रामचन्द्रः पथि पञ्चवटीमनुप्रविश्य सुचिरसहवाससुहृद्द्रुममृगाद्यमितपदार्थावलोकनात् तानेवेदानीं पूर्व्वसुहृत्त्वेन प्रत्यभिजानन् नेपथ्यतः प्राह, यत्रेति ।—यत्र येषु तटेषु द्रुमा वृक्षा अपि, तथा मृगाः अपि पशवोऽपि, ( "मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः" इति मेदिनी ) मे मम बन्धवः बहुकालमेकत्रावस्थानात् त्यागासहिष्णवः प्रणयिनः, तथा यानि तटानि, [ अत्र "उपान्वध्याङ्वसः" ( १।४।४८ पा० ) इति सूत्रेण अधिपूर्व्ववसतेरधिकरणस्य कर्म्मत्वेन द्वितीया । ] प्रियया जनकनन्दिन्या सह चरति यः सः तथोक्तः, प्रियया सीतया सहेत्यर्थः, चिरं बहुकालम् अध्यवात्सम् अध्युषितवान् ; पूर्व्वमरण्यवासकाले प्रियतमया सहावैकत्रावस्थानादमितानन्दसम्पादकतया अस्माकमतिप्रियाण्येतानि तटानीति भावः । बहवो निर्झरा जलप्रवाहा येषु ते तथोक्ताः, कन्दरा गर्त्ता येषु तानि तथोक्तानि ( "उत्सः प्रस्रवणं वारि प्रवाहो निर्झरो झरः" इति "दरी तु कन्दरो वा स्त्री देवखातबिले गुहा" इति चामरः ) । एतानि परिदृश्यमानानि, तानि पूर्वपरिचितानीत्यर्थः, गोदावर्य्याः नद्याः परिसरस्य प्रान्तवर्त्तिन इत्यर्थः, गिरेः पर्वतस्य प्रस्रवणस्येति यावत्, तटानि प्रदेशाः, वर्त्तन्ते इति शेषः । [ यत्रातिचिरसहवासेन चेतनाचेतनसाधारणाः पादपमृगादयोऽपि सुहृद्भावमुपगताः, का कथा तत्र गुणपक्षपातिनामतिकरुणानां सदारापत्य-तपोधनानामिन्द्रे तरुर्णस्य

सीता। [ दृष्ट्वा। ] हा कधं पहादचन्दमण्डलापण्डुरपरिक्खामदुब्बलेण आआरेण अअं सोम्मगम्भीराणुभावमेत्तपच्चभिआणिदो अज्जउत्तो ज्जेव, ता मं धारेहि। * (छ)

[ इति तमसामाश्लिष्य मूर्च्छति ]।

तमसा। [ धारयन्ती। ] वत्से! समाश्वसिहि समाश्वसिहि।

[ नेपथ्ये ]। अनेन पञ्चवटीदर्शनेन।—

---

* हा कथं प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामदुर्बलेनाकारेण अयं सौम्यगम्भीरानुभावमात्रप्रत्यभिज्ञात आर्य्यपुत्त्र एव, तन्मां धारय।

---

दण्डापूपिकया लाभादर्थापत्तिर्नामालङ्कारः। तल्लक्षणं यथा दर्पणे,—"दण्डापूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते" इति ]। वसन्ततिलकं वृत्तम्॥ ८॥

(छ) हा कथमिति।—हा इति विषादे ("हा विषादशुगर्त्तिषु" इत्यमरः) कथमिति सम्भावनायाम्। प्रभातेत्यादि।—प्रभाते प्रत्यूषे यत् चन्द्रमण्डलं सुधाकरबिम्बं तदिव आ समन्तात् पाण्डुरः विरहसन्तापातिरेकाद् धूसरवर्णः, अतिम्लानः इति यावत्, परिक्षामोऽतिकृशस्तथा दुर्बलः शक्तिहीनत्वेन प्रतीयमानश्च यः आकारः आकृतिस्तेन उपलक्षित इत्यर्थः, [ अत्र "इत्थम्भूतलक्षणे" (२।३।२१ पा०) इति उपलक्षणे तृतीया ]। सौम्येत्यादि।—सौम्येन प्रशान्तेन गम्भीरेण धीरेण च अनुभावमात्रेण केवलेन प्रभावेण, केवलाकृतिगतसहजतेजोमहिम्नेति यावत्, प्रत्यभिज्ञातः पूर्व्वसंस्कारवशादुद्बोधकसहभावेन "स एवायमार्य्यपुत्रः" इति कथमपि ज्ञातः इत्यर्थः। चिरविरहसन्तापेनातिक्षीणमलिनाकृतिरयमार्य्यपुत्रः पूर्व्वाकारविपर्य्ययात् "स एवायं न वा?" इति संशयमश्याकमुत्पादयन्नपि स्वकीयप्रसन्नगम्भीरस्वभावप्रभावेण स्वयमेव "स एवायम्" इति निर्णाययतीति भावः। तत्—तस्मात्, आर्य्यपुत्रस्यैतादृशदुःखावस्थावलोकनेनाचिरमेव मम मोहसम्भवादित्यर्थः। धारय—अवलम्बस्व, इतरथा मूर्च्छया भूमौ पतने मम गुरुतराघातसम्भवः, तस्मिन् सति चीत्काराद्दात्मप्रकाशसम्भावना, यदृच्छया समागतस्य आर्य्यपुत्त्रस्य चरणकमलसन्दर्शनजनितसुखलाभसहितापूर्व्वधर्मप्राप्तिविरहश्चेति भावः।

अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं ज्वलिष्यतः।
उत्पीड़ इव धूमस्य मोहः प्रागावृणोति माम्॥ ९॥

हा प्रिये जानकि! (क)

तमसा। [स्वगतम्।] इदं तदाशङ्कितं गुरुजनेनापि। (ख)

सीता। [समाश्वस्य।] हा कधं एदं!! *

* हा! कथमिदम्!!

अथ गच्छन् पथि पञ्चवटीशोभासमृद्धिमवलोकयन्नेवंविधैर्विविधैरुद्दीपकैः स्मृतातीतवृत्तान्तजातो जानकीनाथो मुहुर्मुह्यमानः साधिक्षेपमाह, अन्तरिति।— अन्तः अन्तःकरणे, लीनस्य गूढ़ं स्थितस्य, उद्दामं शोकोद्दीपकदण्डकादिदर्शनेन अत्यन्तमधिकं सर्वमाच्छाद्य धगधगिति, घोररावमिति यावत्, ज्वलिष्यतः देदीपिष्यतः, दुःखाग्नेः शोकानलस्य, धूमस्योत्पीड़ इव घनीभूतः धूमराशिरिव, मोहः मूर्च्छा, अद्य अधुना, मां मम चैतन्यमित्यर्थः, प्राक् दुःखाग्नेः प्रज्वलनस्य पूर्वमित्यर्थः, आवृणोति आच्छादयति, अतिशयेन शोकाभिभूतोऽस्मीति भावः; यथा क्वचित् सूक्ष्मभावेनावतिष्ठमानोऽनलः कदाचित् तृणादिसम्पर्कादत्यन्तघनीभूतेन धूमपटलेन सूचयत्यतदव्यवहितोत्तरक्षणभाविभीषणप्रज्वलनं स्वस्य, तथा ममापि प्रियावियोगजः शोकावेगः कार्य्यान्तरव्यापृततया प्रागन्तर्निगूढ़ोऽपि सम्प्रत्येतैरुद्दीपकैर्नवोभूतः मोहद्वारेण मम भविष्यदत्याहितमेवावेदयतीति समुदिताशयः। [अत्र पूर्व्वार्द्धे "दुःखाग्नेः" इत्यत्र "दुःखमग्निरिव" इत्युपमितिसमासात् लुप्तोपमा, परार्द्धे चासौ श्रौतीत्युभयोः परस्परमङ्गाङ्गिभावेन सङ्करः। केचित्तु "दुःखाग्नेः" इत्यत्र भविष्यज्ज्वलनसम्पर्कात् निरङ्गरूपकमाहुस्तदसमीचीनतया नास्मभ्यं रोचते, परार्द्धगतोपमयैकवाक्यताया एव युक्तत्वादित्यवधेयम्]। अनुष्टुप् वृत्तम्॥ ९॥

(क) हा प्रिये इति।—कुत्र इदानीं वर्त्तसे!! इति शेषः।

(ख) इदमिति।—तदिदं—रामस्य शोकाभिभूतिमोहपतनादिकं, सम्प्रत्युपस्थितमिति यावत्। गुरुजनेन—भागीरथीलोपामुद्राप्रभृतिनेत्यर्थः। आशङ्कितं— सम्भावितं, यद्धि गुरुजनेनावश्यम्भावितया सम्भावितं कार्य्यतत्तदेवेदानीं दृश्यते इति भावः।

[ पुनर्नेपथ्ये। ] हा देवि! दण्डकारण्यवासप्रियसखि! हा विदेहराजपुत्रि! (ग)

[ इति मूर्च्छति ]।

सीता। हद्धी! हद्धी!! मं मन्दभाइणीं व्वाहरिअ आमीलन्तणेत्तणीलुप्पलो मुच्छिदो ज्जेव अज्जउत्तो! हा हा! कधं धरणीपिट्ठे णिरुस्साहणीसहं विपल्हत्थो? भअवदि तमसे! परित्ताआहि परित्ताआहि, जीआवेहि अज्जउत्तं। * (घ)

[ इति पादयोः पतति ]।

* हा धिक्! हा धिक्!! मां मन्दभागिनीं व्याहृत्य आमीलन्नेत्रनीलोत्पलो मूर्च्छित एव आर्य्यपुत्रः, हा हा! कथं धरणीपृष्ठे निरुत्साहनिःसहं विपर्य्यस्तः? भगवति तमसे! परित्रायस्व परित्रायस्व, जीवय आर्य्यपुत्रम्।

(ग) दण्डकेत्यादि।—दण्डकारण्ये जनस्थाने वासः, तत्र प्रियसखी इति दण्डकारण्यवासप्रियसखी, पूर्वं जनस्थानावस्थानकाले सहायरूपेण विशेषतो नानाप्रकारोपकारकरणादिति भावः।

(घ) मामिति।—मां सीतामित्यर्थः। मन्दभागिनीं—हतभाग्याम्। व्याहृत्य—उद्देशेन उच्चार्य्य, भाग्यहीनां मामेव नामतः उल्लिख्य इति यावत्। ["व्याहृत्य" इत्यत्र "उद्दिश्य" इति पाठे—उद्देशेन मन्नाम उच्चार्य्य" इत्यर्थो बोध्यः]। आमीलदिति।—आमीलन्ती ईषन्मुद्रिते नेत्रे नयने नीलोत्पले नीलेन्दीवरे इव यस्य सः तथोक्तः, ईषन्मुद्रितनयनकमलः इत्यर्थः। [ अत्र लुप्तोपमानामालङ्कारः ]। निरुत्साहात् निरतिशयशोकावेगेन उत्साहभ्रंशात् वैक्लव्यवशात् निःसहम् अक्षमवशमित्यर्थः, यथा स्यात् तथा, ["निरुत्साहनिःसहम्" इत्यत्र "निरुद्धनिश्वासनिःसहम्" इति पाठे—"निरुद्धः व्याहतः निश्वासो यस्मिन् कर्म्मणि, तद् यथा स्यात् तथा, निःसहम् अक्षमं विवशमिति यावत्, यथा स्यात् तथा विपर्य्यस्तः" इत्यर्थो बोध्यः]। धरणीपृष्ठे—धरण्याः पृथिव्याः पृष्ठमुपरिभागः तस्मिन्, भूतले इत्यर्थः, विपर्य्यस्तः,—निपतितः। "हा धिक् हा धिक्" इत्यत्र "परित्रायस्व परित्रायस्व" इत्यत्र च आभीक्ष्ण्ये द्विरुक्तिः न दोषपदवीमारोहति,—"विवादे विस्मये हर्षे खेदे दैन्यावधारणे। प्रसादने सम्भ्रमे च द्विस्त्रिरुक्तिर्न दुष्यति॥" इति वचनात्।

तमसा ।—त्वमेव ननु कल्याणि ! सञ्जीवय जगत्पतिम् ।
प्रियस्पर्शो हि पाणिस्ते तत्रैव नियता भव ॥ १० ॥

सीता । जं भोदु तं भोदु, जधा भअवदी भणादि । * (ङ)

[ इति ससम्भ्रमं निष्क्रान्ता ] ।

---

* यद्भवतु तद्भवतु, यथा भगवती भणति ।

जनकनन्दिन्या ससम्भ्रमं विलपन्तं जानकीजीवनमकस्मान्मुह्यमानमवलोक्य सम्भविष्यद्विपत्तीतिकातरया सपादग्रहमावेदिता पतिव्रतासमाचारपरिरक्षणकामा तमसा तामेव जगज्जीवनजीवनसाधनत्वेन निरूपयन्ती वक्ति, त्वमिति ।—ननु भोः कल्याणि शुभे । [ अत्र ननु इति आमन्त्रणार्थकमव्ययम् ( "प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु" इत्यमरः ) एवंविधे चिरनिर्व्वासनेऽपि भाग्यादद्य मे प्रियतमस्पर्शलाभः इति सूचनाय "कल्याणि" इति सम्बोधनम् ]। त्वमेव जगत्पतिं लोकनाथं, राममिति शेषः, सञ्जीवय करस्पर्शादिना सचेतनं कुरु ; [ अत्र एवशब्दस्य अन्ययोगव्यवच्छेदार्थकतया "एष रामवृत्तप्रतीकारस्त्वयैव साध्यो नान्यया" इत्यर्थो लभ्यते ]। कथं मयैव साध्यो न च त्वया ? इत्याशङ्क्याह,—प्रियस्पर्श इति ।—हि यतः, ते तव पाणिः करः, प्रियः स्पर्शो यस्य स तथोक्तः, रामाभिज्ञातत्वात् त्वत्पाणिस्पर्श एव त्वद्वियोगार्त्तस्य तस्य अव्यभिचारितया चैतन्यसम्पादक इति भावः। तस्मादित्यूह्यं, त्वत्पाणिस्पर्शव्यतिरेकेणान्यस्य चैतन्यसम्पादकहेतोरभावादिति तदर्थः ; तत्रैव स्वपाणिना प्रियतमाङ्गस्पर्शे एव नियता व्यापृता भव। [ अत्र चानेकविधाः पाठभेदाः दृश्यन्ते, तेषु च द्वावेवादरणीयौ, तद्यथा—"तत्रैव नियतो भवः" इति पाठे—तत्र तस्मिन्नेव तव पाणिस्पर्शे, भवः सञ्जीवनं रामस्येति शेषः, नियतः स्थिरः, तव पाणिस्पर्श एव अव्यर्थः सञ्जीवनोपायः रामस्येति भावः। तथा "तत्रैव निरतो जनः" इति पाठे—तत्र तस्मिन्नेव तव पाणिस्पर्शे एष जनः राम इत्यर्थः, निरतः नितराम् अभ्यस्तः, सततानुध्यानशील इत्यर्थः, यदर्थमेव एतादृशः सोत्कण्ठः, सम्प्रति करस्पर्शेन तामनुभूय निःसंशयं पुनः सञ्जीविष्यतीति भावः,—इत्यर्थो बोध्यः। अत्र पराईस्थवाक्यार्थस्य पूर्वार्द्धगतवाक्यार्थं प्रति हेतुतया उपन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गं नामालङ्कारः। तल्लक्षणं यथा दर्पणे,—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति ] । अनुष्टुब् वृत्तम् ॥ १० ॥

(ङ) यदिति ।—इष्टमनिष्टं वा इत्यर्थः। आर्य्यपुत्रेणाननुमतं यदिदानीमहं सद्यः स्पृशामि तदा ममाङ्गसङ्गात् पुनः प्राप्तजीवितो मयि रुष्टस्तुष्टो वा भवतु,

[ ततः प्रविशति भूमौ निपतितः सास्रया सीतया स्पृश्यमानः साह्लादोच्छ्वासो रामभद्रः ]। ( च )

सीता। [ किञ्चित् सहर्षम् आत्मगतम् ( छ )। ] जाणे पुणो वि पच्चागदं विअ जीविदं तेल्लोक्कणाहस्स। * ( ज )

* जाने पुनरपि प्रत्यागतमिव जीवितं त्रिलोकनाथस्य।

साथमवसरस्तद्विचारणायाः ; परन्त्वविचार्य्यैव मम भविष्यदिष्टमनिष्टं वा अनति-चिरमेवानुष्ठेयो मया आर्य्यपुत्रस्य पुनर्ज्जीवनोपाय इति भगवत्योपदिष्टमेवानुतिष्ठा-मीति भावः।

( च ) ततः इति।—भूमौ निपतितः,—मूर्च्छितः सन् भूतले श्रयितः। सास्रया—अश्रु मुञ्चन्त्या, प्रियं सहसा मूर्च्छितमवलोक्य गलदश्रुलोचनया इति यावत्। स्पृश्यमानः,—परामृश्यमानः। साह्लादोच्छ्वासः,—आह्लादेन सहसा प्रियतमाङ्गसङ्गजेन आनन्देन, उच्छ्वासेन पुनः संज्ञालाभात् निश्वाससञ्चारेण च सहितःइत्यर्थः।

( छ ) किञ्चिदिति।—न पूर्णतयेति यावत्। सहर्षं—सानन्दम्। इदानीं श्वासमञ्चारेऽपि पुनर्वाक्यस्फूर्त्तिमन्तरा नास्य पुनर्ज्जीवने सम्पूर्णो विश्वास इति नाह्लादस्य पूर्णता, अपि तु पूर्व्वावस्थातो वर्त्तमानावस्थायाः किञ्चिदुत्कर्षदर्शनात् किञ्चिदानन्दो जात इति आशयः। आत्मगतं—स्वगतमित्यर्थः, आह इति शेषः ; पाठकपरि-ज्ञानार्थमेव हि तस्य नाटके लेखनं, वस्तुतस्तु मनोगतो भावः। स च भावः अभिनयकाले मन्दमुच्चारणीयः। तथाहि—"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्" इति दर्पणः।

( ज ) जाने इति।—मन्ये इत्यर्थः। [ ज्ञाधातोः परस्मैपदित्वेऽपि अत्र अकर्म्मकत्वविवक्षातः "अकर्म्मकाच्च" ( १।३।४५ पा० ) इत्यनेनात्मनेपदम्। अत्र केचित् "पुनरपि" इत्यादिवाक्यार्थं ज्ञाधातोः कर्म्मत्वेन मन्यमानाः "जानामि" इत्येव-मेव पाठमाहुः ] प्रत्यागतमिव—परावृत्त्य आगतमिवेत्यर्थः। [ अत्रोत्प्रेक्षया तावदेव-मवगम्यते यत्, यद्यपि गतजीवितस्य पुनर्ज्जीवनमसम्भवीति मयाऽवगम्यते, तथापि आर्य्यपुत्रस्य तादृगचेतनावस्थादर्शनेन कृततज्जीवनापगमशङ्कया मया सम्प्रति पुनः श्वासमञ्चारदर्शनेन पुनः प्राप्तजीवित इवायम् मन्यते इति ] त्रिलोकनाथस्य—त्रिभुवनस्वामिनो रामचन्द्रस्य। [ त्रयाणां लोकानां नाथः तस्य, "तद्धितार्थोत्तरपद-समाहारे" (२।१।५१ पा० ) इति उत्तरपदसमासः। "त्रयाणां लोकानां समाहारः

रामः । हन्त भोः ! किमेतत् ? (झ)—

प्रश्च्योतनं नु हरिचन्दनपल्लवानां
निष्पीडितेन्दुकरकन्दलजो नु सेकः ।
आतप्तजीवनमनःपरितर्पणो मे
सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः ॥ ११ ॥

इति त्रिलोकं तस्य नाथः" इति तु न समीचीनम्, समाहारद्विगौ "द्विगोः" (४।१।२१ पा०) इति सूत्रेण ङीप्प्रत्ययावश्यम्भावात् । क्वचित्तु पुस्तके "त्रैलोक्यनाथस्य" इत्यपि पाठो दृश्यते, एवन्तु न कापि दोषशङ्का इति बोध्यम् ]।

(झ) हन्तेति ।—हन्त इति हर्षसूचकमव्ययम् । ("हन्त वाक्यारम्भखेदविषादहर्षसम्भ्रमे" इति मेदिनी)। सुचिरपरिचितपादपपल्लवाङ्गिदर्शनोद्बोधितपूर्व्वस्मृतिरथ सौहार्द्दाद्विलुप्तचेतनोऽपि सहसा चिराभ्यस्तहस्तावमर्शात् शनैः प्राप्तसञ्ज्ञः सीतापतिः किमप्यनवलोकयन्नत एव सञ्ज्ञासाधनं, वक्ष्यमाणरूपेण संशय्यमान आह, किमेतदिति । —अस्य च श्लोकस्थेन "प्रश्च्योतनम्" इत्यनेन अन्वयः ।

संशयप्रकारमाह, प्रश्च्योतनमिति ।—नु इति सर्व्वत्रैव वितर्के । ("नु वितर्कापमानयोः । विकल्पानुनयातीते प्रश्ने हेत्वपदेशयोः" इति मेदिनी) किमेतदिति पूर्व्वेणान्वयः । किं नु एतद् हरिचन्दनपल्लवानां सुरतरुपल्लवानां, तन्नामकवृक्षविशेषस्य किसलयानामिति यावत्, ("पञ्चैते देवतरवः मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्" इत्यमरः) [ अत्र अङ्गुलिस्पर्शद्योतनार्थं शैत्यातिशयद्योतनार्थञ्च पल्लवपदग्रहणम् ] प्रश्च्योतनं द्रवः, क्षरितो रस इति यावत्, अलौकिककारणव्यतिरेकेण कुतोऽयमलौकिकसुखसम्भव इति भावः । वृक्षविशेषपल्लवरसाद् वा कथमेवं सुखोत्पादनसम्भावनेत्याह, निष्पीडितेति ।—निष्पीडितः रसार्थं करेण आमर्दितः यः इन्दुकरकन्दलः सुधाकरकरकलापः तस्माज्जायते यः स तथोक्तः, सेकः रसधारापतनं नु ? मन्ये सुधांशुकिरणानि एकत्र कृत्वा केनचिदासां रसोऽयं निःसारितः अन्यथा अत्र अमृतस्य कुतः सम्भवः ? इति भावः । आतप्तयोः सन्तापदग्धयोर्जीवनमनसोः आत्मचेतसोः परितर्पणः सम्यक् सुखदः, [ अत्र "आतप्तजीविततरोः" इत्यपि पाठो दृश्यते, तस्यायमर्थः,—आ समन्तात् तप्तस्य जीवितरूपस्य तरोर्वृक्षस्य परितर्पणः इत्यनेनान्वयः ] सञ्जीवयतीति सञ्जीवनः [ "परितर्पणः, सञ्जीवनः" इत्यादिकं "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (३।१।१३४ पा०) इत्यनेन नन्द्यादित्वात् कर्त्तरि ल्युप्रत्ययेन सिद्धम् ] ओषधिः कस्याश्चित् फलपाका-

स्पर्शः पुरा परिचितो नियतं स एष
सञ्जीवनश्च मनसः परिमोहनश्च ।
सन्तापजां सपदि यः प्रतिहृत्य मूर्च्छा-
मानन्दनेन जडतां पुनरातनोति ॥ १२ ॥

च्छाया: लताया: रसः द्रवः, ( "ओषध्यः फलपाकान्ताः" इत्यमरः ) हृदि हृदये, प्रसिक्तः प्रक्षिप्तो नु ? अन्यथा व्यथापगमात् कुत इयं दग्धजीविते सुखोत्पत्तिरिति भावः। [ अत्र "स्पर्शः पुरा परिचितो नियतं स एषः" इत्यादिपरश्लोकोक्तवचनेनाविशेषतः स्पर्शविषयकज्ञानस्य अनुभवितरि सत्त्वप्रमापणात्, प्रकृते च स्पर्शे प्रशीतनादीनां "स संशयो मतिर्या स्यादेकत्राभावभावयोः" इत्युक्तलक्षणकभावाभावोभयकोटिकसंशयस्य कविप्रौढोक्तिसिद्धतया निःसन्देहः सन्देहालङ्कारः। तस्य च संशयपर्य्यवसिततया शुद्धत्वं, तथाच दर्पणः,—"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः। शुद्धो निश्चय-गर्भोऽसौ निश्चयान्त इति त्रिधा ॥" इति। केचित्तु अत्र प्रकृते स्पर्शे प्रशीतनादी-नामप्रकृतानां सम्भावना मन्यमानाः उत्प्रेक्षाऽलङ्कारमाहुस्तच्चिन्त्यम्। तथाच "निष्पीडितेन्दु—" इत्यादौ प्रकृतस्पर्शरूपविषयनिगरणेन ताद्दृशसेकादेरभेदप्रतिपत्ते-रतिशयोक्तिरित्यनयोरङ्गाङ्गिभावेन सङ्करः ]। वसन्ततिलकं वृत्तम् ॥ ११ ॥

पूर्व्वमुक्तरूपेण संशय्य सम्प्रति प्रकृतस्य सुचिरपरिचितस्पर्शरूपत्वमेव निश्चिनोति, स्पर्श इति।—पुरा पूर्वस्मिन् काले, सीतया सार्द्धमेकत्रावस्थानदशायामिति यावत्, नियतम् अभीक्ष्णं यथा स्यात् तथा परिचितः अभ्यस्तः, मनसः चेतसः, [ अत्र "सञ्जी-वनः" इति कृदन्तक्रियायाः कर्मणि "कर्त्तृकर्मणोः कृति" ( २।३।६५ पा० ) इति सूत्रेण षष्ठी ] सञ्जीवनः उत्साहप्रदः, विषादापनोदनेन परितोषणः इति यावत्, परिमोहनश्च आनन्दसम्भारात् मोहोत्पादकः, चित्तद्रुतिकारकः इत्यर्थः, [ परिमोहनः" इत्यत्र "ण्वे विभाषा अकखादावषान्त उपदेशे" ( ८। ४। १८। पा० ) इत्यनेन वैकल्पिकं णत्वम्। अत एव क्वचिद्दन्त्यान्तोऽपि पाठः दृश्यते ] एष सम्प्रत्यनुभूयमानः, स स्पर्शः, यः स्पर्शः सन्तापजां सीतावियोगजन्यां मूर्च्छां मोहं सपदि तत्क्षणात्, झटितीत्यर्थः, प्रतिहृत्य निवार्य्य, पुनः भूयः आनन्दनेन सुखोत्-पादनेन, जडतां सुखजां विह्वलतामित्यर्थः, आतनोति विस्तारयति, करोतीत्यर्थः। [ अत्र तच्छब्दसहकृतयच्छब्दस्य उत्तरार्द्धगतत्वेन अविमृष्टविधेयांशत्वरूपो दोषो बोध्यः। स च प्रथमपादस्य "स्पर्शः पुरा परिचितो नियतं सुकान्तः" इत्येवं पाठ-परिवर्त्तनेन समाधेयः, केवलयच्छब्दस्य उत्तरवाक्यगतत्वेऽपि दोषाभावात् "आत्मा

सीता। [ससाध्वसोत्कम्पमपसृत्य (ञ)।] एत्तिअं ज्जेव दाणिं मे बहुदरं। * (ट)

रामः। [उपविश्य।] न खलु वत्सलया सीतादेव्या अभ्युपपन्नोऽस्मि। (ठ)

* एतावदेव इदानीं मे बहुतरम्।

जानाति यत्पापं" इतिवत्; तथा च दर्पणः,—"यच्छब्दस्य उत्तरवाक्यगतत्वेन उपादाने सामर्थ्यात् पूर्व्ववाक्ये तच्छब्दस्यार्थत्वम्" इति। अथवा परार्द्धं प्रथम पठित्वाऽसौ निर्व्वाधं समाधेयः। अत्र परार्द्धे "मूर्च्छां प्रतिहत्य जडतां तनोति" इत्येवं विरुद्धार्थाभिधानात् विरोधालङ्कारः, तथा च "विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः" इति काव्यप्रकाशः। स च विरोधः जडताशब्दस्य आनन्दविह्वलतारूपार्थसम्पादनेन परिहरणीयः। तथाऽत्र निश्चयालङ्कारमपि केचिदाहुस्तन्न समीचीनं प्रतिभाति, तथाहि—"अन्यन्निषिध्यप्रकृतस्थापनं निश्चयः पुनः" इति लक्षणे निश्चयात्सन्देहादस्य भेदकथनावसरे संशयनिश्चययोरेकाधिकरणावस्थानानवस्थानाभ्यां निश्चयात्सन्देहनिश्चययोर्भेदस्य दर्शितत्वात्, प्रकृते च एकाधिकरणकसंशयनिर्णयदर्शनान्न तावन्मतेऽपि निश्चयालङ्कारसम्भवः इति सुधीभिर्विभाव्यम्]। वसन्ततिलकं वृत्तम्॥ १२॥

(ञ) ससाध्वसोत्कम्पमिति।—साध्वसेन अननुमतसन्निधानवशात् भयेन यः उत्कम्पः शरीरचाञ्चल्यं तेन सहितं यथा स्यात् तथेत्यर्थः। [ससाध्वसकरुणमिति पाठे—भयशोकसहितम्]।

(ट) एतावदिति।—एतावदेव—मदीयस्पर्शस्य निरतिशयानन्दहेतुत्वज्ञानपर्य्यन्तमेव। इदानीं—वियोगसमये। बहुतरं—सातिशयशान्तिजनकमिति यावत्; लोकापवादाच्चिराय निर्व्वासितायाः मम पुनरार्य्यपुत्रसङ्गप्रसङ्गादिसुखसम्भावनायाः मूलतः समुत्पाटिततया सम्प्रति मत्स्पर्शजसुखानुभूतिस्वीकार एव पर्य्याप्तत्वेन मन्यते इति भावः।

(ठ) न खल्विति।—खल्विति—प्रश्ने निश्चये वा, ("खलु स्याद् वाक्यभूषायां जिज्ञासायाञ्च सान्त्वने" इति मेदिनी)। वत्सलया—स्नेहशीलया, मया निर्द्दयं निर्व्वासिताऽपि ममेदृशीं दशामवलोक्य स्नेहादिदानीमपि सन्निहितेति भावः। अभ्युपपन्नः,—प्राप्तः, अनुगृहीतः इत्यर्थः; मदीयदोषं सहमानया तया स्नेहादहं नानुगृहीतश्चेत् तदा कथमतादृगनन्यसाधारणसुखस्पर्शसम्भव इति भावः। सीता-

सीता। हद्धी! हद्धी!! किं त्ति मं अज्जउत्तो मग्गिस्सदि। * (ड)

राम:। भवतु, पश्यामि। [इति समन्तादवलोकयति।] (ढ)

सीता। भअवदि तमसे! ओसरह्म, जइ दाव मं पेक्खिस्सदि, तदो अणब्भणुण्णादसण्णिधाणेण अहिअं पि मम महाराओ कुप्पिस्सदि। † (ण)

* हा धिक्! हा धिक्! किमिति मामार्य्यपुत्रो मार्गिष्यति।

† भगवति तमसे! अपसराम:, यदि तावन्मां प्रेक्षिष्यते, तदा अनभ्यनुज्ञातसन्निधानेन अधिकमपि मह्यं महाराज: कोपिष्यति।

समागमस्येदानीमसम्भाव्यमानतया अनुभूतस्पर्शस्यानन्यसाधारणतया च रघुपतेरियं विस्मयविकल्पिता पृच्छेति बोध्यम्। [एतदिष्टजनाभिसन्धानरूपमधिबलं नाम सन्ध्यङ्गमुक्तं, तथा च—"यदिष्टजनसन्धान बुधा अधिबलं विदु:" इति]।

(ड) हा धिगिति।—हा इति शोके, ("हा विषादशुगर्त्तिषु" इत्यमर:) धिगिति आत्मभर्त्सनायां, ("धिक् भर्त्सने च निन्दायां") तथाच—यस्याहं सततसहचारिणी प्रणयिनी आसं स एवेदानीं मम मन्दभागिन्या अन्वेषणार्थं यतिष्यमाणो दृश्यते इति महद्दु:खमापतितमिति भाव:। मार्गिष्यति—अन्वेषिष्यति। रामस्य तदानीन्तनीं चेष्टामवलोक्य सीता तत्कर्तृकभविष्यदन्वेषणं सम्भावितवतीति बोध्यम्।

(ढ) भवत्विति।—अस्या अभ्युपपत्तेर्हेतुभूता सीता अन्या वा भवत्वित्यर्थ:। पश्यामि—इतस्ततोऽन्वेषणेन तत्त्वतो निरूपयामीत्यर्थ:।

(ण) भगवतीति।—अपसराम:,—इतोऽपसृत्य अन्यत्र याम: इत्यर्थ:, [अत्र सीतातमसयोर्द्वित्वेऽपि "अस्मदो द्वयोश्च" (१।२।५९) इति सूत्रेण बहुवचनप्रयोग:। "अपसराव:" इत्यपि पाठ: क्वचित् पुस्तके दृश्यते]। अनभ्यनुज्ञातेत्यादि।—न अभ्यनुज्ञातं अनुमोदितमिति अनभ्यनुज्ञातं, इदानीं मत्समीपवर्त्तिनी सती मां परिचरत्वेवं नानुमतमिति यावत, यत् सन्निधानं समीपावस्थानं, तेन हेतुना इत्यर्थ:। अधिकं—अतिशयं, "लोकसमक्षं पतिसान्निध्यमेव प्रगल्भतासूचकतया पत्युरुद्वेगकरं, किमुत लोकापवादाच्चिरन्निर्व्वासिताया: समवज्ञाताया: पुनरननुमोदिताया मम सान्निध्यमिति" अयमत्राधिकपदस्य तात्पर्य्यार्थ:।

तमसा। अयि वत्से! भागीरथीवरप्रभावाद् वनदेवतानामपि अदृश्या संवृत्तासि। (त)

सीता। आं, अत्थि एदं। * (थ)

रामः। हा प्रिये जानकि! ननु प्रिये जानकि!!

सीता। [समन्युगद्गदम्।] अज्जउत्त! असरिसं क्खु एदं वअणं इमस्स वुत्तन्तस्स। [सास्रम्।] अहवा किं त्ति वज्जमई जम्मन्तरेसु वि पुणो असम्भाविददुल्लहदंसणं मं ज्जेव मन्दभाइणीं उद्दिसिअ वच्छलस्स एवंवादिणो अज्जउत्तस्स उवरि णिरणुक्कोसा भविस्सं। अहं एदस्स हिअअं आणामि मम वि एसो त्ति। † (द)

---

* आं, अस्ति एतत्।

† आर्य्यपुत्र! असदृशं खलु एतद्वचनमस्य वृत्तान्तस्य। अथवा किमिति वज्रमयीं जन्मान्तरेषु अपि पुनरसम्भावितदुर्लभदर्शनां मामेव मन्दभागिनीमुद्दिश्य वत्सलस्य एववादिन आर्य्यपुत्रस्य उपरि निरनुक्रोशा भविष्यामि। अहमेतस्य हृदयं जानामि ममापि एष इति।

---

मह्य—सीतायै, [अत्र "क्रुधद्रुहेर्ष्यासूयार्थानां यम्प्रति कोपः" (१।४।३७।पा०) इत्यनेन चतुर्थी]। महाराजः,—अयोध्यानाथः रामचन्द्रः, [पूर्व्वं हि मयि सातिशयमनुरक्तस्यार्य्यपुत्रस्य क्षमा मयि सापराधायामपि सम्भावनीयासीत्, सम्प्रति तु राजधर्म्मैकनिष्ठादार्य्यपुत्रात् क्षमाधिगमाशा सुदूरपराहतेति अत्र "महाराज"-पदप्रयोगाशयो बोध्यः]।

(त) अयीति।—अयीति कोमलसम्बोधने अव्ययम्। भागीरथीवरप्रभावात्—जाह्नवीदत्तवरमाहात्म्यात्। वनदेवतानामपि—अरण्याधिष्ठातृदेवीनामपि, दैवीदर्शनशक्तिरपि यदालोकने व्याहता, का कथा तव मानुषस्य रामस्येति अनावश्यकमितोऽपसरणमिति भावः।

(थ) आमिति।—पूर्व्ववृत्तान्तस्मरणसूचकमिदमव्ययम्। अस्ति—इदमपि स्वीकारबोधकमव्ययम्। एतत्—जाह्नवीवरमाहात्म्याद् वनदेवतानामपि अदृश्यत्वरूपं वस्त्वित्यर्थः; त्वया यदुच्यते तद्विस्मृतनपौदानीं प्रत्यभिजानामीति समुदितार्थः। [अत्र "अस्ति खल्वेतत्" इत्यपि क्वचित् पाठः]।

(द) समन्युगद्गदमिति।—मन्युः प्रणयसम्भूतः कोपः, गद्गदः शोकाति-

रामः। [ सर्वतो विलोक्य सनिर्वेदम्। ] हा! न काचित् अत्र! (घ)

रैकेण वाष्पावरुद्धकण्ठतया वैस्वर्य्येण अस्पष्टोच्चारणं, ताभ्यां सहितं यथा स्यात् तथा, आहेति शेषः। (—"मन्युः पुमान् क्रुधि। दैन्ये शोके च यज्ञे च" इति मेदिनी, "मदसम्मदपीड़ाद्यैर्वैस्वर्य्यं गद्गदं विदुः" इति दर्पणः)। आर्य्यपुत्रेति।—आर्य्यपुत्र!—स्वामिन्। एतद्वचनं—"हा प्रिये जानकि!" इति सस्नेहसम्भाषणम्। अस्य वृत्तान्तस्य—अनल्प परीक्षितविशुद्धभावाया अपि पौरजनापवादात् निर्दय-निर्वासनरूपव्यापारस्य। असदृशम्—अयोग्यम्; पौरजनापवादान्निर्व्वासितां प्रति कठोरमामन्त्रणमेवोचितं, न तु "प्रिये" इत्यनुरागातिरेकसूचकमिति भावः। सुचिरं रक्षोगृहवासेऽपि लोकतोऽपि नाविश्वस्तोऽयमार्य्यपुत्त्रो मयि निरतिशयमनु-रक्तोऽपि केवलं राजधर्म्म इति प्रजानुरञ्जनार्थं कथमपि मां विवासितवानिति समुपयुज्यते नायमनुयोगः इति पश्चान्तरमाह, अथवेति।—अथवा—पक्षान्तरे। वज्रमयी—वज्रनिर्मिता, वज्रसदृशकठिनामित्यर्थः, अन्यथा कथं निर्वासनानन्तर-मपि न मृतास्मीति भावः। जन्मान्तरेष्वपि—परजन्मस्वपि। पुनरसम्भावितेति।—पुन-रसम्भावितम् अनाशंसितं दुर्लभं दर्शनं रामदर्शनं यस्याः तां तथोक्तां; अस्मिंस्तु जन्मनि चिराय निर्व्वासिताया अपि भागीरथीवरप्रभावाद अदृश्यतया भाग्यात् सान्निध्येऽपि अदर्शनं जातमिति जन्मान्तरे तत्सम्भावनं सुतरामसम्भवीति भावः। मन्दभागिनीं—पतिविवासिततया सौभाग्यविरहिताम्। मामेव—सीतामेव, न त्वन्यामित्यर्थः, जानकीति नामतः आमन्त्रणादिति भावः। उद्दिश्य—लक्ष्यीकृत्य। वत्सलस्य—स्नेहवतः। एववादिनः,—"प्रिये जानकि!" इत्यादिवचनेन शोकं कुर्व्वत इत्यर्थः। निरनुक्रोशा—निर्दया, कठोरेति यावत्; न मयैवमिदानीं वक्तव्यमिति भावः। ("कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽप्यथो हसः" इत्यमरः) [ अत्र "अनुक्रोश"-शब्देन "महियोगातिदूनस्यार्य्यपुत्रस्य ईदृशीमतिदुःसहामवस्थामवलोक्य मया मुक्तकण्ठं रोदितव्यं तत् किमहमेवं कठोरा भवामि" इति व्यज्यते, अनुक्रोशपर्य्याय कथनावसरे अनुक्रोश शब्दस्य "अनुक्रोशति मुक्तकण्ठं रोदित्यनेन इति अनुक्रोशः" इत्यमरव्याख्यादर्शनात्। "अथवा किमिति वज्रमयी जन्मान्तरेष्वपि पुनरसम्भावित-दुर्लभदर्शनस्य" इत्यपि पाठः क्वचित् दृश्यते, तदर्थस्तु—वज्रमयी—निरतिशय-कठिनहृदयाऽपि अहं, "निरनुक्रोशा भविष्यामि" इति परेण अन्वयः। असम्भावित-दुर्लभदर्शनस्येति—"आर्य्यपुत्रस्य" इत्यस्य विशेषणं, अस्यार्थस्तु स्पष्ट एव ]।

(घ) सर्वत इति।—सर्वतः,—सर्वासु दिक्षु। सनिर्वेदं—निर्वेदः

सीता। भअवदि तमसे ! तहा णिक्कारणपरिच्चाइणो वि एदस्स एदिणा एव्वंविधेण दंसणेण कीदिसो मे हिअआणुबन्धो त्ति ण आणामि ण आणामि। * (न)

तमसा। जानामि वत्से ! जानामि।—

तटस्थं नैराश्यादपि च कलुषं विप्रियवशात्
वियोगे दीर्घेऽस्मिन् झटिति घटनोत्तम्भितमिव।

* भगवति तमसे! तथा निष्कारणपरित्यागिनोऽप्येतस्य एतेन एवंविधेन दर्शनेन कीदृशो मे हृदयानुबन्ध इति न जानामि न जानामि।

स्वावमानना, तेन सह वर्त्तमानं यथा स्यात् तथा, आहेति शेष: ;—निर्वेद: नैराश्यं तेन सहितमिति वा तदर्थ:। (तत्त्वज्ञानापदीर्ष्यादेर्निर्वेद: स्वावमानना" इति दर्पण:) सीतामुद्दिश्य तथा विलप्य परितोऽन्विष्य च अनधिगततया इयमात्मावस्था रामस्येति बोध्यम्। न काचिदिति—यतोऽत्र कोऽपि जनो नास्ति, सुतरां कुत: सीतासत्तासम्भव इति तात्पर्य्यार्थ:।

(न) भगवतीति।—तथा—अग्निपरीक्षया मदीयविशुद्धताज्ञाने सत्यपीत्यर्थ:। निष्कारणपरित्यागिनोऽपि—न्याय्यं किञ्चिन्निर्वासनहेतुमन्तरेणैव मां निर्वासितवतोऽपि। एतस्य—आर्य्यपुत्रस्य। एतेन—परिदृश्यमानेन। एवविधेन—मद्वियोगकातरता-व्यञ्जकेनेत्यर्थ:। हृदयानुबन्ध:,—हृदयस्य मनस: अनुबन्ध: अवस्थाविशेष:, मनो-वृत्तिरिति यावत। न जानामि—निश्चयेन अवगन्तमहं्नाभीत्यर्थ:, (न जानामि न जानामीति द्विर्वचनं दीनतातिरेकसूचकं, दैन्ये द्विरुक्तिस्तु न दोषाय इति बोध्यम् ; ममान्तर्य्यामितया अनलपरीक्षया च विदित्वाप्यतिविशुद्धभावं मे चरित्रस्य, केवलं प्रजानुरञ्जनार्थं चिराय मे निर्जनारण्यवासो व्यवस्थापित इति सत्यपि प्रभूततरे विरागहेतौ सम्प्रत्येवमिमं मामकशोककातरमवलोक्यातिदूनास्मि संहृत्तेति भाव:।

दु:सहविरहकातरं प्रियतममवलोक्यातिदूनाया अप्यनिर्व्वचनीयमनोभावं वचसा विवरीतुमक्षमाया जनकतनयाया: तदानीन्तनीमवस्थां तत्त्वत: पर्य्यालोच्य सम्प्रति तामेव विवृण्वन्नाह, तटस्थमिति।—तव हृदयं मन:, नैराश्यात् पुन: समागमसम्भावनाविरहात्, तटस्थमुदासीनम्, [एतेन "साम्येव चिरपरिचिताश्च-अराणि पञ्चवटीदर्शनेन मां मन्दभागिनीम् अनुबध्नन्ति" इति वाक्येनाभिमता सीता-ऽवस्था प्रतिपादिता]; अपि च किञ्च, विप्रियवशात् निष्कारणनिर्वासनरूपाप्रिय-

प्रसन्नं सौजन्यादपि तु करुणैर्गाढ़करुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षण इव ॥ १३ ॥

रामः। देवि!—

प्रसाद इव मूर्त्तस्ते स्पर्शः स्नेहार्द्रशीतलः।
अद्याप्यानन्दयति मां त्वं पुनः क्वासि नन्दिनि! ॥ १४ ॥

---

कार्य्यवशात् कलुषं मलिनं कोपाकुलम् इति यावत्, [ अनेन "असदृशं खल्वेतद्वचनम् अस्य वृत्तान्तस्य" इत्यनेनाभिमता सीताऽवस्था प्रतिपादिता ] दीर्घे दीर्घकालव्यापिनि, अस्मिन् वियोगे विरहे, झटिति अकस्मात्, घटनया मिलनेन असम्भावितसन्दर्शनेन इति यावत्, उत्तम्भितमिव स्तब्धप्रायं, सातिशयविस्मयवशात् किं कर्त्तव्यविमूढमिवेति यावत्, [ अत्र "उदः स्थास्तम्भोः पूर्व्वस्य" (८।४।६१ पा०) इत्यनेन स्तम्भे मकारलोपः। अत्र "झटितिघटनात् स्तम्भितमिव" इत्यपि क्वचित् पाठः। झटितिघटनात् आकस्मिक सङ्घटनात्, स्तम्भितमिव विस्मयस्तिमितमिव इति तदर्थः। [ एतेन "प्रभातचन्द्रमण्डलापाण्डुरेत्यादिना विवक्षितावस्था प्रतिपादिता ]; सौजन्यात सुजनताज्ञापनात्, स्नेहानुरागव्यञ्जकवाक्यादिना रामस्य निर्दोषत्वावगमादित्यर्थः, प्रसन्नं प्रीतम, [ अनेन "अथवा किमिति वज्रमयीं जन्मान्तरेष्वपि पुनरसम्भावितदुर्लभदर्शनाम्" इत्यादिनाऽभिहितावस्था दर्शिता ] अपि तु तथा, करुणैः शोकव्यञ्जकैः रामस्य वाक्चेष्टितादिभिः, गाढ़ः घनीभूतः करुणः शोको यस्य यस्मिन् वा तत तथोक्तम्, अत एव अस्मिन् क्षणे अधुना, प्रेम्णा दयितं प्रतिप्रीत्या, द्रवीभतमिव द्रवत्वमापन्नमिव, अवशमिवेत्यर्थः, जातमिति शेषः; निष्कारणनिर्वासनादप्रसन्नमपि ते हृदयं सम्प्रति त्वन्नामग्रहणपुरःसरमस्य सकरुणपरिदेवनमाकर्ण्य पुनः प्रसन्नं सद्विगलितमिवेति भावः। [ अत्र प्रथमपादे एकस्मिन्नेव हृदयधर्म्मिणि औदासीन्य-कालुष्यरूपविरुद्धपदार्थद्वयसमावेशाद्विरोधालङ्कारः, स च कालविशेषमन्तर्भाव्य समाधातुं शक्यते; तथा द्वितीये चतुर्थे च पादे क्रियोत्प्रेक्षाद्वयं, तच्च भावाभिमानि, इवशब्दोत्थापिततया च वाच्यमिति सुधीभिर्विभाव्यम् ]। शिखरिणी वृत्तं, तल्लक्षणं यथा—"रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति ॥ १३ ॥

पूर्व्वं नियतमनुभततयाऽतिचिरपरिचितोऽयं जानकीकरस्पर्शो यदि च वैजात्यवशेन सीतास्तित्वमिह प्रमापयति, तदपि परितोऽन्विष्य तामलभमानो रामचन्द्रो विलपति,प्रसाद इति।—स्नेहेन स्नेहरसेन आर्द्रः सिक्तः अत एव शीतलः सन्तापहारक

सीता। एदे दे अगाधदंसिदसिणेहसंभारा आणन्दणिस्सन्दिणो सुदा मए अज्जउत्तस्स उल्लावा, जाणं पच्चएण णिक्कारणपरिच्चाअसल्लिदो वि बहुमदो मे जम्मलाहो। * (प)

* एते ते अगाधदर्शितस्नेहसम्भारा आनन्दनिष्यन्दिनः श्रुता मया आर्य्यपुत्रस्य उल्लापाः, येषां प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मे जन्मलाभः।

इत्यर्थः, ते स्पर्शः मूर्त्तः मूर्त्तिमान् प्रसाद इव अनुग्रह इव, साकारा प्रसन्नता इवेत्यर्थः, ("मम मैत्र्य्यऽपि अभयस्ते प्रणयः" इति आदरातिशयात् प्रणयेऽपि प्रसादत्वोपचारः)। अद्यापि निर्वासनादिनिर्दयव्यवहारानन्तरमपि, यद्वा—अद्यापि स्वर्शाभावक्षणेऽपि, का कथा स्पर्शक्षणे ? इति भावः ; माम् आनन्दयति सुखयति। [ नन्दयति या सा नन्दिनी, ग्रहादित्वात् णिनिः ] हे नन्दिनि ! आनन्ददायिनि ! त्वं पुनः क्व कुत्र असि भवसि ? न दृश्यसे इति यावत्। [ अत्र प्रथमपादे प्रकृते स्पर्शऽप्रकृतस्य मूर्त्तिमत्प्रसादस्य सम्भावनात् भावाभिमानिनी वाच्योत्प्रेक्षानामालङ्कारः ; तथा कारणीभूतायां सीतायामदृष्टायामपि कार्य्यस्वरूपस्य तदीयस्पर्शस्य ख्यापनात् विभावनाऽपीति केचित्। तल्लक्षणं यथा—"विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते" इति ]। अनुष्टुब् वृत्तम् ॥ १४ ॥

( प ) सति अदृश्यमानायामपि सुचिरोपभोगसम्भूतसंस्कारवशात् करस्पर्शमिमं मदीयमिति निश्चित्य मन्नामोल्लेखपूर्व्वं बहुविलपन्तमार्य्यपुत्रं परितो मामन्विष्यतीत्यालोचयन्त्याऽनया जनकतनया निष्कारणनिर्वासिताऽप्यात्मप्रसादमधिकतरमुपलभमाना दुःखाकरमपि जीवनं सार्थकं मन्यमाना आह, एत इति।—एते—श्रूयमाणाः। ते—पूर्व्वपरिचिताः। अगाधेत्यादि।—अगाधमधिकं यथा स्यात् तथा दर्शितः स्नेहसम्भारः प्रणयातिशय्यं येषु ते तथोक्ताः प्रकटितामितप्रणयातिरेका इति यावत्। आनन्दनिष्यन्दिनः,—परमानन्दजनकाः। उल्लापाः,—उच्चैर्विलापाः। येषाम्—उल्लापानाम्। प्रत्ययेन—श्रावणेन अनुभवेन। निष्कारणेत्यादि।—निष्कारणम् अहेतुकं यः परित्यागो निर्वासनं स एव शल्यं शङ्कुः तज्जातमस्य इति स तथोक्तः, [ अत्र रूपकमलङ्कारः ] अकारणनिर्वासनजनितकलङ्कपङ्किलतया निखातकीलक इव दुःसहक्लेशबहुल इत्यर्थः। [ शल्यित इत्यत्र "तदस्य सञ्जातं तारकादिभ्य इतच्" ( ५।२।३६पा० ) इति इतच्प्रत्ययः ]। बहुमतः—श्लाघ्यः ; सम्प्रति सकरुणमेवं विलपन्तमार्य्यपुत्रमवलोकयन्त्यकारणपरित्यागिनोऽपि तस्य निर्दोषतामवगत्य जीवनं बहुमन्ये इति भावः।

रामः। अथवा कुतः पुनः प्रियतमा, नूनं सङ्कल्पाभ्यास-पाटवोपादान एष रामस्य भ्रमः। (फ)

[नेपथ्ये। प्रमादः प्रमादः। 'सीतादेव्याः स्वकरकलितैः' इत्यर्द्धं पठ्यते]।

रामः। [सकरुणौत्सुक्यम्।] किं तस्य ?—

[पुनर्नेपथ्ये। "वध्वा सार्द्धम्" इत्युत्तरार्द्धं पठ्यते]।

सीता। को दाणीं अहिउज्जिस्सदि ? * (ब)

---

* क इदानीमभियोक्ष्यते ?

---

(फ) हिंस्रश्वापदसङ्कुलेऽतिभीषणे वने निर्वासितायाः सीतायाः एतावता कालेन मरणस्यैवावश्यम्भावितया तस्याः कुतः पुनरिह समागमसम्भव इति समुपजातविवेको जानकीजीवनः पुनराह, अथवेति।—कुतः,—कस्मात्कारणात्। पुनः,—भूयः, सुचिरवनवासेन तस्याः मरणस्यैव अवश्यम्भावादिति भावः। प्रियतमा—प्रेमपात्री सीता, सम्भवेदिति शेषः। तत्समागमासम्भवे कथं तर्हि तत्पाणिस्पर्शोऽनुभूतः ? इत्याह—नूनमिति। सङ्कल्पेत्यादि।—सङ्कल्पानां "सीता मामाह्वयति, मयि सानुरागा प्रियं वक्ति" इत्यादिरूपमानसव्यापाराणां ("सङ्कल्पः कर्म्ममानसम्" इत्यमरः) अभ्यासेन पौनःपुन्येन यत् पाटवं नैपुण्यं तदेव उपादानम् उत्पत्तिकारणं यस्य सः तथोक्तः। एषः,—अस्य स्पर्शस्य सीतासम्बन्धित्वेन अनुभवः। भ्रमः,—भ्रान्तिः; यथा जाग्रदवस्थायां नियतमनुभूयमानोऽर्थः सुप्तिदशायामुत्स्वप्नायमानस्याविकलमेव पुनरनुभूयमानत्वेन स्फुरति, तथा सङ्गतावस्थायां जानकीकृततत्तद्व्यवहाराणामिदानीमाभीक्ष्ण्येन सङ्कल्पनादतदीयेऽपि अस्मिन् स्पर्शे मम तदीयत्वभ्रमः समुत्पन्न इति भावः। [अत्र रामस्य स्वोक्तावपि "रामस्य" इति नामतः कथनात् सर्व्वज्ञत्वादिसकलगुणगणनिलयोऽप्यहं सम्प्रति सुदुःसहविरहतापात् प्राकृत इव भ्रमान्धो जात इति वस्तु व्यज्यते]।

(ब) क इति।—इदानीं—ईदृङ्निःसहायदशायामित्यर्थः। अभियोक्ष्यते—मया पुत्रत्वेन पोषितस्य करिकलभकस्य साहाय्यार्थं कस्तं करिराजं अभियास्यतीत्यर्थः; इदानीमसहाया अवामीति बलवता पीड्यमानं तं परिरक्षितुमसमर्थास्मीति मे महद्दुःखमिति भावः।

रामः। क्वासौ क्वासौ दुरात्मा यः प्रियायाः पुत्रकं वधू-द्वितीयमभिभवति ? [इति उत्तिष्ठति]। (भ)

वासन्ती। [प्रविश्य सम्भ्रान्ता]। कथं देवो रघुनन्दनः !! (म)

सीता। कहं पिअसही मे वासंदी !! *

वासन्ती। जयति जयति देवः।

रामः। [निरूप्य]। कथं देव्याः प्रियसखी वासन्ती !!

वासन्ती। देव ! त्वर्य्यतां त्वर्य्यताम् !!—इतो जटायुगिरि-शिखरस्य दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य्य सम्भावयतु (य) देव्याः पुत्रकं देवः।

* कथं प्रियसखी मे वासन्ती !!

(भ) क्वेति।—असौ—प्रियापुत्रकाभिभावकः। दुरात्मा—दुष्टस्वभावः, ("आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इत्यमरः)। क्व—कुत्र, वर्त्तते इति शेषः। [अत्र "क्वासौ क्वासौ" इति द्विरुक्तिः,—"विवादे विस्मये हर्षे खेदे दैन्यावधारणे। प्रसादने सम्भ्रमे च द्विस्त्रिरुक्तिर्न दुष्यति॥" इति नियमान्न दोषाय]। प्रियायाः,—मम प्रणयिन्याः जनकनन्दिन्याः। पुत्रकं—कृत्रिमं पुत्रम्। [अत्र "इवे प्रतिकृतौ" (५।३।९६ पा०) इति कन् प्रत्ययः। एतेन तस्मिन् स्नेहातिशय्येनावश्यरक्षणीयत्वं सूचितम्]। वधूद्वितीयं—वधूर्जाया द्वितीया सहचरी यस्य स तथोक्तं, प्रियया करेणुकया समं विहरन्तमिति यावत्। अभिभवति—आक्रम्य पराजयते; नूनमिदानीमेव अहं यथोचितप्रतिविधानेन तं शिक्षयामीति भावः। उत्तिष्ठति—एतस्य प्रतिविधानाय सत्वरम् आसनादुद्गच्छतीत्यर्थः। ["उदोऽनूर्द्ध्वकर्म्मणि" (१।३।२४ पा०) इत्यनेन उत्पूर्वकतिष्ठतेरनूर्द्ध्वचेष्टायामेव आत्मनेपदविधानात्, अत्र च ऊर्द्ध्वगमनार्थकत्वान्नात्मनेपदमिति बोध्यम्]।

(म) सम्भ्रान्तेति।—बलवतो द्विरदपतेराक्रमणात् प्रियसहचर्य्याः सीतायाः पुत्रकं रक्षयितुं कस्यचिद्रक्षकस्यान्वेषणाय अतिशयव्यग्रचित्ता इति यावत्। [कथमिति विस्मयबोधकमव्ययम्]; तथाच साम्प्रतमीदृगापद्दशायां निःसंशयं विपत्-प्रतीकारक्षमः कथमप्यसम्भावितदर्शनो रघुनन्दन एव दृश्यते इति महान् विस्मयहेतु-रिति तात्पर्य्यार्थः।

(य) देवेति।—त्वर्य्यतां—त्वरया गम्यतामित्यर्थः, [अत्रापि सम्भ्रमे

सीता। हा ताद जटाउ! सुण्णं तुए विणा जणट्ठाणं!! * (र)

रामः। अहह! हृदयमर्म्मच्छिदः खलु अमी कथोद्घाताः!! (ल)

* हा तात जटायो! शून्यं त्वया विना जनस्थानम्!!

द्विर्वचनम्] अन्यथा कालातिपाते विपदापातसम्भव इति भावः। तत्रैव मया क्व गन्तव्यं किं वा कर्त्तव्यमित्याकाङ्क्षायामाह, इत इति।—अस्मात् स्थानात्। जटायुगिरिशिखरस्य—जटायुना तन्नामकेन गृध्रराजेन अध्युषितो गिरिरिति जटायुगिरिः, [शाकपार्थिवादित्वात् उत्तरपदलोपी समासः] तस्य शिखरं शृङ्गं तस्य (जटायुना अध्युषितत्वात् पर्वतस्यास्य "जटायुगिरिः" इति संज्ञा बोध्या) ["एनपा द्वितीया" (२।३।३१ पा०) अत्र एनपेति योगविभागात् षष्ठी]। दक्षिणेन—दक्षिणस्यां दिशि इत्यर्थः, स्थितेन इति शेषः। सीतातीर्थेन—सीतायास्तीर्थं जलावतारः घट्टप्रदेशः तेन, सीता येन घट्टेन प्रत्यहं गोदावरीमवतरति स्म तेन घट्टेन इत्यर्थः। ("तीर्थं योनौ जलावतारे च" इति विश्वः)। गोदावरीं—तन्नाम्नीं नदीम्। अवतीर्य—अवरुह्य, प्रविश्येत्यर्थः। सम्भावयतु—रक्षतु, बलवतः आक्रमणात् परित्राणेन अनुगृह्णातु इत्यर्थः। देव्याः,—जनकनन्दिन्याः। पुत्रकं—कृतकतनयं, करिकलभकमिति यावत्। देवः,—भवान्। [अत्र "जटायुगिरिशिखरस्य दक्षिणेन" इत्यत्र—"जटायुगिरिशिखरस्य कच्छदक्षिणेन" इति "जटायुशिखरिदक्षिणेन" इति च पाठान्तरद्वयं वर्त्तते। आद्ये,—जटायुगिरिशिखरस्य—जटायुपर्वतशृङ्गस्य, कच्छदक्षिणेन—दक्षिणकच्छदेशस्थितेन इत्यर्थः। अन्तिमे तु सुस्पष्ट एवार्थः]।

(र) वासन्तीवाक्ये जटायुगिरिशब्दश्रवणात् समुद्बोधितपूर्व्वस्मृतिः सीता विलपन्ती आह, हा तातेति।—तात—मान्य! श्वशुरसुहृत्त्वेन जटायुषः तातेति सम्बोधनम्। शून्यं—शून्यवत् प्रतीयमानम्, अनाथमिति यावत्।

(ल) हृदयेत्यादि।—हृदयस्य अन्तःकरणस्य मर्म्माणि जीवनस्थानानि छिन्दन्ति ये ते तथोक्ताः, तत्तत्पूर्व्वचरितस्मारकतया नितान्तहृदयविदारका इति यावत्। कथोद्घाताः,—कथानां पूर्व्ववृत्तान्तघटितानां जटायुगिरि-गोदावरी सीता-तीर्थप्रभृतीनां वचनानाम् उद्घाता आरम्भाः, उच्चारणानि इति यावत्, ("स्यादभ्यादान-

वासन्ती। इत इतो देवः।

सीता। भअवदि! सच्चं एव्व वणदेवदा वि मं ण पेक्खदि? * (व)

तमसा। अयि वत्से! सर्वदेवताभ्यः प्रकृष्टमैश्वर्यं भागीरथीदेव्याः, तत् किमाशङ्कसे? (श)

---

* भगवति! सत्यमेव वनदेवताऽपि मां न प्रेक्षते?

---

सुह्रात आरम्भः" इत्यमरः)। विपन्नां सीतामुद्दिश्य जटायुषः प्राणपातः तथा सीताहरणम् एवमादयः पूर्व्ववृत्तान्ताः सम्प्रति त्वदीयवाक्यसमुद्दीपिताः सन्तः मदीयं मर्म्म विदारयन्तीति भावः।

(व) पूर्वं रामदर्शनभीता सीता तमसया "भागीरथीवरप्रभावाद्वनदेवतानामप्यदृश्या भविष्यसि" इत्येवमाश्वासिता कार्य्यतश्च स्वस्य मर्त्त्यानामदृश्यतां परीक्षितवती, सम्प्रति तु दैवशक्तिसम्पन्नानां वासन्तीप्रभृतिवनदेवतानामपि अदृश्यतायां सन्दिग्धा पृच्छति, भगवतीति।—वनदेवता—वासन्तीप्रभृतिः वनाधिष्ठात्री देवी। सत्यमेव—यथार्थं किं, नो चेत् तदाऽऽक्रमेतयोरनुसरणं न युज्यते इति भावः।

(श) अयीति।—सर्व्वदेवताभ्यः,—सकलाभ्यो देवीभ्यः। [अत्र "पञ्चमी विभक्ते" (२।३।४२ पा०) इति सूत्रेण निर्द्धार्य्यमाणभेदे पञ्चमी]। प्रकृष्टं—प्राप्तप्रकर्षं, प्रबलमिति यावत्। ऐश्वर्य्यम्—अणिमाद्यष्टसिद्धिः, निखिलदेवताभ्यः प्रकृष्टशक्तिमत्याः भागीरथ्याः वरप्रभावेण तवादृश्यता जातेति साधारणदैवशक्तिमतीनां वासन्त्यादिवनदेवतानामदर्शनीयतायामसंशयं विजानीहि संशयमिति भावः। अणिमाद्यैश्वर्य्यं यथा,—

"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा।
ईशित्वञ्च वशित्वञ्च तथा कामावसायिता॥" इति।

अत्र "अणिमा—अणुभावः, यतः शिलामपि प्रविशति। लघिमा—लघुभावः, यतः सूर्य्यमरीचीनवलम्ब्य ऊर्ध्वलोकं याति। प्राप्तिः,—अङ्गुल्यग्रेण स्पृशति चन्द्रम्। प्राकाम्यम्—इच्छानभिघातः, यतो भूमावुन्मज्जति निमज्जति—यथोदके। महिमा—महतो भावः, यतो महान् भवति। ईशित्वं—यतः भूतभौतिकानां प्रभवस्थितिमीष्टे। वशित्वं—यतः भूतभौतिकं वशीभवत्यवश्यम्। यच्च कामावसायिता सा सत्यसङ्कल्पता, यथाऽस्य सङ्कल्पो भवति भूतेषु, तथैव भूतानि भवन्ति।" इति तत्त्वकौमुद्यां

सीता । तदो अणुसरह्म । * ( ष ) [ इति परिक्रामतः ] ।

रामः । [ परिक्रम्य ] । भगवति गोदावरि ! नमस्ते ।

वासन्ती । [ निरूप्य ] । देव ! देव ! मोदस्व विजयिना वधू-द्वितीयेन देव्याः पुत्रकेण । ( स )

रामः । विजयतामायुष्मान् ।

सीता । अह्महे ईदिसो एसो संवुत्तो !! † ( ह )

रामः । देवि ! दिष्ट्या वर्द्धसे । ( क )—

---

* ततोऽनुसरामः ।

† अहो ईदृश एष संवृत्तः !!

---

वाचस्पतिमिश्रलेखः । प्रकृते तु कामावसायित्वरूपैश्वर्य्यप्रभावेण सीताया अदृश्यत्वं सम्पादितमिति बोध्यम् ।

( ष ) ततइति ।—यतः सत्यमेवाहं वासन्त्या अप्यदर्शनीया संवृत्ताऽस्मि तत इत्यर्थः । अनुसरामः,—पश्चात् यामः, आर्य्यपुत्रवासन्त्योरिति शेषः । परिक्रामतः,—परिभ्राम्यतः, सीतातमसे इति शेषः ।

( स ) निरूप्येति ।—विशेषतोऽवलोक्य । [ "देव देव" इति हर्षे द्विरुक्तिः, "विवादे विस्मये हर्षे" इत्यादिनियमात् ] । मोदस्व—प्रहृष्य, मनो विनोदयेत्यर्थः । विजयिना—उन्मदद्विरदविजयकारिणा । यस्य परिभवमाशङ्कमानानामस्माकमेतावान् प्रयासः, सोऽयं कालेनातिबलः स्वयमेव दुर्द्दान्तद्विरदराजं विजित्य पयसि प्रियया समं विहरतीति पश्यन् प्रीणात्विति भावः ।

( ह ) अहो इति ।—[ अहो इत्याश्चर्य्यबोधकमव्ययम ] । एषः,—दृश्यमानः, मया पुत्रत्वेन परिपोषितः करिकलभक इति यावत् । ईदृशः,—उन्मदद्विरद-विजयसमर्थः प्रबलबलशाली । संवृत्तः,—जातः । इयताऽल्पकालेन मम कृतकतनयोऽसौ करिशावकः एवं बलीयान् जात इति महदाश्चर्य्यमिति भावः ।

( क ) देवीति ।—एतत्तु सीतामुद्दिश्य सम्बोधनम् । दिष्ट्या—भाग्येनेत्यर्थः, [ तृतीयान्तप्रतिरूपकमव्ययमिदम् ] । वर्द्धसे—हर्षिं गीताऽसि, भाग्येनैव तवायं कृतकतनयः आनन्दवर्द्धनो जात इति भावः ।

येनोद्भिद्यद्बिसकिसलयस्निग्धदन्ताङ्कुरेण
व्याकृष्टस्ते सुतनु! लवलीपल्लवः कर्णपूरात्।
सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता
यत् कल्याणं वयसि तरुणे भाजनं तस्य जातः॥ १५॥

सहसा सीतापुत्रकाभिभवभयकातरो रघुवरः कृतत्वरमन्तिकमुपेतस्तं स्वबलावलेपाद् दाक्षवारणराजविजयिनं विलोक्यातिप्रीतस्तदानीन्तनतद्वक्षोपवर्णनमुखेन सीतायाः सौभाग्यहेतुमुपदर्शयन्नाह, येनेति।—हे सुतनु सुन्दरि! [सु शोभना तनूर्यस्याः सा सुतनूः, तस्याः सम्बुद्धौ। "अम्बार्थनद्योर्ह्रस्वः" (७।३।१०७ पा०) इति ह्रस्वः]। ("स्त्रियां मूर्त्तिस्तनुस्तनूः" इत्यमरः)। उद्भिद्यत् उत्तिष्ठत्, नवोद्भिन्नमित्यर्थः, यत् बिसकिसलयं मृणालपल्लवं, मृणालाग्रमिति यावत्, तदिव स्निग्धः कोमलः दन्ताङ्कुरः अचिरोद्गतदन्तः यस्य तेन तथोक्तेन, येन करिशावकेनेत्यर्थः, ते तव, कर्णपूरात् कर्णाभरणात् लवलीपल्लवनिर्मितादित्यर्थः, [कर्णमूलादिति पाठे तु श्रवणमूलभागादित्यर्थः] लवलीपल्लवः लवली हर्फारेवः ("नोयाड़" इति वङ्गभाषा) तस्याः पल्लवः किसलयं, कर्णावतंसीकृत इति यावत्, व्याकृष्टः करेण आकृष्य गृहीतः। मदमुचां मदस्राविणां, मत्तानामित्यर्थः, वारणानां हस्तिनां, विजेता परिभावकः, सोऽयं तव पुत्रः पुत्रीकृतः स करिशावक इत्यर्थः, तरुणे वयसि यौवने, यत् कल्याणं मङ्गलम् अतिशयितबलशौर्य्यादिकं, तस्य भाजनं पात्रं, जातः। ["उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्य" इति काशिकाप्रमाणात् "जातः" इत्यत्र पुंस्त्वनिर्द्देशः, अस्यैव प्रधानक्रियारूपत्वादिति सुधीभिर्विभाव्यम्]। पूर्व्वमस्मदीयारण्यवासदशायां योऽयमतिशिशोरेवयास्त्वया तनयीकृतः करिशावकः स्निग्धकोमलकिसलयादानप्रदानेनाविरतं क्रीडितः, सम्प्रत्येतावताऽल्पीयसा कालेन तमिमं मत्तमातङ्गभङ्गक्षमं बलीयसामुत्तमं सर्वं प्रियतमया विहरन्तमालोक्य त्वदीयभाग्यबलमिव सम्भावयामीति भावः। [अत्र शेषवेऽपि तरुणवयःसमुचितकल्याणोत्पत्तिरूपचतुर्थपादार्थं प्रति मदमुग्वारणविजेतृत्वरूपतृतीयपादगतवाक्यार्थस्य हेतुविधयोपन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा "उद्भिद्यद्बिसकिसलय" इत्यादौ लुप्तोपमा चेत्यनयोरङ्गाङ्गिभावेन सङ्करः]। मन्दाक्रान्ता वृत्तम्॥ १५॥

सीता। अविउत्तो दाणीं अअं दीहाऊ इमाए सोम्मदंसणाए होदु। * (ख)

रामः। सखि वासन्ति! पश्य पश्य कान्तानुवृत्तिचातुर्य्यमपि शिक्षितं वत्सेन। (ग)—

लीलोत्खातमृणालकाण्ड-कवलच्छेदेषु सम्पादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसङ्क्रान्तयः।

* अवियुक्त इदानीमयं दीर्घायुरनया सौम्यदर्शनया भवतु।

(ख) स्वसुतहिताभिलाषिणी विजनवनवासिनी जनकराजनन्दिनी सुचिरमनुभवन्ती अतिदारुणां प्रियविरहवेदनां, स्वयमवलोकयन्ती चातिविषमां दशां जीवितनाथस्य, जगतीह विरहमेव दम्पत्योः सर्वतोऽधिकतया क्लेशदं मन्यमाना एतयोर्भाविविरहशङ्काऽऽतङ्किता सत्स्वप्यनेकविधेष्वाशीर्वचनेषु अनयोरन्योऽन्यमविच्छेदमेव चिराय कामयमाना आह, अवियुक्त इति।—मिलित इत्यर्थः। अयं—दृश्यमानः, प्रियया समं पयसि विहरन्नित्यर्थः। दीर्घायुः,—चिरजीवी, मम पुत्रक इति शेषः। अनया—पुरोवर्त्तिन्या। सौम्यदर्शनया—कमनीयाकृत्या, सुदर्शनया इति यावत्।

(ग) सखीति।—[ अत्र "पश्य पश्य" इति विस्मये द्विर्वचनम् ]। कान्तानुवृत्तिचातुर्य्यं—कान्तायाः प्रियायाः करेणुकाया अनुवृत्तौ चित्तानुरञ्जने चातुर्य्यं चतुरता, नैपुण्यमिति यावत्; न केवलं शिशुरयं शक्तिमत्तया तदर्थोचितमाचरति, अपि तु कान्तानुवर्त्तननिपुणतयाऽपीति भावः।

प्रियतमया करेणुकया समं सलिलविहारसुखमनुभवन्तमनुं करिशावकमालोक्य यदिदमुक्तं "कान्तानुवृत्तिचातुर्य्यम्" इत्यादि, सम्प्रति तदेव तत्कार्य्येण समर्थयन् सीतापतिराह, लीलोत्खातेति।—यत् यस्मात् इतोः, स्नेहात् अनुरागवशात्, प्रणयातिशय्यादित्यर्थः, लीलया क्रीड़या, अक्लेशेनेति यावत्, उत्खाता उत्पाटिता ये मृणालकाण्डाः मृणालखण्डाः, बिससमूहा इत्यर्थः, ("काण्डः स्कन्धे तरुस्कन्धे वाणेऽवसरनीरयोः" इति मेदिनी) तेषां ये कवलच्छेदा ग्रासार्थखण्डाः, करेणुकाया ग्रासाभ्यन्तरवर्त्तिनः मृणालखण्डा इति यावत्, तेषु [ इति अधिकरणे सप्तमी ] यद्वा,—लीलया उत्खाताः ये मृणालकाण्डाः त एव कवलाः ग्रासाः तेषां छेदेषु अवसानेषु सत्सु [ इति भावे सप्तमी ] ("ग्रासस्तु कवलः पुमान्" इत्यमरः) पुष्यद्भिः विकसद्भिः, पुष्करैः पद्मैः, ("बिसप्रसून-

सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्यत् स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥ १६ ॥

---

राजीवपुष्कराम्भोरुहाणि च" इत्यमरः) वासितस्य सुरभितस्य, पयसः जलस्य, गण्डूषाणां मुखपूरितानामित्यर्थः, ("गण्डूषो मुखपूर्त्तौ च पुष्करप्रसृतोन्मिते" इति मेदिनी) सन्ततयः धाराः, सम्पादिताः कृताः । करेणुकया कवलीकृतेषु आस्याभ्यन्तरवर्त्तिषु मृणालदलखण्डेषु स्ववदनपरिपूरितं सलिलं प्रणयातिरेकात् वेगेन परितो विक्षिप्तमिति समुदितार्थः ; ["पुष्पाग्रपुष्करवासितस्य" इत्यत्र "पुष्पत्पुष्कर-वासितस्य" इति पाठेऽपि स एवार्थः । तथा "सम्पादिताः" इत्यत्र "सम्पातिताः" इति पाठे—गण्डूषधाराः सम्पातिताः विक्षिप्ता इत्यर्थः ] तथा, शीकरिणा शीकराः जलकणाः सन्ति यस्मिन् तेन जलकणवर्षिणेति यावत्, ("शीकरोऽम्बुकणाः स्मृताः" इत्यमरः) करेण शुण्डेन, ("करो वर्षोपले रश्मौ पाणौ प्रत्ययशुण्डयोः" इति मेदिनी) कामं पर्य्याप्तं यथा तथा, ("कामं प्रकामं पर्य्याप्तं निकामेष्टं यथेप्सितम्" इत्यमरः) सेकः सेचनं, विहितः सम्पादितः ; सलिलकेलिरतायाः करेणुकायाः सन्तापोपशान्तये तस्याः सर्वशरीरेषु शुण्डादण्डेन सलिलकणो विक्षिप्त इत्यर्थः ; विरामे पुनः सलिलसेकावसाने तु, सेकानन्तरञ्चेत्यर्थः, अनरालम् अवक्रं, सरलमिति यावत्, ("अरालं कुटिलं वक्रम्" इत्यमरः) नालं मृणालं यस्य तादृशं यन्नलिनीपत्रं पद्मपत्रं तदेव आतपत्रम् आतपवारणं छत्रमित्यर्थः, [आतपात् त्रायते यत् तत् आतपत्रम् आतप + त्रै + कः] धृतं करिणा आतपनिवारणार्थं मस्तकोपरि विततमित्यर्थः । [अत्र स्वरूपतः करभदम्पत्योस्तदानीन्तनावस्थावर्णनात् स्वभावोक्तिरलङ्कारः, तथा नलिनीपत्रस्य आतपत्रस्वरूपतयोपवर्णनात् निरङ्गकेवलरूपकञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः । अत्र प्रियतमया करेणुकया समं करिशावकस्य तादृशसलिलविहारादिरूप-सम्भोगविशेषोपवर्णनात्—"दर्शनस्पर्शनादीनि निषेवेते विलासिनौ । यत्रानुरक्तावन्योऽन्यं सम्भोगोऽयमुदाहृतः ॥" इत्युक्तलक्षणसम्भोगाख्यशृङ्गाररसः स्फुट एव ; परन्तु—मल्लीमतल्लीषु वनान्तरेषु वल्ल्यन्तरे वल्लभमाह्वयन्ती । चञ्चद्विपञ्चीकलनादभङ्गीसङ्गीतभङ्गीं कुरुते स्म भृङ्गी ॥" इत्यादिदर्पणकृदुदाहरणवद् इह तस्य तिर्य्यग्गततया—"अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः" इति "प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्य्यगादिगते । शृङ्गारेऽनौचित्यं, रौद्रे गुर्वादिगतकोपे ॥" इति च दर्पणकृद्वचनेन आभासमध्ये परिगणनात् अत्र सम्भोगशृङ्गाररसाभास एव, न तु विशुद्धः शृङ्गाररस इति सुधीभिर्विभाव्यम् ] । वृत्तं शार्दूलविक्रीडितम् ॥ १६ ॥

सीता। भअवदि तमसे! अअं दाव ईदिसो जादो, ते उण ण आणामि कुसलवा एत्तिएण कालेण कीदिसा विअ होंति। * (घ)

तमसा। यादृशोऽयं तादृशौ तावपि। (ङ)

सीता। ईदिसी अहं मंदभाइणी, जाए ण केअलं णिरंतरं अज्जउत्तविरहो पुत्तविरहो वि। † (च)

---

* भगवति तमसे! अयं तावदीदृशो जातः, तौ पुनर्न जानामि कुशलवौ एतावता कालेन कीदृशौ इव भवतः।

† ईदृशी अहं मन्दभागिनी, यस्या न केवलं निरन्तरमार्य्यपुत्रविरहः, पुत्र-विरहोऽपि।

---

(घ) भगवतीति।—अयं—मया पुत्रत्वेन पालितः इत्यर्थः। तावदिति—वाक्यालङ्कारे। ईदृशः,—युवकोचितशक्तिदृढ्यादियुक्तः। तौ—मत्पुत्रौ। पुनः,—किन्तु। एतावता—इयता, सन्त्यागानन्तरं शस्त्रशास्त्रादिविद्याभ्यासार्थं यावत्कालं वाल्मीकितपोवने वर्त्तेते इयत्परिमाणेनेत्यर्थः। कालेन—समयेन, एभिर्वर्षैरिति यावत्, [अत्र "अपवर्गे तृतीया" (२।३।६ पा०) इति तृतीया]। कीदृशौ—वयोऽनुरूप-शक्त्यादियुक्तौ तदयुक्तौ वा इत्यर्थः। [अत्र—"पुनः तौ कुशलवौ एतावता कालेन कीदृशाविव भवतः इति न जानामि" इति अन्वयः; तथा च "तौ पुनः कुशलवौ" इति वाक्य "न जानामि" इत्यनेन व्यवहितमपि प्रियपुत्रकदर्शन-कुशलव-स्मरण-जनिताह्लादेन सम्भ्रमसुक्ततया न गर्भितपदतादोषमावहतीति विभाव्यम्]।

(ङ) यादृश इति।—अयं—परिदृश्यमानः करिशावकः। यादृशः,—तद्-योचितशक्तिदृढ्यादिसम्पन्नः। तौ—कुशलवौ। तादृशौ—एतत्सदृशशक्तिदृढ्यादि-शालिनौ, भवतः इति शेषः। (अत्र करिशावकापेक्षया कुशलवयोः वयःकनिष्ठ-त्वेन समानशक्त्याद्यसम्भवेऽपि केवलं सीतामनस्तुष्टिसम्पादनाय साम्याभिधानं, न तु तत्त्वतः इति बोध्यम्)।

(च) ईदृशीति।—मन्दभागिनी—दुर्भाग्यशालिनी। निरन्तरं—नास्ति अन्तरं अवधानं यस्मिन् तत्, अविरतमित्यर्थः, [अत्र "क्रियाविशेषणानां कर्मत्वम्" इति वार्त्तिकेन क्रियाविशेषणे द्वितीया] आर्य्यपुत्रविरहः,—आर्य्यपुत्रस्य

तमसा। भवितव्यता इयमीदृशी। (छ)

सीता। किं वा मए पसूदाए, जेण तादिसं वि मम पुत्तकाणं ईसिविरलकोमलधवलदसणुज्जलकवोलं अणुवद्धमुद्धकाअली-विहसिदं णिवद्धकाअसिहंडअं अमलमुहपुंडरीअजुअलं ण परिचुंबिदं अज्जउत्तेण। * (ज)

---

* किं वा मया प्रसूतया, येन तादृशमपि मम पुत्रयोरीषद्विरलकोमलधवल-दशनोज्ज्वलकपोलमनुबद्धमुग्धकाकलीविहसितं निबद्धकाकशिखण्डकममलमुख-पुण्डरीकयुगलं न परिचुम्बितमार्य्यपुत्रेण।

---

भर्त्तुः रामचन्द्रस्य विरहः विच्छेदः। पुत्रविरहोऽपि—पुत्रयोः कुशलवयोः विरहः विच्छेदोऽपीत्यर्थः। दुर्भाग्यवशादार्य्यपुत्रपरित्यक्ताऽपि अहं यदि पुत्रमुखदर्शनेन सुखमुपलभेय तदाऽपि मे काचित् सान्त्वना स्यात्, आजन्मनस्तदपि न मया लभ्यते इति मे महतीयं दुर्भाग्यपरम्परेति भावः।

(छ) भवितव्यता—पदार्थानामवश्यम्भावित्वं, नियतिरिति यावत, [भवि-तव्यस्य भावः इति भवितव्यता, भवितव्यमिति तु "कृत्यल्युटो बहुलम्" (३।३।११३ पा०) इति भवतेः कर्त्तरि तव्यप्रत्ययः]। इयं—त्वया इदानीमनुभूयमाना। ईदृशी—एवंविधा, पतिपुत्राभ्यां सह चिरविरहकारिणीत्यर्थः। दुर्भाग्यादेव तवेयं दुर्दशा, न त्विच्छाकृतेति नानुशोचनीयमिति भावः।

(ज) पत्यौ पुत्रमुखचुम्बनादिना प्रीतिमापन्ने हि प्रसवस्य सार्थकता जायते, मम तु मन्दभागिन्याः प्रसवानन्तरं नावलोकितमप्यार्य्यपुत्रेण कदाचित् तादृशं सुतमुखकमलयुगलमिति व्यर्थ एव मे तनययुगलप्रसवक्लेशः इत्याशयवती जनक-नन्दिनी सखेदमाह, किं वेति।—प्रसूतया—प्रसवकारिण्या [अत्र प्रसूतं प्रसवः, (प्र+सू+भावे क्तः) तद्विद्यते यस्याः सा प्रसूता, "अर्श आदिभ्योऽच्" (५।२। १२७ पा०) इति अच्प्रत्ययः। अथवा—अकर्म्मकत्वविवक्षातः सुधातोरकर्म्मक-त्वात् "गत्यर्थाकर्म्मक—" (३।४।७२ पा०) इति कर्त्तरि क्तः]। मया—सीतया [अत्र अलमर्थककिंशब्दयोगे तृतीया; यद्वा,—गम्यमानसाधनक्रियापेक्षया करणत्वात् "गम्यमानाऽपि क्रिया विभक्तौ प्रयोजिका" (वा०) इति तृतीया]। येन—

तमसा। अस्तु देवताप्रसादात्। (भ)

सीता। भअवदि तमसे! एदिणा अपच्चसंसुमरणेण उस्स-

हेतुना। तादृशमपि—मयाऽननुभूतं निरतिशयरमणीयमपीत्यर्थः। मम पुत्रयोः,—मम तनययोः, कुशलवयोरिति यावत्। [अत्र "पुत्रकयोः" इत्यपि क्वचित पाठो दृश्यते, तदर्थस्तु—अनुकम्पितौ पुत्रौ इति पुत्रकौ तयोः "अनुकम्पायाम" (५।३।७६ पा०) इति कप्रत्ययः, स्नेहास्पदतनययोरित्यर्थः]। ईषदित्यादि।—ईषद्विरला अनतिघना: कोमलाः सुकुमाराः धवलाः श्वेताश्च ये दशना: दन्ताः तैः उज्ज्वलौ कान्तिपूर्णौ कपोलौ गण्डौ यस्मिन् तत् तथोक्तं, नातिसंश्लिष्टसुकुमारशुभ्रदन्तराजिदीप्यमानगण्डस्थलमित्यर्थः; ("रदना दशना दन्ताः" इत्यमरः) [अत्र स्वभावतः सुन्दरयोः कपोलयोः प्रकृत्या रक्तत्वेऽपि धवलदशनोज्ज्वलप्रभाभिः सम्पादितश्वेतिमतया स्वकीयरक्तिमगुणत्यागेन अन्यदीयोज्ज्वलधवलिमग्रहणात् तद्गुणालङ्कारः,—"तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः" इति तल्लक्षणात्]। अनुबद्धेत्यादि।—अनुबद्धे नियते मुग्धे मनोहरे काकलीविहसिते काकली मृदुमधुरास्फुटशब्दः [कु ईषत् कलः इति काकली "ईषदर्थे—" (६।३।१०५ पा०) इति कुशब्दस्य स्थाने "का" आदेशः, ततः "षिद्गौरादिभ्यश्च" (४।१।४१ पा०) इति ङीप्] विहसितं मधुरहास्यञ्च ते यस्मिन् तत् तथोक्तम्। ("काकली तु कले सूक्ष्मे" इत्यमरः। "मधुरस्वरं विहसितम" इति च साहित्यदर्पणः)। निबद्धेत्यादि।—निबद्धौ धृतौ काकशिखण्डकौ काकपक्षौ येन तत् तथोक्तम्; (यद्यपि "काकपक्षः शिखण्डकः" इत्यमरोक्तेन शिखण्डकशब्देनैव काकपक्षबोधः इति काकशब्दो निरर्थकस्तथाऽपि इह करिकलभादिशब्दवत् प्रयोगान्न दोष इति बोध्यम्)। अमलेति।—अमलमुखपुण्डरीकयोः निर्मलमुखपद्मयोः [मुखे पुण्डरीके इव इति मुखपुण्डरीके, अमले मुखपुण्डरीके इति अमलमुखपुण्डरीके तयोः "उपमितं व्याघ्रादिभिः" (२।१।५६ पा०) इति उपमितसमासः। अत्र उपमा नामालङ्कारो बोध्यः]। युगलं द्वन्द्वम्, अतिसुन्दरवदनकमलयुगलमित्यर्थः। आर्यपुत्रेण—पत्या रामेण। न परिचुम्बितं—न सम्यक् चुम्बनं कृतमित्यर्थः। विफलं पुत्रयोर्जन्म मम च मन्दभागिन्या गर्भधारणमिति भावः।

(भ) देवताप्रसादात्—देवानुग्रहवशादित्यर्थः अस्तु—पत्या रामेण तव तनययोर्मुखपुण्डरीकयुगलं परिचुम्बितं भवत्वित्यर्थः। ममाशीर्वादात् त्वमचिरादेव अतिशुभवत्ता भविष्यसीति भावः।

सिदपण्हुदत्थणी ताणं च पिदुणो सण्णिधाणेण खणमेत्तं संसारिणी म्हि संवुत्ता। * (ञ)

तमसा। किमत्र उच्यते? प्रसवः खलु प्रकर्षपर्य्यन्तः स्नेहस्य। परञ्चैतदन्योऽन्यसंश्लेषणं पित्रोः। (ट)—

* भगवति तमसे! एतेन अपत्यसंस्मरणेन उच्छ्वसितप्रस्नुतस्तनी तयोश्च पितुः सन्निधानेन क्षणमात्रं संसारिणी अस्मि संवृत्ता।

(ञ) अपत्यसंस्मरणेन—अपत्ययोः पुत्रयोः संस्मरणेन सञ्चिन्तनेन पुत्रविषयकचिन्तया, अतिप्रगाढेन पुत्रस्नेहेन इति यावत्। उच्छ्वसितप्रस्नुतस्तनी—उच्छ्वसितौ दुग्धागमात् स्फीतौ प्रस्नुतौ क्षीरं स्रवन्तौ स्तनौ यस्याः सा तथोक्ता, पुत्रस्मरणजपयःस्फीतस्रवत्पयोधरा इति यावत्; एतदेव हि यथार्थं लक्षणं जनन्याः सन्ततं प्रति स्नेहप्रकर्षस्य। तयोः,—पुत्रयोः, कुशलवयोरित्यर्थः। पितुः,—जनकस्य, आर्य्यपुत्रस्य रामस्येति यावत्, (चिराय पतिपुत्रविरहकातरा जानकी गभीरविषादेन राममार्य्यपुत्रादिशब्देन अभिधातुमपि क्लिश्यमाना "तयोः पितुः" इत्येवम् अभिहितवतीति बोध्यम्)। सन्निधानेन—समीपावस्थानेन। क्षणमात्रं—मुहूर्त्तमात्रम्, [अत्र "कालाध्वनोरत्यन्तसंयोगे च" (२।३।५ पा०) इति द्वितीया]। संसारिणी—गृहस्थोचितसौभाग्यवती, दैवात् स्वामिसन्निधानात् अपत्यसञ्चिन्तया पयोधराभ्यां दुग्धस्रावाच्च मुहूर्त्तमात्रं गृहस्थधर्म्ममाचरन्ती इवेति यावत्। संवृत्ता—जाता। अस्मि—भवामि, अहमिति शेषः। आपामरसाधारणोपभोग्यं गार्हस्थ्यफलं सत्स्वपि पतिपुत्रादिषु मया नोपभुक्तमिति भावः।

(ट) जानकी यदिदमुक्तवती—"अपत्यसंस्मरणेन उच्छ्वसितप्रस्नुतस्तनी" इति, तमसा सम्प्रति तदेव समर्थयन्ती आह, किमिति।—अत्र—अस्मिन् पुत्रस्नेहविषये। किमुच्यते—किं कथ्यते? नात्र किमपि वक्तव्यमिति भावः। प्रसवः,—अपत्यं, [प्रसूयतेऽसौ इति प्रसवः, कर्म्मणि अप्प्रत्ययः] ("—प्रसवो गर्भमोचने। उत्पादे स्यादपत्येऽपि फले च कुसुमेऽपि च॥" इति मेदिनी)। खलु—निश्चितम्। स्नेहस्य—अनुरागस्य। प्रकर्षपर्य्यन्तः,—प्रकर्षस्य आतिशय्यस्य पर्य्यन्तश्चरमसीमा, पराकाष्ठेति यावत्, अपत्यजन्मनैव दम्पत्योरनुरागस्य परमोत्कर्षो भवति, नातः परमस्य उत्कर्षः सम्भाव्यते इति भावः। परञ्च—अपरञ्च, कथयामीति शेषः। एतत्—एष प्रसव इत्यर्थः, [अत्र विधेयप्राधान्यात् क्लीबत्वम्]। पित्रोः,—जननीजनकयोः,

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते ॥ १७ ॥

[ माता च पिता च इति पितरौ तयोः "पिता मात्रा" ( १।२।७० पा० ) इति वैकल्पिकः एकशेषः, पक्षे मातापितराविति ]। अन्योऽन्यसंश्लेषणम्—अन्योऽन्यस्य परस्परस्य संश्लेषणं बन्धनं, संयोजनग्रन्थिरिति यावत् ; आपामरसाधारणजीवनमनः-परितर्पणं न खल्वेतदपत्यम्, अपि तु मातापित्रोः संसारसुखसम्भोगार्थिनोरन्तःकरणयोरन्योऽन्यसंश्लेषसङ्घटनसमर्थः सम्बन्धविशेष इति भावः ।

पूर्वं यदिदमुक्तं "परस्परं तदन्योऽन्यसंश्लेषणं पित्रोः" इति, सम्प्रति तदेव दृढयन्नाह, अन्तरिति ।—दम्पत्योः पतिपत्न्योः [ जाया च पतिश्च तौ दम्पती "जायायाः दम्भावो जम्भावश्च वा निपात्यते" इति नियमात् जायाशब्दस्य दमादेशो निपातनात् ] अन्तःकरणतत्त्वस्य मनःसारस्य, गूढनिहितस्य अन्तःकरणसारभूतस्य पदार्थस्य इत्यर्थः, चतुर्विंशतितत्त्वान्तर्गतस्य मनसः इति वा, ( साङ्ख्यानां हि चतुर्विंशति तत्त्वानि, अन्तःकरणं हि तदन्तर्गतमेकं तत्त्वं, तच्च व्यापारभेदेन त्रिधा भिद्यते, तथा च साङ्ख्यतत्त्वकौमुदी,—

"अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥"

"अन्तःकरणं त्रिविधं बुद्धिरहङ्कारो मन इति शरीराभ्यन्तरवर्त्तित्वादन्तःकरणम्" इति । शङ्करमतानुयायिनो वेदान्तिकास्तु—अस्य चतुर्विधत्वं मन्यन्ते, तद्यथा,—

"मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम् ।
संशयो निश्चयो गर्व्वः स्मरणं विषया अमी" ॥ इति ।

स्नेहसंश्रयात् उभयोरेव प्रगाढवात्सल्यस्य एकास्पदत्वादित्यर्थः, अपत्यमिति सन्तति-रूपः [ न पतन्ति अस्मात् कुलम् अनेन इति अपत्यं, नञ् + पत + यत् ] अयम् एकः अद्वितीयः, आनन्दग्रन्थिः उभयोः स्नेहसम्पादनादानन्दमयं बन्धनमित्यर्थः, बध्यते संनह्यते, विधात्रा इति शेषः ; प्रणयभङ्गप्रतिवारकत्वात्त्वरयं, स च हृन्मर्म-सारैरेव स्नेहसूत्रैः बध्यते इति भावः । यथा स्वतन्त्राधिकरणावच्छिन्नयोः सजातीययोरपि पदार्थयोः सम्बन्धाभावात्र कदाऽपि कथमपि ऐक्यं सम्भवति, अथ कथमपि तयोः सामानाधिकरण्ये जाते पुनस्तावेव परस्परश्लिष्टौ एकीभूतौ राजेते, तथा नियतमन्योऽन्यानुरागप्रवणमपि जायापत्योरन्तःकरणयुगलं पृथगा-श्रयाश्रिततया पूर्वं न तथा संश्लिष्टमपि परं सन्तत्याश्रयात् स्नेहद्वारेण सन्तति-

वासन्ती। इतोऽपि देवः पश्यतु। (ठ)—

अतनुमदताण्डवोत्सवान्ते
अयमचिरोद्गतमुग्धलोलबर्हः।
मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधूसखः शिखण्डी ॥ १८ ॥

कपर्मकमेणाधिकरणेनधिगतं चिरायाच्छेद्यबन्धनेन बध्यते इत्ययं विग्रहार्थः। [यथा केनचित् बंधभयात् स्वशरीरं कुतश्चिद् दृढं बध्यते, तथा दृढस्नेहः स्नेहसूत्रेण अपत्ये आत्मा बध्यते इति ध्वनिः। अत्र आनन्दमयग्रन्थिरूपारोप्यमाणविषयस्य दम्पत्यो-रन्योऽन्यवात्सल्यप्रकर्षोपादकत्वेन अपत्यस्वरूपारोपविषयात्मतया परिणमनात् परि-णामो नाम अलङ्कारः]। अनुष्टुप् वृत्तम् ॥ १७ ॥

(ठ). इत इति।—देवः,—भवान् रामचन्द्र इत्यर्थः। इतोऽपि—अस्यामपि दिशि। पश्यतु—अवलोकयतु, "शिखण्डी नदति" इति वक्ष्यमाणश्लोकार्थेनान्वयः।

पुराऽरण्यवासकाले प्रियतमया परिपोषितं करिकरभकमिदानीं कालवशात् तरुणीभूतमवलोक्य उन्मददिरददर्पदमनमममालोक्य विस्मितं सीतानाथं वासन्ती पुनरपि जानकीपरिपोषितमपरं कलापिनमेकं दर्शयन्ती आह, अतन्विति।— अचिरम् उद्गतम् उत्पन्नं मुग्धं मनोहरं लोलं चञ्चलञ्च बर्हं पिच्छं यस्य स तथोक्तः, नवप्ररूढरमणीयचञ्चलकलापः इत्यर्थः, [एतेन मयूरस्यातिसौन्दर्य्यं व्यज्यते], ("लोल-श्चलसतृष्णयोः" इति "पिच्छबर्हे नपुंसके" इति चामरः) अचिरजातयौवन इति भावः; तथा उत् उद्गता शिखा चूडा यस्य सः तथोक्तः, उन्नतचूड इति यावत्, अत एव मणेः मुकुटं यस्य स तथोक्तः मणिमयमुकुटधारीव इत्यर्थः, अथवा, उच्छिखः उद्गतप्रभाजालः, मणिमुकुटः मणिमयः शिरोवेष्टकः इव प्रतीयमानः, [शाकपार्थिवा-दित्वात् उत्तरपदलोपी समासः]। नानावर्णविचित्रपिच्छचन्द्रककलापानां विशु-मरोज्ज्वलप्रभापटलैः परितो विस्फुरिततया मरकतेन्द्रनीलपद्मरागादिमणिनिखचितः किरीट इव विराजमान इत्यर्थः। ("अङ्गनवाच्य मुकुटं किरीटं पुंनपुंसकम्" इत्यमरः) सः सीतया पुरा पोषित इत्यर्थः, एषः सम्प्रति अस्मत्पुरोवर्त्तिकदम्बशाखायां परिदृश्य-मानः इति यावत्, शिखण्डी मयूरः ("शिखण्डी ना कलापे स्यात् नाकेशारिमयूरयोः" इति मेदिनी) वधूसखः वधूद्वितीयः सन्नित्यर्थः, [वध्वाः सखाभार्यायाः सखा इति वधू-सखः, "राजाहःसखिभ्यष्टच्" (५।४।९१ पा०) इति समासान्तः टच्प्रत्ययः] अतनुना अनल्पेन, महतेति यावत्, मदेन हर्षेण हेतुना यः ताण्डवोत्सवः नृत्योत्सवस्तस्यान्ते

सीता । [ सकौतुकावम् ] । एसो सो एसो सो । * ( ङ )

रामः । वत्स ! मोदस्व, वयमद्य वर्त्तामहे । ( ढ )

सीता । एव्वं भोदु । † ( ण )

---

* एष सः एष सः ।

† एवं भवतु ।

अवसाने, कदम्बे कदम्बवृक्षे, स्वयम् आत्मना, अनन्यप्रणोदित इत्यर्थः, नर्दति शब्दायते, केकारवं करोतीत्यर्थः । [ "अनुदिवसमवर्द्धयत् प्रिया ते यमचिरनिर्गतमुग्धलोलबर्हम्" इत्यपि क्वचित् पाठः । तस्यायमर्थः,—अचिरनिर्गतमुग्धलोलबर्हं प्रत्यग्रोत्पन्नसुन्दरचलत्पिच्छं यं शिखण्डिनं ते तव प्रिया जानकी अनुदिवसं प्रतिदिनम् अवर्द्धयत् वर्द्धितवती, स एष इति परेणान्वयः इति ] । योऽयं शैशवे जनकतनयया नियतम् अपत्यस्नेहेन परिपोषितः शैशवसुलभसारल्यचापल्यादिभिर्भवन्मानसमभ्यनन्दयत्, सोऽयं सम्प्रति अभिनवोद्भिन्नयौवनतया नवीभावमापन्नः प्रियतमया समेतः प्रलम्बकदम्बशाखामाश्रित्य कोलपरत्नाङ्कवीत्सवमुपभुञ्जानः कलापी केकारवं विदधातीति भावः । [ अत्र उपमा नाम अलङ्कारः । यथा रूढिप्रयोजनाभावात् अशक्तिकृतलक्ष्यार्थप्रकाशकतया "कमले चरणाघातं मुखं सुमुखि ! तेऽकरोत्" इत्यत्र नेयार्थत्वदोषः, तथा "प्रतरुणमदः" इत्यत्र तरुणशब्दस्य यौवनवति रूढतया, इह अन्यार्थे रूढिप्रयोजनाभावेऽपि लक्षणया अन्यार्थबोधनात् नेयार्थत्वदोषो बोध्यः ] । पुष्पिताग्रा वृत्तम् ; तल्लक्षणं यथा—"अयुजि नयुगरेफतो यकारो, युजि च नजौ जरगाश्च पुष्पिताग्रा" इति ॥ १८ ॥

( ङ ) एष इति ।—अस्माभिः परिदृश्यमानः । सः,—मया पूर्वं सस्नेहं परिवर्द्धितः शिखण्डी इत्यर्थः । ( अत्रापि "विषादे विस्मये हर्षे" इति नियमात् हर्षे द्विर्वचनं न दोषाय ) ।

( ढ ) वत्स ! इति ।—बाल ! मयूर इत्यर्थः । मोदस्व—आनन्दं लभस्व । तव हेतुमाह, वयमिति ।—अहं सीतासखी वासन्ती च इत्यर्थः, [ अत्र "अस्मदो द्वयोश्च" ( १।२।५९ पा० ) इति सूत्रेण द्वयोरपि बहुवचनं साध्विति बोध्यम् ] । वर्त्तामहे—पुनरुपस्थिता भवामः, सुखदुःखयोर्हि समवेदकस्वजनसमागम एव पूर्णता जायते इति भावः ।

( ण ) एवमिति ।—एतदीयानन्दप्रकाशवसन्ती-सहिता आर्य्यपुत्रसान्निध्येन मम बहुधा प्रमोदः जायतामित्यर्थः ।

रामः।—भ्रमिषु कृतपुटान्तर्मण्डलावृत्ति चक्षुः
प्रचलितचतुरभ्रूताण्डवैर्मण्डयन्त्या ।
करकिसलयतालैर्मुग्धया नर्त्यमानं
सुतमिव मनसा त्वां वत्सलेन स्मरामि ॥ १९ ॥

हन्त !! तिर्य्यञ्चोऽपि परिचयमनुरुध्यन्ते । (त)—

---

सम्प्रति कदम्बशाखासमारूढं केलिपरं प्रियासङ्गयुक्तं भुजङ्गभुजमालोक्य समुद्दीपितपूर्व्वस्मृतिर्जानकीपतिः खिद्यमान आह, भ्रमिष्विति।—भ्रमिषु सञ्चरणेषु, शिखण्डिनः चक्रमद्भ्रमणेषु सत्स्वित्यर्थः, कृता पुटयोर्नेत्रावरणयोरन्तः अभ्यन्तरे मण्डलावृत्तिः वर्त्तुलाकारभ्रमणं येन तत् तथाभूतं, चक्षुः सीतासम्बन्धि-नयनं, प्रचलितयोः चञ्चलयोः चतुरयोः सविलासयोः सङ्केतसूचकाकारप्रदर्शन-कुशलयोरिति यावत्, भ्रुवोस्ताण्डवैर्नृत्यैः, इतस्ततः पुनःपुनःसञ्चारैरिति यावत्, मण्डयन्त्या भूषयन्त्या, स्वयं ताण्डवचातुर्य्यं शिक्षयितुमिव सती भ्राम्यमाणस्यास्य शिखिनः सञ्चारानुसारेणैव स्वचक्षुरितस्ततः प्रसारयन्त्येति यावत्, मुग्धया तदानीं नवयौवनसम्पन्नतया अतिमनोरमया, सीतयेति शेषः, (मुग्धालक्षणं यथा साहित्यदर्पणे—"प्रथमावतीर्णयौवनमदनविकारा रतौ वामा। कथिता मृदुश्च माने समधिकलज्जावती मुग्धा॥" इति) करकिसलयाभ्यां करपल्लवाभ्यां सम्पादितैः तालैः कालक्रियापरिमाणैः, करतलसंयोगजशब्दसूचितैः कालपरिमाणै-रिति यावत्, ("तालः कालक्रियामानम्" इत्यमरः) नर्त्यमानं सम्पाद्यमान-ताण्डवं, त्वां सुतमिव वत्सलेन स्नेहमयेन मनसा स्मरामि। पुरा कुतुकपरवशया प्रियतमया करपल्लवतालैर्नियतं नर्त्तितः सोऽयं शिखिशावकः कालेनान्यथा परि-णततया प्रियायाः पुत्रक इत्यतिवत्सलं मां स्वकीयां पुरातनीं दशामिदानीं स्मारयतीति भावः। [अत्र स्वभावोक्तिरलङ्कारः, तथा "करकिसलय" इत्यत्र लुप्तोपमा, चतुर्थपादे च श्रौती उपमा, इत्येषां परस्परमङ्गाङ्गिभावेन सङ्करः। केचित्त्वत्र स्मरणालङ्कारमप्याहुः]। अत्र मालिनी वृत्तम्; तल्लक्षणं यथा—"ननमयययुतेयं मालिनी भोगिलोकैः" इति। प्रस्तारादिकन्तु पूर्व्वमुक्तम्॥ १९॥

(त) हन्तेति।—हर्षसूचकमव्ययं, ("हन्त वाक्यारम्भखेदविषादहर्षसम्भ्रमे" इति मेदिनी)। तिर्य्यञ्चोऽपि—तिर्य्यग्जातयः पक्षिणोऽपि। परिचयं—संस्तवं, शिशुमतो ज्ञानमित्यर्थः। अनुरुध्यन्ते—अनुसरन्ति, आद्रियन्ते इत्यर्थः। [दैवादिकस्य रुधधातो

कतिपयकुसुमोद्गमः कदम्बः।
प्रियतमया परिवर्धितो य आसीत्।

सीता। [ निरूप्य साखम् ]। सुट्ठु पच्चभिण्णादं अज्जउत्तेण *। (थ)

रामः।—स्मरति गिरिमयूर एष देव्याः
स्वजन इवात्र यतः प्रमोदमेति॥ २०॥

---

* सुष्ठु प्रत्यभिज्ञातमार्यपुत्रेण।

---

रूपमिदम्] तिर्यग्योनिसम्भवोऽप्ययं शिखिशावकः वनवासकालोचितमस्मदीयपरिचयं साम्प्रतमपि अनुस्मरन् साधुतरव्यवहारेणात्मानं सूचयतीति मद्वाक्यार्थमिति भावः।

(थ) निरूप्य—स एवायं कदम्बो न वेति तत्त्वतो निश्चित्य। सास्रम्—अश्रुसहितमित्यर्थः, पूर्वपरिचितकदम्बपादपदर्शनेन समुद्दीपितपूर्ववृत्तान्ताया: सीताया: शोकोदयात् अश्रुपातः इति बोध्यम्। सुट्ठु—सम्यक्। प्रत्यभिज्ञातं—तदीयकतत्त्वभावेन संस्मृतम्; स एवायं कदम्बतरुरिति सत्यमेव इति भावः।

मानवेतरजातीयानां तिरश्चामपि पूर्वपरिचयानुसरणरूपं यदिदं पूर्वमुक्तं, तदेव सम्प्रति समर्थयमान आह, कतिपयेति।—कतिपयानां कियतां, स्वल्पानामित्यर्थः, कुसुमानां पुष्पाणाम्, उद्गमः उद्भवः यस्मिन् स तथोक्तः, विरलकुसुमालङ्कृतः इत्यर्थः, अल्पावयवत्वादिति भावः, यः कदम्बः तदाख्यः वृक्षविशेषः, प्रियतमया सीतया, परिवर्धितः जलसेचनादिना वृद्धिं नीतः, परिपालितः इति यावत्, आसीत, एषः पुरतः परिदृश्यमानः, गिरिमयूरः गिरिचरः गिरिप्रियो वा मयूरः इति गिरिमयूरः पर्वतविहारी शिखण्डीत्यर्थः, [ अत्र शाकपार्थिवादित्वादुत्तरपदलोपी समासः। इह मयूरमात्रकथनेनैवार्थसिद्धौ गिरिमयूर इति कथनात्—"भूधरशिखराधामत्युन्नतानां प्रियतरजलधरान्तिकावस्थिततया निरुपद्रवतया च अतिप्रियत्वात् तत्र नियतमवस्थितोऽपि आश्रमम् एतम् एतयैव जनकतनयया संवर्धिततया चाल्यकुसुमैतं कदम्बपादपमाश्रितः ततोऽपि अधिकतरं सुखमधिगच्छति" इत्यर्थो व्यज्यते ]। देव्याः सीतायाः, तं कदम्बतरुमिति शेषः, स्मरति इदानीमपि प्रत्यभिजानातीत्यर्थः; अथवा—एष गिरिमयूरः देव्याः सीतायाः स्मरति देवीं सीतां स्मरतीत्यर्थः, [ देव्या इत्यत्र "अधीगर्थदयेशां कर्मणि" ( २।३।५२ पा० ) इति कर्मणि शैषिकी षष्ठी ] यस्य पुत्रवत् परिपालकत्वेन मातृतुल्यायाः सीतादेव्याः स्मरणं विना कथं तत्परिवर्धितेऽस्मिन् कदम्बपादपेऽसौ ईदृशानन्दभाजः? इति भावः।

वासन्ती । अत्र तावदासनपरिग्रहं करोतु देवः । (द)—

एतत् तदेव कदलीवनमध्यवर्त्ति
कान्तासखस्य शयनीयशिलातलं ते ।
अत्र स्थिता तृणमदाद् बहुशो यदेभ्यः
सीता ततो हरिणकैर्न विमुच्यते स्म ॥ २१ ॥

ननु कथं त्वयैवं सम्भाव्यते ? इत्याह,—यतः यस्मात् हेतोः, अत्र कदम्बतरौ, स्वजने इव स्वमातृतुल्यसीतापरिवर्द्धितत्वात् आत्मीयलोके इव, यद्वा,—"चरति गिरिमयूर एषः" इत्येकं वाक्य, तथा "देव्याः स्वजन इवात्र यतः प्रमोदमेति" इत्यपरं वाक्यम् ; तथाच "एष गिरिमयूरः तं कदम्बवृक्षं चरति, यतः अत्र देव्याः स्वजनः इव प्रमोदमेति" इत्येवमन्वयः । प्रमोदम् आनन्दम्, एति प्राप्नोति, अनुभवतीति यावत् । पूर्वं वनवासदशायां सीतादेवी यमिमं शिखिशावकं कदम्बपादपञ्च सममेव स्वेच्छाकारपानदानादिभिः सलिलसेचनादिना च अपत्यनिर्विशेषं पुपोष, यौ च चिरमेकत्रावस्थानसम्भूतभ्रातृभावाविव परमानन्दमनुभवन्तौ कालं निन्यतुः, तयोरयं शिखिशावकः सम्प्रति विहाय अपरान् सुखसम्भोगोचिताम् पादपपर्वतादीन् प्राक्तनप्रणयवशेनाकृष्टः तमेव कदम्बपादपमाश्रितः सुहृत्समागमसुखमनुभवन्निव नन्दतीति समुदितार्थः । [ अत्र तृतीयपादगतवाक्यार्थं प्रति चतुर्थपादगतवाक्यार्थस्य हेतुतयोपन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा "स्वजन इव" इत्यत्र उपमा च, इत्यनयोः परस्परनिरपेक्षतया संसृष्टिः ] । पुष्पिताग्रा वृत्तम् ॥ २० ॥

(द) अत्रेति ।—एतस्मिन् परिदृश्यमाने शिलातले इत्यर्थः । तावत्—अवधारणे, एतस्मिन्नेव इत्यर्थः, ("तावन्मानेऽवधारणे" इति मेदिनी) । देवः,—भवान् रामचन्द्र इति यावत् । आसनपरिग्रहं करोतु—उपविशतु इत्यर्थः ।

अथ वासन्ती रामस्य उपवेशनार्थं यदेव शिलातलं निर्दिदेश, तस्यैवोपवेशनस्य हेतुप्रदर्शनपुरःसरं सम्प्रति तदेव शिलातलं विवृणोति, तथा रामेण तिरस्कारमपि पूर्वपरिचयस्मारकरूपं यदुक्तं, तदपि द्रढयति, एतदिति ।—कान्तासखस्य प्रियासहचरस्य, सीतासङ्गतस्येत्यर्थः, ते तव, एतत् परिदृश्यमानं, तदेव पूर्वाभ्यस्तमेव, प्रागध्युषितमेवेति यावत्, कदलीवनमध्यवर्त्ति रम्भाकाननपरिवृतमित्यर्थः, [ कदलीनां वनस्य मध्ये वर्त्तते यत् तदिति विग्रहः ] शयनीयशिलातलं शय्याभूतः शिलाखण्डः, वर्त्तते इति शेषः, [ अत्र शेते अस्मिन् इति शयनीयं "कृत्यल्युटो बहुलम्" (३।३।११३ पा०) इति सौत्रः अधिकरणे अनीयर् ] । पूर्वं प्रियासङ्गतावस्थायां भवान्

राम:। इदं तावदशक्यमेव द्रष्टुम्। (ध)

[इति अन्यतो यदनुपविशति]। (न)

सीता। सहि वासंदि! किं तुए किदं अज्जउत्तस्स मम अ एदं दंसअंतीए? हद्धी! हद्धी! सो ज्जेव अज्जउत्तो, तं ज्जेव पंचवटीवणं, सा ज्जेव पिअसही वासंदी, ते ज्जेव विविह-विस्संभसाक्खिणो गोदावरीकाणणुद्देसा, ते ज्जेव जादणिव्विसेसा मिअपक्खिपादवा, सा ज्जेव चाहं, मम उण मंदभाइणीए

---

* सखि वासन्ति! किं त्वया कृतमार्य्यपुत्रस्य मम च एतद्दर्शयन्त्या? हा धिक्! हा धिक्! स एव आर्य्यपुत्रः, तदेव पञ्चवटीवनं, सैव प्रियसखी वासन्ती, त एव विविधविस्रम्भसाक्षिणो गोदावरीकाननोद्देशाः, त एव जातनिर्विशेषा

---

यत्र प्रियाणी वनवासजमपि दुःखं विसस्मार, तस्मिन् तस्मिन्नेव उपविष्टः सर्वं पूर्वानुभूत-सारणसुखमनुभवंस्तृप्तिं लभतामिति भावः। ननु तर्ह्येवैतदस्मदध्युषितं शिलातलमिति कथं त्वया परिचीयते? इत्याह, यदेति।—यत् यस्मात्, सीता जानकी, अत्र अस्मिन् शिलातले, स्थिता उपविष्टा सती, एभ्यः पुरोवर्त्तिभ्यो हरिणकेभ्यः इति यावत्, बहुशः बहुवारं, ["बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्" (५।४।४२ पा०) इति शस्प्रत्ययः] तृणं शष्पम्, अदात् दत्तवती, भक्षणार्थमिति शेषः, ततः तस्मात् कारणात्, हरिणकैः कुरङ्गकैः, इदानीमपि सीताप्रदत्तशष्पलाभाशया उपस्थितैरिति यावत्, न विमुच्यते अद्यापि न परित्यज्यते, एतत् शिलातलमिति शेषः। (अत्र स्म इति पादपूरणे "तु हि च स्म ह वै पादपूरणे—" इत्यमरोक्तेः। प्रकृते अस्य अतीतत्वबोधकत्वन्तु न युज्यते, इदमः प्रत्यक्षरूपतया परिदृश्यमानानामेव मृगाणामपरित्यागकथनादिति ध्येयम्)। वसन्ततिलकं वृत्तम्। लक्षणादिकन्तूक्तं प्राक्॥ २१॥

(ध) इदं—पुरतः परिदृश्यमानं शिलातलम्। तावत्—वाक्यालङ्कृतौ, साकल्ये वा। द्रष्टुमशक्यं—सीतया सह कृतानां तत्तद्विहारक्रीड़ादीनां स्मारकतया दुःसहशोकोद्दीपकत्वात् दर्शनायोग्यमिति यावत्।

(न) इति—अतो हेतोः। अन्यतः,—अन्यस्मिन् प्रदेशे; तादृशशोकोद्दीपकत्वेन द्रष्टुमप्यशक्येऽस्मिन् शिलातले उपवेशनस्य अयुक्ततया ततोऽपरस्मिन् एव उपवेशनं युज्यते इति भावः।

दीसंतं पि सव्वं ज्जेव एदं णत्थि त्ति, ता ईदिसो जीअलोअस्स परिवत्तो * । ( प )

मृगपक्षिपादपाः, सैव चाहं, मम पुनर्मन्दभागिन्याः दृश्यमानमपि सर्वमेवैतत् नास्तीति, तदीदृशो जीवलोकस्य परिवर्त्तः ।

( प ) त्वया—भवत्या । किं कृतम् ?—किमनुष्ठितम् ? एकपदत्वे—कुत्सितं कृतमिति । आर्य्यपुत्रस्य—स्वामिनः रामचन्द्रस्य, मम—सीतायाश्च [ उभयत्र सम्बन्धमात्रविवक्षया षष्ठी ] एतत्—शिलातलम् ; शिलातलप्रदर्शनेन वासन्ती शोकमुद्दीपयन्त्या त्वया महदनिष्टमनुष्ठितमिति भावः । विविधविस्रम्भसाक्षिणः,—विविधानां नानाप्रकाराणां विस्रम्भाणाम् अशङ्कितव्यवहारविहारादिव्यापाराणां साक्षिणः साक्षाद्द्रष्टारः । गोदावरीकाननोद्देशाः,—गोदावर्य्याः नद्यास्तटस्य काननोद्देशाः वनभूमयः । जातनिर्विशेषाः,—जातेभ्यः पुत्रेभ्यः निः नास्ति विशेषः प्रभेदो येषां ते तथोक्ताः, पुत्रतुल्यानन्दजनका इत्यर्थः । मृगपक्षिपादपाः,—मृगाः पशवः [ मृग्यन्ते अन्विष्यन्ते ये ते मृगाः इति व्युत्पत्त्या पशुमात्रे मृगशब्दः प्रयुज्यते ; तथाच "मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः" इति मेदिनी ] पक्षिणः खगाः पादपाः वृक्षाश्च, सन्तीति शेषः । पुनः,—किन्तु । मन्दभागिन्याः,—हतभाग्यायाः, मम सम्बन्धे इत्यर्थः । दृश्यमानमपि—चक्षुर्विषयभूतमपि । एतत्—पुरोवर्त्ति । सर्वमेव—सकलमेव, पञ्चवटीगोदावरीप्रभृतिकमित्यर्थः । नास्ति—सुखोत्पादकत्वरूपेण न वर्त्तते इवेत्यर्थः ; स्वरूपतः सदप्येतत् पञ्चवटीगोदावरीप्रभृतिकं प्रागिव इदानीम् आनन्दाजनकतया असदेव प्रतिभातीति भावः । अथेत्थं विलपन्ती जनकनन्दिनी सुखदुःखयोः चक्रनेमिक्रमेण अपरिवर्त्तितारूपं जगत्तत्त्वं मनसा पर्य्यालोच्य आत्मानं सान्त्वयन्ती आह, तदिति ।—तत्—तस्मात्, पूर्वमत्यानन्दप्रदानामपि एषां सम्प्रति आनन्दानुत्पादकत्वादित्यर्थः । ईदृशः,—एतादृशः । जीवलोकस्य—भुवनस्य । परिवर्त्तः,—दशाविपर्य्यासः, स्वकीयदशाविपर्य्ययेण इव जगतामपि गुणविपर्य्ययं इति भावः । [ अत्र पूर्वमपारानन्दसन्दोहजनकतया वर्त्तुलेन सुपरिचितानामप्येतेषां वन-नदीप्रभृतीनाम् इदानीं तदजनकत्वात् विशेषोक्तिरलङ्कारः, तथा तेषां प्रत्यक्षपरिदृश्यमानतया स्वरूपतः सत्त्वेऽपि सम्प्रति पूर्ववदानन्दोत्पादनरूपकार्य्यकारित्वाभावात् "नास्तीति" इत्यनेन असत्तया सम्भावनाद् उत्प्रेक्षा, सा च इवादिशब्दावाच्यतया प्रतीयमाना इति बोध्यम् ] ।

वासन्ती । सखि सीते ! कथं न पश्यसि रामस्य अवस्थाम् ? (फ)—

कुवलयदलस्निग्धैरङ्गैर्ददौ नयनोत्सवं
सततमपि ते स्वेच्छादृश्यो नवं नवमेव यः ।
विकलकरणः पाण्डुः सोऽयं शुचा परिदुर्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशां प्रियः ॥ २२ ॥

---

(फ) अवस्थां—दशाम् । त्वदर्थमेवं शकवचं विलपन्तमिमं रामचन्द्रं यदि पश्येः तदा नूनं त्वमप्यात्मानं बहु मन्यमाना एवं सान्त्वयितुमात्मानं नियोजयेरिति भावः । सीतां दृष्ट्वा नैषा वासन्त्युक्तिः, किन्तु तामुद्दिश्यैव, भागीरथीवरात् रामवद् वासन्त्या अपि सीतादर्शनासामर्थ्यादिति तु उक्तप्रायम् ।

वासन्ती जनकतनयामुद्दिश्य यदिदमुक्तवती "कथं न पश्यसि रामस्यावस्थाम्" इति, सम्प्रति तामेव प्रियाविरहमलिनामतिशोचनीयां रामस्य अवस्थामुपवर्णयन्ती आह, कुवलयेति ।—सततमनुवेलं, निर्बाधमित्यर्थः, ते तव, [ अत्र "नः" इति पाठे—अस्माकमित्यर्थः ] स्वेच्छया इच्छामात्रेण दृश्योऽपि द्रष्टुं शक्योऽपि, यथावस्थं दृश्यमानोऽपीत्यर्थः, यो रामः, कुवलयदलस्निग्धैः नीलोत्पलदलकोमलैः, अङ्गैरवयवैः, नवं नवमेव अननुभूतपूर्वमेव, [ नवं नवमित्यत्र वीप्सायां द्विर्भावः ] नयनयोः नेत्रयोः, उत्सवम् आनन्दं, ददौ विततार । एवम्भूतमधुरमूर्तिः यः आसीदिति यावत् ; आकाङ्क्षामात्रेणैव सुलभदर्शनतया मुहुरवलोक्यमानोऽपि सहजालौकिकसौन्दर्य्यातिशयवशेन प्रतिदर्शनम् अभिनवत्वेन प्रतीयमानतया नित्यं नूतनमेव नयनामोदमाततानेति विशदार्थः । [ अत्र "ददन्नयनोत्सवम्" इति पाठे—नयनोत्सवं ददत् यः सततमपि ते स्वेच्छादृश्य आसीदिति अन्वयो बोध्यः, "लटः शतृशानचावप्रथमासमानाधिकरणे" ( ३।२।१२४ पा० ) इति शतृप्रत्ययश्च वेदितव्यः ] । सः तादृशो मधुरमूर्त्तिरित्यर्थः, अयं पुरोवर्त्ती रामः, शुचा त्वद्विरहशोकेन, ( इदन्तु देहलीदीपन्यायेन "विकलकरणः" इत्यादिषु त्रिष्वेव हेतुविधया अन्वेति ) विकलकरणः विवशेन्द्रियः, पाण्डुः धूसरवर्णः, मलिनकान्तिरित्यर्थः, [ "पाण्डुः सोऽयम्" इत्यत्र "पाण्डुच्छायः" इत्यपि पाठो दृश्यते, तत्रापि मलिनकान्तिरित्येवार्थः, "छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः ] परिदुर्बलः अत्यन्तं कृशः, स इति स एवायमिति, कथमपि कथञ्चित्, अतिकष्टेनेत्यर्थः, उन्नेतव्यः अभिज्ञातव्यः, तथापि ईदृक्प्रबलशोकसन्तापेन क्षीणच्छविमाकृतिरपि, दृशां चक्षुषाम्, [ अत्र "दृशोः" इति पाठे—नयनयोरित्यर्थः, चक्षुरादिशब्दानां द्वित्वावच्छिन्नजातितया इह द्विवचनं बोध्यम् ] प्रियः प्रीतिकरः । एवं

सीता। पेक्खामि सहि! पेक्खामि। * (ब)

तमसा। पुत्रि! पश्यन्ती प्रियं भूयाः। (भ)

सीता। हा देव्व! एसो मए विणा अहं पि एदेण विणा त्ति सिविणे वि केण संभाविदं आसी? ता मुहुत्तअं पि जम्मंतरादो विअ अणुलद्धदंसणा बाहसलिलंतरेसु पेक्खामि दाव वच्छलं अज्जउत्तं †। [इति सतृष्णं पश्यति]। (म)

* प्रेक्षे सखि! प्रेक्षे।

† हा दैव! एष मया विना, अहमप्येतेन विनेति स्वप्नेऽपि केन सम्भावितमासीत्? तन्मुहूर्त्तकमपि जन्मान्तरात इव अनुपलब्धदर्शना बाष्पसलिलान्तरेषु प्रेक्षे तावद्वत्सलमार्य्यपुत्रम्।

अलीकसाधारणमधुरतराकृतिरयं रघुनन्दनः दुःसहविरहतापशोषमलिनोऽपि लोकोत्तरमधुराकृतितया सर्व्वास्वेवावस्थासु प्रियदर्शनः लोकलोचनानन्दमुत्पादयन् "उदेति सविता ताम्रः ताम्र एवास्तमेति च। सम्पत्तौ च विपत्तौ च महतामेकरूपता॥" इति सत्यं प्रमापयतीति भावः। [अत्र मलिनकान्तिकृशतादिकारणानां सत्त्वेऽपि हृद्यामप्रियत्वरूपकार्य्यस्याभावात् विशेषोक्तिः; अथवा पाण्डुच्छायाकृशताद्यभावरूपकारणाभावसत्त्वेऽपि प्रियदर्शनत्वरूपकार्य्यस्य उत्पत्तिकथनात् विभावना; एवं विभावनाविशेषोक्तिमूलकः सन्देहसङ्करो नामालङ्कारः; तथा "कुवलयदलस्निग्धैः" इत्यत्र लुप्तोपमा चेति सुधीभिर्विभाव्यम्]। हरिणी वृत्तम्। तल्लक्षणं यथा— "नसमरसला गः षड्वेदैर्हयैर्हरिणी मता" इति। "वितरति गुरुः" इति श्लोके प्रकारादिकं द्रष्टव्यम् ॥ २२ ॥

(ब) सीता "सखि सीते! कथं न पश्यसि?" इत्यादि वासन्तीवचनस्य प्रत्युत्तरमाह, प्रेक्षे इति।—प्रेक्षे—पश्यामि [अत्र द्विरुक्त्या प्रेक्षणे निश्चयो बोध्यते, प्रेक्षे एव इति तदर्थः] आर्य्यपुत्रस्य ईदृशीं दुरवस्थां पश्याम्येव, किन्तु प्रतीकारासमर्थया मया दृष्टापि किमनुष्ठेयम्? इति भावः।

(भ) पुत्रि!—हे तनये! वत्से इत्यर्थः। प्रियं—रामम्। पश्यन्ती—प्रेक्षमाणा। भूयाः,—भव, निरन्तरं प्रियं प्रेक्षस्व, पुनश्च प्रियेण समागमो भवतु इति भावः। [अत्र "पश्य प्रियं भूयः" इति पाठे—भूयः,—पुनःपुनरित्यर्थः। प्रियं—राममित्यर्थः]।

(म) हेति।—हा—इति विषादे। ("हा विषादे च शोके च कुत्सादुःखार्त्तयोः

तमसा। [ सस्नेहास्रं परिष्वज्य ]। ( ण )—

रपि" इति मेदिनी )। दैव!—विधातः!, एषः,—आर्य्यपुत्रः रामः। मया विना—मम साहचर्य्यम् ऋते, अवतिष्ठत इति शेषः। अहं—सीता अपि। एतेन विना—आर्य्यपुत्रविरहिता इत्यर्थः, अवतिष्ठेयेति शेषः। इति—इत्थम्। केन—जनेनेत्यर्थः। स्वप्नेऽपि—सुप्तिदशायामपि। सम्भावितम्—उत्प्रेक्षितम्? न केनापि इत्यर्थः। स्वप्ने हि सामर्थ्यादसम्भवदपि वस्तु अनुभवविषयतामापद्यते, आवयोस्तु जीवतोर्विरहसम्भावना केनचित् सुप्तिदशायामपि न कृता, तदहो! दैवदुर्विपाकात् स्वप्नेऽप्यसम्भवत् तदेव आवयोः सम्प्रति सञ्जातमिति भावः। तत्—तस्मात्, चिरविरहानन्तरं भाग्यात् साक्षात्कारलाभादित्यर्थः। मुहूर्त्तक-मपि—अल्पक्षणमपि ज्यार्थमित्यर्थः, भाग्यविपर्य्ययात् सुचिरावलोकनासम्भवादिति भावः। [ अल्पो मुहूर्त्तः इति मुहूर्त्तकः तम्, "अल्पे" ( ५।३।८५ पा० ) इति मुहूर्त्तादल्पार्थे कन्, ततः "कालाध्वनोरत्यन्तसंयोगे" ( २।३।५ पा० ) इति द्वितीया ]। जन्मान्तरत इव—अन्यस्मिन् जन्मनि इव इत्यर्थः, [ अन्यत् जन्म इति जन्मान्तरं तस्मिन् "आद्यादिभ्य उपसंख्यानम्" ( वा० ) इति सप्तम्यास्तसिः। अत्र "जन्मान्तरात्" इत्यपि पाठो दृश्यते, जन्मान्तरं प्राप्य इति तदर्थः, तत्र "ल्यब्लोपे कर्म्मण्यधिकरणे च" ( वा० ) इति ल्यब्लोपे पञ्चमी ]। अनुलब्ध-दर्शना—पुनःप्राप्तसाक्षात्कारा, अहमिति शेषः। [ अनुलब्धं दर्शनं यया सा इति विग्रहः। अत्र "लब्धदर्शनम्" इति पाठे—लब्धं दर्शनं यस्य तथोक्तम् इति विग्रहेण एतत् "आर्य्यपुत्रम्" इत्यस्य विशेषणम् ]। वाष्पसलिलान्तरेषु—वाष्प-सलिलानां नयनजलानाम् अन्तरेषु पततोऽश्रुनयनयोरवकाशेषु। वत्सलं—मयि नितरामनुरागिणम्। प्रेक्षे—पश्यामि। का कथा समागमस्य? अधिकदर्शन-स्यापि अतिदुर्लभतया, भाग्यलब्धेन तेनैव सम्प्रति आत्मानं तर्पयामीति भावः। इति—इत्थं निश्चित्य। सतृष्णं—साग्रहम्; यथा पिपासाऽऽकुलकण्ठः पानीय-मधिगतः साग्रहं तत् पिबति, तथा सीताऽपि चिरविरहकातरतया भाग्यागतं तं प्राणप्रियतमं सादरमवेक्षते इति तात्पर्य्यम्।

( ण ) सस्नेहास्रं—स्नेहेन सीतां प्रति वात्सल्येन यद् अस्रं नयनाम्बु तेन सहितं यथा स्यात् तथा। परिष्वज्य—आलिङ्ग्य, [ परिपूर्वात् स्वजतेर्ल्यप्, ततः "उपसर्गात् सुनोतिसुवतिस्यति—" ( ८।३।६५ पा० ) इति षत्वम् ]।

विलुलितमतिपूरैर्बाष्पमानन्दशोक-
प्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा।
स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः ॥ २२ ॥

वासन्ती। ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः।

---

चिरविरहकातरामतितरां पतिध्यानपरां जानकीं सुचिरकालात् परमद्य स्वामि-साक्षात्कारलाभादनन्यमनसा तदेकबद्धदृष्टिमालोक्य तमसा तदीयां तदानीन्तनी-मवस्थाम् उपवर्णयन्ती आह, विलुलितेति।—आनन्दशोकप्रभवं स्वामिसन्दर्शनजनितात् आनन्दात्, विरहजनितात् तथा पुनर्मिलनाभावसम्भावनसमुत्थात् शोकाच्च प्रभवः उत्पत्तिर्यस्य तं तथोक्तं, युगपदानन्ददुःखसमुत्थमिति यावत्; यद्वा—प्रभवति अस्मा-दिति प्रभवः कारणम्, आनन्दशोकौ प्रभवः कारणं यस्य तं तथोक्तम्, अतिपूरैः प्रवाह-वेगैः, विलुलितं विगलितं, बाष्पमश्रु, अवसृजन्ती अभिवर्षन्ती, तृष्णया प्रबलदर्शनेच्छया हेतुना, उत्ताना विस्फारिता अत एव दीर्घा च दूरविलम्बिता च, निश्चलत्वाद्दीर्घेव प्रतायमाना इत्यर्थः, स्नेहनिष्यन्दिनी स्नेहसूचिका, धवलबहला अञ्जनराहित्यात् अति-शयशुभ्रा, मुग्धा मनोहारिणी च, अत एव दुग्धकुल्येव पयःपूरितकृत्रिमाल्पसरिदिव प्रतीयमाना, ("कुल्याल्पा कृत्रिमा सरित्" इत्यमरः) ते तव, दृष्टिः दर्शनं, हृदयेशं जीवितेश्वरं रामं, स्नपयति अभिषिञ्चति। ["दुग्धकुल्येव" इत्यत्र प्रकृतायाः दृष्टेः शुभ्रता-ऽतिशयसाम्यात् पयःपूरितकृत्रिमाल्पसरिद्रूपेण सम्भावनादुत्प्रेक्षानामालङ्कारः; एवं यथा काचित् कञ्चित् स्नपनार्थं स्नेहद्रव्येण सर्वाभिषिच्य जलं वर्षति, तद्वत् तव दृष्टिः रामं स्नेहेन संयोज्य नेत्रजलं वर्षतीति दृष्ट्यां कञ्चित् पुमांसं स्नपयन्त्याः कस्याश्चिन्नायि-कायाः व्यवहारसमारोपात् समासोक्तिः। किञ्च दृष्टेः स्नपनकर्तृत्वासम्बन्धेऽपि तत्सम्बन्ध-कथनादतिशयोक्तिश्चेत्येतेषां परस्परमङ्गाङ्गिभावेन सङ्करः]। मालिनी वृत्तम्॥ २२॥

अस्या वनभूमेरधिष्ठात्री देवी वासन्ती सुचिरकालानन्तरं प्रियसहचरं स्वभवनमिव वनभूमिमागतं प्रियातिथिं सीतापतिं सत्कर्तुं निर्देशवर्तिनः अनुचरानिव पादप-पवनादीन् उचितमातिथ्यमुपकल्पयितुं यथाक्रममादिशति, ददत्विति।—तरवो वृक्षाः, मधु श्च्योतन्तीति मधुश्च्युतः [ यद्यपि क्षरणार्थकस्य श्च्युतधातोरकर्मकत्वं सिद्धं, तथापि क्वचित् सकर्मकता अस्य कविभिरङ्गीकृता ; तथाच "रक्तमश्च्योतिषुः क्षुधाः" इति भट्टौ ( १७।५१ ), मालतीमाधवे च—"निश्च्योतन्ते सुतनु कबरीबिन्दवो यावदेते"

कलमविरलं रत्युत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ २४ ॥

श्रुति। अतः "मधु प्रीणाति एभ्यः" इति व्युत्पत्तिः साधीयसी इति ] मधुस्राविणः स्निग्धाः, [ एतेन मधुपर्ककल्पनमपि सूच्यते ] पुष्पैः सोत्पलैः कुसुमैः फलैश्च करणैरर्घ्यं पूजासाधनं, मधुयुतानि पुष्पाणि फलानि चेत्यर्थः, ददतु, रामायेति शेषः। स्फुटितानां विकासितानां कमलानां पद्मानाम् आमोदस्य सौरभस्य प्रायो बाहुल्यं येषु ते तथोक्ताः [ एतेन वायौ सौरभातिशय्यं दर्शितम् ]. ("आमोदः सोऽतिनिर्हारी" इति "प्रायो भूम्न्यन्तगमने" इति चामरः) वनानिलाः अरण्यवाताः अथवा सलिलवाताः, ("वनं नपुंसकं नीरे निवासालयकानने" इति मेदिनी) [ एतेन शैत्यमप्युक्तम् ] प्रवान्तु मन्दं सुखकरं, मन्दमिति यावत्, वहन्तु रामस्य शरीरसन्तापमपनेतुमविश्रान्तं धीरसञ्चारेण एनं वीजयन्त्वित्यर्थः। रत्या प्रियागमनसमुद्भूतेन अनुरागभरेण उत्कण्ठाः उन्नमितग्रीवा इत्यर्थः, [ उत् ऊर्ध्वंगताः कण्ठा येषां ते तथोक्ताः इति विग्रहः ] यद्वा—रत्यां क्रीडायां सुरते वा उत्कण्ठा औत्सुक्यं येषां ते तथोक्ताः, कालवशात् परस्परं कामक्रीडासक्ता इति यावत्, [ एतेन सुमधुरध्वनित्वं व्यज्यते ] शकुन्तयः पक्षिणः, ("शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः" इत्यमरः) अविरलम् अविश्रान्तं, कलं मधुरं यथा तथा, क्वणन्तु गायन्तु, स्वकीयास्फुटमधुरध्वनिना गृहागतं महाराजं स्तुतिपाठका इव स्तुतिगीतिमङ्गलैः तोषयन्तु इति भावः। कुतः? इत्याह, पुनरिति।—देवो भगवान्, अयं रामः, स्वयम् आत्मना, पञ्चवटीवसतिसुखलाभाय सम्प्रति स्वप्रकृतिपरिचालितः इति यावत्, [ "प्रकृत्यादिभ्य उपसंख्यानम्" (वा०) इति तृतीया ] पुनः भूयः, इदं वनमागतः। राज्ञो रामस्य स्वागतार्थं तरवः अर्घ्यभाजनधारिणः, सरोवरवाताः व्यजनकारिणः, पक्षिणश्च वैतालिका भवन्त्विति भावः। वनाधिदेवतात्वात् वासन्त्या कथितमेतद् युक्तमेव [ यथा कश्चिन्नरपतिः स्वभवनमागतमतिथिभूतमपरं कमपि नरनाथं स्वागतवचनैरभ्यर्च्य फलजलकुसुमादिविरचितमर्घ्यपाद्यमधुपर्कमुपकल्प्य शीतसुरभिव्यजनैर्मन्दमुपवीज्य मागधैस्तत्कीर्तिकलापं श्रावयंस्तोषयति, तथा इयमपि वनाधिष्ठात्री देवी वासन्ती स्वनिर्दिष्टैर्वार्त्तिभिः पवनपादपादिभिः तानि तानि सम्पाद्य रामं तोषयतीति वस्तु व्यज्यते, इति शब्दशक्तिमूलो वस्तुध्वनिः। अत्र पूर्वपादत्रितयगतवाक्यबोधितान् अर्घ्यदानादीन् प्रति रामागमनरूपचतुर्थपादगतवाक्यार्थस्य हेतुत्वेन निर्देशात् काव्यलिङ्गमलङ्कारः ]। हरिणी वृत्तम् ॥ २४ ॥

रामः। एहि सखि वासन्ति ! नन्वितः स्थीयताम्। (र)

वासन्ती। [उपविश्य, सास्रम्।] महाराज ! अपि कुशलं कुमारलक्ष्मणस्य ? (ल)

रामः। [अश्रुतिमभिनीय।] (व)—

करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान् मैथिली यानपुष्यत्।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः ॥ २५ ॥

(र) सखि !—सहचरि ! एहि—इत आगच्छ। "ननु" इति—अनुज्ञायाम् अनुनये वा ("ननु प्रश्ने परकृतावधिकारे च सम्भ्रमे। आमन्त्रणेऽप्यनुनये प्रश्नानुज्ञाऽवधारणे॥" इति मेदिनी)। इतः,—अस्मिन्, पुरोवर्त्तिनि स्थाने इत्यर्थः। स्थीयताम्—उपविश्यताम्।

(ल) सास्रम्—सनयनजलम्, पूर्ववृत्तान्तस्मरणेन वासन्त्या अश्रुपातः। अत्र अपिशब्दः प्रश्नबोधकः, ("अपि सम्भावनाप्रश्न-शङ्कागर्हासमुच्चये" इति मेदिनी)। "महाराज !" इति वासन्त्या निष्प्रणयमामन्त्रणपदम्। (सुचिरमेकत्र वासेन एतयोरुभयोः निरतिशयप्रणयसद्भावेऽपि सम्प्रति वासन्ती प्राणाधिकप्रियतमायाः सहचर्य्याः सीतायाः अकारणनिर्वासनवृत्तान्तश्रवणेन अतिदुःखिता उदासीना इव प्रणयपात्रेऽपि ईदृक्कठोरमामन्त्रणमभिहितवतीति बोध्यम्)। कुशलम्—क्षेमम्। कुमारलक्ष्मणस्य—कुमारस्य सौमित्रेः, (पूर्वं-मरण्यवासकाले ससीतालक्ष्मणेन रामेण परिचये प्रणये च जातेऽपि सर्वतोऽधिक-प्रेमास्पदायाः सीतायाः कुशलप्रश्नं पूर्वमकृत्वा केवललक्ष्मणस्य कुशलप्रश्नकरणेन वासन्ती "एतावता कालेन निर्वासितायाः सीतायाः मरणावश्यम्भावात् तत्कुशलप्रश्नो निरर्थक एव" इति स्वमनोभावं व्यनक्ति। वनमध्ये एकाकिनीं सीतां परित्यक्तवतः लक्ष्मणस्य कुशलप्रश्नः वासन्त्याः तिरस्कारगर्भो सोल्लुण्ठनोक्तिरेवेति बोध्यम्)।

(व) अश्रुतिम्—अनाकर्णनम्। अभिनीय—अभिनयेन प्रकाश्य, वासन्ती-कथितं सोत्प्रासवचनं श्रुत्वाऽपि अश्रुत्वा इवेत्यर्थः, आह इति शेषः।

अभिन्नहृदयायाः प्रियसहचर्य्याः सीतायाः निष्कारणनिर्वासनवार्त्ताश्रवणकातराया वासन्त्याः सोत्प्रासपश्नश्रवणहेतुभूतं स्वमनसोऽन्यासक्तत्वमाख्यातुं विषयान्तरमुपन्यस्यति, करकमलेति।—मैथिलस्य मिथिलाऽधिपतेर्जनकस्य अपत्यं स्त्री इति मैथिली

वासन्ती । महाराज ! ननु पृच्छामि, अपि कुशलं कुमारलक्ष्मणस्य ? (श)

रामः । [स्वगतम् ।] अये महाराजेति निष्प्रणयमामन्त्रणपदं, सौमित्रिमात्रे च वाष्पस्खलिताक्षरः कुशलप्रश्नः, तथा मन्ये विदितसीतावृत्तान्तेयमिति । [प्रकाशम् ।] आं कुशलं कुमारस्य । (ष)

[इति रोदिति] ।

---

जानकी [मिथिलाया ईश्वर इति मैथिलः "तस्येदम्" (४।३।१२० पा०) इति अण्प्रत्ययः, ततः मैथिलस्य अपत्यं स्त्री इति मैथिली "अत इञ्" (४।१।९५ पा०) इति अपत्यार्थे इञ्, ततश्च "इतो मनुष्यजातेः" (४।१।६५ पा०) इति ङीष्] करः कमलमिव निरतिशयकोमलतया रक्तवर्णतया च पद्ममिव तेन वितीर्णैर्दत्तैः अम्बुनीवारशष्पः जलतृणधान्यनवोद्गततृणैः करणैः ("तृणधान्यानि नीवाराः" इति "शष्पं बालतृणम्" इति चामरः) यान् तरुशकुनिकुरङ्गान् वृक्षपक्षिहरिणान्, यथासंख्यम् अन्वयः,—सलिलसिक्तैः पादपान्, तृणधान्यैर्विहगान्, कोमलतृणैः हरिणान् इत्यर्थः । अपुष्यत् पुपोष । तेषु तरुशकुनिकुरङ्गेषु दृष्टेषु सत्सु, मयेति शेषः, प्रस्तरस्य पाषाणस्य उद्भेदे उद्भिद्य द्रवीकरणे योग्यः समर्थः द्रव इव कोऽपि अनिर्वचनीय इत्यर्थः, मम हृदयस्य चित्तस्य विकारः शोकादिजन्यविकृतिर्भवति ; अनेन विकारेण पाषाणा अपि द्रवीभवन्ति किं पुनर्मांसासृगस्थिसम्बद्धोऽयं देह इति भावः । [अत्र प्रथमोद्दिष्टानामम्बुनीवारशष्पाणामनन्तरं यथाक्रम तरुशकुनिकुरङ्गाणामुद्देशात् यथासंख्यमलङ्कारः, "यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत्" इति दर्पणकृल्लक्षणात् । स च "प्रस्तरोद्भेदयोग्यः द्रव इव" इत्युत्प्रेक्षया, तथा "करकमलवितीर्णैः" इत्यत्र करः कमलमिवेति समासगतया उपमया च संसृज्यते । एवमत्र "प्रस्तरोद्भेदयोग्यः" इति विशेषणप्रक्षेपात् हृदये प्रस्तरवदतिकाठिन्यविद्योतनेन उपमालङ्कारश्चान्यो ध्वन्यते इति बोध्यम्] । मालिनी वृत्तम् ॥ २५ ॥

(श) वासन्ती पूर्वोक्तं स्ववचनं रामो न श्रुतवानिति निश्चित्य "ननु पृच्छामि" इत्यनेन अन्यासक्तमानसं तं स्ववचसि अवधानपरं विधाय भूयोऽप्याह, अपीति । अन्यत् सर्वं पूर्वं व्याख्यातम् ।

(ष) निष्प्रणयम्—प्रणयाभावसूचकम् [निर्गतः प्रणयो यस्मादिति तत् निष्प्रणयम् इति विग्रहः] आमन्त्रणपदं—सम्बोधनपदम् । सौमित्रिमात्रे च—केवलं लक्ष्मणे च, लक्ष्मणमात्रविषयः, न तु सीताविषय इत्यर्थः, [सुमित्रायाः अपत्यं पुमान् इति सौमित्रिः,

वासन्ती । अयि देव! किमिति दारुणो दारुणः खल्वसि? (स)

सीता । सहि वासन्दि! किं तुमं सि एव्वंवादिणी, पिआरहो क्खु सव्वस्स अज्जउत्तो, विसेसदो मम पिअसहीए *। (ह)

* सखि वासन्ति! किं त्वमसि एवंवादिनी, प्रियार्हः खलु सर्वस्य आर्य्यपुत्रः, विशेषतो मम प्रियसख्याः ।

"बाह्वादिभ्यश्च" (४।१।९५ पा०) इति सुमित्राशब्दात् इञ्प्रत्ययः, सौमित्रिरेव इति सौमित्रिमात्रं तस्मिन् "मयूरव्यंसकादयश्च" (२।१।७२ पा०) इति समासः, ततः विषयाधिकरणे "सप्तम्यधिकरणे च" (२।३।३६ पा०) इति सप्तमी]। कुशलप्रश्नः,—मङ्गलजिज्ञासा। वाष्पस्खलिताक्षरः,—वाष्पेण वाष्पभरावरुद्धकण्ठतयेत्यर्थः, स्खलितानि अस्पष्टोच्चारितानि अक्षराणि यस्मिन् स तथोक्तः। तथा—तेन हेतुना। मन्ये—सम्भावयामि। विदितसीतावृत्तान्ता,—विदितः ज्ञातः सीतावृत्तान्तः सीता-निर्वासनव्यापारः यया सा तथोक्ता। इयं सीतानिर्वासनवृत्तान्तं ज्ञातवतीत्यर्थः, अन्यथा सीताया अपि कुशलं पृच्छेदिति भावः। [अत्र "सीतायाः त्यागरूपो वृत्तान्तः इति सीतावृत्तान्तः" इत्यत्र त्यागपदाकथनेन रामस्य त्यागशब्दोच्चारणे क्लेशोद्दीपकतया असामर्थ्यमेव द्योत्यते, तथा च न्यूनपदता न दोषाय, अपि तु रसस्य पोषायैव जातेति बोध्यम्] आम्—एवं, लक्ष्मणस्य कुशलमेवेत्यर्थः, [आमिति स्वीकारसूचकमव्ययम्]।

(स) रामस्य प्रत्युत्तरमाकर्ण्य वासन्ती स्वकृतप्रश्नाभिप्रायो रामेण सम्यगधिगतः इति निश्चित्य आह, अयीति।—किमिति—कथम्। दारुणो दारुणः,—अतिदारुणः, अतिकठोरः इत्यर्थः [अत्र आतिशय्ये द्विरुक्तिः]; अन्यथा को जनः निष्कारणं निरपराधां प्रियतमां सहधर्मिणीं निर्वासयतीति भावः।

(ह) सीताविषयिणीं वार्त्तामधिकृत्य रामं तिरस्कुर्वन्त्यां वासन्त्यां सीता तदाकर्णनासहना इव वासन्तीं ततो निवर्त्तयति, सखीति।—किम्—कथम्। एवंवादिनी—"दारुणो दारुणः" इत्येवंकठोरभाषिणी। तत्र को दोषः? इत्याह, प्रियार्हः इति।—प्रियवचनार्हः इत्यर्थः। विशेषतः,—विशेषेण, ["प्रकृत्यादिभ्य उपसंख्यानम्" (वा०) इति तृतीया। ततः "इतराभ्योऽपि दृश्यन्ते" (५।३।१४ पा०) इति—तृतीयायास्तसिः]। प्रियसख्याः,—प्रियसहचरीजनस्येत्यर्थः, यतः आर्य्यपुत्रः मम प्राणेभ्योऽपि प्रेयान्, अतः मम प्रियसहचरीभिरपि तस्मिन् साधारणापेक्षया अधिकतरा प्रीतिः दर्शनीयेति भावः।

वासन्ती।—त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव, शान्तमथवा किमिहोत्तरेण ? ॥ २६ ॥

[ इति मूर्च्छति। ]

वासन्ती "दारुणो दारुणः" इति यदभिहितवती, सम्प्रति तदेव युक्त्या समर्थयमाना आह, त्वमिति।—त्वं मे मम जीवितं प्राणाः, जीवितवत् प्रियतमेत्यर्थः, असीति शेषः, त्वां विना नाहं जीवामीति भावः ; त्वं मे मम द्वितीयं हृदयम् असि भवसि, सर्वविषयेष्वेव परस्परमेकात्मतया अपरम् अन्तःकरणमिवेत्यर्थः, त्वदज्ञातं मे किमपि रहस्यं नास्तीति भावः। त्वं मे नयनयोः नेत्रयोः कौमुदी ज्योत्स्ना, कौमुदीव स्निग्धकरी प्रीतिजनिका च इत्यर्थः, ("कौ मोदन्ते जना यस्यां तेनासौ कौमुदी मता" इति कौमुदीपदनिरुक्तेः ), न मे चक्षुषस्त्वया विना तृप्तिरिति भावः। त्वं मे अङ्गे अमृतं पीयूषं सुधावदनिर्वचनीयसुखोत्पादिनीत्यर्थः, त्वदधिकं सुखकारणं मे किमपि नास्तीति भावः। इत्यादिभिः एवमादिभिः प्रियशतैः अमितैः प्रियवचनैः श्रुतिसुखकरचाटुभिरिति यावत्। ( अत्र शतशब्दोऽपरिमितत्वबोधकः "शतं सहस्रमयुतं सर्वमानन्त्यवाचकम्" इत्युक्तेः, ) मुग्धां "प्रथमावतीर्णयौवनमदनविकारा रतौ वामा। कथिता मृदुश्च माने समधिकलज्जावती मुग्धा॥" इत्युक्तलक्षणां सरलहृदयां बालाम् अनुरुध्य प्रीणयित्वा ; सीता यदि एवं सरलहृदयतया त्वयि निरतिशयं विश्वस्ता नाभविष्यत्, तदा त्वम् एवंविधैरमितैश्चाटुवचनैः तां कथमपि प्रतारयितुं न प्राभविष्य इति भावः ; तामेव निरतिशयविश्वस्तहृदयां त्वदेकमात्रजीवितामित्यर्थः, निर्वासितवानिति वाक्यशेषः, वासन्त्या निश्वासवाष्पावरोधशोकसम्भारद्योतनार्थं कविना न कृतः, तदुच्चारणाशक्तेर्वासन्त्याः तत्रैव विश्राम इत्याशयः। अथ सा कथञ्चित आत्मानं संयम्य असम्पूर्णां निजोक्तिमिदानीं समापयितुम् उद्युक्ताऽपि तादृशनिर्म्ममचेतसः पाषाणोपमस्य रामस्य अमप्रदर्शनेन पुनः करुणासम्पादनप्रयासो विफल एवेति मन्यमाना आह, शान्तमिति।—अथवा किंवा शान्तम् असह्यत्वात् अप्रतिकार्य्यत्वाच्च पुनः किमपि न कथनीयम्, एतदवलम्ब्य भवन्तमुपालभ्य न किमपि फलं भविष्यतीति भावः। इह अस्मिन् सीताविषये उत्तरेण वाक्येन, सीतायास्तादृशदशाविपर्य्यासात् परेण वाग्विन्यासेन किम् ? किं प्रयोजनम् ? अधुना तत् सर्वथैव निष्प्रयोजनमिति भावः। [ इह "त्वं जीवितम्"

रामः। स्थाने खलु वाक्यनिवृत्तिर्मोहश्च। सखि! समाश्वसिहि समाश्वसिहि। (क)

वासन्ती। [समाश्वस्य।] तत् किमिदमकार्य्यमनुष्ठितं देवेन? (ख)

सीता। सहि वासन्दि! विरम विरम। * (ग)

रामः। लोको न मृष्यतीति। (घ)

वासन्ती। तत् कस्य हेतोः? (ङ)

* सखि वासन्ति! विरम विरम।

इत्यत्र "त्वं कौमुदी नयनयोरमृतं त्वमङ्गे" इत्यत्र च युष्मत्पदवाच्ये जीवित कौमुदीसुधातादात्म्यारोपात् रूपकम्; तत्र सर्वत्र केवलस्यैव रूपणात् मालारूपं निरङ्गम्। एवं "त्वमसि मे हृदयं द्वितीयम्" इत्यत्र एकस्य जनस्य हृदयद्वयासम्बन्धेऽपि तत्सम्बन्धकथनात् असम्बन्धे सम्बन्धकथनरूपाऽतिशयोक्तिः, तथा "तामेव" इत्यनन्तरं विवक्षितस्य "निर्वासितवान्" इति वाक्यसमापकांशस्य "निष्करुणे त्वयि इतोऽधिकमनर्थकम्" इत्येवं विशेषप्रतिपत्तये निषेधवदाभासनात् आक्षेपनामकश्चालङ्कारः; इत्येतेषां परस्परं निरपेक्षतया संसृष्टिः]। वसन्ततिलकं वृत्तम्॥ २६॥

(क) वाक्यनिवृत्तिः,—वासन्त्या वाग्विरामः। मोहश्च—मूर्च्छा च। स्थाने खलु—युज्यते एव, इदं द्वयमपि सीतायाः प्रियसख्याः तव युक्तमेवेत्यर्थः, ("युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः) अतिशयितशोकोद्दीपकत्वादस्याः निर्वासनजन्यस्य वासन्तीहृद्गतभावस्येति भावः।

(ख) तत्—तस्मात्, यदि मम वाक्यनिवृत्तेर्मोहस्य च युक्तत्वं मन्यसे तद्देत्यर्थः। किमिति—कथम्। अकार्य्यम्—अनुचितं कार्य्यम्।

(ग) विरम—ईदृशकठोरवाक्यकथनात् विरता भवेत्यर्थः; (अत्र सम्भ्रमे द्विरुक्तिः,—"विवादे विस्मये हर्षे—" इत्याद्युक्तेः)।

(घ) लोकः,—प्रकृतिवर्गः, राज्याधिवासी जन इत्यर्थः। न मृष्यति—न तितिक्षते, सीतायाः गृहावस्थानमिति शेषः, तत्र प्रकृतिवर्गस्य वाञ्छितत्वमित्यर्थः। इति—अस्माद्धेतोः, इदमकार्य्यमप्यनुष्ठितं मयेति शेषः। मम प्रकृतिवर्गः सीतायाः विशुद्धिं प्रति सन्दिहानः तस्याः राजगृहावस्थानं न बहु मन्यते इति तामनिच्छन्नपि निर्वासितवानस्मीति भावः।

(ङ) तत—लोकस्य अमर्षणम्। कस्य हेतोः,—केन हेतुना? कस्मात् कारणात् लोको न मृष्यतीत्यर्थः। [अत्र "षष्ठी हेतुप्रयोगे" (२।३।२६पा०) इति षष्ठी]।

रामः। स एव जानाति किमपि। (च)

तमसा। उचितस्तदुपालम्भः। (छ)

वासन्ती।—अयि कठोर! यशः किल ते प्रियम्

किमयशो ननु घोरमतः परम्?।

किमभवद्विपिने हरिणीदृशः

कथय नाथ! कथं बत मन्यसे?॥ २७॥

(च) स एव—पुरवासी जन एव, नान्या मादृशः कश्चिदिति एवकारार्थः। किमपि—अनिर्व्वचनीयम्, अस्माभिर्ज्ञातुमशक्यं, निमित्तमिति शेषः। तादृशज्ञानस्य प्रकृतकारणाभावात् न मया न वा अन्येन बुद्धिमता ज्ञातव्यमिति भावः। सर्वथा अस्मा निष्करुणाश्च लोकाः, लोकानुरञ्जनञ्च मे कर्त्तव्यं, तत् किं मया क्रियतां सीतापरित्यागादन्यत् इति फलितार्थः।

(छ) तदुपालम्भः,—तस्य लोकस्य उपालम्भः [घञि कृते "लभेश्च" (७।१।६४ पा०) इति सूत्रेण नुमागमः] तिरस्कारः। उचितः,—न्याय्यः, आसीदिति शेषः, ("अभ्यस्तेऽप्युचितं न्याय्यम्" इति कोषः)। अतिपवित्रचरितायाः जनकसुतायाः निर्निमित्तकापवादविघोषणात् कृतापराधः पौरजनः एव दण्डनीयः, न तु लेशतोऽपि कञ्चिदपराधमकुर्वाणा सीता दण्डार्हेति भावः।

पौरजनामर्षणमेव निरपराधाया अपि सीताया निर्वासने हेतुरिति यद्द रामेणोक्तं, तन्नाह, अयीति।—अयि कठोर! हे कठिनहृदय! ते तव यशः कीर्त्तिः प्रकृतिकृतगुणानुकीर्त्तनमिति यावत्, प्रियम् आदरणीयं, किलेति प्रसिद्धौ, निश्चये वा। निरपराधायाः प्राणेभ्योऽपि प्रियतमायाः सीतायाः निर्वासनेनापि प्रकृतीनां मनो रञ्जयता त्वया यशस एव श्रेष्ठत्वमङ्गीकृतमिति भावः। किं तेन? इत्याह, किमिति।—ननु भोः देव! अतः अस्मात्, अतिपवित्रचरितां निरपराधां सीतां निर्द्दयं निर्वासयता यदयशः अर्ज्जितमित्यस्मादित्यर्थः, परम् अधिकम् अयशः अकीर्त्तिः लोकापवाद इति यावत्, किं स्यात? यशोधनत्वेन भुवि विख्यातस्यापि तव प्राणप्रियतमायाः निरपराधायाः आसन्नप्रसवायाः धर्म्मपत्न्या निर्ज्जनवनान्निर्व्वासनसमुत्थमिदमयशः तव सर्व्वं यशोऽपाकरोतीति भावः। ननु को मे ईदृशस्य अयशसो हेतुः? इत्याह, किमिति।—नाथ हे प्रभो! हरिणीदृशः मृगलोचनायाः असहायाया इति यावत्, [एतेन निर्ज्जने अरण्ये एकाकिन्याः परित्यागात् रमणीजनसुलभेन भयेन तदा हरिण्या इव तस्याः नयने अचञ्चले

सीता। तुमं ज्जेव सहि वासन्दि! दारुणा कठोरा अ, जा एव्वं अज्जउत्तं पदित्तं पदीवेसि। * (ञ)

तमसा। प्रणय एवेदं व्याहरति शोकश्च। (झ)

रामः। सखि! किमत्र मन्तव्यम्? (ञ)—

* त्वमेव सखि वासन्ति! दारुणा कठोरा च, या एवम् आर्य्यपुत्रं प्रदीप्तं प्रदीपयसि।

जात इत्यर्थो व्यज्यते] सीतायाः इति शेषः, विपिने हिंस्रश्वापदसङ्कुले वने किम् अभवत् कीदृशी अवस्था जाता, कथय ब्रूहि, तदिति शेषः। बत खेदे, ("बतामन्त्रणसन्तोष-खेदानुक्रोशविस्मये" इति मेदिनी)। कथं किंप्रकारं मन्यसे भावयसि? अथवा—कथं मन्यसे किमुपेक्षसे, सर्वं विचिन्त्य किं निर्णीतवानिति कथयेत्यर्थः; अहो ते अविवेकित्वं चित्तकाठिन्यञ्चेति भावः। [अत्र रामो राजधर्म्मानुसारात् पौरचित्तानुरञ्जनहारेण यशोलाभाशया सीतां निर्वासितवान्, फलतस्तु तद्वैपरीत्येन प्राणप्रियायाः आसन्नप्रसवायाः निरपराधायाः जनकतनयाया निर्वासनाल्लोकापवाद एव अजनीति "यदाऽऽरब्धस्य वैफल्यमनर्थस्य च सम्भवः" इत्युक्तलक्षणको विषमो नाम अलङ्कारः; तथा "हरिणीदृशः" इत्यत्र समासगता लुप्तोपमा चेत्यनयोः संसृष्टिः]। द्रुतविलम्बितं वृत्तम्; "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात्। इदं हि १४६४तम प्रस्तारान्तर्भूतं वृत्तम्॥ २७॥

(ञ) त्वमेवेति।—अत्र एवशब्देन अन्ययोगं व्यवच्छिनत्ति, नान्या इत्यर्थः। दारुणा—भीषणस्वभावा। कठोरा—निर्दया च। एवं—परिदृश्यमानरूपेण। प्रदीप्त—शोकावेगेन ताप्यमानम्। प्रदीपयसि—सन्तापयसि, एवंविधनिर्दयव्यवहारेण मद्वियोगशोकसन्तप्तमपि आर्य्यपुत्रं पुनर्नितरां शोकाभिभूतं करोषीत्यर्थः। [अत्र "एव्वं विलवन्ती पदीवेसि" इति पाठे—"एवं विलपन्ती प्रदीपयसि" इत्यनुवादः]।

(झ) प्रणयः,—रामं प्रति अनुरागः। शोकः,—त्वन्निर्वासनजनितो दुःखातिशयश्च। इदं—पूर्वोक्तप्रकारम्, अयि कठोरेत्यादि वासन्तीकथितमुपालम्भवचनम्। व्याहरति—कथयति। शोको मोहश्च एतामेवंवादिनीं करोति, अतो नास्याः दोषः इत्यर्थः।

(ञ) वासन्त्या पूर्वं शोकशेषेण "कथं बत मन्युसे" इति पृष्टो रामः सम्प्रति प्रतिवक्ति, सखीति।—सखि—सङ्गिनि! अत्र—अस्मिन्, सीताविषये इत्यर्थः।

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः।
ज्योत्स्नामयी च मृदुबालमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता॥ २८॥

किं मन्तव्यम्—अपरं किं विभावनीयम्? नूनं सा मृतेति किमप्यन्यत् नास्ति चिन्तनीयमिति भावः।

असहायायाः निर्जनवननिर्वासितायाः सीतायाः मरणादन्यत् न किञ्चिदस्ति सम्भावनीयमिति यदुक्तं, तदेव समर्थयमानः आह, त्रस्तैकेति।—त्रस्तस्य भीतस्य एकहायनस्य एकवर्षवयस्कस्य [ एकः हायनः वर्षं यस्य स एकहायनः "हायनो न स्त्रियां वर्षे पुंस्यर्चिर्व्रीहिभेदयोः" इति मेदिनी ] कुरङ्गस्य हरिणस्येव विलोला चपला दृष्टिः नयनं यस्याः तथोक्तायाः भीतिविह्वलहरिणशावकवच्चपलायतदृशः इत्यर्थः; कुरङ्गदृष्टिः स्वभावत एव चञ्चला, तत्रापि त्रस्तस्य एकहायनस्येति च विशेषणद्वयं चाञ्चल्यातिशय्यद्योतनार्थं, भीतत्वात् शिशुत्वाच्चाधिकचञ्चला हि हरिणदृष्टिर्भवतीति प्रसिद्धिः। परिस्फुरितस्य भयादतिकम्पितस्य गर्भस्य भरेण भारेण अलसायाः मन्थरायाः, भीतिहेतोः आत्मत्राणासमर्थाया इति यावत्, तस्याः सीतायाः ज्योत्स्नामयी चन्द्रिकामयी चन्द्रिकावत् स्निग्धलावण्यमयी इत्यर्थः; [अत्र ज्योत्स्नामयीति विशेषणेन क्रव्याद्भ्यः आत्मगोपनमपि न सम्भाव्यमिति द्योत्यते। "ज्योत्स्नामयीव" इति पाठे—ज्योत्स्नात्मिकेव ज्योत्स्नावत् स्निग्धलावण्यमयी कार्कश्यादिदोषरहिता चेत्यर्थः ] मृदु कोमलम् अपरिणतमिति यावत्, यत् बालमृणालम् अचिरोद्गतः बिसदण्डः तस्मादीषदूना इति मृदुबालमृणालकल्पा च कोमलमृणालाङ्कुरनिभा अतिपेलवा स्पर्शभङ्गुरा च इत्यर्थः, [ "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" (५।३।६७ पा०) इति ईषदसमाप्त्यर्थे कल्पप्प्रत्ययः ] अङ्गलतिका देहलता [ अल्पा लता इति लतिका "अल्पे च" (५।३।८५पा०) इति लताशब्दात् अल्पार्थे कप्रत्ययः, ततः "केऽणः" (७।४।१३ पा०) इति ह्रस्वः; ततः "प्रत्ययस्थात् कात् पूर्व्वस्यातः,—" (७।३।४४ पा०) इति अकारस्य इत् ] नियतं निश्चित, क्रव्यम् आममांसम् अदन्तीति क्रव्यादः [ "क्रव्ये च" (३।२।६९ पा०) इति सूत्रेण विट्प्रत्ययः ] तैस्तथोक्तैर्मांसलोलुपैः वनचरैः श्वापदैर्विलुप्ता भक्षितेत्यर्थः। [ इह "त्रस्तैकहायन—" इत्यत्र, तथा "मृदुबालमृणालकल्पा" इत्यत्र च समासगता उपमा। एवम् "अङ्गलतिका" इत्यत्र रूपकञ्चेत्येतयोः सङ्करः। अत्र "मृदुबालमृणालकल्पा" इत्यनन्तरं पठितुमुचितस्य चकारस्य "ज्योत्स्नामयी"

सीता। अज्जउत्त! धरामि एसा धरामि। * (ट)

रामः। हा प्रिये जानकि! क्वासि!! (ठ)

सीता। हद्धी! हद्धी! अज्जउत्तो वि प्पमुक्ककण्ठं रोदृदि!! † (ड)

तमसा। वत्से! साम्प्रतिकमेवैतत्, कर्त्तव्यानि दुःखितैर्दुःख-निर्वापणानि। यतः, (ढ)—

* आर्य्यपुत्र! भ्रिये एषा भ्रिये।

† हा धिक्! हा धिक्! आर्य्यपुत्त्रोऽपि प्रमुक्तकण्ठं रोदिति!!

इत्यनन्तरं पाठात् अस्थानपदता दोषः; स च "मृदुलबालमृणालकल्पा" इति पाठं कल्पयित्वा समाधेयः]। वसन्ततिलकं वृत्तम्॥ २८॥

(ट) आर्य्यपुत्र—स्वामिन्! एषा—मूर्त्तिमत्येव परिदृश्यमानेत्यर्थः, अहमिति शेषः। भ्रिये—जीवामि, मैवं भैषीः, नाहमद्यापि मन्दभागिनी क्रव्यात्कवलनिपतितेति भावः। ["भ्रिये" इति तौदादिकात् अवस्थानवाचिनो धृधातोः कर्त्तरि लटि रूपम्। अत सम्भ्रमे द्विर्वचनम्]। रामस्य दुःखातिशय्यमसहमानायाः विश्रुतात्मनः सीताया हठोक्तिरियम्।

(ठ) रामः स्वय "क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता" इति कथयन् विरुद्ध-सीतावियोगशोकः सम्प्रत्युच्चैर्विलपन्नाह, हा प्रिये इति।—क्व—कुत्र? अस्मिन् लोके, स्वर्लोके वेत्यर्थः।

(ड) आर्य्यपुत्त्रोऽपि—सहजतश्चपलचेतसां प्राकृतानां का कथा, लोकातिरिक्त-धैर्य्यगाम्भीर्य्यादिगुणगणोपेतः स्वामी रामचन्द्रोऽपीत्यर्थः। प्रमुक्तकण्ठम्—उच्चैःस्वर-मित्यर्थः। [प्रमुक्तः कण्ठो यस्मिन् रोदने तत् यथा तथा]। रोदिति—विलपतीत्यर्थः। अलौकिकधैर्य्यशालिनोऽप्येवं प्राकृतवदुच्चैर्विलापः असहनीयम् अस्य शोकसंवेगं व्यनक्तीति भावः।

(ढ) वत्से—सीते! एतत्—उच्चैःस्वरं रोदनं, रामस्य इति शेषः। साम्प्रतिकमेव—उचितमेव, ("युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः)। दुःखितैः,—शोकार्त्तैः, जनैरिति शेषः। दुःखनिर्वापणानि—शोकोपशमनानि, विलापरोदनादीनीत्यर्थः। कर्त्तव्यानि—विधेयानि। यतः,—यस्मात् कारणात्; वक्ष्यमाणश्लोकेनास्य अन्वयः।

पूरोत्पीड़े तड़ागस्य परीवाहः प्रतिक्रिया ।
शोकक्षोभे च हृदयं प्रलापैरेव धार्य्यते ॥ २९ ॥

विशेषतो रामभद्रस्य बहुतरप्रकारकष्टो जीवलोकः । (घ)—

इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा
प्रियाशोको जीवं कुसुममिव घर्मः क्लमयति ।

प्रबलदुःखोपहतचेतसां प्रलापादन्यः कोऽपि दुःखोपशमहेतुर्नास्तीति यदुक्तं, तदेव समर्थयमाना आह, पूरोत्पीड़े इति ।—तड़ागस्य जलाशयविशेषस्य ("पद्माकर-स्तडागोऽस्त्री कासारः सरसी सरः" इत्यमरः) पूरोत्पीड़े पूरस्य तीरचतुष्टयमध्यवर्त्ति-जलभागस्य उत्पीड़े अत्यन्तविवृद्धौ जलवृद्धिजन्ये निर्गमोद्दाने सतीत्यर्थः, परीवाहः प्रणाल्या पवृद्धजलांशनिःसारणं, [ अत्र परिपूर्व्वात् वहतेर्घञि "उपसर्गस्य घञ्यमनुष्ये बहुलम्" ( ६।३।१२२ पा० ) इति उपसर्गस्य दीर्घता ] प्रतिक्रिया प्रतीकारः चिकित्सेति यावत्, अन्यथा विवृद्धजलराशेरप्रतिहतवेगवशेन अन्तःक्षय-सेतुभङ्ग-समीपस्थग्रामप्लवनादिदोषोत्पत्तेरिति भावः ; च तथा शोकक्षोभे प्रबलदुःखावेगे सति, यद्वा—शोकेन प्रबलेष्टवियोगजन्यदुःखेन क्षोभे अत्यन्तमस्थैर्य्ये जाते सति, हृदयं चित्तं प्रलापैः प्रमुक्तकण्ठरुदितैः धार्य्यते पुनर्व्यवस्थाप्यते ; यथा जलवृद्धौ कयाचित्प्रणाल्या जलनिःसारणं तड़ागादिरक्षणोपायः, तथा शोकवृद्धौ तद्बहिष्काररूपसप्रलापरोदनमेव आत्मरक्षणोपाय इति भावः । [ अत्र पूरोत्पीड़ेन शोकक्षोभस्य, तडागेन हृदयस्य, परीवाहेण प्रलापानां, प्रणिधानगम्यसाम्यतया दृष्टान्तो नामालङ्कारः ; तथा च दर्पणः,—"दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिबिम्बनम्" इति ]। पथ्यावक्त्रं वृत्तम् ॥२९॥

( घ ) विशेषतः,—अन्यापेक्षया विशेषेण। बहुतरप्रकारकष्टः,—नानाविध-क्लेशपूर्णः, [ बहुतरः प्रकारो येषां, तथाभूतानि कष्टानि यस्मिन् ( जीवलोके ) स तथोक्तः इति विग्रहः ]। जीवलोकः,—संसारः। सामान्यतः क्लेशबहुलेऽप्यस्मिन् संसारे नियतं राज्यशासनाद्यतिभारक्लिष्टस्य मनसि तद्विरहक्लेशो दुःसहो जात इति युज्यत एवास्य मुक्तकण्ठ विलाप इति भावः।

रामसम्बन्धे जीवलोकस्य यद् बहुतरप्रकारकष्टत्वमुक्तं, सम्प्रति तदेव विवृण्वती आह, इदमिति ।—अभियुक्तेन निरन्तरमवहितेन, अविच्छिन्नेनेत्यर्थः, इतरथा विक्षिप्त-चेतसा कृतमपि राजकार्य्यं सानवद्यं स्यादिति भावः ; मनसा चेतसा इदं परिदृश्य-मानं विश्वं जगत् विधिवत् यथाविधानं, शास्त्रविधिमनतिक्रम्येत्यर्थः, [विधिमर्हति इति विधिवत्, विधिशब्दात् "तदर्हम्" ( ५।१।११७ पा० ) इति अर्हार्थे वतिप्रत्ययः ]

स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-
स्तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम् ॥ ३० ॥

पाल्यं रक्षणीयम्, अन्यथा प्रजापालनव्रतानां क्षत्रियाणां स्वधर्म्मापालननिबन्धनः पापस्पर्शः सम्भवेदिति भावः ; तच्च राज्यपालनमेकमतीव कष्टकरमित्यभिप्रायः। घर्मः आतपः कुसुममिव कुसुमं यथा तथा प्रियाशोकः सीताविच्छेदजनितं दुःखं जीवं जीवनं क्लमयति क्षपयति ; यथा प्रखरदिवाकरतापः निरतिशयसुकुमारं कुसुमभारम् अहरहः सन्तापयन् समूलशोषं शोषयति, तथाऽयं प्रियावियोगजः शोकः सम्प्रति सातिशयं वर्द्धमानः विशालराज्यपालनक्लिष्टं मामकं जीवनमाततरामव-सादयतीति विशदार्थः ; एतदपि कष्टात् कष्टतरमिति भावः। ननु दुःखातिशय्ये विलाप एवैको विनोदोपायः, अतः तेनैव किं न विनोदयसि चेतः ? इत्यत आह, स्वयमिति।—स्वयम् आत्मनैव त्यागं प्रियापरिवर्जनं कृत्वा विलपनविनोदोऽपि विलपनेन पश्चात् रोदनादिना विनोदोऽपि शोकापनोदनचेष्टाऽपि, अथवा—विलपन-मेव विनोदः, सोऽपीत्यर्थः ; असुलभः न सुलभावकाशः विशाचारविरोधितया न सङ्गत इत्यर्थः ; स्वयमेव निरपराधामर्द्धाङ्गभागिनीं सहधर्म्मिणीं विवास्य अविवेकिवत् पुनस्तदर्थे रोरुयमानं मां सर्व्वे निन्दिष्यन्तीति आशङ्कैव मम विलपनविनोदेऽपि प्रत्यूह इति भावः। शोकापनोदनचेष्टाऽपि न कर्त्तुं शक्या इत्यतदपि अपरं महत् कष्टकरम् इति आशयः। पूर्वोक्तप्रकारेण कदाचिदपि रामस्य न दुःखावेगप्रकाशाव-सर इति महांस्तस्य क्लेशः। अत्र "असम्भवः" इत्यनुक्त्वा "असुलभः" इति कथनात् "इदानीमिव कदाचित् निर्ज्जने तु विलापः सम्भवत्येव" इत्यर्थो लभ्यते। ननु यदि प्रकाशं विलप्य विनोदयितुं न शक्यते, तदा किमिदानीं कादाचित्कविलापेन ? इत्याह, तदिति।—तत् तदपि, तादृशविनोदालाभेऽपि, रुदितं मुक्तकण्ठं विलापः लाभो हि लाभ एव, ननु यतः अद्यापि सम्प्रत्यपि एतावद्दीर्घकालात् परमपीत्यर्थः, उच्छ्वासः जीवनधारणं ("उच्छ्वासः प्राणनेऽपि च। आख्यायिकापरिच्छेदेऽप्या-श्वासेऽपि पुमानयम्" इति मेदिनी) भवति, अन्तरान्तरा रहसि मुक्तकण्ठरोदनं सीतावियोगदुःखापनोदकमपि न विफलम्, अपि तु अस्य प्राणधारणनिदानतया निरतिशयोपकारकत्वमेवेति भावः। [ अत्र कष्टरूपे एकस्मिन् कार्य्ये विश्वपालन-प्रियाशोक-विलापाभावरूपाणां कारणानां खलेकपोतकान्यायेन युगपदुपस्थितत्वात् समुच्चयो नामालङ्कारः, स च "कुसुममिव घर्मः" इत्युक्तया उपमया सङ्कीर्य्यते ; तथेह "असुलभः" इत्यत्र नञः "अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता। प्रसज्य-

राम:। कष्टं भो: कष्टम्।—

दलति हृदयं गाढ़ोद्वेगं द्विधा न तु भिद्यते
वहति विकल: कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाह: करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्॥ ३१॥

प्रतिषेधाऽसौ क्रियया सह यत्र नञ्॥" इत्युक्तलक्षणकप्रसज्यप्रतिषेधार्थकतया प्रधानतया प्रयोगो युक्त:, इह तु तस्य समासे गुणीभूततया अविमृष्टविधेयांशत्वरूपो दोषश्चिन्त्य:]। शिखरिणी वृत्तम्॥ ३०॥

नियतमतिदु:सहोऽपि सीताविरहक्लेश: कथमप्यन्तर्निगृहीत: सम्प्रति वासन्ती-कथितकठोरवचसा नवीभूत: सातिशयं पीडयतीति तं कथमप्यसहमान: सीतापति-र्यदुक्तवान् "कष्टं भो: कष्टम्" इति, सम्प्रति तदेव महद्दु:खं विवृण्वन्नाह, दलतीति।—गाढ़ोद्वेगं प्रगाढ़शोकसम्भारं हृदयम् अन्त:करणं दलति स्फुटति, [स्फोटनार्थे दलिरत्राकर्म्मक:। अत्र "दलति हृदय गाढ़ोद्वेग." इत्यपि पाठो दृश्यते, तथाच—गाढ़ोद्वेग: प्रगाढशोकसम्भार: हृदयं दलति विदारयति इत्यर्थ:। मूलोक्तात् नायं साधीयान् पाठ:, यत: अस्मिन् पाठे प्रक्रमभङ्गदोष: सम्भवति, तथाहि द्वितीय-तृतीय चतुर्थपादेषु द्वयो: क्रिययोरेक एव कर्त्ता प्रक्रान्त:, इह तु "दलति" इत्यस्य कर्त्ता "गाढ़ोद्वेग:" इति, तथा "भिद्यते" इत्यस्य कर्त्ता "हृदयम्" इति, मूलधृतपाठे तु न तद्दोषशङ्का इति विभाव्यम्।] तथापि तु किन्तु तत् हृदयं द्विधा द्विखण्डीभूय न भिद्यते विदीर्णं न भवतीत्यर्थ:; ["भिद्यते" इति भिदे: कर्मकर्त्तृ-वाच्ये प्रयोग:] हृदये विदीर्णे सति आश्रयापायात् क्लेशोऽपि न स्यादिति आशय:। विकल: विवश: दु:सहशोकावेगेन प्रक्षीण इत्यर्थ:, काय: देह: [काय इति चिधातो: "निवासचितिशरीरोपसमाधानेष्वादेश्च क:" (३।३।४१ पा०) इति घञ्, चकारस्य च ककार:] मोहं दु:सहशोकसम्भारात् अचेतनभावं वहति धारयति, चेतनां संज्ञां च न मुञ्चति न सम्पूर्णरूपेण परित्यजति, क्षणे क्षणे चैतन्यञ्च भवतीत्यर्थ:; चिर-मोहरूपमृत्यौ सति दु:खज्ञानासम्भवात् सर्व एव शोको निर्वापित: स्यादिति भाव:। अन्तर्दाह: मनस्ताप: तनूं शरीरं ("स्त्रियां मूर्त्तिस्तनुस्तनू:" इत्यमर:) ज्वलयति सन्तापयति [ज्वलयतीति ज्वलतेर्णिजन्तस्य रूपम्; "ज्वलह्वल—"·(घटा० ग०) इति अनुपसृष्टस्य ज्वलते: पाक्षिकी मित्संज्ञा, ततश्च "मितां ह्रस्व:" (६।४।९२ पा०) इति ह्रस्व:। पक्षे—ज्वालयति] न च तां भस्मसात् भस्मावशेषां [कार्त्स्न्येन भस्म सम्पद्यते

सीता। एवमेवेदम्। * (त)

रामः। हे भवन्तः पौरजानपदाः!—

न किल भवतां स्थानं देव्या गृहेऽभिमतं तत-
स्तृणमिव वने शून्ये त्यक्ता न चाप्यनुशोचिता।

* एवं न्विदम्।

इति भयसात् भवति "विभाषा साति कार्त्स्न्ये" (५।४।५२ पा०) इति भयशब्दात् सातिप्रत्ययः] करोति; तथा सति न मे दुःखं स्यादिति भावः। विधिर्विधाता ("विधिर्विधाने दैवे च" इत्यमरः) मर्माणि छेत्तुं शीलमस्य इति मर्मच्छेदी मर्मस्थानच्छेदनशीलः प्रहरति मारिमिति शेषः, यस्मात् मम मर्माणि छिनत्तीत्यर्थः, जीवितं प्राणान् न कृन्तति न छिनत्ति, न हन्तीत्यर्थः; तथा सति मे सकलदुःखावसानं स्यात्, अन्यथा दैवदुर्विपाक इति भावः। [इह कर्तृविहितप्रत्ययान्तक्रियाप्रदर्शनप्रक्रमं "भिद्यते" इति क्रियायाः कर्मकर्तरि प्रयोगः प्रक्रमभङ्गदोषमावहति। अत्र यद्दलति तन्न भिद्यते, यन्मूर्च्छति तन्न चेतनां मुञ्चति, दज्ज्वलयति तन्न भस्मीकरोति, यच्च प्रहरति तन्न हन्तीति प्रतिपाद्यं क्रिययोर्मिथोविरुद्धवदाभासमानतया विरोधाभासो नामालङ्कारः; केचित्तु हृदयदलनादिरूपात् कथिताद् वस्तुनः स्वसदृशस्य भेदनस्य व्यपोहनात् परिसङ्ख्यामाहुः। अत्र मनःसमुत्पन्नः खेदो नाम विमर्शसन्धिः प्रदर्शितः; तल्लक्षणं यथा दर्पणे,—"मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः" इति]। हरिणी वृत्तम्॥ ३१॥

(त) स्वयमन्तरनुभूयमानया स्वकीयावस्थया रामवर्णितावस्थायाः याथार्थ्यं स्वीकुर्वाणा जानकी रामोक्तिं समर्थयमाना आह, एवमिति।—इदं—पूर्वोक्तं रामवचनम्। एवम्—इत्थमेव, यथाकथितरूपमेवेत्यर्थः। नु सम्भावयामीत्यर्थः। अहमपि उक्तरूपां दशामनुभवन्ती त्वदुक्तियाथार्थ्ये साक्षीभूतेति भावः।

सीताविप्रयोगे नियतमन्तरनुभूयमानानाम् एतासामतिविषमावस्थानां मूलं, तत्रापि पौरजानपदापरितोषः इति प्रियतमावियोगविक्षिप्तमतिः सीतापरित्यागनिमित्तीभूतान् पौरान् उद्दिश्य सम्प्रति सविलापमाह, नेति।—देव्याः सीतायाः गृहे मदीये भवने, राजधान्यामित्यर्थः, स्थानमवस्थानं, वास इत्यर्थः, भवतां युष्माकं न अभिमतम् अनुमोदितम् आसीदिति शेषः; किलेति निश्चये। सुचिरं रक्षोगृहावस्थानात् सीतायाः सदोषत्वाशङ्कामात्रेणैवमविशङ्कितस्याः पुनर्गृहणं नानुमन्यते इति दुर्मुखमुखात् मया ज्ञातमिति भावः। ततस्तस्मात् कारणात् देव्या गृहावस्थानस्य युष्मदनभिप्रेतत्वादित्यर्थः,

चिरपरिचितास्ते ते भावाः परिद्रवयन्ति मां
इदमशरणैरद्याप्येवं प्रसीदत रुद्यते ॥ ३२ ॥

सा देवीति शेषः, तृणमिव अनादृततृणादिवत् शून्ये विजने, निराश्रये इत्यर्थः, वने अरण्ये त्यक्ता विसृष्टा निर्वासितेति यावत्, न चापि सा अनुशोचिता निरपराधां मां पविचां विदित्वाऽपि केवलं युष्मदनुरञ्जनार्थं निर्वासितां तामुद्दिश्य कदाचिदनुतापोऽपि न कृत इत्यर्थः, [ अत्र "न वाऽप्यनुशोचिता" इत्यपि क्वचित् पाठः ] मया इति शेषः । चिरपरिचिताः सीतया सह सुचिरमेकत्र वासेन पुरा चिरमनुभूताः ते ते भावाः पदार्थाः शाखिशिखिशिलातलादयः इत्यर्थः, अद्यापि अधुनाऽपि बहुतिथे काले गतेऽपीत्यर्थः, मां परिद्रवयन्ति परिद्रववन्तं कुर्वान्ति, सर्वथा व्याकुलीकुर्वन्तीत्यर्थः, [ परिपूर्वात् द्रवशब्दात् तत्करोतीत्यर्थे "तत्करोति तदाचष्ट" ( ग० ) इति णिच्, इष्ठवद्भावात् मतुब्लोपे टिलोपे च इदं रूपम् । "परिभ्रमयन्ति" इत्यपि क्वचित् पाठः, तत्र—विचेतनीकुर्वन्तीत्यर्थः ]। इदम् अस्मात् कारणात्, [ अत्र अस्मादित्यर्थे इदमित्यव्ययम् ] नास्ति शरणं रक्षकः येषां तैः अशरणैरनवलम्बैः, यद्वा—अस्मिन् विषये अशरणा इति इदमशरणाः तैः एतस्मिन् विषये उपायहीनैरित्यर्थः, अस्माभिरिति शेषः, ( "शरणं गृहरक्षित्रोर्वधरक्षणयोरपि" इति मेदिनी ) एवम् इत्थं रुद्यते विलप्यते ; प्रसीदत, यूयमिति शेषः । [ रुद्यत इत्यत्र याच्यत इति पाठान्तरम् ; तत्र अशरणैः इदं याच्यते प्रार्थ्यते यत् अधुना बहुक्लेशस्वीकारात् इदानीमपि यूयं प्रसीदत मयि सुप्रसन्ना भवतेत्यर्थः ]। भवतामनुरञ्जनार्थमेव मया पूर्वोक्तानि दुष्कराणि कृतानि भवद्भिस्तु मदर्थं न किमपि कृतमिति पौरजानपदानुद्दिश्य रामस्य शोकः । भवताम् असन्तोषमपाकर्तुमेव सर्वथा निरपराधां सीताम् अतिपवित्रां विदित्वाऽपि विजने वने तृणमिव विसर्जयता, तथा तदर्थं क्षणमपि पश्चात्तापमकुर्वता मया युष्मत् कृते किं किं दुष्करं न कृतम् ? साम्प्रतन्तु एभिश्चिरपरिचितपादपपर्वतादिभिरुद्बोधितपूर्वस्मृतिर्निरवलम्बोऽस्मि जात इति मयि प्रसादपरवशैर्भवद्भिरद्याप्यनुमन्यते चेत्, तदा निरपराधां तां पुनर्गृहमानीय दुःसहोऽयं शोकावेगोऽपाकर्तुं शक्यते इति निर्गलितार्थः । [ अत्र यद्यपि "मां परिद्रवयन्ति" इत्यत्र अस्मच्छब्दे एकवचनमुक्त्वा पुनः "अशरणैरस्माभिः" इत्यत्र बहुवचनप्रयोगो न युज्यते, तथाप्येवं निर्देशः रामस्य चित्तविक्षेपसूचकतया विप्रलम्भाख्यशृङ्गारं पुष्णातीति न कोऽपि दोषः । अत्र पश्चात्तापं प्रति सीतात्यागस्य हेतुतया, तत्सत्त्वेऽपि पश्चात्तापरूपफलादर्शनात् विशेषोक्तिरलङ्कारः ; तथा "तृणमिव" इत्यत्र उपमा चैतयोः परस्परनिरपेक्षतया संसृष्टिः । पूर्व

तमसा। अतिगम्भीरमापूरणं शोकसागरस्य। (थ)

वासन्ती। देव! अतिक्रान्ते धैर्य्यमवलम्ब्यताम्। (द)

रामः। सखि! किमुच्यते धैर्य्यमिति!! (ध)—

देव्या शून्यस्य जगतो द्वादशः परिवत्सरः।
प्रनष्टमिव नामापि न च रामो न जीवति॥ ३३॥

"हंसीव धवलश्चन्द्रः" "छायेव तां भूपतिरन्वगच्छत्" इत्यादिवत् उपमानोपमेययो-र्लिङ्गभेदेऽपि न क्षतिरिति विभाव्यम्]। हरिणी वृत्तम्॥ ३२॥

(थ) शोकसागरस्य—शोक एव सागरः दुरुत्तीर्णतया जलधिः इति शोकसागरः दुःखरूपार्णवः तस्य। [अत्र शोके सागराभेदारोपात् रूपकमलङ्कारः]। अति गम्भीरम्—अतिगूढमित्यर्थः। आपूरणं—पूर्णता। [अवगूरणमिति पाठे—अव-गूरणम्—आवर्त्तः]।

(द) अतिक्रान्ते—अतीतविषये सीतावियोगरूपे, धैर्य्यम् अवलम्ब्यतां, गतस्य शोचना निष्फला तव धैर्य्यावलम्बनमेव श्रेयस्करम् इति भावः।

(ध) किमुच्यते धैर्य्यमिति!!—मत्प्रदर्शितात् परमपि धैर्य्यमस्ति? इति साक्षेपोक्तिः। धैर्य्यस्य विषयः कः कथ्यते भवत्या? मया हि धैर्य्यस्य परा काष्ठा प्रदर्शितेति भावः।

वासन्त्या धैर्य्यावलम्बनार्थमुपदिष्टो जानकीनाथस्तां धैर्य्यस्य परां कोटिमहं दर्शितवानिति बोधयन् तदेव दर्शयति, देव्येति।—देव्या सीतया शून्यस्य विरहितस्य, तादृशे विजने वने एकाकिन्याः तस्या निर्वासनेन मरणावश्यम्भावादिति भावः; जगतो लोकस्य द्वादशः द्वादशानां पूरणीभूतः [द्वादशानां पूरणः इति द्वादशः "तस्य पूरणे डट्" (५।२।४८ पा०) इति डट्] परिवत्सरः संवत्सरः प्रवर्त्तते इति शेषः, तस्याः सीतायाः इत्यूह्यं, नामापि प्रनष्टमिव विलुप्तमिव, एतावता कालेन न केवलं सा मृता, अपि तु सुदीर्घकालात्ययवशादधुना तस्याः नामापि केनचिन्नोच्चार्य्यते इत्यर्थः, च अथच रामो न जीवति इति न, अपि तु जीवत्येव; रामरूपेण पाषाणमयोऽहमद्यापि वर्त्तमानोऽस्मि, अतः प्रियतमाविरहेऽपि यन्मम जीवनधारणं तद्धि परा काष्ठा धैर्य्यस्येति भावः। [इह "प्रनष्टमिव नामापि" इत्यत्र सुदीर्घकालात्ययात् नामनि प्रनष्टत्वसम्भावनादुत्प्रेक्षानामालङ्कारः]। पथ्यावक्त्रं वृत्तम्॥ ३३॥

सीता। मोहिदह्मि अज्जउत्तस्स एदेहिं वअणेहिं *। (न)

तमसा। एवं वत्से ! (प)—

नैताः प्रियतमा वाचः स्नेहार्द्राः शोकदारुणाः।
एतास्ता मधुनो धाराः श्चोतन्ति सविषास्त्वयि ॥ ३४ ॥

---

* मोहितास्मि आर्य्यपुत्रस्य एतैर्वचनैः।

---

(न) आर्य्यपुत्रस्य—स्वामिनः रामचन्द्रस्य। एतैः,—पूर्वोक्तरूपैः मयि प्रगाढ़प्रेमव्यञ्जकैरित्यर्थः। मोहिता—मोहं प्रापिता, निरतिशयानन्दविह्वलेत्यर्थः। मां निष्करुणं परित्यजतोऽपि सम्प्रति मदर्थमेवं विलपतः आर्य्यपुत्रस्य प्रणयातिरेकसूचकवचनश्रवणेन आनन्दविह्वलापि अस्य वियोगदुःखदर्शनेन मूर्च्छया समाविष्टास्मीति भावः। [ "मोहिताऽस्मि एतैः आर्य्यपुत्रवचनैः" इति पाठेऽपि तुल्य एवार्थः ]।

(प) एवम्—इत्थं, त्वया यदुच्यते तत् तथैवेत्यर्थः।

पत्युः प्रणयातिरेकसूचकवचनेष्वपि दुःसहवियोगकातरतादर्शनेन प्रियसखीं प्रायेण मूर्च्छितामालोक्य तमसा समवेदनाप्रदर्शनपुरःसरं तद्वचनमेव समर्थयमानाऽऽह, नेति।—स्नेहेन प्रणयेन आर्द्राः शीतलाः अनुरागबहुला इत्यर्थः, तथा शोकेन दुःसहवियोगदुःखेन हेतुना दारुणाः निष्ठुराः एताः रामेण इतःपूर्व्वमुच्चारिताः वाचः वचनानि न प्रियतमाः न एकान्ततः अभीष्टाः, भवन्तीति शेषः ; निरतिशयप्रेमाभिव्यञ्जकतया प्रिया अपि दुःसहवियोगदुःखरूपतया न एकान्ततः प्रियत्वमावहन्तीति भावः ; यतः ताः पूर्व्वकथिताः एताः वाचः मधुनः क्षौद्रस्य सविषाः गरलसम्पृक्ताः धाराः प्रपाताः त्वयि श्चोतन्ति क्षरन्ति। यद्वा—प्रियतमाः स्नेहार्द्राः शोकदारुणाः एताः वाचो न, अपि तु ताः एताः सविषाः मधुनो धाराः त्वयि श्चोतन्ति स्रवन्तीत्यर्थः। सुधासमाकारा मकरन्दधारा यथा सरसास्वादमधुरतया परमपरितोषकारिण्यपि दारुणगरलसम्पृक्ता चेत्, अपहरति चेतनामास्वादकस्य, तथेयं गभीरानुरागप्रकटनमधुरा स्वामिनो वचनधारा प्रगाढ़शोकक्षोभव्यञ्जकतया नैकान्ततः प्रीणाति ते चेतः इति भावः। [ अत्र एकस्मिन् एव रामवचसि स्नेहार्द्रत्वशोकदारुणत्वरूपविरुद्धधर्म्मद्वयसम्बन्धकथनात् विरोधाभासो नामालङ्कारः ; तथा सीतायां सविषमधुधाराक्षरणस्य असम्भवतया मधुधाराभिः रामवचनानाम् उपमानोपमेयभावबोधनात् असम्भवद्वस्तुसम्बन्धरूपा निदर्शना, तथा चानयोरङ्गाङ्गिभावेन सङ्करः। यद्वा मते तु—उपमेयरूपाः प्रकृताः वाचः प्रतिषिध्य उपमानरूपाणां

रामः। अयि वासन्ति ! मया खलु (फ)—
यथा तिरश्चीनमलातशल्यं
प्रत्युप्तमन्तः सविषश्च दंशः ।
तथैव तीव्रो हृदि शोकशङ्कु-
र्मर्माणि कृन्तन्नपि किं न सोढः ? ॥ २५ ॥

---

सविषमधुधाराणां सत्यतया स्थापनात् "नेदं नभोमण्डलमम्बुराशिः" इति दर्पणकृदुदाहरणवदत्रापि अपह्नुतिरलङ्कारः ]। अनुष्टुब् वृत्तम् ॥ २४ ॥

( फ ) रामः "अतिक्रान्ते धैर्य्यमवलम्ब्यताम्" इति वासन्त्या अनुयोगं "देव्या शून्यस्य" इत्यादिना धैर्य्यपराकाष्ठाप्रदर्शनपुरःसरं निरस्यापि पुनरपि विशेषतः स्वस्य धीरत्वं प्रमापयितुमाह, अयीति।—मया—रामेण, "किं न सोढः" इति शोकशङ्कुनान्वयः। खल्विति वाक्यभूषायाम्।

कीदृशं तद्धैर्य्यम् ? इत्याह, यथेति।—अन्तः हृदये प्रत्युप्तं विद्धं [ प्रतिपूर्वात् वपतेर्निष्ठाप्रत्ययस्य रूपम् ] तिरश्चीनं तिर्य्यग्भावापन्नं, तिर्य्यग्भावेण विद्धस्य सहसा निःसारयितुमशक्यत्वात् निरतिशययातनाप्रदमिति भावः; [ तिरोऽञ्चति इति विग्रहे तिरस्शब्दपूर्वादञ्चतेः क्विन् इति तिर्य्यच् "तिरसस्तिर्य्यलोपे" (६।३।९४पा० ) इत्यनेन तिरसः "तिरि" आदेशः, ततश्च तिर्य्यगेव इति स्वार्थे "विभाषाञ्चेरदिक्स्त्रियाम्" ( ५।४।८ पा० ) इति खप्रत्ययः ] अलातशल्यं यथा ज्वलदङ्गारमयशङ्कुरिव ( "अङ्गारोऽलातमुल्मुकम्" इत्यमरः ) च एवं सविषो विषात्मको दंशः दन्तप्रवेशः यथा, तथैव तद्वदेव तीव्रस्तीक्ष्णः नितरां दुःसह इत्यर्थः, हृदि अन्तःकरणे निहितः इति शेषः, शोकशङ्कुः शोककीलः शाणितलौहकीलवदतिभीषणः प्रियावियोगशोकः इत्यर्थः ("वा पुंसि शल्यं शङ्कुर्ना" इत्यमरः ) मर्माणि जीवनस्थानानि कृन्तन् छिन्दन्नपि किं न सोढः ? न व्यसह्यत किम् ? अपि तु सोढः एव, मयेति शेषः। [ सहतेः कर्म्मणि निष्ठाप्रत्ययः, पक्षे सहितः इति ] तत् किमपरं करिष्यामि धैर्य्यावलम्बने तद्वदेवेति भावः। [ अत्र प्रथमार्द्धे शोकरूपोपमेयस्य अलातशल्यदंशरूपानेकोपमानदर्शनात् मालोपमाऽलङ्कारः; तथा "शोकशङ्कुः" इत्यत्र कृन्तनरूपसाधकसमभिव्याहारवशात् उपमाया बाधेन केवलं निरङ्गरूपकचेत्यनयोरङ्गाङ्गिभावेन सङ्करः ]। इन्द्रवज्रोपेन्द्रवज्रयोः सङ्कररूपा उपजातिः वृत्तम्। सा हि उपजातिप्रस्तारस्य चतुर्दशविधस्य "हंसी" नाम्ना षष्ठः प्रकारः ॥ २५ ॥

सीता। एवं म्हि मन्दभाइणी पुणो वि आआसआरिणी अज्जउत्तस्स। * (ब)

राम:। एवमतिनिष्कम्पस्तम्भितान्त:करणस्यापि मे संस्तुतबहुतरप्रियदर्शनादुद्दामोऽयमावेग:। (भ) तथाहि,—

लीलोत्क्षोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं
यो यो यत्न: कथमपि मयाऽऽधीयते तं तमन्त:।

---

* एवमस्मि मन्दभागिनी पुनरप्यायासकारिणी आर्य्यपुत्रस्य।

---

(ब) मन्दभागिनी—निरतिशयभाग्यहीना, अहमिति शेष:। पुनरपि—भूयोऽपि, पूर्वमेकदा दशाननकृतहरणव्यापारेण तथा आयासकारणत्वात् पुन:-पदम्। एवम्—इत्थम्, अतिदारुणरूपेण इत्यर्थ:। आयासकारिणी—दु:खहेतुभूता; हतभागिन्या ममैव विरहशोकेनायमेवं क्लेशमनुभवतीति अहमेवास्य क्लेशस्य निदानमिति मां धिगिति भाव:।

(भ) ननु यद्येवम् अरुन्तुदमपि शोकशङ्कुं विषह्य त्वया धीरताया: पराकाष्ठा दर्शिता, तदा सम्प्रति कथमेवं त्वं शोकविह्वल: नितान्तमधीर इव विलपसीत्याक्षेपमाशङ्क्य सीतापतिराह, एवमिति।—एवम्—उक्तप्रकारेण। अतिनिष्कम्पेत्यादि।—अतिनिष्कम्पम् अतिनिश्चलं यथा तथा स्तम्भितं स्थिरीकृतम् अन्त:करणं येन तस्य तथोक्तस्य यत्नेन धैर्य्यमालम्ब्य स्थितस्येत्यर्थ:। मे—मम। अयं—सम्प्रत्यनुभूयमान:। आवेग:,—प्रियतमावियोगसम्भूत: शोकप्रवाह:। संस्तुतेत्यादि—संस्तुतानां पूर्वपरिचितानां ("संस्तव: स्यात् परिचय:" इत्यमर:) बहुतराणां प्रियाणां जनानां पादपपर्वतकुरङ्गविहङ्गमादिवस्तूनाञ्च दर्शनात्। उद्दाम:,—अतिभूमिं गत:। परिचितवस्तुदर्शनात् तु सहसोद्भूतोऽयं वेग: कष्टेनापि न निवर्त्तनीय इति भाव:।

सम्प्रति शोकावेगस्य उद्दामत्वमेव दर्शयति, लीलेति।—लीलादपि चञ्चलादपि उत्क्षोलम् अतिचञ्चलमिति यावत्, तद् यथा तथा क्षुभितस्य उद्वेलस्य वेगभूयस्त्वेन क्षोभमापन्नस्येत्यर्थ:, करुणस्य प्रियजनवियोगप्रभवस्य शोकस्य [करणस्येति पाठे—करणस्य इन्द्रियगणस्य] यदुज्जृम्भणम् उद्रेक:, अतिवृद्धिरिति यावत्, तस्य स्तम्भनार्थं प्रतिरोधार्थम्; यद्वा—लीला: चञ्चला: ये उत्क्षोला: महोर्म्मय: तद्वत् क्षुभित: आलोडित: ["उपमानानि सामान्यवचनै:" (२।१।५५ पा०) इति समास:] य: करुण:

भित्त्वा भित्त्वा प्रसरति बलात् कोऽपि चेतोविकार-
स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः ॥ २६ ॥

सीता। एदिणा अज्जउत्तस्स दुव्वारदारुणारम्भेण दुक्खसंक्खो-
हेण पफ्फुरिदणिअदुक्खं विअ आकम्पिदं मे हिअअं। * (म)

* एतेन आर्य्यपुत्रस्य दुर्वारदारुणारम्भेण दुःखसङ्क्षोभेण प्रस्फुरितनिजदुःख-मिवाकम्पितं मे हृदयम्।

शोकस्थायिभावो रसः तस्य यत् उज्जृम्भणम् अतिवृद्धिः तस्य स्तम्भनार्थं प्रतिरोधार्थ-मित्यर्थः, ("—अथोर्म्मिषु। भङ्गस्तरङ्ग उर्म्मिर्वा स्त्रियां वीचिरथोर्म्मिषु। महत्सूल्लोलकल्लोलौ" इत्यमरः)। मया यो यो यत्नः यादृशो यादृशः प्रयासः इत्यर्थः, कथमपि कृच्छ्रेण आधीयते आश्रीयते क्रियते इत्यर्थः, कोऽपि अननुभूतपूर्वः अनिर्वचनीय इति यावत्, चेतोविकारः चित्तवैक्लव्यं तोयस्य जलस्य अप्रतिहतरयः अनिरुद्धवेगः ओघः प्रवाहः, राशिरित्यर्थः, सैकतं सिकतामयं, बालुकानिर्म्मितमिति यावत्, [ सिकताभिर्निर्म्मितमिति सैकतम् "सिकताशर्कराभ्याञ्च" (५।२।१०४ पा०) इति सिकताशब्दात् अण्, तथा "आपः सुमनसो वर्षाः अप्सरःसिकताः समाः। एताः स्त्रियां बहुत्वे स्युरेकत्वेऽपि क्वचिन्मताः॥" इति सिकताशब्दस्य बहुवचनान्तता ] सेतुम् आलिमिव ("सेतुरालौ स्त्रियां पुमान्" इत्यमरः) तं तं पूर्वोक्तं यत्नमिति शेषः, भित्त्वा भित्त्वा पुनः पुनः भङ्क्त्वा, मोघीकृत्येत्यर्थः, ["यो यः, तं तं, भित्त्वा भित्त्वा" इत्येतेषु स्थलेषु "नित्यवीप्सयोः" (८।१।४ पा०) इति यथासम्भवं नित्यवीप्सार्थयोर्द्विर्वचनम् ] बलात् प्रसह्य वेगेनेत्यर्थः, [ बलादित्यत्र "ल्यब्लोपे कर्म्मण्यधिकरणे च" (वा०) इति पञ्चमी, "विभाषा गुणेऽस्त्रियाम्" (२।३।२५ पा०) इति वा पञ्चमी ] मनः मनसि प्रसरति प्रसारमापद्यते, प्रविशतीति वा; यथा अतिप्रयत्नसम्पादितोऽपि भङ्गुरः सिकतासेतुबन्धः उत्तालकल्लोलाप्रतिहतं वेगं निरोद्धुं न कथमप्यर्हति, तथा मया यथाशक्ति समुत्पादितोऽप्युद्यमः दुःसहमिमं प्रियावियोगसम्भूतं शोकावेगम् अपनेतुं नार्हतीति, तत् किमेवं पुनरुपदिश्यते भवत्या? इति भावः। [ अत्र चतुर्थपादे एकस्मिन्नेव वाक्ये जलप्रवाह-चित्तविकारयोरुपमानोपमेयभावकथनात् उपमा नामालङ्कारः; सा च इवशब्दोत्थापिततया श्रौती। प्रथमपादे च शोकोश्लोलेत्यादिवर्णानाम् ओजःप्रकाशकतया करुणरसस्य प्रतिकूलत्वात् अत्र प्रतिकूलवर्णत्वदोष इति केचित् ]। मन्दाक्रान्ता वृत्तम् ॥ २६ ॥

(म) एतेन—साक्षात्परिदृश्यमानेन। दुर्वारदारुणारम्भेण—दुर्वारः निरोद्धु-

वासन्ती। [स्वगतम्।] कष्टमभ्यापन्नो देवः, तदन्यतः क्षिपामि तावत्। [प्रकाशम्] चिरपरिचितानामेतेषां जनस्थानभागानामवलोकनेन आत्मानमानन्दयतु देवः। (य)

रामः। एवमस्तु। (र)

[इति उत्थाय परिक्रामति।] (ल)

सीता। सन्दीवणाओ ज्जेव दुक्खस्स पिअसहीविणोदणोवाआ त्ति मक्खेदि। * (व)

* सन्दीपना एव दुःखस्य प्रियसखीविनोदनोपाया इति मन्यते।

मशक्यः अत एव दारुणः भीषणः आरम्भः प्रक्रमो यस्य तेन तथोक्तेन। आर्य्यपुत्रस्य—स्वामिनो रामस्य। दुःखसङ्क्षोभेण—शोकसंवेगेन। प्रस्फुरितेत्यादि।—प्रस्फुरितम् उद्रिक्तं निजं स्वकीयं दुःखं शोकः यस्मिन् तत् तथोक्तम्। मे हृदयं—मदीयं चेतः। आकम्पितमिव—कम्पाकुलमिवेत्यर्थः। शोककारणस्य वियोगस्य उभयत्रैव समानत्वादिति भावः। ["आकम्पितमिव" इत्यत्र क्रियोत्प्रेक्षाऽलङ्कारः, सा च इवशब्दोत्थापिततया वाच्या]।

(य) कष्टमिति—दुःखसूचकमव्ययम्। अभ्यापन्नः,—अभि अभितः आपन्नः दुःखशोकावेगेन निरतिशयं विपत्प्राप्तः, निरतिशयशोकाकुलः इत्यर्थः। यद्वा—कष्टं—दुःखम्, अभ्यापन्नः,—प्राप्तः इत्यर्थः। देवः,—रामः। तत्—तस्मात्, एभिः शोकसन्दीपकवाक्यैः एतस्य दुःसहदुःखसम्भवादित्यर्थः। अन्यतः,—अन्यस्मिन् विषये। क्षिपामि—आकर्षामि, अस्य चित्तं विषयान्तरे सञ्चारयामीत्यर्थः। तावदिति—वाक्यालङ्कृतौ। चिरपरिचितानां—पूर्वं प्रियतमया समं बहुकालमवस्थानात् चिराभ्यस्तानाम्। एतेषां—परिदृश्यमानानाम् [ इदानीमिति पाठे—"अवलोकनेन" इति "आनन्दयतु" इत्यनेन वा परेणान्वयः ]। जनस्थानभागानाम्—जनस्थानस्य भागाः अंशविशेषाः तेषाम्। ["अवलोकनेन" इत्यस्य कर्म्मणि "कर्तृकर्म्मणोः कृति" (२।३।६५ पा०) इति षष्ठी]। अवलोकनेन—दर्शनेन। आत्मानं—चित्तम्, ("आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि" इति मेदिनी)। आनन्दयतु—विनोदयतु।

(र) एवम्—इत्थं, त्वया कथितमेवेत्यर्थः। अस्तु—भवतु, त्वया यदुक्तं तदेव करोमीत्यर्थः।

(ल) परिक्रामति—परितः पादसञ्चारेण भ्रमतीत्यर्थः।

(व) प्रियसखी—प्रियसहचरी वासन्ती। दुःखस्य—विरहक्लेशस्य। सन्दीपनाः

वासन्ती। देव देव!—

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद्गोदावरीरोधसि।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः॥३७॥

एव—पूर्वस्मृतिसमुद्बोधकतया उत्तेजका एव, उद्दीपनाहेतव: एवेत्यर्थः। विनोदनोपायाः,—शोकापनोदनसाधनानीत्यर्थः। इति—इत्थम्। मन्यते—निश्चिनोति। पूर्वकथितानां निजवचनानाम् अतिदुःखहेतुतां मन्यमाना वासन्ती आर्य्यपुत्रस्य चित्तमन्यासक्तं विधातुकामा रामं यत् जनस्थानभागानवलोकयितुम् उपदिदेश, तन्न युक्तं, तेषामप्यधिकतया पूर्ववृत्तस्मारकत्वेन दुःखहेतुत्वादिति भावः। [अत्र विनोदनहेतुत्वेन निर्दिष्टस्य जनस्थानभागदर्शनस्य तत्कार्य्यं प्रति विरुद्धतया विरुद्धकार्य्यकारणनिर्देशाद्विषमालङ्कारः]।

स्ववचसा पूर्वस्मृतिसमुद्बोधात् राममतिक्लिष्टमालोक्य वासन्ती तम् अन्यासक्तमानसं विधाय विनोदयितुकामा आह, अस्मिन्निति।—अस्मिन्नेव पुरोवर्त्तिनि इत्यर्थः, लतागृहे निकुञ्जे त्वं तस्याः सीतायाः मार्गे प्रत्यागमनवर्त्मनि दत्ते ईक्षणे येन स तथोक्तः, अभवः आसीः, गोदावरीं गतायाः सीतायाः प्रत्यागमनविलम्बनात् तदागमनपथे सतृष्णदृष्टिक्षेपं प्रतीक्षमाणः आसीरित्यर्थः, सा सीता गोदावर्य्याः रोधसि तीरे [रुणद्धि जलमिति रोधः, इति रुधेरसुन्प्रत्ययः] ("कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु" इत्यमरः) ["गोदावरीसैकते" इति पाठेऽपि तुल्यः एवार्थः] चिरं बहुक्षणं हंसैः कृतमाहितं कौतुकं दर्शनाभिलाषः यस्याः सा तथोक्ता ("कौतूहलं कौतुकञ्च कुतुकञ्च कुतूहलम्" इत्यमरः) अभूत् बभूव। आयान्त्या गोदावरीतटात् प्रतिनिवर्त्तमानयेत्यर्थः, [आयाति या सा आयान्ती तया, आङ्पूर्वात् याधातोः शतृप्रत्ययः, ततश्च स्त्रियां ङीपि कृते "आच्छीनद्योर्नुम्" (७।१।८० पा०) इति पाक्षिकः नुम्प्रत्ययः, पक्षे आयात्या] तया सीतया त्वां भवन्तं परिदुर्मनायितमिव कालविलम्बान्नितरामुत्कण्ठितहृदयमिव [परि परितः दुर् दुःस्थं मनो यस्य स परिदुर्मनाः, अपरिदुर्मनाः परिदुर्मनाभूतः इत्यर्थे परिदुर्मनःशब्दात् "भृशादिभ्योभुव्यच्वेर्लोपश्च हलः" (३।१।१२ पा०) इति क्यषि सलोपे च कृते "अकृत्सार्वधातुकयोर्दीर्घः" (७।४।२५ पा०) इति दीर्घे ततश्च क्तप्रत्यये कृते पदमेतत् निष्पन्नम्] वीक्ष्य दृष्ट्वा कातर्य्यात् त्वत्कोपसम्भावनाजनितव्याकुलतया बाल्यात्

सीता। दारुणासि सहि वासन्दि! दारुणासि, जा एदेहिं हिअअमम्मगूढसल्लघट्टणेहिं पुणो पुणो मं मन्दभाइणीं अज्जउत्तं अ सन्दावेसि। * (अ)

* दारुणाऽसि सखि वासन्ति! दारुणाऽसि, या एतैर्हृदयमर्मगूढशल्यघट्टनैः पुनः पुनर्मां मन्दभागिनीमार्य्यपुत्रञ्च सन्तापयसि।

[ ईषत् तरति या सा कातरा "ईषदर्थे" (६।३।१०५ पा०) इति कोः कादेशः, ततश्च कातराया भावः इत्यर्थे "गुणवचनब्राह्मणादिभ्यः कर्मणि च" (५।१।१२४ पा०) इति ष्यञ्प्रत्ययः ] अरविन्दकुड्मलनिभः कमलकोरकसदृशः [ अरविन्दस्य कुड्मलेन सदृशः इति अस्वपदविग्रहनित्यसमासे अरविन्दकुड्मलनिभः इति पदं सिद्धम्, "—स्युरुत्तरपदे त्वमी। निभसङ्काशनीकाशप्रतीकाशोपमादयः" इत्यमरोक्तेः। "कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे" इति मेदिनी ] मुग्धः मनोहरः प्रणामस्य अञ्जलिः त्वां प्रसादयितुं युक्तपाणिरित्यर्थः, [ अत्र—प्रणामाय अञ्जलिरित्यर्थे प्रणामस्य अञ्जलिरिति अश्वघासादिवत् तादर्थ्ये षष्ठीसमासः ] बद्धः रचितः आसीदिति शेषः। [ अत्र "अरविन्दकुड्मलनिभः" इत्यंशे कमलकोरकेण अञ्जलेः सादृश्यकथनादुपमा नामालङ्कारः; सा च तुल्यार्थकनिभशब्दोत्थापिततया आर्थी,—"आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः" इति दर्पणोक्तेः, तथा "परिदुर्मनायितमिव" इत्यत्र उत्प्रेक्षा चेत्यनयोः परस्परनिरपेक्षतया संसृष्टिः ]। शार्दूलविक्रीडितं वृत्तम्॥ ३७॥

(अ) दारुणा असि—अतिनिष्करुणा भवसि, त्वमिति शेषः। अत्र "दारुणाऽसि दारुणाऽसि" इति खेदे द्विरुक्तिः। या—त्वमित्यर्थः। एतैः,—श्रुतपूर्वैरित्यर्थः। हृदयमर्मेत्यादि।—हृदयस्य अन्तःकरणस्य मर्मणि प्राणस्थाने गूढस्य प्रच्छन्नरूपेण अवस्थितस्य शल्यस्य वियोगदुःखरूपस्य शङ्कोः घट्टनैः इतस्ततः सञ्चालनैरित्यर्थः। मन्दभागिनीं—हतभाग्याम्। आर्य्यपुत्रञ्च—स्वामिनं रामञ्चेत्यर्थः। सन्तापयसि—पीडयसि। यथाऽतिपेलवे हृन्मर्मणि निहितमपि शल्यं कथमपि सह्यते, पुनस्तदेव चेत् कुतश्चिदाघातात् सहसा सञ्चालितं स्यात्, तदा चिरावस्थानेन कथञ्चिन्निगृहीतमपि सुतरामसहनीयं भवेत्, तथा अतिदुःसहोऽपि शोकावेगः दीर्घकालातिरेकात् कथमप्यन्तर्निगृहीतोऽपि त्वदीयवचोभिरिदानीं नवीकृत इव युगपदावयोः मर्म्म पीडयतीति भावः।

रामः। अयि चण्डि जानकि! इतस्ततो दृश्यसे इव न चानुकम्पसे। (घ)—

हा हा देवि! स्फुटति हृदयं स्रंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा,
विष्वङ्मोहः स्थगयति, कथं मन्दभाग्यः करोमि॥ ३८॥

[ इति मूर्च्छति। ]

(घ) चण्डि!—अतिकोपने; एवं सकरुणं विलपन्तमपि मां यतो नानुकम्पसे, तन्मन्ये निष्कारणनिर्वासनेनैव अतिकुपिता त्वं मयि एवमाचरसीति चण्डीत्वामन्त्रणम्। इतस्ततः,—अभितः, चतुर्दिक्षु इत्यर्थः। दृश्यसे इव—मया साक्षात् क्रियसे इव, (भागीरथीवरमाहात्म्यात् साक्षात् सीतामवलोकयितुमशक्नुवन्नपि सततसीताऽनुध्यानपरतया "त्रिभुवनमपि तन्मयं विरहे" इति सर्वमेव सीतामयमवलोकयन् उद्भ्रान्तचित्तो जानकीनाथः इत्थमुक्तवानिति बोध्यम्)। च—किन्तु, ("चान्वाचये समाहारेऽप्यन्योन्यार्थे समुच्चये। पक्षान्तरे तथा पादपूरणेऽप्यवधारणे॥" इति मेदिनी)। नानुकम्पसे—साक्षादुपस्थिता सती सादरसम्भाषणादिना न दयसे, ममेति शेषः।

दुःसहशोकसंविग्नमानसतया अत्यन्तमन्तर्ज्वलतः स्वस्यानुकम्पनीयत्वमेव दर्शयन्नाह, हा हेति।—हा इति शोकसूचकमव्ययम्, ("हा विषादशुगर्त्तिषु" इत्यमरः। अत्र खेदातिशय्ये द्विर्भावः)। देवि! सीते! हृदयम् उरःस्थलमित्यर्थः, स्फुटति विदीर्य्यति, देहबन्धः शरीरबन्धनं, कायाऽवयवसन्धिरित्यर्थः, स्रंसते शिथिलीभवति, [अत्र "ध्वसते" इति पाठे—विशीर्णीभवतीत्यर्थः।] जगत् विश्व शून्यम् असत्कल्पमित्यर्थः, मन्ये जानामि, अविरता अविश्रान्ता ज्वाला शोकाग्निशिखा यस्मिन् तद् यथा तथा, अन्तः अन्तःकरणे [अन्तरित्यवच्छेदे सप्तमी] ज्वलामि दग्धोऽस्मि; विधुरः प्रबलप्रियावियोगदुःखेन कातरः अन्तरात्मा जीवः सीदन् नियतक्लेशपरम्परासहनेन अत्यन्तम् अवसन्नः सन् अन्धे अन्धङ्करणे, प्रगाढे इति यावत्, [अन्धयति लोकान् यत् तत् अन्धं तस्मिन् अन्धे इति अन्धिधातोः "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (३।१।१३४ पा०) इति पचादित्वादच्] तमसि अन्धकारे मज्जतीव निलीयते इव, तथा मोहः अचैतन्यं, विचित्ततेति यावत्, (मोहलक्षणं यथा दर्पणे—"मोहो विचित्तता भीति-दुःखावेगानुचिन्तनैः। मूर्च्छनाऽज्ञानपतनभ्रमणाऽदर्शनादिकृत्॥"

सीता। हद्धी! हद्धी! पुणो वि प्पमूढो अज्जउत्तो! * (ख)

वासन्ती। देव! समाश्वसिहि समाश्वसिहि।

सीता। हा अज्जउत्त! मं मन्दभाइणीं उद्दिसिअ सअलजीअलोअमङ्गलाधारस्स दे वारं वारं संसइदजीविददारुणो दसापरिणामो त्ति हा हदम्हि। † (छ)

[ इति मूर्च्छति। ]

* हा धिक्! हा धिक्! पुनरपि प्रमूढः आर्य्यपुत्रः!

† हा आर्य्यपुत्र! मां मन्दभागिनीमुद्दिश्य सकलजीवलोकमङ्गलाधारस्य ते वारं वारं संशयितजीवितदारुणो दशापरिणाम इति हा हताऽस्मि।

इति ) विष्वक् समन्तात्, सर्वविषयानित्यर्थः, स्थगयति आवृणोति मोहाच्छादनात् न किमपि मे ज्ञानविषयो भवतीत्यर्थः। एवं सति मन्दभाग्यः दुर्भाग्यः अहमिति शेषः, कथं किं करोमि अनुतिष्ठामि? कमुपायमाश्रयामीत्यर्थः, अस्य प्रतिविधानार्थमिति शेषः। दुःसहविप्रयोगवह्निना वहिरन्तश्चैवं दह्यमानः नियतक्लेशपरम्पराऽनुभवेन मुहुर्मुह्यमानः नियतमन्धतमसावृतः दुःसहमिदं दुःखं प्रतिविधातुं न कमप्युपायं पश्यामीति भावः। [ अत्र अन्धङ्करणे तमसि अन्तरात्मनः मज्जनसम्भावनादुत्प्रेक्षा नामालङ्कारः ]। मन्दाक्रान्ता वृत्तम्॥ ३८॥

( ख ) पुनरपि—भूयोऽपि। प्रमूढः,—अत्यर्थं मूर्च्छितः।

( छ ) मन्दभागिनीं—अतिदुर्भाग्याम्। उद्दिश्य—लक्ष्यीकृत्य, मदर्थमेवेत्यर्थः। सकलेत्यादि।—सकलः समग्रः जीवलोकः जगत् तस्य मङ्गलाधारः कल्याणनिलयः तस्य, जीवितो यः सततं सकललोककल्याणं साधयति तस्येत्यर्थः। वारं वारं—पुनः पुनः, न तु कदाचिदित्यर्थः। संशयितेति।—संशयितं स्थास्यति न स्थास्यति वेति सन्देहमापन्नं जीवितं जीवनं यस्मिन् स तथोक्तश्चासौ, अत एव दारुणः भीषणश्चेति संशयितजीवितदारुणः प्राणानामस्थिरत्वसन्देहवशादतिभयावहः इत्यर्थः। [ एतयोः विशेषणयोरेकं विशेष्यं कल्पयित्वा नीललोहितादिवत् कर्म्मधारयसमासः कर्त्तव्यः ]। दशापरिणामः,—अवस्थाविपर्य्यासः, मूर्च्छारूपप्रकृतावस्थापरिवर्त्तनमित्यर्थः। इति—अस्मात् हेतोः। हताऽस्मि—आर्य्यपुत्रस्य ईदृशपरिणामदर्शनेन प्रायेण मृताऽस्मीत्यर्थः। कायाऽसत्त्वे छायासत्त्ववत् आर्य्यपुत्रस्य अकुशले मम कुशलं कथमपि न सम्भाव्यमिति भावः।

तमसा। वत्से ! समाश्वसिहि समाश्वसिहि ; पुनस्त्वत्पाणि-स्पर्श एव सञ्जीवनोपायो रामभद्रस्य। (क)

वासन्ती। कथमद्यापि नोच्छ्वसिति !! हा प्रियसखि ! सीते ! क्वाऽसि ? सम्भावयात्मनो जीवितेश्वरम्। (ख)

सीता। [ससम्भ्रममुपसृत्य हृदि ललाटे च स्पृशति ]। (ग)

वासन्ती। दिष्ट्या प्रत्यापन्नचेतनो रामभद्रः। (घ)

---

(क) मुहुरेवं विलापिनं स्वस्वामिनं सहसा मूर्च्छितमालोक्य प्राणापाय-शङ्काऽऽतङ्कितां प्रियसखीं जानकीमपि मूर्च्छितामवेत्य तमसा तां समाश्वासयन्ती चाह, वत्से ! इति।—समाश्वसिहि—आश्वस्ता भव ( सम्भ्रमे द्विरुक्तिः )। आश्वासे हेतुमाह, पुनरिति।—पुनः,—भूयः इत्यर्थः, ( "प्रियस्पर्शो हि पाणिजे" "स्पर्शः पुरा परिचितः" इत्यादिना पूर्वमप्येकदा सीतापाणिस्पर्शतः राघवस्य सञ्जीवनात् अत्र "पुनः" इत्युक्तम्)। त्वत्पाणिस्पर्शः,—तव करस्पर्शः, [पाणिना स्पर्शः इति पाणिस्पर्शः, तव पाणिस्पर्शः त्वत्पाणिस्पर्श इति विग्रहः ] अत्र एवकारो ऽन्ययोगव्यवच्छेदार्थकः, तेन—तव करस्पर्शं विना जगति नान्यत् किमपि अस्य सञ्जीवनसाधनं वर्त्तते इत्यर्थो लभ्यते। सञ्जीवनोपायः,—पुनर्जीवनसाधनम्। ननु सहचरि ! स्वामिनि मूर्च्छितेऽपि नैवं भेषीः, तन्मूर्च्छाऽपगमैकसाधनस्य कार्य्यतः परीक्षितपूर्वस्य त्वत्करावमर्शस्य त्वदायत्तत्वादिति भावः।

(ख) कथं—किम्। अद्यापि—इदानीमपि, एतावता कालेनापीत्यर्थः। न उच्छ्वसिति—न चेतनां लभते, रामभद्र इति शेषः। क्वाऽसि—कुत्र वर्त्तसे ? स्वामिनः एवं दुर्दशायां तव अन्यत्रावस्थानं न युक्तमिति भावः। आत्मनः,—स्वस्याः। जीवितेश्वरं—प्राणनाथं, स्वजीवितस्य ईश्वरे अकल्याणभाजि, स्वजीवितस्यापि नितराम् अशरणतया सुतरामेव अकल्याणमिति भावः। सम्भावय—सोपश्लेषं सम्भावितं कुरु इत्यर्थः।

(ग) ससम्भ्रमं—त्वरान्वितं यथा स्यात् तथा। उपसृत्य—समीपमेत्य। हृदि—वक्षसि। ललाटे—भाले च ; [ उभयत्र औपश्लेषिकाधिकरणे सप्तमी ] रामस्येति शेषः, स्पृशति स्पर्शं नाटयति।

(घ) भागीरथीवरप्रभावात् सीतायाः अदृश्यमानतया तत्पाणिस्पर्शेनैव प्राप्त-चेतने रामभद्रे भाग्यलब्धचैतन्यं मन्यमाना वासन्ती आह, दिष्ट्येति।—दिष्ट्या—

रामः। आलिम्पन्नमृतमयैरिव प्रलेपै-
रन्तर्वा वहिरपि वा शरीरधातून्।
संस्पर्शः पुनरपि जीवयन्नकस्मा-
दानन्दादपरविधं तनोति मोहम्॥ ३९॥

[आनन्दनिमीलिताच एव] सखि वासन्ति! दिष्ट्या वर्द्धसे।(ङ)

आर्य्येणेत्यर्थः। प्रत्यापन्नचेतनः,—प्रत्यापन्ना पुनरागता चेतना सञ्ज्ञा यस्य स तथोक्तः, भवतीति शेषः।

दुःसहदुःखावेगेनातितरां मुह्यन्नपि जानकीजीवनः सहसा वहुशः परिचितपूर्वम् अदृष्टहेतुकममृतमधुरं करस्पर्शमुपेतः अत्यानन्दितः विस्मित इवाह, आलिम्पन्निति।—संस्पर्शः अनुभूयमानो जानकीकरस्पर्शः, अमृतमयैः सुधात्मकैः [अमृतस्य स्वरूपा इति अमृतमयाः "तत्प्रकृतवचने मयट्" (५।४।२१ पा०) इति अमृतशब्दात् मयट्] प्रलेपैः प्रकृष्टैः लेपैः अन्तर्वा अभ्यन्तरस्थितान् वहिरपि वा वहिःस्थितांश्च, शरीरधातून् देहोपादानभूतरसादीन् [दधति शरीरं पुष्णन्ति इति धातवः दधातेरौणादिकः तुन्। "रसासृङ्मांसमेदोऽस्थि-मज्जशुक्राणि धातवः" इति सुश्रुतसंहिता] आलिम्पन्निव लिप्तान् कुर्वन्निव सदय समन्तात् व्याप्नुवन् सन्निवेत्यर्थः, जीवयन् चेतयन् मोहादस्तचेतने मयि पुनः प्राणसञ्चारं कुर्वन्नित्यर्थः, मामिति शेषः, पुनरपि भूयोऽपि, (पूर्वमप्येकदा एवमेवैतत्पाणिस्पर्शेन चेतनाप्राप्तेरत्र पुनःपदम्)। अकस्मात् सहसा, अतर्कितरूपेणेत्यर्थः, आनन्दात् निरतिशयाह्लादवशात्, यद्वा—आनन्दं प्राप्य, [अत्र "विभाषा गुणेऽस्त्रियाम्" (२।३।२५ पा०) इति हेतौ पञ्चमी, "ल्यब्लोपे कर्म्मण्यधिकरणे च" (वा०) इति ल्यब्लोपे वा पञ्चमी] अपरविधं दुःखानुपादानकतयाऽत्यन्तविलक्षणं सुखजन्यमित्यर्थः, मोहं विषयान्तराग्रहणरूपं जाड्यं, तनोति विस्तारयति, प्रवर्त्तयतीत्यर्थः। [अत्र प्रथमपादे प्रकृते संस्पर्शे पीयूषप्रलेपविलेपनकर्त्तृत्वसम्भावनादुत्प्रेक्षा नामालङ्कारः; तथा परार्द्धे "जीवयन् मोहं तनोति" इत्यत्र जीवयतो मोहविस्तारकर्त्तृत्वस्य आपाततो विरुद्धतया विरोधाभासश्चेत्यनयोः अङ्गाङ्गिभावेन सङ्करः]। प्रहर्षिणी वृत्तम्। तल्लक्षणं यथा,—"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" इति। एतत्प्रस्तारस्तु १४०१ सङ्ख्यकः॥ ३९॥

(ङ) आनन्देति।—आनन्देन सुधामधुरस्पर्शसुखेन निमीलिते मुद्रिते अक्षिणी नेत्रे यस्य स तथोक्तः, सुखानुभूतौ नेत्रनिमीलनं स्वाभाविकमेव। दिष्ट्या वर्द्धसे—मदीयभाग्योदयेन तवापि भाग्योदयो जात इत्यर्थः।

वासन्ती। देव ! कथमिव ?

रामः। सखि ! किमन्यत्, पुनः प्राप्ता जानकी। (च)

वासन्ती। अयि देव ! क्व सा ?

रामः। [ सर्व्वांसुखमभिनीय ]। पश्य ननु इयं पुरत एव। (छ)

वासन्ती। अयि देव ! किमिति मर्म्मच्छेददारुणैरेभिः प्रलापैः प्रियसखीदुःखदग्धामपि पुनर्मन्दभागिनीं दहसि माम् ? (ज)

सीता। ओसरिदुं इच्छामि ; एसो उण चिरसब्भावसोम्म-सीअलेण अज्जउत्तप्फंसेण दीहदारुणं वि सन्दावं झत्ति हर-न्तेण वज्जलेवोवणद्धो विअ सिण्णणीसहविपज्जत्थो वेवदि अवसो विअ मे हत्थो। * (झ)

---

* अपसर्तुमिच्छामि ; एष पुनश्चिरसद्भावसौम्यशीतलेनार्य्यपुत्रस्पर्शेन दीर्घदारुण-मपि सन्तापं झटिति हरता वज्रलेपोपनद्ध इव स्विद्यन् निःसहविपर्य्यस्तो वेपतेऽवश इव मे हस्तः।

---

(च) किमन्यत्—अपरं किं कथयामीत्यर्थः। पुनः प्राप्ता—पुनरप्यासादिता।

(छ) ननु इति सम्बोधने। इयं—सन्निकृष्टा, मदीयप्रत्यक्षविषयीभूतेत्यर्थः, [ "इदमस्तु सन्निकृष्टे समीपतरवर्त्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्॥" इति नियमात् अत्र प्रत्यक्षविषये इदमः प्रयोगः ]। पुरत एव—अग्रत एव, एवकारेण व्यवहितत्वं व्यवच्छिनत्ति।

(ज) किमिति—कथम्। मर्म्मच्छेदेति।—मर्म्मणः जीवनस्थानस्य छेदेन भेदेन दारुणैरतिदुःसहैः, निरतिशयमर्म्मविदारकैरित्यर्थः। प्रलापैः,—"इयं पुरतः एव" इति उन्मत्तवाक्यैः ; सीतायाः मरणनिश्चयेन कथमपि तस्या अत्र उपस्थित्य-सम्भवादिति भावः। प्रियसखीति।—प्रियसख्याः प्रियसहचर्य्याः सीतायाः दुःखेन वियोगक्लेशेन ज्वलदनलनिभेनेति यावत, दग्धां सन्तप्तामपि। दहसि—सन्तापयसि, पीड़यसीत्यर्थः ; दुःसहप्रियसहचरीविरहकातरायां मयि क्षते क्षारमिव तवैतद् व्यर्थवचनमतिदुःसहं जातमिति भावः।

(झ) सहसा प्रियतमाऽङ्गसंस्पर्शेन सञ्जातकम्पात्मकसात्त्विकभावा स्वामिसन्दर्शन-भयविह्वला वैदेही तस्मात् स्थानादपसर्त्तुकामा आह, अपसर्त्तुमिति।—अपसर्त्तुम्—अन्यत्र यातुमित्यर्थः। इच्छामि—अभिलषामि, अन्यथा महाननर्थः सम्भविष्यति

राम:। सखि ! कुत: प्रलापा: ? (ञ)—

गृहीतो य: पूर्वं परिणयविधौ कङ्कणधर-
श्चिरं स्वेच्छास्पर्शैरमृतशिशिरैर्य: परिचित: ।

सीता। अज्जउत्त ! सो ज्जेव दाणिं सि तुमम् ? * (ट)

* आर्य्यपुत्र ! स एव इदानीमसि त्वम् ?

इति भाव:। चिरसङ्गावेति।—चिरसङ्गावेन चिरप्रणयेन अविचलितप्रेम्णा इत्यर्थ:, सौम्यो मनोहर: शीतल: स्निग्धत्वेन। वज्रलेपोपनद्ध:,—वज्रेण यो लेपो लेपनम्, आमतिन्दुकफलादिमिश्रणजनित: आधुनिक "सिमेण्ट" आद्यपरनामा वराह-संहितादाद्यक्तो द्रव्यविशेषो वा वज्रलेप:, तेन उपनद्ध इव दृढ़निबद्ध इव कथमपि उत्पाटयितुमशक्य इत्यर्थ:। वराहसंहितोक्त: वज्रलेपो यथा—"आमं तिन्दुकमामं कपित्थकं पुष्पमपि च शाल्मल्या:। बीजानि शल्लकीनां धन्वनवल्को वचा चेति॥ एतै: सलिलद्रोण: क्वाथयितव्योऽष्टभागशेषश्च। अवतार्य्योऽस्य च कल्को द्रव्यैरेतै: समनुयोज्य:॥ श्रीवासकरसगुग्गुलभल्लातककुन्दुरूकसर्जरसै:। अतसीबिल्वैश्च यत: कल्कोऽयं वज्रलेपाख्य:॥ प्रासादहर्म्यवलभीलिङ्गप्रतिमासु कुड्यकूपेषु। सन्तप्तो दातव्यो वर्षसहस्रायुतस्थायी॥" इति। ५७म: अध्याय:। स्विद्यन्—सात्त्विक-भावोद्रेकात् घर्माक्त:। नि:सहेति।—नि:सहं नितरां यथा स्यात् तथा विपर्य्यस्त: विरुद्धभावं गत:, जड़भावमापन्न इत्यर्थ:। इदानीमेताहृशभावस्यानौचित्यादिति भाव:। अवश:,—स्वव्यापाराक्षम:। वेपते—कम्पते, एतेन पञ्चम: सात्त्विकभाव: उक्त:। सात्त्विकभावा यथा दर्पणे—"स्तम्भ: स्वेदोऽथ रोमाञ्च: स्वरभङ्गोऽथ वेपथु:। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका: स्मृता:॥" इति।

(ञ) राम: "किमिति प्रलापैर्मां दहसि" इत्यादिवासन्तीवचनं प्रत्युत्तरय-न्नाह, सखीति।—कुत:,—कस्माद्धेतो:। प्रलापा:,—निरर्थकवचनानि, स्युरिति शेष:। "पुन: प्रमाद जानकी" इति मदीयवचनमुन्मत्तवचनवदनर्थकमिति समाक-लितुं नौचितमिति भाव:।

(ट) "गृहीत:" इत्यादिश्लोकस्य पूर्वार्द्धमाकर्ण्य स्वामिन: स्वविषयनितर-साधारणमनुरागमनुभूय जनकतनया सविस्मयं वक्ति, आर्य्यपुत्रेति।—इदानीम्—इदानीमपीत्यर्थ:। स एव—पूर्ववत् मदेकान्तानुरागी एव, मां प्रति ताहृक्प्रणय-वानेवेत्यर्थ:; त्वयि न कोऽपि विपर्य्ययो लक्ष्यते मम तु दशाविपर्य्यय: केवलमदृष्टा-धीन इति भाव:। यद्वा—इदानीं—सम्प्रति, ईदृगनुरागप्रकाशकाले इत्यर्थ:। स

राम:। स एवायं तस्यास्तुहिनकरकौपम्यसुभगो
मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥४०॥
[ इति गृह्णाति ]। (ढ)

सीता। हद्धी ! हद्धी ! अज्जउत्तप्फंसमोहिदाए पमादो क्खु मे संवुत्तो। * (ड)

* हा धिक् ! हा धिक् ! आर्य्यपुत्रस्पर्शमोहितायाः प्रमादः खलु मे संवृत्तः।

एव—यः निरपराधाया अपि मम विजनवनविवासनेनातिदारुणः आसीत्, स एवेत्यर्थः। न ह्येतत् कथमपि सम्भवतीत्यर्थः काक्वा व्यज्यते। तादृगतिदारुणे ईदृगलोकसाधारणानुरागः पाषाणे पङ्कजोद्भववदत्यन्तमसम्भवीति भावः।

ननु यदि नैते प्रलापाः, तर्हि निर्जनारण्यनिर्वासितायाः एतावता कालेनावश्यं मृतायाः सीतायाः सम्प्रत्यत्र कथम् उपस्थितिसम्भवः ? इत्याशङ्कामपनेतुमनुभवमात्रिकं तद्यथार्थ्यं प्रमापयन् सीतापाणिमाह, गृहीत इति।—पूर्वं शैशवे इत्यर्थः, पाणिग्रहणविधौ विवाहसंस्कारावसरे कङ्कणं कराभरणविशेषः वैवाहिकमङ्गलसूत्रविशेषो वा ("कङ्कणं करभूषायां सूत्रमङ्गलयोरपि" इति मेदिनी) तस्य धरः कङ्कणधरः मङ्गलसूत्रसमलङ्कृतः इत्यर्थः, यः प्रियायाः पाणिः गृहीतः धृतः, मयेति शेषः, तथा यः पाणिः अमृतशिशिरैः सुधावच्छीतलैः सुखकरैरित्यर्थः, स्वेच्छास्पर्शैः स्वेच्छया स्वाच्छन्द्येन स्पर्शाः सत्कारा इत्यर्थः, तैः अनियतस्पर्शैरिति यावत्, चिरं दीर्घकालं व्याप्य परिचितः परिज्ञातः इति पूर्व्वार्द्धार्थः ; पूर्व्वार्द्धेन स्वप्रतिपाद्यमुद्देश्यस्य सम्प्रति तदेव वाक्यमुपसंहरति, स एवेति।—तस्याः सीतायाः तुहिनैः तुषारैः करकाभिः वर्षोपलैश्च ("अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्" इति "वर्षोपलस्तु करका" इति चामरः) सह यत् औपम्यमतिशीतलत्वात् सादृश्यं तेन सुभगः सन्तापहारकत्वात् सुसेव्यः, ललितं सुकुमारं यत् लवलीकन्दलं लवलीप्ररोहः तन्निभः तत्सदृशः ( लवली "नोयाड" इति भाषा प्रसिद्धः फलविशेषः ) स एव अद्य स्पर्शेन अनुभूयमानः पाणिः करः मया लब्धः प्राप्तः। [ अत्र "अमृतशिशिरैः" "तुहिनकरकौपम्यसुभगः" "ललितलवलीकन्दलनिभः" इति पदत्रये उपमाऽलङ्कारः। किञ्च "मया लब्धः पाणिः" इत्यन्वयसमाप्तावपि ललितेत्यादिविशेषणपदोपादानात् समाप्तपुनरात्तता नाम दोषः ]। शिखरिणी वृत्तम् ॥ ४० ॥

(ढ) गृह्णाति—ग्रहणमभिनयति, सीताहस्तमिति शेषः।

(ड) सुचिरकालात् परं प्रियस्पर्शलाभिकस्य चेष्टाप्रतिघातात्मकसात्त्विक-

राम:। सखि वासन्ति ! आनन्दनिमीलितेन्द्रियः साध्वसेन परवानस्मि, तत् त्वं तावदेनां धारय । (ढ)

वासन्ती। कष्टम् ! उन्माद एव । (ण)

सीता। [ ससम्भ्रममाक्षिप्यापसर्पति ]। (त)

राम:। हा धिक् प्रमादः, हा धिक् प्रमादः !!—

करपल्लवः स तस्याः सहसैव जडाज्जडः परिभ्रष्टः ।
परिकम्पिणः प्रकम्पी करान्मम स्विद्यतः स्विद्यन् ॥४१॥

सात्त्विकभावोदयेन जडीभूता प्रियेण पुनर्दृष्टेति सीता सप्रकाशभीता आह, हा धिगिति ।—आर्य्यपुत्रेति ।—आर्य्यपुत्रस्य स्वामिनो रामस्य स्पर्शेन मोहिताया विचित्ततां प्राप्तायाः । प्रमादः,—अनवधानताजनितो दोष इत्यर्थः । आर्य्यपुत्रस्य संज्ञालाभानन्तरमेव इतोऽपसरन्त्या मया न साधु कृतमिति भावः ।

(ढ) सुदीर्घं विरहदुःखमनुभूय सम्प्रति भाग्यलब्धायाः सीतायाः पुनरपायशङ्कया भीतः रामचन्द्रः आह, सखीति ।—आनन्देति ।—आनन्देन प्रियतमाकरस्पर्शसम्भवेन हर्षेण निमीलितानि अवशानि स्वस्वव्यापारे अशक्तानीति यावत्, इन्द्रियाणि चक्षुरादिज्ञानेन्द्रियाणि वागादिकर्म्मेन्द्रियाणि च यस्य स तथोक्तः। साध्वसेन—साध्वसं हर्षातिरेकसम्भूतवैक्लव्यं तेन [ साधु अत्यन्तम् अस्यते निक्षिप्यते मनोऽनेनेति साध्वसं, साधु + अस् + अच् ] ("भीतिर्भीः साध्वसं भयम्" इत्यमरः) । परवान् अस्मि—पराधीनः भवामि, नाहमात्मनि प्रभवामीत्यर्थः । ("परतन्त्रः पराधीनः परवान् नाथवानपि" इत्यमरः) । इदानीं कथमप्यसम्भावितं प्रियापाणिस्पर्श-सुखमनुभूय स्तब्धीभूतोऽस्मीति नाहं सीतां धारयितुं शक्नोमीति भावः ।

(ण) उन्मादः,—उन्मत्तता, बुद्धिविभ्रमः इति यावत्, रामस्य जातः इति शेषः । कष्टम्—एतदतीव दुःखकरमित्यर्थः, इतरथा प्रत्यक्षतोऽदृश्यमानायामपि वैदेह्यां कथं प्रत्यक्षदर्शीव व्यवहरतीति भावः ।

(त) आक्षिप्य—आकृष्य, रामधृतं स्वकीयं पाणिं बलादाकृष्येत्यर्थः । ससम्भ्रमं—सत्वरम् । अपसर्पति—अपसृत्य दूरं यातीत्यर्थः ।

अद्य कालात् परं भाग्यात् पुनर्लब्धस्यापि प्रियायाः करपल्लवस्य सहसा परिभ्रंशे स्वकीयमनवहितत्वमेव हेतुरिति समर्थयमान आह, करपल्लव इति ।—जडः विवशः, स्वव्यापाराक्षमः इत्यर्थः, प्रकम्पी वेपमानः, स्विद्यन् स्वेदाक्तः तस्याः सीतायाः स इतः पूर्व्वमेव मया लब्धः करपल्लवः कोमलाङ्गुलिसनाथतया पल्लवसदृशः करः जडात्

सीता। हद्धी! हद्धी! अज्ज वि अणवत्थिदत्थिमिदमूढ़-घुण्णन्तणअणो ण पज्जवत्थावेदि अत्ताणअं। * (थ)

तमसा। [ सस्नेहहासकौतुकं निर्वर्ण्य ]। (द)—

* हा धिक्! हा धिक्! अद्यापि अनवस्थितस्तिमितमूढ़घूर्णन्नयनो न पर्य्यवस्थापयत्यात्मानम्।

स्वेदीभूतात् विवशतया दृढ़माकर्षणक्षमादित्यर्थः, परिकम्पात् सकम्पात् शिथिलात् घर्म्माप्लुतात् मम करात् हस्तात् सहसैव झटित्येव परिभ्रष्टः परिच्युतः, विगलित इति यावत्, मम अनवधानतां विना कथं भाग्यलब्धस्यापि पुनरपगमः इति भावः। [ अत्र सीतारामयोरुभयोरपि समेन सात्त्विकभाववर्णनेन रत्याख्यस्थायिभावस्य परिपुष्टतया विप्रलम्भशृङ्गाररसो भवतीति बोध्यम्। सात्त्विकभावाश्च प्रागुक्ताः। तथाऽत्र सहसा करात् करपरिभ्रंशे जडत्वादीनां हेतुतया पदार्थहेतुकं काव्यलिङ्ग-मलङ्कारः, एवं "करपल्लवः" इत्यत्र लुप्तोपमा च इत्यनयोः परस्परनिरपेक्षतया संसृष्टिः ]। आर्य्या नाम मात्रावृत्तम्। तल्लक्षणं यथा—"लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः। षष्ठो जश्च नलघु वा प्रथमार्द्धे नियतमार्य्यायाः॥" इत्यादि। अत्र पूर्वार्द्धे षष्ठस्य ( — ⏑ — ) जगणत्वात् यतिव्यवस्थाभावः। इयं हि सप्तदशलघु-सद्भावात् चत्रिंशापि नायक ( जगण ) चतुष्टयान्वितत्वात् वेश्या जातिः॥ ४१॥

( थ ) अनवस्थितेति।—अनवस्थिते अकस्मात् प्राप्तसीताकरपरिभ्रंशात् अस्थिरे स्तिमिते पूर्व्वानुभूतस्पर्शसुखस्मृत्या निश्चले मूढ़े विषयज्ञानरहिते तथा घूर्णन्ती सीतारूपविषयग्रहणार्थमितस्ततः धावन्ती नयने चक्षुषी यस्य सः। [ अत्र अनवस्थितत्वादिरूपाणाम् एतासां चतसृणां विरुद्धावस्थानाम् एकत्र युगपद् अवस्थानासम्भवात् क्रमशः क्षणभेदेन व्यवस्था बोध्या ] आत्मानं—स्वमित्यर्थः। न पर्य्यवस्थापयति—प्रकृतिस्थं करोति, तथा निकटेगं कर्त्तुं न शक्नोतीत्यर्थः; इदानीं कथमपि न सम्भावितं मामककरस्पर्शम् अकस्मादनुभूय क्षणमानन्दविह्वलः आर्य्यपुत्रः सहसा पुनः कराप-भ्रंशात् अतिक्लिष्टो नात्मस्थैर्य्यमापादयितुमलमित्यहो मे वज्रकठोराया निष्करुणत्व-मिति भावः।

( द ) सस्नेहेति।—स्नेहेन स्वाभाविकेन वात्सल्येन, हासेन व्यग्रतया प्रथमं प्रियतमाऽङ्गस्पर्शः तथा प्रकाशत्रासात् पुनरपसरणञ्चेति हासेन कौतुकेन, हृदय-विदारकोऽपि अयं भावः सम्प्रति भावान्तरमुपेतः, ततश्च दर्शनीयः इति कौतूहलेन च सहितं यथा स्यात् तथा। निर्वर्ण्य—पर्य्यवेक्ष्येत्यर्थः; आहेति शेषः।

सस्वेदरोमाञ्चितकम्पिताङ्गी जाता प्रियस्पर्शसुखेन वत्सा ।
मरुन्नवाम्भःप्रविधूतसिक्ता कदम्बयष्टिः स्फुटकोरकेव ॥ ४२ ॥

सीता । [स्वगतम् ।] अम्महे ! अवसेण एदेण अत्ताणएण लज्जाविदह्मि भअवदीए तमसाए, किंत्ति किल एसा मणिस्सदि एसो दे परिच्चाओ एसो अ हिअआसङ्गो त्ति । * (ख)

* अम्महे ! अवशेन एतेनात्मना लज्जापिताऽस्मि भगवत्या तमसया, किमिति किल एषा मंस्यते, एष ते परित्यागः एष च हृदयासङ्ग इति ।

जनकनन्दिनीं सहसा स्वयं प्रियतमाऽङ्गसङ्गसुखेन बहिःप्रकाशितस्वेदरोमाञ्चकम्पादिसात्त्विकभावतया स्वं मनोभावं गोपायितुं कथमप्यसमर्थामालोक्य तमसा तस्याः तदानीन्तनीमवस्थामुपवर्णयन्ती आह, सस्वेदेति ।—वत्सा सीता प्रियस्य पत्युः रामस्य स्पर्शेन अङ्गसङ्गेनेत्यर्थः, यत् सुखं तेन स्पर्शजनितेन आह्लादेन हेतुनेत्यर्थः, सस्वेदानि स्वेदार्द्राणि रोमाञ्चितानि पुलकितानि कम्पितानि च वेपमानानि च अङ्गानि गात्रावयवा इत्यर्थः, यस्याः सा तथोक्ता घर्मजलाप्लुतपुलकितवेपमानगात्रावयवेत्यर्थः, सती [अत्र स्त्रियां पाक्षिकः ङीष्] मरुता वायुना नवाम्भसा च वर्षारम्भे नववृष्टजलेन च यथाक्रमं प्रविधूता कम्पिता सिक्ता च उक्षिता च सती [नायं शाब्दिकसम्मतः प्रयोगः, तथा हि—समर्थं हि पदं समर्थेन समस्यते नासमर्थं, तथाच प्रकृते मरुत्प्रविधूतपदयोः नवाम्भःसिक्तपदयोश्च परस्परमन्वयसमर्थयोरपि यथाक्रमं समासे नवाम्भःशब्देन प्रविधूतशब्देन च व्यवहिततया असामर्थ्यात् तादृशसमासो न साधुरिति सुधीभिर्विभाव्यम्] तथा स्फुटा विकसिताः कोरकाः कलिका यस्याः सा तथाभूता स्पष्टोद्गतकेसरेत्यर्थः, कदम्बयष्टिः कदम्बशाखेव [अत्र यष्टिशब्दप्रयोगेण कृशता द्योत्यते, सम्भावितस्य लिङ्गवैषम्यरूपस्य उपमादोषस्य परिहारश्च भवतीति बोध्यम्] जाता संवृत्ता । [अत्र उपमा नामालङ्कारः, सा च इवशब्दोत्थापिततया श्रौती, उपमानोपमेयगतसामान्यधर्माणां वाच्यतया च पूर्णा ; परन्तु नेयं विशुद्धा, उपमेयांशे कथितानां धर्माणां क्रमस्य उपमानांशे अपरिरक्षितत्वात् ; तथा "मरुन्नवाम्भःप्रविधूतसिक्ता" इत्यत्र प्रथमोद्दिष्टयोः मरुन्नवाम्भःपदयोरनु यथाक्रमं प्रविधूतसिक्तपदयोरुद्देशात् यथासङ्ख्यं चेत्यनयोरन्योन्यसापेक्षतया सङ्करः]। इन्द्रवज्रोपेन्द्रवज्रयोर्मिश्रणात् उपजातिर्वृत्तम् ; एतच्च चतुर्दशधाप्रस्तारान्वितायाः उपजातेः द्वादशसङ्ख्यको "रामा" नामको भेदः ॥ ४२ ॥

(ख) तमसायाः सकौतुकमालोकनं तदानीन्तनावस्थासमालोचनञ्च विज्ञाय

राम:। [ सर्व्वतोऽवलोक्य ]। कथं नास्त्येव, ननु अकरुणे वैदेहि !—" (न)

सीता। सच्चं अकरुणम्हि, जा एव्वंविधं तुमं पेक्खन्ती धारेमि ज्जेव जीविदम्। * (प)

* सत्यमकरुणाऽस्मि, या एवंविधं त्वां प्रेक्षमाणा ननु धारयाम्येव जीवितम्।

लज्जावनता सीता आत्मगतमाह, अम्महे इति।—इदं सम्भ्रमसूचकमव्ययम्। अवशेन—आनन्दविह्वलेन, प्रियस्पर्शसुखानुभवपरवशेनेत्यर्थः। एतेन—मदीयेन स्वेद-रोमाञ्चकम्पान्वितेनेत्यर्थः। आत्मना—देहेन हेतुना, [ अत्र "हेतौ" ( २।३।२३ पा० ) इति तृतीया। "आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि" इति विश्वः ]। लज्जापिताऽस्मि—त्रपां नीताऽस्मि, मलज्जीकृताऽस्मीति यावत्। [ "लज्जाम् आपिता" इति द्वितीयासमासेन "लज्जापिता" इति पदं सिद्धम्। केचित्तु "लज्ज् प्रकाशने" इति धातोरदन्तचुरादिषु पाठं कल्पयित्वा अदन्तत्वेन वृद्धिं स्वीकृत्य पद-मेतत् साधयन्ति। शाकटायनस्तु कथाप्रभृतीनां सर्वेषामेव धातूनां पुकं विधाय कथापयति, गणापयति, लज्जापयति इत्यादिकं साधयतीति ध्येयम् ]। परि-त्यागः,—परिवर्ज्जनम्। हृदयासङ्गः,—हृदयस्य चेतसः आसङ्गः आसक्तिः, अनुराग इति यावत्, [ अत्र अभिषङ्ग इति पाठे—संसर्ग इत्यर्थः ]। असौ त्वामासन्नप्रसवाम् असहायाञ्च विजनेऽरण्ये निर्वासितवान्, त्वया तु अतिनिष्करुणेऽप्यस्मिन् एवमनुरागः प्रदर्शितः, यत् क्षणमङ्गसङ्गेनैव स्वेदपुलककम्पैर्युगपदाकुलिता आनन्दपरवशा च संवृत्तेति निष्कारणनिर्वासयितरि अभिमानाप्रदर्शनेन ते लघुतैव जातेति तमसाया विश्वासः भविष्यति इति भावः। इति—इत्थम्। एषा—तमसा। मंस्यते—मंस्यति।

(न) प्रमादतः स्वकरात् विच्युतामपि सीतामितस्ततोऽन्विष्यापि अलभमानो रामभद्रः आह, कथमिति।—कथमिति—विस्मये। नास्त्येव—न विद्यत एव, अत्र सीतेति शेषः। सीता यदि अत्र कुत्रापि स्यात् तदा उपलभ्येत इति भावः। नन्विति सकरुणसम्बोधने। अकरुणे!—नास्ति करुणा दया यस्याः तत्सम्बुद्धौ, निर्दये! इत्यर्थः, वक्ष्यमाणरामोक्त्यन्तर्गतेन "क्वासि" इत्यनेनान्वयः।

(प) स्वामिना अभिहितम् "अकरुणे" इति सम्बोधनपदमाकर्ण्य सीता सानु-शयमाह, सत्यमिति।—सत्यं—यथार्थमित्यर्थः, मम अकारुण्ये नास्ति कोऽपि संशयः

राम.। "—क्वासि देवि! प्रसीद न मामेवंविधं परित्यक्तुमर्हसि। (फ)

सीता। अइ अज्जउत्त! विवरीदं विअ एदं। * (ब)

वासन्ती। देव! प्रसीद प्रसीद, स्वेनैव लोकोत्तरेण धैर्य्येण संस्तभयातिभूमिगतविप्रलम्भमात्मानम्; कुतोऽत्र मे प्रियसखी सीता? (भ)

---

* अयि आर्य्यपुत्त्र! विपरीतमिवैतत्।

---

इति भावः। या—अहम्। एवंविधं—दुःसहमद्वियोगदुःखकातरमित्यर्थः। प्रेक्षमाणा—स्वयं साक्षात्कुर्वाणा। जीवितं—प्राणान्। धरामि—बिभर्म्मि; एवकारस्तु अन्ययोगव्यवच्छेदार्थकः, तेन "न तु त्यजामि" इत्यर्थो लभ्यते। अत्र मन्वित्यनुनये। दयितं दुःसहदुःखम्रियमाणं साक्षादवेक्षमाणाया: पतिव्रताया: पत्न्या: प्राणविनिमयेनापि तद्दुःखापनय: करणीय इति तद्विरुद्धाचरणपरायणाया: मम तु निर्दयत्व सुव्यक्तमेवेति भावः।

(फ) क्वासि—मम दृष्टिविषये कुत्र वर्त्तसे इत्यर्थः। प्रसीद—पुनरपि दर्शनस्पर्शनदानेन मामनुगृहाणेत्यर्थः। एवंविधं—दुःसहवियोगक्लेशकातरं, प्रायेण कामस्य दशमीं दशामुपेतमित्यर्थः। परित्यक्तु—विहाय अन्यत्र गन्तुमित्यर्थः। अर्हसि—शक्नोषि, दयितं दुःखकातरमशरणञ्चावेक्षमाणाया: पत्न्या: कथमपि नासौ परित्याज्य इति भावः।

(ब) अयीति कोमलसम्बोधने। आर्य्यपुत्र!—स्वामिन्! एतत्—त्वदुक्तं "न मामेवंविधम्" इत्यादिवचनमित्यर्थः। विपरीतं—विरुद्धमिव आभातीति शेषः। यतस्त्वमेव मां परित्यक्तवान्, नाहं त्वां परित्यक्तवतीति भावः। पतिव्रता विनीता सीता रामवाक्यमन्यथा प्रतिपादयितुं न शक्नोति द्योतनाय अत्र इवशब्दप्रयोगः।

(भ) स्वेन—स्वकीयेन, स्वाभाविकेनेत्यर्थः। लोकोत्तरेण—लोकातिशायिना, असाधारणेन अन्योपदेशनिरपेक्षेणेत्यर्थः। धैर्य्येण—चित्तस्थैर्य्येण, मनसोऽविकारितयेति यावत्। अतिभूमीत्यादि।—भूमिं चरमसीमाम् अतिक्रान्ता इति अतिभूमिः, तां गतः प्राप्तः सीमातिगः इत्यर्थः, [अत्र भूमिशब्दः चरमसीमार्थे लाक्षणिकः] विप्रलम्भो विरहशोको यस्य तं तथोक्तम्, अतिविरुद्धवियोगशोकाविष्-

राम:। व्यक्तं नास्ति, कथमन्यथा वासन्ती अपि तां न पश्येत्, अपि खलु स्वप्न एष स्यात्, न चास्मि प्रसुप्तः, कुतो वा रामस्य स्वप्नः? सर्वथा स एवैष भगवान् अनेकवारपरिकल्पनानिर्मितो विप्रलम्भः पुनः पुनरनुबध्नाति माम्। (म)

मित्यर्थः। ("विप्रलम्भो विप्रयोग." इत्यमरः)। आत्मानं—मानसम्, ("आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि" इति मेदिनी)। संस्तम्भय—स्थिरीकुरु, शोकातिरेकविकृतमपि प्रकृतिस्थं विधेहीति यावत्।

(म) "कुतोऽत्र प्रियसखी" इति प्रागुक्तवासन्तीवचनेन लब्धचेतनो रघुनन्दनः स्वानुभूतौ सन्दिहान आह, व्यक्तमिति।—व्यक्तम्—असन्दिग्धं, सीता अत्र नास्ति इत्येव सत्यमित्यर्थः। अन्यथा—इतरथा, चेदत्र विद्येतेत्यर्थः, वासन्त्यपि—अलौकिकशक्तिमती वनदेवताऽपीत्यर्थः, तां—सीतां, कथं—कस्मात्, न पश्येत्—नेक्षेत? यतः सीता अनितरसाधारणप्रभावशालिन्या वासन्त्या अपि दृष्टिविषयो न भवति, तस्मात् नूनमेव सा अत्र नास्तीति भावः। इदानीमात्मनः सर्व्वथा भ्रमसम्भवात् वनदेवतायाश्च अलौकिकशक्तिमत्तया ज्ञानप्रकर्षद्योतनाय "वासन्ती" इत्युक्तम्। एवं योग्यानुपलब्धेरेव सीताया असत्त्वनिर्णयात् स्वानुभवस्य भ्रमरूपतामाह, अपीति।—एषः,—त्वगिन्द्रियजन्यः सीतायाः अनुभवः। स्वप्नः,—सुप्तिकालीनमनोविकारः, ("स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः" इति दर्पणः)। अत्र अपिशब्दः सम्भावनार्थकः, ("अपि सम्भावनाप्रश्न-शङ्कागर्हासमुच्चये" इति मेदिनी)। खलुशब्दो वाक्यालङ्कारे। सोऽपि न सम्भवतीत्याह, न चेति।—अस्मि—अहम्। प्रसुप्तः,—निद्रितः। अत एव कुतः,—कस्मात्, केन रूपेणेत्यर्थः। रामस्य—मम। अप्रसुप्तस्य हि कथमपि न स्वप्नसम्भवः, प्रसुप्तविज्ञानस्यैव स्वप्नपदार्थत्वात् "स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्" इति अमरवचनात् पूर्व्वोक्तदर्पणवचनाच्च। प्रागुक्तरूपं विकल्प्य सम्प्रति स्वयमेव सिद्धान्तमाह, सर्व्वथेति।—अनेकवारेत्यादि।—अनेकवारं बहुशः परिकल्पना पुनः पुनः चिन्ता इति अनेकवारपरिकल्पना [अनेकवारमित्यत्र "कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति अत्यन्तसंयोगे द्वितीया, ततश्च परिकल्पना-शब्देन द्वितीयासमासः] तया निर्मितः उत्पादितः निरन्तरचिन्ताजन्य इत्यर्थः। स एव—पूर्व्वं बहुशः अनुभूत एव इत्यर्थः, विप्रलम्भे अभिनवत्वव्यवच्छेदार्थकोऽयम् एवशब्दः। भगवान्—असाध्यसाधनसमर्थतया अलङ्घनीयप्रभावः। विप्रलम्भः,—प्रतारणा, मृगतृष्णिकावत् शून्येऽपि सीतादर्शनादिरूपः

सीता। मए ज्जेव दारुणाए विप्पलद्धो अज्जउत्तो। * (ग)

वासन्ती। देव! पश्य पश्य।—

पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथः
पश्यैते पुरतः पिशाचवदनाः कङ्कालशेषाः खराः।

* मयैव दारुणया विप्रलब्धः आर्य्यपुत्रः।

---

अत इत्यर्थः। पुनःपुनः,—भूयोभूयः। मामनुबध्नाति—मया सह धावति, इतः पूर्व्वं बहुवारम् अनेनाहं विप्रलब्धः, सम्प्रत्यपि, तथैव जात इत्येवमत्यन्तं प्रतारितोऽस्मीति भावः। [तस्य दुर्निवार्य्यत्वैश्वर्य्ययोगी भगवानित्यनेन व्यज्यते]।

(ग) दारुणया—निष्करुणया। विप्रलब्धः,—प्रतारितः, सहसा इत्याकर्षणादिति शेषः। नायमलीककल्पनाप्रभवो विप्रलम्भो येनायमतितरां क्लिश्यति, अपि तु नितान्तनृशंसया मयैव अदृश्यया उपपादितः इति भावः।

दुःसहवियोगकातरं राममेवं विलपन्तमालोक्य तम् अन्यासक्तमानसं कर्त्तुकामा वासन्ती सहसा ससम्भ्रमं "देव। पश्य पश्य" इत्यादिना स्ववक्तव्यमुपक्रम्य सम्प्रति दर्शनीयमेवाह, दर्वेति।—जटायुषा जटायुर्नामकगृध्रराजेन, [जटं संहतमायुर्यस्य सः जटायुः; अथवा—जटा पत्रमूलमेवायुर्यस्य स तथोक्तः। [असाम्प्रतपाठे तु—जटया याति इति जटायु, जटाशब्दोत्तर'या' धातोः "मृगय्वादयश्च" (उ० पा० १ सू० ३७) इति मृगय्वादित्वात् कुप्रत्ययः। अत्रैव श्लोके तृतीयपादे वृद्धशजटायुशब्दः प्रयुक्तः। दीर्घजीवित्वात् तस्येयं संज्ञा] विघटितः भग्नः पौलस्त्यस्य पुलस्त्यगोत्रापत्यस्य रावणस्य (पुलस्त्यो हि ब्रह्मणः मानसपुत्रेषु चतुर्थः, तस्य विश्रवा नाम एकः पुत्रः आसीत्, रावणस्तु तस्यैव पुत्र इति पुलस्त्यस्य नप्ता रावण इति पौराणिकी वार्त्ता) कार्ष्णायसः कृष्णवर्णेन उत्कृष्टलौहविशेषेण विनिर्म्मितः लौहमयः इत्यर्थः, [कृष्णञ्च तदयश्चेति कृष्णायसम् "अनोऽश्मायःसरसांजातिसंज्ञयोः" (५।४।९४ पा०) इति समासान्तः टच्। कृष्णायसस्य विकारः इति कार्ष्णायसः "तस्य विकारः" (४।३।१३४ पा०) इति अण् प्रत्ययः]। अयं दृश्यमानः रथः स्यन्दनः वर्त्तते इति पश्य, त्वमिति शेषः। पुरतः अग्रतो वर्त्तमानाः पिशाचवदनाः विकटमुखाः इत्यर्थः, [पिशितमाचामन्ति अश्नन्ति इति पिशाचाः पिशितशब्दोत्तरमाचमधातोर्डप्रत्ययेन पृषोदरादित्वात् साधुः, तेषामिव वदनानि येषां ते पिशाचवदनाः इति उपमानपूर्व्वपदो बहुव्रीहिः उत्तरपदलोपश्च] कङ्कालशेषाः अस्थिपञ्जरावशिष्टाः ("शरीरस्यास्थि कङ्कालं तथा स्यादस्थि-

खड्गच्छिन्नजटायुपक्षतिरितः, सीतां ज्वलन्तीं वहन्
अन्तर्व्याकुलविद्युदम्बुद इव द्यामभ्युदस्थादरिः ॥ ४३ ॥

पञ्जरम्” इति हलायुधः ) खराः जटायुनिहता रावणरथवाहनमहाकायखरचरविशेषाः (अत्रापि विघटिताः इति वचनस्यथासेन अनुषज्यते ) वर्त्तन्ते तानपि पश्येत्यूह्यम् । इत अस्मात् पुरतोऽङ्गुल्या निर्दिश्यमानात् स्थानादित्यर्थः, अरिः शत्रुः रावण इत्यर्थः, खड्गेन छिन्ने जटायोः पक्षती पक्षमूले येन स तथोक्तः सन् अस्मिन्नेव स्थाने जटायोः पक्षती छिन्ने इति भावः, [ पक्षस्य मूलम् इति पक्षतिः “पक्षात् तिः” ( ५।२।२५ पा० ) इति पक्षशब्दात् मूलार्थे तिप्रत्ययः ] ज्वलन्तीं लावण्यमय्या कान्त्या जाज्वल्यमानां बलादपहरणजनितकोपेन उद्दीप्यमानां वा [ अत्र उपमानभूत विद्युद्धर्मचाञ्चल्यानुरोधात् अपहर्त्तुरात्मत्राणाय सीतायाः विचेष्टमानत्वमपि व्यज्यते ] सीतां वैदेहीं वहन् बलात् गृह्णन्नित्यर्थः, अन्तः अभ्यन्तरे व्याकुला चञ्चला, दंदीप्यमानेति यावत्, विद्युत् तड़ित् यस्य स तथोक्तः, अम्बुदो मेघ इव [ अम्बु जलं ददाति इति अम्बुदः, अम्बुशब्दात् ददातेः “आतोऽनुपसर्गे कः” ( ३।२।३ पा० ) इति कप्रत्ययः । अत्र रावणराक्षसस्य कृष्णवर्णत्वात् बृहत्कायत्वाच्च मेघौपम्यं बोध्यम ] द्याम् आकाशं, ( “द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् । नभोऽन्तरीक्षं गगनम्—” इत्यमरः ) । अभ्युदस्थात् अभ्युत्पपात । [ उत्पूर्व्वकस्थाधातोः “उदोऽनूर्द्धकर्म्मणि” ( १।३।२४ पा० ) इत्यनेन अनूर्द्धचेष्टायामेव आत्मनेपदविधानात्, अत्र च तस्य ऊर्द्धचेष्टाबोधकत्वात् नात्मनेपदमिति बोध्यम् ] । पुरा किल वर्णिवेशधारी लङ्केश्वरः दण्डकारण्यादसहायां जनकतनयां छलेनापहृत्य रथेन गगनपथेन गच्छन् दशरथस्य नृपतेर्मित्रेण जटायुषा तरसा पक्षाभ्यामवरुद्धः भग्नरथः अतिक्रुद्धः परस्परं दीर्घकालं युध्यमानः तं कथमपि पराजेतुकामः असिना तस्य पक्षौ छित्त्वा सीतामादाय लङ्कां प्रतस्थे, इति रामायणकथाऽत्रानुसन्धेया । [ अत्र रावणस्य बृहदाकारकृष्णवर्णाभ्यां मेघसदृशतया सीतायाश्च स्वाभाविकौज्ज्वल्यसामयिकचाञ्चल्याभ्यां विद्युत्सदृशतया सीतोपेतस्य रावणस्य विद्युद्गर्भोऽम्बुदतुल्यताकथनात् उपमाऽलङ्कारः ; तथा अभ्युद्भ्यां परस्य स्थाधातोः अस्थानकर्षोन्नत्यार्थशक्ततया उद्गमनार्थबोधकत्वात् तदर्थे अवाचक इति अत्र ऊर्द्धगमनार्थे प्रयुक्तत्वात् अवाचकत्वदोषः । स चैवं परिहर्त्तुं शक्यते ; तथाहि—“अभि” इति पृथक् पदम् “उदस्थात्” इति क्रियाया विशेषणं, तस्याच नास्ति भीः भीतिः यत्र तत् अभि भयरहितं यथा स्यात् तथेत्यर्थः, उदस्थात् उत्पपात इति ] । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४३ ॥

सीता। [सभयम्।] अज्जउत्त! तादो वावादीअदि, अहं अ अवहरिआमि, परित्ताहि परित्ताहि।* (र)

रामः। [सवेगमुत्थाय] आः पाप! तातप्राणसीताऽपहारिन्! क्व यासि? (ल)

वासन्ती। अयि देव राक्षसकुलप्रलयधूमकेतो! अद्यापि ते मन्युविषयः? (व)

---

* आर्य्यपुत्र! तातो व्यापाद्यते, अहञ्चापह्रिये, परित्रायस्व परित्रायस्व।

---

(र) सहसा वासन्तीमुखात् पौलस्त्यजटायुवृत्तान्तश्रवणेन पूर्व्ववृत्तान्तस्मरणा-दतिभीता सीता तदानीन्तनीमवस्थामिदानीमनुभवन्तीव ससम्भ्रममाह, आर्य्य-पुत्रेति।—तातः,—पितृतुल्यो जटायुः, [अत्र श्वशुरस्य दशरथस्य मित्रत्वेन पूज्यत्वात् जटायुषि सीतायाः तातशब्दप्रयोगः। तथाच—"पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते" इति]। व्यापाद्यते—सपक्षच्छेदं हन्यते, रावणेन इति शेषः, [तत्र रावणशब्दोच्चारणादपि भीता सीता स्ववाक्ये कर्तृपदं नाभिहितवतीति बोध्यम्]। अपह्रिये—अपहृत्य नीये इत्यर्थः। परित्रायस्व—शत्रुहस्तात् रक्ष, मां तातञ्चेति शेषः। अत्र सम्भ्रमे द्विरुक्तिः।

(ल) रामोऽपि सीतया उच्चैरभिहितं परित्रायस्वेति कातरवचनमाकर्ण्य विस्मृतात्मवृत्तान्तः तत्परित्राणार्थं सत्वरमुत्थाय आह, आः इति।—आः इति कोप-व्यञ्जकमव्ययम् ("आस्तु स्यात् कोपपीडयोः" इत्यमरः)। पाप!—पापाचारिन्, [पापं विद्यतेऽस्य इति पापः, अस्त्यर्थे पापशब्दात् "अर्श-आदिभ्योऽच्" (५।२।१२७ पा०) इति अच्प्रत्ययः। प्रतारणया परस्त्रीहरणेन अन्यायसमरेण परप्राणहरणेन च अस्य पापाचारित्वं बोध्यम्]। तातप्राणेति।—तातस्य जटायोः प्राणान् सीताञ्च अपहरति यः सः, तत्सम्बोधने। तातस्य प्राणान् प्रेयसीं सीताञ्च बलादपहृत्य कुत्र पलायसे इति समुदितार्थः, जीवतस्ते न मत्तो मुक्तिसम्भव इति भावः [अत्र "त्रोटकं पुनः संरब्धवाक्" इति दर्पणोक्तलक्षणकं रोषसम्भ्रमवचनरूपं सन्ध्यङ्गमभिहितमिति ध्येयम्]।

(व) राक्षसकुलेति।—राक्षसानां निशाचराणां कुलस्य वंशस्य प्रलये ध्वंसे धूमकेतुः प्रलयसूचकधूमकेतुनामकोत्पातविशेष इव, तत्सम्बुद्धौ, निर्म्मूलविनाशित-क्रव्यादवंशेत्यर्थः। प्रलये धूमकेतुर्यथा लोकानां क्षयकारकः तथा त्वमपि राक्षसाना-

सीता। अम्मो ! उम्मत्त म्हि संवुत्ता ! * (ञ)

रामः। अन्वर्थ एवायमधुना प्रलापो वर्त्तते। (ट)—

उपायानां भावादविरतविनोदव्यतिकरैः

विमर्दैर्वीराणां जगति जनिताऽत्यद्भुतरसः।

* अहो ! उन्मत्ताऽस्मि संवृत्ता।

मित्यर्थः। यद्वा—राक्षसकुलस्य प्रलये धूमकेतुरनलः निशाचरवंशनाशे प्रलयानलस्वरूपेत्यर्थः। ("अग्न्युत्पातौ धूमकेतुः" इत्यमरः)। [अत्र रूपकमलङ्कारः]। अद्यापि—सम्प्रत्यपि, समूलनाशं राक्षसवंशविनाशानन्तरमपीत्यर्थः। मन्युविषयः,—कोपपात्रम्, असीति शेषः, ("मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः); [इतः पूर्व्वं त्वयैव रावणोऽसौ सवंशनाशं विनाशितः इति ते कोपपात्रमिदानीं किमपि नास्त्येवेति काक्वा व्यज्यते]।

(ञ) वासन्तीकथितं तथ्यवचनमाकर्ण्य स्वकीयां भ्रान्तिमावमन्याह, अहो इति।—उन्मत्ता—कामस्य अष्टमीं दशामाप्ता, उन्मादग्रस्तेत्यर्थः। कामदशाः पूर्व्वमुक्ताः। उन्मादलक्षणं यथा दर्पणे,—"चित्तसम्मोह उन्मादः कामशोकभयादिभिः। अस्थानहासरुदितगीतप्रलपनादिकृत्॥" उन्मत्तो हि अतिक्रान्तविषयमपि वर्त्तमानतया गृह्णाति तादृशविषयग्रहणं ममापि वर्त्तते, अतोऽहम् उन्मत्ताऽस्मि, अन्यथा कुत एतद्रावणादिदर्शनम्? इति भावः।

(ट) अधुना—सम्प्रति। अन्वर्थ एव—अर्थमनुगतः इति अन्वर्थः, यथार्थ एव। "प्रलापोऽनर्थकं वचः" इति अमरवचनात्, जटायुप्राणसीताऽपहरणादिव्यापाराणां सम्प्रति अवास्तवत्वादिति भावः। अयम्—आः पापेत्यादि मत्कृतः प्रयोगः। प्रलापः,—निर्विषया वाक्। वर्त्तते—प्रवर्त्तते, रावणाद्यभावादधुना तादृशः प्रयोगः निरर्थकतया प्रतिपन्नो भवतीत्यर्थः। यथार्थमेव इदम् अनर्थकं वचः अधुना वर्त्तते; एवं सीतास्पर्शादिव्यापारोऽपि परिकल्पनानिर्मित एव न पुनरधुना सन्देहविषयः इति समुदितार्थः।

रावणेनापहृतायां सीतायां तद्वियोगः सोढ़ः, कथमिदानीं न सह्यते, कथं वा एतादृशः प्रलापादिः प्रवर्त्तते? इत्याशङ्क्य सीतापतिरात्मदोषं परिहरति, उपायानामिति।—उपायानां पुनः सीताप्राप्तेः साधनानाम् [उपायन्ते समधिगम्यन्ते पदार्था यैरिति विग्रहे उपपूर्व्वादयतेः करणे घञ्प्रत्ययः] भावात् सद्भावात् रावणेनापहृतायाः सीतायाः पुनरुद्धारसाधनानाम् आश्रयेणेत्यर्थः; अधुना तु उपायाभाव इत्याशयः। अविरता

वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभूत्
कथं तूष्णीं सह्यो निरवधिरिदानीन्तु विरहः? ॥ ४४ ॥

अविश्रान्ताः ये विनोदाः उद्धारार्थं सीताऽन्वेषणसेतुबन्धनवैरनिर्यातनमन्त्रणाविजय-लाभादिचित्तस्थैर्य्यकरव्यापाराः तेषां व्यतिकरः सम्पर्कः मेलनमिति यावत्, येषु तादृशैः, वीराणां रावणकुम्भकर्णमेघनादादीनां लक्ष्मणसुग्रीवाङ्गदहनूमत्प्रभृतीनाञ्च विमर्दैः परस्परमिलनदर्शनामर्षणहर्षणनिधनादिव्यापारैः जगति भुवने जनितः उत्पादितः अति अतिशयितः (अन्येषां युद्धेऽद्भुतत्वसत्त्वेऽपि रामरावणयुद्धसदृश-युद्धस्य अभूतपूर्व्वत्वात् अद्भुतेऽपि अतिशयितत्वविशेषणम्) अद्भुतः विस्मयः एव रसः मनसो द्रुतिकारणं वीररसप्रभवरसः इत्यर्थः, येन स तथोक्तः, (रसविदो हि अद्भुत-रसस्य वीररसप्रभवत्वमाहुः, तथा हि "हास्यो भवति शृङ्गारात् करुणो रौद्र-कर्म्मणः। अद्भुतश्च तथा वीराद् बीभत्साच्च भयानकः॥" इति) अधुना तु विनोद-कारणाभावान्न तादृशः इत्यर्थः, मुग्धाक्ष्याः मनोहरनयनायाः सीतायाः [मुग्धे अक्षिणी यस्याः तथोक्तायाः इति विग्रहे अक्षिशब्दात् "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" (५।४।११३ पा०) इति समासान्तः षच्, ततश्च "षिद्गौरादिभ्यश्च" (४।१।४१ पा०) इति स्त्रियां ङीष्प्रत्ययः] स पूर्वं चिराय अनुभूतः वियोगः विरहः खलु निश्चये, रिपूणां शत्रूणां रावणादीनां घातो वध एव अवधिः पर्य्यन्तः यस्य स तादृशः अभूत्, रिपूणां रावणादीनां वधोत्तरमेव सीतायाः पुनरुद्धारसम्भवेन तदानीन्तनविरहस्य नातिदुःसहत्वमासीदिति भावः; तु किन्तु इदानीम् अधुना निर्नास्ति अवधिरन्तो यस्य स निरवधिः अनन्तः, तादृशहिंस्रजन्तुसमाकुलवन-निर्वासनात् तस्याः मरणावश्यम्भावेन पुनः समागमासम्भवादिति भावः, तात्पर्य्यात् उपायाभावादप्रतिविधेयः विनोदाभावाद् दुःसहश्च इत्यर्थः, विरहः विच्छेदः कथं तूष्णीं व्यापारान्तराभावात् वाङ्मात्रं विनाऽपि सह्यः सहनीयः? न कथमपि सहनीय इत्यर्थः; अत एव नैव प्रलापः अनैसर्गिक इत्यधिक्षेपणीयः, न वा विस्मय-जनकः, अपि तु नैसर्गिकत्वादवश्यम्भावी एवेति भावः। [अत्र प्राक्तनेदानी-न्तनविरहयोरुपमानोपमेयभावबोधात् उपमानभूतप्राक्तनविरहात् उपमेय-स्वरूपेदानीन्तनविरहस्य अधिकदुःसहत्वकथनात् व्यतिरेकालङ्कारः; तथा विरहस्य असह्यत्वे निरवधित्वस्य हेतुविधया कथनात् पदार्थहेतुकं काव्यलिङ्गञ्च इत्यनयोरङ्गाङ्गिभावेन सङ्करः। एवं यद्यप्यत्र पूर्व्वमेकदा विरहस्य सोढत्वेन "कथं तूष्णीं सह्यः" इत्यनन्तरं वक्तव्यस्य पुनःपदस्य अकथनात् न्यूनपदता दोषः; तथा

सीता। णिरवधि त्ति हा हदासि मन्दभाइणी। * (स)

[इति रोदिति]।

रामः। हा कष्टम्।—

व्यर्थं यत्र कपीन्द्रसख्यमपि मे, वीर्य्यं हरीणां वृथा,

प्रज्ञा जाम्बवतोऽपि, यत्र न गतिः पुत्रस्य वायोरपि।

* निरवधिरिति हा हतास्मि मन्दभागिनी।

तृतीयपादे वियोगशब्दोल्लेखात् चतुर्थपादे तदादिपदेन अन्व्यस्य विरहशब्दस्य शब्दतः कथनात् पुनरुक्तता दोषश्च लक्ष्यते, तथापि "उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः" इति दर्पणवचनात् "विवादे विस्मये...विस्त्रियुक्तिर्न दुष्यति" इति नियमाच्च विप्रलम्भाख्यशृङ्गाररसस्य पोषकतया एतयोर्भूषकत्वमेव, न तु दूषकत्वम्। यद्वा—चतुर्थपादस्य "कथं तूष्णीं सख्यो निरवधिरयं सम्प्रति पुनः" इति पाठान्तरकल्पनया समाधेयम्। अत एव "निरवधिरयं त्वप्रतिविधः" इत्यपि पाठो दृश्यते इति सुधीभिरालोचनीयम्]। शिखरिणी वृत्तम्॥ ४४॥

(स) "निरवधिरिदानीन्तु विरहः" इति प्रियतमाऽऽक्षेपवचनमाकर्ण्य भविष्यत्समागमेऽपि विगताशा सीता म्रियमाणेवाह, निरवधिरिति।—पूर्ववत् विरहावसानं पुनःसमागमसम्भावना च नास्ति इत्यहं हताऽस्मि, पुनःसमागमाशयैव जीविता, अधुना तदभावात् मृत्युयातनावन्निरतिशययातना मां परिभवति, न तां सोढुं शक्नोमीति भावः।

प्रागेकदा दैवदुर्विपाकात् रावणेन हृता दुस्तरसागरपारं नीता सीता येषां सामर्थ्येनोद्धृता, सम्प्रति तेषां हनूमज्जाम्बवत्सुग्रीवप्रभृतीनाम् अनितरसाधारणशक्तिमतां सत्त्वेऽपि, का कथा पुनरुद्धारस्य, तदवस्थानस्थानमपि निर्णेतुमशक्तो जानकीजीवनः खिद्यमानः आह, व्यर्थमिति।—यत्र यस्मिन् स्थाने मे मम कपीन्द्रसख्यं सुग्रीवमैत्रम् अपि व्यर्थं निष्फलं, न पूर्ववदुद्धारक्षममित्यर्थः, [वि विफलः अर्थः यस्य तत् व्यर्थम् इति विग्रहः] सीतायाः मरणसम्भावनात् लोकान्तरिततया मर्त्यानां तत्रासामर्थ्यादिति भावः, हरीणां वानराणां चमूभूतानामित्यर्थः, ("शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु" इत्यमरः) वीर्य्यं पराक्रमः वृथा निष्फलम्, अकिञ्चित्करमित्यर्थः, लोकान्तरवासिषु मर्त्यानां वीर्य्यप्रकाशासम्भवादिति भावः ("वृथा निरर्थकाविध्योः" इत्यमरः) यत्र जाम्बवतः भल्लूक-

मार्गं यत्र न विश्वकर्म्मतनयः कर्त्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषये तत्र प्रिये ! क्वासि मे ॥ ४५ ॥

पत्रैरपि प्रज्ञा प्रखरा बुद्धिः, प्रतिभेति यावत्, अत्रापि क्षयेत्यनुषज्यते। मर्त्यानां बुद्धिकौशलं मर्त्ये एव प्रभवति, न तु लोकान्तरे इति भावः; यत्र वायोः पुत्रस्य हनूमतोऽपीत्यर्थः, गतिः प्रचारः न अस्तीति शेषः, [अत्र वायुपुत्रकथनेन "कारण-गुणाः कार्य्यगुणमारभन्ते" इति न्यायात् वायोरिव हनुमतोऽपि सर्व्वत्रगत्वम् अप्रतिहतगामित्वञ्च ध्वन्यते, तथाच—दुर्लङ्घ्यसागरपारं गत्वा येन सर्व्वत्रगत्वं प्रख्यापितं, तेनाप्यशक्यगमनोऽयं परलोकः इति भावः] यत्र यस्मिन् स्थाने विश्व-कर्म्मणः देवशिल्पिनः ऋतध्वजमुनिशापात् वानररूपधारिणः इत्यर्थः, तनयः सुतः नलो-ऽपि नलनाम्ना प्रसिद्धो वानरोऽपि [अत्र नले विश्वकर्म्मतनयत्वविशेषणेन "यतो नलः देवशिल्पिनः विश्वकर्म्मणः सुतः, ततः सर्व्वथा तस्मिन् तादृशशिल्पकलाकौशलसम्भवः 'सुतः पितृगुणं धत्ते' इति स्मरणात्" इत्यर्थो ध्वन्यते] मार्गं सेतुबन्धनादिना पन्थानं कर्त्तुं न क्षमः न समर्थः, सौमित्रेः लक्ष्मणस्यापि [सुमित्रायाः अपत्यं पुमान् इति सौमित्रिः, सुमित्राशब्दात् "बाह्वादिभ्यश्च" (४।१।९६ पा०) इति अपत्यार्थे इञ्] पत्रिणां वाणानामविषये अलक्ष्ये यत् लक्ष्मणस्यापि वाणानाम् अविषयः तत्र इत्यर्थः, हे मे मम [अत्र स्वोक्तावपि अस्मच्छब्दप्रयोगात् एतादृशसहायशक्तिमतोऽपि मम प्रिया त्वम् ईदृगज्ञातस्थानस्था दुःखमापन्नेति महान् क्लेशः, इत्यर्थो व्यज्यते] प्रिये प्रीतिदायिनि जानकि ! एवम्भूते तव मम अज्ञाते इत्यर्थः, क्व कुत्र स्थाने असि वर्त्तसे ? पूर्वं सुग्रीवस्य सैन्यादिदानसाहाय्यात् वानराणां पराक्रमबाहुल्यात् जाम्बवतो मन्त्रणाबलात् हनूमतो जलधिलङ्घन सीतोद्देशन ब्रह्मास्त्रानयनादि-सार्वभौमिकव्यापारात् नलस्य सेतुबन्धनसौष्ठवात् लक्ष्मणस्य इन्द्रजिदादिवधचमत्कृत-युद्धकौशलात् त्वमुद्धृताऽऽसीः, अधुना तु तेषां सर्वेषामेव वैफल्यं पश्यामीति पुनरुद्धारे नितान्त निराशोऽस्मीति भावः। [अत्र इदानीन्तनसीताऽवस्थान-स्थाननिर्णयरूपं कार्य्यं प्रति कारणीभूतायाम् एकस्यां कपीन्द्रसख्यव्यर्थतायां खलेकपोतन्यायेन जाम्बवत्प्रज्ञानिष्फलत्वादीनामपि तथा कथनात् समुच्चयो नामालङ्कारः; तेन च सावधिकात् पूर्व्वानुभूतविरहात् निरवधिकस्य वर्त्तमानविरहस्य दुःसहत्वाधिक्य-बोधनात् व्यतिरेकालङ्कारः ध्वन्यते इत्यलङ्कारेणालङ्कारध्वनिः] पुरा किल ब्रह्मणो निर्देशेन देवाः वानरयोनिं लभमानाः रावणवधे रामस्य सहायाः अभवन्, तदा हि अञ्जनाऽभिधेयायाः कस्याश्चित् वानर्य्याः गर्भे असीमवीर्य्यस्य मात-

सीता। बहु मणाविद ह्मि तं पुव्वविरहं। * (ह)

रामः। सखि वासन्ति! सुहृदां दुःखायैव इदानीं रामस्य दर्शनं, तदिदं कियच्चिरं त्वां रोदयिष्यति, तदनुजानीहि मां गमनाय। (क)

सीता। [सोद्वेगं तमसामवलम्ब्य।] भअवदि तमसे! कहं गच्छदि ज्जेव अज्जउत्तो!! † (ख)

---

* बहु मानिताऽस्मि तं पूर्वविरहम्।

† भगवति तमसे! कथं गच्छत्येवार्य्यपुत्रः!!

---

तस्य औरसेन हनूमान्नाम कपिराजः समजनीति; तथा कृतध्वजाभिधेयस्य कस्यचित् मुनेरभिशापेन वानरयोनिमुपेतस्य विश्वकर्म्मणः औरसेन घृताचीनाम्न्याः कस्याश्चित् स्वर्वेश्यायाः गर्भे कपिपुङ्गवो नलो जन्म लेभे इति च पौराणिकी कथा अनुसन्धेया। शार्दूलविक्रीडितं वृत्तम्॥ ४५॥

(ह) अस्मि—अहम्, अस्मीति अहमित्यर्थे अव्ययं, तद्यथा—"दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि! नाऽस्मि दूये। उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रैर्यद् भिद्यते मृदु पदं ननु सा व्यथा मे॥" इति। तं—प्रागनुभूततया अतिप्रसिद्धम्। पूर्व्वविरहं—रावणहरणजन्यं वियोगम्। बहुमानिता—श्लाघ्यरूपेण अङ्गीकारिता, [मनधातोः णिजन्तात् निष्ठाप्रत्ययः] आर्य्यपुत्रेणेति शेषः। तथा च "निरवधिरिदानीन्तु विरहः" इत्यार्य्यपुत्त्रवचनेन वर्त्तमानविरहस्य निरवधितया पुनर्मिलनासम्भवात्, पूर्व्वविरहे च रावणवधानन्तरं पुनःसमागमात् इदानीन्तनात् प्राक्तनस्यैव श्लाघ्यत्वमिति भावः। ["बहु मानयामि तं पूर्व्वविरहम्" इत्यपि क्वचित् पाठः, अर्थस्तु सुगमः]।

(क) सुहृदां—मदीयसुखदुःखयोः सतोः सुखदुःखे अनुभवतां भवादृशामित्यर्थः। दुःखाय—क्लेशाय, दुःखमुत्पादयितुमित्यर्थः। इदानीं—सम्प्रति, दुःसहशोकावेगेन म्रियमाणावस्थायामित्यर्थः। इदं—रामस्य दर्शनम्। कियच्चिरं—किं परिमितं दीर्घकालम्। अनुजानीहि—अनुमन्यस्व। गमनाय—गन्तुम् [अत्र "तुमर्थाच्च भाववचनात्" (२।३।१५ पा०) इति तुमर्थे चतुर्थी]।

(ख) शोकसन्तप्तमपि चित्तं भाग्यादकस्मात् प्रियतमसाक्षात्कारेण क्षणं विनोदयन्ती सीता राममुखात् तद्गमनवार्त्तामाकर्ण्य हताशासा पुनरपि तद्दुःखमाशङ्कमाना

तमसा । वत्से ! समाश्वसिहि, समाश्वसिहि । ननु आवामपि आयुष्मतोः कुशलवयोर्वर्षवर्द्धनमङ्गलानि सम्पादयितुं भागीरथी-पदान्तिकमेव गच्छावः । (ग)

सीता । भअवदि ! पसीद, खणमेत्तं वि दाव दुल्लहं जणं पेक्खामि । * (घ)

रामः । अस्ति चेदानीमश्वमेधाय सहधर्म्मचारिणी मे—"(ङ)

* भगवति ! प्रसीद, क्षणमात्रमपि तावद् दुर्लभं जनं प्रेक्षे ।

आह, भगवतीति । गच्छत्येव—यात्येव, गमने वासन्त्या अनुमतिं याचमानः तद-लाभेऽपि गन्तुमुद्यतः इत्येवकारार्थः ।

( ग ) आयुष्मतोः,—दीर्घजीविनोरित्यर्थः, [ आयुः प्रशस्ततया बाहुल्येन वा विद्यते ययोः तयोरिति विग्रहे आयुःशब्दात् अस्त्यर्थे "भूमनिन्दाप्रशंसासु नित्य-योगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥" इत्यनुशासनात् भूम्नि प्रशंसायां वा मतुप् ] । वर्षवर्द्धनमङ्गलानि—द्वादशवत्सरवयःपूर्त्तिनिमित्तकवर्षव्यानि दीर्घजीविमार्कण्डेयप्रभृतिदेवपूजादिमङ्गलाचरणानीत्यर्थः ; तथा च तिथितत्त्वे—

"द्विभुजं जटिलं,सौम्यं सुवृद्धं चिरजीविनम् ।
मार्कण्डेयं नरो भक्त्या पूजयेत् प्रयतस्तथा ॥
ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम् ।
प्रह्लादञ्च हनूमन्तं विभीषणमथार्च्चयेत् ॥" इति ।

भागीरथीपादान्तिकं—जाह्नवीचरणसमीपम् ; रामे चक्षुर्विषयमतिक्रान्तेऽपि वियोग-क्लेशं पुनर्नवीभूतमाशङ्कमाना मा भैषीः, यतः आवामपि सम्प्रत्येव जाह्नवीचरणा-न्तिकमुपेत्य श्रीमतोर्जन्मदिवसोत्सवेन क्लेशमिमं विस्मर्त्तुं प्रभवावः इति भावः ।

( घ ) रामे दृष्टिपथमनतिक्रान्ते एव तमसायाः भागीरथीचरणसमीपगमन-प्रस्तावमाकर्ण्य प्रबलपतिदर्शनेच्छाकातरा सीता सखीं सानुनयमाह, भगवतीति । प्रसीद—आर्य्यपुत्रो यावत् दृग्विषयं नात्येति तावत्कालविलम्बेन मामनुगृहाणेत्यर्थः । दुर्लभम्—असुलभं, भाग्यलभ्यमिति यावत् ; यदि तावद् भाग्येन अस्य दर्शनलाभो जातः, तदा यावद् दृष्टिपथं नायमतिक्रामति तावत् पश्यामीति भावः । [ "दुर्लभ-दर्शनम्" इति पाठान्तरम् ] ।

(ङ) ननु यदि इहापि न चित्तविनोदः, तदा स्वगृहगमनेऽपि कुतः

सीता। [ सोत्कम्पम्। ] अज्जउत्त ! का ! सा !! * (च)
रामः। "—हिरण्मयी सीतायाः प्रतिकृतिः। (छ)

* आर्य्यपुत्र ! का सा !!

सान्त्वनायाः सम्भवः ? इत्याशङ्क्याह, अस्ति चेति।—अश्वमेधाय—अश्वमेधाभिधेयं यज्ञं सम्पादयितुमित्यर्थः, "सस्त्रीको धर्म्ममाचरेत्" इति विधिवाक्यात् अश्वमेधादिधर्म्म-कर्म्मणि सहधर्म्मिण्याः उपयोगः बोध्यः, [अत्र "क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः" ( २।३।१४ पा० ) इति चतुर्थी ]। "तत्रापि तावद् वाष्पदिग्धं चक्षुर्विनोदयामि" इति वक्ष्यमाणेन वाक्यशेषः।

( च ) "अश्वमेधाय सहधर्म्मचारिणी अस्ति" इति पतिमुखात् आकर्ण्य पत्युः पुनः परिणयमाशङ्क्य भीता सीता उत्कम्पिता आह, आर्य्यपुत्रेति।—सा त्वदुक्ता सहधर्म्मचारिणी। का—किंनामधेया ?

( छ ) हिरण्मयी—स्वर्णात्मिका, सुवर्णविनिर्म्मितेति यावत्, [ अत्र "मयड् वैतयोः—" ( ४।३।१४३ पा० ) इति विकारे मयट् ]। प्रतिकृतिः,—प्रतिनिधिः, प्रतिमूर्त्तिरिति यावत् ; ( "प्रतिकृतिरर्च्चाया प्रतिनिधिप्रतिकारयोश्च स्त्री।" इति मेदिनी )। "मुख्याभावे प्रतिनिधिः शास्त्रार्थः" इति वदतां धर्म्मशास्त्रविदां मते विधिवाक्यतः प्राप्तस्य वस्तुनः कथमप्यलाभे तद्धर्म्मापन्नेन अपरेणापि कार्य्यसिद्धिर्भवति, तथाच कात्यायनः,—"यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत्। यवानामिव गोधूमा व्रीहीणामिव शालयः॥" इति। अत्रापि मुख्यायाः सहधर्म्मिण्याः सीतायाः अलाभात् तत्प्रतिमूर्त्तिरूपप्रतिनिधिना सस्त्रीकधर्म्माचरणशास्त्रपालनेन यज्ञनिर्वाहः इति। इदमत्रावधेयम्—अत्र साम्प्रतिकक्लमसहमानस्य रघुनाथस्य तत्प्रतीकाराय सहचरीसकाशं स्वभवनगमनानुमतिमात्रप्रार्थनाया एव युक्ततया, तथा प्रयाजनादिकं किमप्यजिज्ञासितोऽपि असौ कथं स्वत एव सहचरीसम्भावितशङ्कानिरसनमुखेन सीताप्रतिकृत्यादिकं स्वसान्त्वनोपायं निर्द्दिशतीति नाशङ्क्य, स्वामिनः स्वस्मिन्नकृत्रिमं हृदयानुरागम् अनेकशः साक्षादवगताया अपि सीतायाः चिराय वियुक्तदारस्य नरस्य विशेषतो नियतभोगविलासशालिनः नरपतेः दारान्तरपरिग्रहस्य स्वाभाविकतया स्वस्वामिनोऽपि तथा सम्भाव्यमानामाशङ्कामपनेतुकामः कविरिदं राममुखेण भङ्ग्यन्तरेण आह, अस्ति चेत्यादि ; तथा च रामस्य दारान्तरापरिग्रहात् चिरविरहितया इह विप्रलम्भाख्यशृङ्गाररसस्यापि परिपुष्टिर्जातेति।

सीता। [सोच्छ्वासं सास्रम्।] अज्जउत्तो दाणीं सि तुमं। अम्महे! उक्खाणिदं दाणीं मे परिच्चाअलज्जासल्लं अज्जउत्तेण। * (ज)

रामः। तत्रापि तावद्वाष्पदिग्धं चक्षुर्विनोदयामि। (झ)

* आर्य्यपुत्रः इदानीमसि त्वम्। अहो! उत्खातमिदानीं मे परित्यागलज्जाशल्यमार्य्यपुत्रेण।

(ज) सोच्छ्वासमिति।—उच्छ्वासेन आश्वासेन सह वर्त्तमानं, पूर्व्वं सहधर्म्मचारिणीशब्दश्रवणेन उद्विग्ना सीता पुनः "सीतायाः प्रतिकृतिः" इति श्रवणात् आश्वासी बोध्यः, ("उच्छ्वासः प्राणनेऽपि च। आख्यायिकापरिच्छेदेऽप्याश्वासेऽपि पुमानयम्।" इति मेदिनी)। सास्रम्—आनन्दाश्रुसहितम्, [एतद्द्वयम् "आह" इति ऊह्यक्रियाया विशेषणम्]। आर्य्यपुत्रः,—पतिशब्दवाच्यः, मत्प्रतिकृतावपि अनुरागितया यथार्थ एव आर्य्यपुत्रशब्दभाक् त्वमसि इति समुदितार्थः। परित्यागेति।—परित्यागजन्या या लज्जा लोकसन्निधौ अप्रतिभत्वं तद्रूपं यत् शल्यं शङ्कुः तत्। (अत्र परित्यागस्य निष्कारणकतया अत्यन्तदुःखजनकत्वात् तज्जन्यलज्जायां शल्यत्वारोपो बोध्यः)। उत्खातं—मम हृदयादुद्धृतम्। पतिव्रतायाः धर्म्मपत्न्या धर्म्मकार्य्ये उपयोगितया अश्वमेधयज्ञार्थं मत्प्रतिकृतिकरणात् मयि अनुरक्तिः मत्पवित्रता च लोकेषु प्रदर्शिता आर्य्यपुत्रेणेति भावः।

(झ) सम्प्रति रामः स्ववाक्यशेषमाह, तत्रेति।—तत्रापि—हिरण्मय्यां सीताप्रतिकृतावपि, साक्षात्सीतायाः कथमपि प्राप्तिसम्भावनाविरहात् तत्प्रतिनिधिनैव कार्य्यसम्पादनमिति भावः। वाष्पदिग्धं—अश्रुपूर्णम् इत्यर्थः। विनोदयामि—तर्पयामि; [एतेन सीतायाः प्रतिकृतिनिर्म्माणे नयनविनोदनमेव मुख्यं फलम्, अश्वमेधे सहधर्म्मिणीयोगफलम् आनुषङ्गिकमिति व्यज्यते]। अत्रेदमवधेयम्,—भागीरथीवरमाहात्म्येन रामस्य सीतादर्शन-तद्वाक्यश्रवणयोरसम्भवात् यथाक्रममुच्चारितमपि "अस्ति चाश्वमेधाय सहधर्म्मचारिणी मे हिरण्मयी सीतायाः प्रतिकृतिः, तत्रापि तावद् वाष्पदिग्धं चक्षुर्विनोदयामि" इति रामवचनम् अन्तरान्तरा यथास्थानं यथाकालञ्च प्रयुक्तेन सीतावाक्येन विमिश्रितम् अन्योन्यालापवदाभासमानतया चमत्कारातिरेकमादधत् कवेर्वचनरचनापाटवमाविष्करोतीति।

सीता। धण्णा सा, जा अज्जउत्तेण बहु मण्णीअदि, जा अ अज्जउत्तं विणोदयन्ती आसाणिबन्धणं जादा जीअलोअस्स। * (ञ)

तमसा। [ सस्मितस्नेहास्रं परिष्वज्य। ] अयि वत्से! एवमात्मा स्तूयते। (ट)

* धन्या सा, या आर्य्यपुत्रेण बहु मन्यते, या च आर्य्यपुत्रं विनोदयन्ती आशानिबन्धनं जाता जीवलोकस्य।

( ञ ) धन्या—श्लाघ्या, बहुमतेत्यर्थः, [ धनं लक्ष्मी इति धन्या, धनशब्दात् "धनगणं लब्धा" ( ४।४।८४ पा० ) इति यत्प्रत्ययः ]। सा—हिरण्मयी सीतायाः प्रतिकृतिः। बहु मन्यते—बहुमानास्पदीक्रियते, नयनविनोदनहेतुत्वेन यज्ञे सहधर्म्मचारिणीस्थानपूरणेन च समाद्रियते इत्यर्थः। विनोदयन्ती—नयनानन्दमापादयन्ती सतीत्यर्थः। आशानिबन्धनम्—आशाहेतुस्वरूपा। जाता—भूता, [ जातेति उद्देश्यप्राधान्य स्त्रीत्वम्, "उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्य" इत्यनुशासनात् "जाता" इत्यस्यैव च अत्र प्रधानक्रियारूपत्वात् ] यस्मिन् कल्याणभाजि निखिलमपि जगत् क्षेममाप्नोति, एवं दुर्दशायां चित्तविनोदनेन तस्य एव आर्य्यपुत्रस्य जीवनं रक्षन्ती जीवलोकस्यैव उपकारिणी जातेति भावः। रामस्य परिग्रहान्तरशङ्कितायाः मृतप्रतिकृतिद्रष्टात्मायाः अपि पूर्व्वावेगवशात् "तथापि तावद्धार्य्यदिदं चक्षुर्विनोदयामि" इति रामवाक्यात् पुनरुत्पादिततच्छङ्कायाः सीतायाः निर्वेदवचनमिदम्। [ अत्र सा धन्या, अहम् अधन्या, सा बहुमानिता, अहम् अवमानिता, सा आर्य्यपुत्रस्य विनोदनस्थानम् अहं न तथा, सा आर्य्यपुत्रस्य सुस्थतायाः राज्ये अनौदास्यस्य च कारणमिति आशानिबन्धनम्, अहन्तु न तथा इत्यादि ध्वन्यते। एतेन स्त्रियः स्वामिनः सर्व्वानपराधान् सहन्ते, किन्तु केवलं दारान्तरपरिग्रहं सर्व्वथा न सहन्ते इति भावोऽपि व्यज्यते ]।

( ट ) सस्मितस्नेहास्रं—स्मितेन ईषद्धास्येन, स्नेहेन वात्सल्येन, अस्रेण आनन्दाश्रुणा च सहितं यथा स्यात् तथा। अत्र सीतया अन्यबुद्ध्या स्वस्याः एव धन्यत्वकथनात् स्मितं, सीतायाः सन्तानतुल्यतया स्नेहः, परस्परमेवमलौकिकदाम्पत्यप्रणयसन्दर्शनेन आनन्दादस्रम् इति बोध्यम्। परिष्वज्य—गाढमाश्लिष्य, आहेति शेषः। एवम्—इत्थं, पूर्व्वोक्तप्रकारेणेत्यर्थः। आत्मा—त्वच्छरीरम्। स्तूयते—प्रशस्यते। त्वत्प्रतिकृतिमेवोद्दिश्य रामेणैतदुक्तम् अतो "धन्या सा" इत्यादिना त्वम् आत्मप्रशंसामेव करोषीति भावः।

सीता । [ सलज्जमधोमुखी स्वगतम् । ] परिहसिद म्हि भअवदीए तमसाए । * (ठ)

वासन्ती । महानयं व्यतिकरोऽस्माकं प्रसादः । गमनं प्रति पुनर्यथा कार्य्यहानिर्न भवति तथाऽऽस्ताम् । (ड)

सीता । पडिउला दाणीं मे वासन्दी संवुत्ता । † (ढ)

---

* परिहसिताऽस्मि भगवत्या तमसया ।

† प्रतिकूला इदानीं मे वासन्ती संवृत्ता ।

( ठ ) सलज्जं—लज्जासहितं, स्वयङ्कृतायाः स्वप्रशंसायाः अन्यसमक्षं लज्जाहेतुत्वादिति भावः । अधोमुखी—नतवदना [ अधोभूतं मुखं यस्याः सा "स्वाङ्गाच्चोपसर्ज्जनादसंयोगोपधात्" ( ४।१।५४ पा० ) इति स्त्रियां ङीष् ] । सीता अधोमुखी सती सलज्जं स्वगतञ्च यथा स्यात् तथा आहेति अन्वयः । परिहसिता—उपहासप्राप्तीकृतेत्यर्थः ।

( ड ) पूर्वोक्तेषु रामवाक्येषु अन्यस्मिन् अंशे कस्यचिद् वक्तव्यस्य अभावात् वासन्ती "तदनुजानीहि मां गमनाय" इत्यंशस्यैव उत्तरमाह, महानिति ।—अयम्—इदानीमनुभूयमानः । व्यतिकरः,—समागमः, परस्परसम्मेलनमिति यावत् । महान्—निरतिशयः । प्रसादः,—अनुग्रहः ; त्वमेतावन्तं क्लेशं स्वीकृत्य स्वयम् इदृशं विजनकाननमागतः यदस्माभिर्मिलितः, तेनैव अस्मासु महान् अनुग्रहो दर्शित इति भावः । [ "प्रसादः" इत्यत्र "प्रमादः" इति पाठे—प्रमाद्यते अनेनेति प्रमादः कर्त्तव्येषु विषयान्तरेषु अनवधानताजनक इत्यर्थः, अनेन समागमेन त्वं मां परित्यक्तुं नेच्छसि, अहमपि त्वां, शोके च वयं निमग्ना इति सर्व्वमन्यत् विस्मृताऽस्मीत्यर्थः ] तथापि अहं त्वत्कर्त्तव्ये अन्तरायो न स्यामित्याह, गमनमिति ।—पुनः,—किन्तु । गमनं प्रति—गमनविषये इत्यर्थः । कार्य्यहानिः,—राजकार्य्यक्षतिरित्यर्थः । तथा—तादृशः प्रकारः । तव कार्य्यहान्या ममापि कार्य्यहानिरित्यतो येन तव कार्य्यहानिः न स्यात् तथा कुर्व्विति भावः ।

( ढ ) प्रतिकूला—अननुकूला, इतः परमपि पतिसमागमे विघ्नकारिणीत्यर्थः, तद्गमनानुज्ञानादिति भावः । [ एतेन सीतायाः भर्त्तरि प्रणयातिरेकः, तथा तद्दर्शने आकाङ्क्षाया अतृप्तत्वात् पुनरपि तमवलोकयितुं बलवती वासना च व्यज्यते इति बोध्यम् ] ।

तमसा। वत्से! एहि गच्छावः।

सीता। [सकष्टम्।] एव्वं करेह्म। * (थ)

तमसा। कथं वा गम्यते, यस्यास्तव (त)—

प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः।
मर्मच्छेदपरैर्यत्नैराकर्षो न समाप्यते ॥ ४६ ॥

* एवं कुर्व्वः।

(थ) सकष्टं—कष्टेन दुःखेन सहितं यथा स्यात् तथा, वासन्त्या अभ्यनुज्ञातस्य रामस्य इदानीमेव गमनावश्यम्भावात् कष्टेनैव सीतायाः स्वप्रतिगमने सम्मतिदानमिति बोध्यम्। एवं कुर्व्वः,—गच्छावः इत्यर्थः, 'रामे प्रस्थिते अवस्थानप्रयोजनाभावेन इतः प्रतिगमनस्यैव युक्तत्वादिति भावः। [अत्र "गच्छावः" इत्यनुक्त्वा "एवं कुर्व्वः" इति कथनेन सीतायाः अनिच्छाकृतगमनं सूच्यते]।

(त) तमसा सीतायाः वर्त्तमानामवस्थां पर्य्यालोच्य आह, कथमिति।—वा—अथवा, पक्षान्तरे इत्यर्थः। कथं—केन उपायेन। गम्यते—गन्तुं शक्यते; त्वयेति शेषः। यावत् प्रियदर्शनोऽयं तव नयनपथं नातिवर्त्तते तावत्कालं ते इतोऽन्यत्र गमनमसम्भवमेवेति भावः। "यस्यास्तव" इत्यस्य वक्ष्यमाणश्लोकस्थेन "चक्षुषः" इत्यनेनान्वयः।

इदानीं गमनाशक्यत्वे हेतुमाह, प्रत्युप्तस्येति।—दयिते प्रिये रामे प्रत्युप्तस्येव गभीरं प्रविष्टस्येव तृष्णया प्रबलदर्शनेच्छया दीर्घस्य दीर्घभावापन्नस्य कियत्कालं दृष्टाऽपि अतृप्ततया विस्फारितत्वादनिमेषत्वाच्च विस्तृतस्येवेत्यर्थः, चक्षुषः नयनस्य [अत्र "कर्त्तृकर्म्मणोः कृति" (२।३।६५ पा०) इति कर्म्मणि षष्ठी, तथा जातौ एकवचनम्] "यस्यास्तव" इति पूर्वोक्तगद्यांशेनान्वयः। मर्म्मच्छेदपरैः आकर्षणव्यापारैः हृदयविदारकैरित्यर्थः, यत्नैः आकर्षणायासैः आकर्षः दयितदर्शनात् आक्षेपः न समाप्यते एतावता कालेनापि न सम्पूर्णः क्रियते। यथा केनचिद् योजकवस्तुना युक्तस्य पदार्थान्तरस्य योजकवस्तूद्धरणं विना न परस्परं पार्थक्यं सम्भवति, तद्वद् दृष्ट्या मिलितायास्तव दृष्ट्युद्धारं विना न इतः प्रतिगमनं सम्भवति, दृष्ट्युद्धारश्च आकर्षादिना शल्योद्धारवन्मर्म्मव्यथाजनकः स च नितरां दुःसहः अतो रामं परित्यज्य तव इतः अन्यत्र गमनं न सुकरमिति भावः। [अत्र दयिते वस्तुतोऽनिखातस्यापि

सीता। णमो णमो अपुव्वपुण्णजणिददंसणाणं अज्जउत्त-चरणकमलाणं। * (ध) [इति मूर्च्छति।]

तमसा। वत्से ! समाश्वसिहि समाश्वसिहि।

सीता। [समाश्वस्य।] किअच्चिरं वा मेहन्तरेण पुण्णिमा-चन्दस्स दंसणं। † (द)

* नमो नमोऽपूर्वपुण्यजनितदर्शनेभ्यः आर्य्यपुत्त्रचरणकमलेभ्यः।

† कियच्चिरं वा मेघान्तरेण पूर्णिमाचन्द्रस्य दर्शनम्।

---

चक्षुषः निखातत्वसम्भावनात् बाध्या क्रियातिशया नाम अलङ्कारः]। पथ्यावक्त्रं वृत्तम्॥ ४६॥

(ध) अपूर्व्वेत्यादि।—अपूर्वेण अत्युत्कटेन पुण्येन जनितं सम्पादितं दर्शनं येषां तेभ्यः, मया किमपि अपूर्वं पुण्यं कृतं तेनैवाद्य आर्य्यपुत्त्रचरणदर्शनं जातमिति भावः। आर्य्यपुत्त्रचरणकमलेभ्यः,—आर्य्यपुत्त्रस्य स्वामिनः चरणाः पादाः कमलानीव [अत्र उपमाऽलङ्कारः] तेभ्यः स्वामिपादपद्मेभ्यः इत्यर्थः, [“नमःस्वस्ति-स्वाहा—” (२।३।१६ पा०) इति नमः-शब्दयोगे चतुर्थी ; गौरवे च बहुत्वम्]।

(द) अन्धकारसमाच्छन्नायां रजन्यां क्षुद्रखद्योतविलास इव चिरवियोग-दुःखधारासु भाग्यादुपपन्नः क्षणिकप्रियपादसन्दर्शनानन्द एव मे श्रेयानिति मन्यमाना आत्मनैव आत्मानमाश्वासयन्ती जानकी पश्चान्तरमाह, कियदिति।—वा—अथवा। कियच्चिरं—कियन्तं दीर्घकालं, व्याप्येति शेषः। मेघान्तरेण—जलधरावकाशेन। पूर्णिमाचन्द्रस्य—राकाशशिनः। दर्शनं—साक्षात्कारः, सम्भवेदिति शेषः। [अत्र काक्वा “अत्यल्पक्षणमेव सम्भवेत्, वायुसञ्चालितेन मेघेन पुनरावरणात्” इत्यर्थो व्यज्यते]। अत्रायं भावः,—यथा मेघाच्छन्ने दुर्द्दिने भाग्यात् कदाचित् वायुना मेघावरणापगमे जातं क्षणिकमपि राकानिशाकर-सन्दर्शनं नयनानन्दमापादयत् भवति श्लाघास्पदं दर्शकानां, तथा निरवधिकायाम् ईदृश्यां ग्रहवैगुण्यदशायां केवलं पूर्व्वसञ्चितपुण्यपवनानुकूल्येन कथमपि सङ्घटितम् अतिदुर्लभं क्षणिकमपि आर्य्यपुत्त्रचरणसन्दर्शनं मम श्लाघ्यमेवेति इदानीमाश्वस्ताऽस्मीति। [अत्र सुचिरपूर्णचन्द्रदर्शनासम्भवकथादप्रस्तुतात् सुचिरार्य्यपुत्त्रचरणदर्शनासम्भवरूपस्य प्रस्तुतस्य कथनादप्रस्तुतप्रशंसानामालङ्कारः]।

तमसा। अङ्गो संविधानकम्। (ध)—

एको रसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक् पृथगिवाश्रयते विवर्त्तान्।
आवर्त्तबुद्बुदतरङ्गमयान् विकारा-
नम्भो यथा, सलिलमेव तु तत् समग्रम्॥ ४७॥

(ध) अङ्गो—विस्मयकरम्। संविधानकं—विधातृनियमितकार्य्यकारणभाव-वैचित्र्यं केन कारणेन किं किं कार्य्यमुत्पद्यते तन्निरूपणे न प्रक्रममित्यर्थः।

तदेव समर्थयते, एक इति।—एकः एव मुख्य एव करुणः प्रियवियोगजन्य-शोकस्थायिभावः रसः काव्यानुशीलनविशदमानसानां सामाजिकानां निरति-शयानन्दसंविद्रूपः निमित्तभेदात् व्यञ्जकविभावानुभावादिविच्छित्तिविशेषात् दर्शन-स्मृत्यादिकारणविशेषादिति यावत्, भिन्नः भेद गतः सन् पृथक् पृथक् भिन्नरूपान्, हर्षविषादादिरूपानित्यर्थः, विवर्त्तान् आकारान्, परिणामानित्यर्थः, आश्रयते इव भजते इव; परमार्थतः अभिन्नोऽपि भेदवानिव लक्ष्यते इति भावः। यथा अत्रैव अङ्के दर्शितः करुणो रसः तत्तत्स्थानासनाजापनपादपपर्व्वतादिदर्शनाङ्गस्पर्शना-दिभिः कारणविशेषैः नानारूपतामापन्नः शृङ्गारहास्याद्भुतादिरसरूपतया परिणतो दृश्यते। तत्र वेदान्तिमतसिद्धमनुरूप विवर्त्तोदाहरणमेकमवतार्य्य समर्थयमान आह, यथेति।—यथा अम्भः जलम् आवर्त्तबुद्बुदतरङ्गमयान् गतिवशेन घूर्ण्यमानत्वात् भमिरूपान् वायुमध्यतया विस्फमयत्वात् बुद्बुदरूपान् पवनचालिततया तरङ्गात्मक-त्वाच्च ऊर्म्मिरूपान् विकारान् विविधान् आकारान्, विवर्त्तानिति यावत्, आश्रयते इति शेषः, तु किन्तु तत् समग्रमेव आवर्त्तादिकम् एकं सलिलं जलरूप एक एव पदार्थः। सीतायाः प्रियविरहजन्यमनोविकारोऽपि कारणभेदात् हर्षविषादक्रो-धाकृतिधृतिनिर्वेदासूयाप्रभृतीन् बहुनाकारान् धत्ते; अतो हर्षादयोऽपि करुणरसस्य विकारा इत्येतदाश्चर्य्यं संविधानकं पश्यामीत्यर्थः। केचित्तु उक्तिमिवैतमन्यथा निरूपयन्तः श्लोकमप्यन्यथा व्याचक्षते, तथाहि—"वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते" इत्यत्र वीरशृङ्गारयोरन्यतरस्य प्राधिकप्राधान्येऽपि अन्येषामपि रसानां सत्त्वात् कथं करुणस्य प्राधान्यम्? किञ्च, करुणरसस्य दुःखात्मकतया तस्य रसत्वे एव नास्ति मानमिति कुतः प्राधान्यम्? इति शङ्कां परिहर्त्तुकामः कविः तमसामुखेन स्वाभिप्रायं प्रकृतोपयोगितया वर्णयति, एक इति।—रसः सामाजिकानां निर्भरा-

रामः। अयि विमानराज! इत इतः। (न)

[ इति सर्वे उत्तिष्ठन्ति। ]

तमसावासन्त्यौ सीतारामौ प्रति। (प)—

अवनिरमरसिन्धुः सार्द्धमस्मद्विधाभिः
स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता।

नन्दसंविद्रूपः करुणः इष्टवियोगजन्यदुःखातिशयः एकः मुख्यः एव सन्नपि निमित्त-भेदात् सखित्व पतित्व-पत्नीत्वादिरूपोपाधिभेदात् भिन्नः विलक्षण इव पृथक् पृथक् विवर्त्तान् वासन्तीसीतारामादिषु परस्परविलक्षणावस्थाभेदान् आश्रयते भजति। अन्यत् पूर्व्ववत्। तथाच प्राचुर्य्यात रागिविरागिसाधारण्याच्च करुण एव एकः मुख्यः रसः, अपरे तु तद्विकारा इति कवेराशयः। [ अत्र प्रथमार्द्धे "आश्रयते इव" इत्यत्र वाच्याक्रियोत्प्रेक्षा, तथा द्वितीयार्द्धे "अम्भो यथा" इत्यत्र उपमालिङ्गस्य यथाशब्दस्य सत्त्वात् श्रौती उपमा चैत्यनयोरङ्गाङ्गिभावेन सङ्करः। एवं "रसस्योक्तिः स्वशब्देन" इत्यस्य व्याख्यायां दर्पणकृता "रसस्य स्वशब्दो रसशब्दः शृङ्गारादिशब्दश्च" इत्यभिहितेऽपि अत्र स्वशब्देन रसकथनं न दोषपदवीमारोहति, अस्य कथमपि अन्यथा उपादातुमशक्यत्वेन सामाजिकानन्दानुभवाविघातकतया प्रकृतरसापकर्षकत्वादिति सुधीभिर्विभाव्यम् ]। वसन्ततिलकं वृत्तम्॥ ४७॥

(न) विमानराज—स्यन्दनश्रेष्ठ! व्योमयानेषु पुष्पकस्यैव प्राधान्यात् पुष्पकस्य विमानराजत्वम्। इतः इतः,—अनेनानेन पथा गम्यतामिति शेषः। पुष्पकस्य चालकादेशानुरूपगमने शक्तिः प्रसिद्धेति तस्मिन् सचेतने इव रामस्यादेशः इति बोध्यम्।

(प) तमसा सीतां प्रति, वासन्ती रामं प्रतीति यथाक्रममन्वेति।

परस्परं विहाय स्वस्थानं गन्तुकामा तमसा वासन्ती च सीतारामयोः कुशल-माशंसमाना आह, अवनिरिति।—अवनिः पृथ्वी अमरसिन्धुः सुरधुनी गङ्गा अस्मद्विधाभिः अस्मादृशीभिः तमसासदृशीभिः नदीभिः वासन्तीसदृशीभिः वन-देवताभिश्चेत्यर्थः, सार्द्धं सह मिलिता इति शेषः, तथा यः छन्दसां वेदादन्येषाम् अनुष्टुप्प्रभृतीनामित्यर्थः, आद्यः प्रथमः प्रयोक्ता प्रयोगकर्त्ता तत्पूर्वमेकच बहुलानु-ष्टुप्छन्दसां प्रयोगादर्शनात्, कुलपतिः "मुनीनां दशसाहस्रं योऽन्नपानादिपोषणात्। अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः"॥ इति लक्षणोपेतः मुनिर्वाल्मीकिः

स च मुनिरनुयातारुन्धतीको वशिष्ठ-
स्त्वयि वितरतु भद्रं भूयसे मङ्गलाय ॥ ४८ ॥

[ इति निष्क्रान्ताः सर्वे। ]

इति छाया नाम तृतीयोऽङ्कः। (फ)

---

अनुयाता अनु सह धर्म्मार्थं याता सहधर्म्मिणीत्यर्थः, अरुन्धती यस्य तथोक्तः स मुनिः वशिष्ठश्च भूयसे महते मङ्गलाय भुवनहितायेत्यर्थः, त्वयि भद्रं मङ्गलं ("श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्" इत्यमरः) वितरतु ददातु। त्वन्मङ्गलेनैव भुवनमङ्गलमिति भावः। [ अत्र गर्भवीजस्य ऋषिश्रेयोवितरणरूपस्य उद्भेदनादाक्षेपो नाम सन्ध्यङ्गमुक्तम्। दर्पणकृन्मते तु आशीर्नाम नाट्यालङ्कारः "आशीरिष्टजनाशंसा" इति तल्लक्षणादिति ध्येयम् ]। मालिनी वृत्तम् ॥ ४८ ॥

(फ) अस्मिन्नङ्के सीताया अदृश्यरूपेण प्रवेशेऽपि कदाचित् अङ्गस्पर्शादिना रामानुभवविषयत्वात् छायारूपेण आभासमानतया अस्य अङ्कस्य नाम कविना छायेति कथितम्।

## तृतीयाङ्कस्य संक्षिप्तविवृतिः ।



अथावाङ्कारम्भे मुरला नाम काचित् तटिनी तमसया समं रङ्गं प्रविष्टा, पृष्टा चात्मनः ससम्भ्रमागमनकारणं तयैव "महद्विरहातपतापतप्यमानमानसं चिरपरिचितप्रियासहवाससाक्षिसन्दर्शनाशङ्क्यमानप्रमादं परिक्षीणदीनं जानकीजीवनं सम्भविष्यदापदः परित्रातुम्, उत्तुङ्गतरङ्गसङ्गशीतलैर्विकचकमलकिञ्जल्कसुरभीकृतैर्मृदुमन्दसम्पातैर्वातैस्तस्य सम्भाव्यमानमोहच्छापनेतुं नियतमवहिता भव" इति भागीरथीं वक्तुमगस्त्यपत्न्या लोपामुद्रया प्रेरिता तत्सकाशं यामीति प्रत्युवाच। तमसाऽपि केवलं लोपामुद्राऽऽविष्कृतमुपायमाकर्ण्य इत्थमेवाशङ्कमानया भागीरथ्या च उद्भावितमुपायमचीकथत्, तथाहि पुरा लक्ष्मणेन परित्यक्ता अन्तःसत्त्वा सीता कदाचित् दुःसहप्रसववेदनामसहमाना गङ्गाऽम्भसि निपात्यात्मानमसूत सुतयुगलम्। ताभ्याञ्चाश्रयणाभ्यां साऽङ्कमसौ भाग्यात् पृथ्वीभागीरथीप्रसादमुपेता रसातलमनायि।

अथ कालेन भागीरथी सीतासुतयुगलं वयःप्राप्तमालोक्य स्वयं तत् वाल्मीकिं समर्प्य सम्प्रति शम्बूकवधानन्तरप्रत्यावृत्तं रामभद्रं सम्भावितजनस्थानागमनमाकर्ण्य सीतां स्वप्रभावात् वनदेवतानामप्यदर्शनीयतां विज्ञाप्य स्वसुतयोः कुशलवयोः द्वादशवार्षिकोत्सवे श्वशुरवंशादिपुरुषसवितृसमर्चनार्थं स्वहस्तकृतकुसुमावचयव्याजेन गोदावरीतीरं निनाय; आदिदेश च मां तत्प्रकृष्टप्रेमतया तस्याः प्रत्यनन्तरीभवितुमित्यहमिदानीं तदादेशमनुतिष्ठामीति। तमसामुखादेवं श्रुतभागीरथीवृत्तान्तामचिरात् रामागमनं तर्कयन्तीं मुरलां वृत्तमेतल्लोपामुद्रायै विज्ञापयितुं प्रस्थातुकामामालोक्य तमसा गोदावरीह्रदान्निष्क्रम्य अरण्याभिमुखमायान्तीं दुःसहविरहक्षीणमलिनाकृतिं सीतां न्यवेदयत्। मुरलाऽपि समम्एव तया तथाविधां सीतामवेक्ष्य दुःखाकुलिता मिलिता च तमसया रङ्गात् निष्क्रान्तेति विष्कम्भकसंक्षेपः।

अथ रङ्गमुपस्थिता वियोगशोकाकुलिता सीता कुसुमावचयव्यग्रहस्ताऽपि नेपथ्योत्थं "प्रमादः प्रमादः" इति वासन्तीवचनं सकरुणमाकर्णयन्ती पुनरपि स्वयं स्वकरपरिपोषितस्य करिकलभकस्य उन्मदद्विरदरदाभिभवमाकर्ण्य सहसा अज्ञातसारेणेव "आर्य्यपुत्र! परित्रायस्व" इति सुचिरपरिचितान्यक्षराणि उच्चारया-

मास, मुमोह च तेन अतीताखिलवृत्तान्ता अतिसन्नमा तत्क्षणमेव। ततो रङ्गमभ्येत्य, तमसाऽयं मूर्च्छितां सीतां समाश्वासयन्त्यां भयोऽपि नेपथ्यादुच्चरत् "विमानराज ! अत्रैव स्थीयताम्" इति वचनं स्वरपरिचयेन रामस्येत्याशङ्कमाना कातर्थ्यमादधाना सीता अव्यक्ते कुतस्त्येऽप्यस्मिन् वचसि औत्सुक्यप्रदर्शनेन तमसया समनुयुक्ता श्रुतस्वरस्यातिपरिचितत्वादव्यक्तत्वमेवास्य निरस्य सहचरीवचः प्रत्युत्तरया-चकार, प्रशशंस च प्रियतमं तमसामुखात् राजधर्म्मानुसारेण शम्बूकवधार्थमिदानीम् अत्रापि रामागमनसम्भावनां विज्ञाय।

अथ पुनर्नेपथ्यादुच्चरितं पूर्व्वपरिचितमृगपादपादिविषयकमाक्षेपवचनमाकर्णयन्ती जानकी स्वामिस्वरसंयोगसम्भ्रमात् समन्तादन्विष्य सहसा पुरतः स्वशोकक्षीणमलिना-कृतिं साक्षादार्य्यपुत्रमेव अवलोक्य मूर्च्छन्ती तमसया पुनः समाश्वासि ; एवं पुनरपि पञ्चवटीसन्दर्शनसमुद्बुद्धपूर्व्वस्मृतिदाशरथिः "हा प्रिये" इति जानकीमामन्त्र्य अन्त-र्दाहं ज्वलिष्यती दुःखाग्नेर्धूमरूपेण मोहेन स्वस्यावरणम् उच्चैर्विज्ञाप्य पुनरामन्त्र्य नामतस्तामसूर्च्छीत्।

अथ सीतया स्वात्मानमुद्दिश्य सकरुणमेवं विलपन्तमार्य्यपुत्रं मूर्च्छितमालोक्य तं कथमपि सञ्जीवयितुं पादयाहं याच्यमानया तमसया तत्पाणिस्पर्श एव अमोघः सञ्जीवनोपायः निरधारि। असावपि अविचार्य्यैव अशेषान् गुणदोषान् सहचरी-निर्देशात् सभूमिपातं पतिपादपङ्कजं संस्पृश्य सवास्य च भीतिव्यस्तेन हस्तेन आपाद-मस्तकं तस्य, समालोक्य च तमचिरादेव पुनःप्रत्यागतजीवितं जीवितनाथं नितरा-मतुष्यत् ; व्यतर्कयञ्च बहुधा रामस्समतिपरिचितं च्युतचन्दनपङ्कसम्मितं कृतचित्तहर्षं सीताकरस्पर्शमिति। इत्यञ्च प्रमादाद्रामसकाशं प्रकाशितमात्मानमाशङ्कमाना पुनः सावधानां भवितुं यतमाना तमसया भूयो भागीरथीवरमारणेन समाश्वासिता सीता मुहुः स्वात्मानमुद्दिश्यैवं सकरुणविलापिनः स्वामिनः सानुरागवचनशतैः द्रवी-भूतहृदया सर्व्वथा निर्व्वक्तुमशक्यमपि मनोभावं कथमपि सहचरीं न्यवेदयत्। समवर्णयत् तमसाऽपि तत्सकाशमेव आकारैङ्गितैरंशतो बहिःप्रकाशमानं तदीयं पुनःसमागमनैराश्यकलुषं मनोभावं विस्तरेण।

अथैवं चिरपरिचितस्पर्शसम्भाविनां सीतामितस्ततः सम्यगन्विष्यापि अलभमानः सर्व्वं सीतासङ्कल्पहेतुकं भ्रमं वितर्कयन् रामः सीता च युगपदेव पुनर्नेपथ्यादुच्चरितं "सीतादेव्याः स्वकरकलितैः" इत्यादिसकरुणवचनमाकर्ण्यव्याकुलतामगच्छत्, अपश्यञ्च प्रतिचिकीर्षाव्याकुलो रामः पुरतः एव ससम्भ्रममुपस्थितां वासन्तीम्, अशृणोच्च तन्मुखादामूलं सीतापरिपालितकरिशावकपराभववृत्तान्तं विस्तरेण।

अथ तथैवं सीतापुत्रकपरित्राणाय सत्वरं गोदावरीं गन्तुमनुद्यत: सीतानाथ: तत्प्रदर्शितेनैव पथा प्रतस्थे, सीताऽपि सहचरीभागिरथीभागीरथीवरप्रभावा आत्मप्रकाशाशङ्काऽसत्त्वात् तमनुससार, आलुलोके च तत्रोपस्थितैव करेणुकया पयसि बहुधा विहरन्तं स्वपुत्रकं करिकलभकमात्मप्रियम्। तस्यैवमसम्भाविताकारव्यवहारमालोक्य हृष्टाऽपि समुद्बुद्धकुशलवस्मृतिरतिदु:खिता सीता तमसया पुन: समाश्वासि। सर्व्वथा रघुनाथं प्रसादयन्ती वासन्ती अपि सीतापुत्रकं प्रलम्बकदम्बशाखासमारूढं नृत्यपरं शिखण्डिमिथुनञ्चावलोक्य हर्षशोकाकुलमतिं सीतापतिं पूर्व्वपरिचितं शयनीयशिलातलम् अध्यासितुमनुरुरोध। प्रत्यग्रहृदयव्यथस्तु रघुनाथ: तं शोकोद्दीपकतया द्रष्टुमप्यसमर्थ: रुदन्नन्यत: समुपाविशत्।

अथ स्वामिनं तथा रुदन्तमालोक्य निरतिशयनिर्विण्णा जानकी तद्दु:खनिदानभूतां वासन्तीमेव अधिचिक्षेप। वासन्त्यापि पत्युरीदृगवस्थायाम् अनुपस्थितेर्निर्भर्त्सिता सीता, तादृगवस्थादर्शनेऽपि स्वस्या: प्रतीकाराक्षमत्वमचीकथत्।

अथ स्वाधिकाररता वनदेवता वासन्ती स्वभवनं वनमागतमतिथिं दाशरथिम् अभिनन्दयितुं स्वाधिकारगतान् पादपपतत्त्रिपवनानादिदेश, उपविवेश च निभृतं रामाधिक्षेपस्यैव स्थानसंक्रान्ते पृच्छन्ती महाराजेत्यामन्त्रणपुर:सरं केवलं लक्ष्मणस्यैव कुशलम्। पुरत: परिदृश्यमानस्वभावशोभावर्णनेन तत्र दाशरथि: श्रुतमप्यश्रुतमिव अभिनिनाय। तं तथोन्मनसं स्ववचसि सत्वरमवधानपरं विधातुं वासन्त्या पुनरपि तदेव पृच्छ्यमानो रघुनन्दन: महाराजेति निष्ठुरामन्त्रणपदाकर्णनेन अस्या: सीताविवासनवृत्तान्तज्ञानं संशयान: सजलनयन: आं कुशलं कुमारस्येति प्रत्युवाच। अधिचिक्षिपे च तथैव असौ, त्वं जीवितेत्यादिना तस्य अमानुषदारुणत्वप्रख्यापनेन। तदाकर्णनातिदु:खिता सीताप्यात्मार्थमार्य्यपुत्रमेव अधिक्षिपन्तीं वासन्तीं प्रच्छन्नवियुक्ताऽपि व्यग्रतया विरम विरमेति निषिषेध।

अथ वासन्त्या साधिक्षेपं तदनार्य्यकार्य्यनिदानं पृष्टो जानकीजानि: प्रजाऽनुरञ्जनमेव सीताविवासननिदानम् अचीकथत्; व्यलपच्च स्वकार्य्यस्यैवममानुषिकदारुणत्वमुपवर्णयन् स्वयमेव। अशोचीच्च तदानीं पौरजानपदानुद्दिश्य तेषां पुन: प्रसादमर्थयमान: सविशेषम्। अन्यतमसाऽपि स्वामिशोकसन्दर्शनकातरां सीतामाश्वासयन्ती, दर्शयन्ती च शोके सति विलापस्यैव अत्यावश्यकताम्, अचीकथत् रामस्य सर्व्वथा सांसारिकक्लेशजातम्।

अथ वासन्त्या धैर्य्यमवलम्बितुमुपदिष्ट: शोकपरिक्लिष्टो राम: आमूलवृत्तख्यापनेन आत्मधैर्य्यस्य परां कोटिं प्रकटयन् पूर्व्वपरिचितानां पादपपतत्त्रिपर्व्वतादीनाम् आक-

त्रिकसन्दर्शनमेव साम्प्रतिकचित्तविकारनिदानं निर्द्दिदेश, व्याचचचे च व्यर्थतां प्रबलजलवेगरोधने सैकतसेतोरिव स्वचित्तसंयमे प्रबलस्यापि स्वप्रयासस्य।

अथाकर्ण्यास्य सकरुणवचनजातं साम्प्रतमितोऽप्यधिकोऽधिक्षेपः सर्व्वथा अनुचित इत्यवगच्छन्ती वासन्ती तमन्यासक्तचित्तं कर्त्तुकामा, प्रियतमया सीतया सार्द्धमध्युषितपूर्व्वमपूर्व्वं लतागृहं दर्शयामास। ततस्तदालोकनदूनं रघुनन्दनं शोकमापन्नमालोक्य तज्जीवनापायभीता सीता तमसोपदेशात् परिचिततरेण करेण मृतप्रायं कायं स्पृशन्ती मृतवद्गतश्रियं प्रियं पुनरुज्जीवयामास।

अथ पुनःप्राप्तचेतनो जानकीजीवनः अनुभूतचरेण सीताकरस्पर्शेन वासन्त्यै सीतां पुनःप्राप्तां व्याचचाणः तया उन्मत्तप्रलापालापित्वेनाधिक्षिप्तः, पुनरपि स्वानुभवप्रमाणेन स्वोक्तयाथार्थ्यं प्रमापयन् स्वेदात्मकसात्त्विकभावोद्गमात् सिक्तकरत्वेन तद्धारणे स्वस्याक्षमत्वमुक्त्वा, तां गृहीतुं वासन्तीमनुरुरोध। सीताऽपि सहसा प्रियतमाऽङ्गसङ्गेन सञ्जातसात्त्विकभावा स्वकीयामनवधानतामाशङ्कमाना तत्करात् स्वकरमाक्षिप्यापसरन्ती तमसासमचं स्वेदार्त्तं कम्पितञ्चाङ्गं दर्शयन्ती ललज्जे।

अथ सहसा स्वकरात् करे परिभ्रष्टे प्राप्तनिधिप्रणाशादिवातिदुःखितः सीतानाथः वासन्त्या "नेयं सीता, अपितु दुःसहवियोगशोकसमुत्थो भ्रमः" इति पुनःपुनः प्रतिबोधितः सहचर्य्यो, अनुपलब्ध्यादिप्रमाणेन तस्या असत्त्वमेव बहुधा वितर्क्य भगवतो विप्रलम्भस्यैवायमप्रतिकार्य्यस्वभावः प्रभाव इति निश्चिकाय। मुहुरेवं विलपन्तं तं पुनरप्यन्यासक्तचित्तं कर्त्तुकामा वनदेवता अशेषभयावशेषरावणरथखरकङ्कालशालानि अदर्शयन्। तन्मुखात् रावणनामश्रवणादेव रघुनन्दनः समतीतामपि घटनावलीं प्रत्यक्षदृश्यामिव मन्यमानः आमन्त्रयमाणश्च रावणं तातप्राणसीताऽपहारिणमिति समरकरणदलत्य एव।

अथ तमेवं अलीककोपाकुलमालोक्य विबोध्य चास्य वृत्तान्तस्य असाम्प्रतिकत्वं वासन्ती पूर्व्ववृत्तं स्मारयामास। रामोऽपि विदितात्मभ्रमः स्वोक्तं सर्वं प्रलापमवगच्छन् साम्प्रतिकस्य वियोगस्य निरवधित्वेन असहनीयत्वं विभावयन् शुचंशातितराम् अलक्ष्य एव सीतामामन्त्र्य, प्रबलनललक्ष्मणादिसहायानामपि ज्ञानाविषये त्वं कुत्र स्थितेत्यपृच्छत्; अज्ञापयच्च तां वनदेवताम् इत्थं स्वशोकसमभागिसुहृज्जनमनस्तापं परिहर्त्तुकामो रामः स्वभवनगमनाभिलाषम्; अवदच्च भवनगमनोत्तरं हिरण्मय्यां सीताप्रतिकृतौ सन्ततासृपरिष्वृतयोर्नेत्रयोः साम्प्रतिकविनोदोपायम्।

अथ तमसा अनाकाङ्क्षितप्रियदर्शनानन्दितां सीतां रामस्य सहसा जिगमिषावगमात् पुनर्निरवधिविरहाशङ्कातङ्कितामालोक्य, तस्याऽपि कुशलवयोर्द्वादशवर्षवर्द्धन-

मङ्गलविधानार्थमितः शीघ्रमेव भागीरथीपादान्तिकागमनस्यावश्यकतां विबोधयन्ती आश्वासयामास ।

इतश्च पतिमुखात् सहधर्म्मचारिणीशब्दश्रवणेन सपत्नीप्राप्तिभीता सीता वासन्ती-कृतप्रश्नोत्तरमुखेण पुनस्तन्मुखादेव सीताप्रतिकृतिशब्दश्रवणात्सञ्जिता बभूव । वासन्ती च अनिच्छन्ती अपि कार्य्यहानिनिरासाय रामस्य गृहगमनमनुमन्यमाना तमसया सह सीतारामयोर्यथार्थं शुभमाशंसमाना, तस्मात् स्थानात् प्रतस्थे । सीताप्यतिदुःखिता भागीरथीपादान्तिकमेव गन्तुमुपचक्रमे । रामश्च स्वभवन-गमनाय रथं चलितुमादिदेशेति ।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन कुलपतिकल्प "बि,ए" इत्युपनामक-
श्रीमज्जीवानन्दविद्यासागर-भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण-श्रीमन्नित्यबोधविद्यारत्नाभ्यां
परिवर्त्तित परिवर्द्धितायां सुखबोधिनीसमा-
ख्यायाम् उत्तररामचरितव्याख्यायां
तृतीयोऽङ्कः ॥ ३ ॥

# चतुर्थोऽङ्कः ।

[ ततः प्रविशतस्तापसौ । ]

एकः । सौधातके ! दृश्यतामद्य भूयिष्ठसन्निधापितातिथिजनस्य समधिकारम्भरमणीयता भगवतो वाल्मीकेराश्रमपदस्य । तथाहि, (क)—

नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूताप्रिया-
पीतादभ्यधिकं तपोवनमृगः पर्य्याप्तमाचामति ।

---

(क) एक इति ।—उपस्थितयोस्तापसयोरन्यतरः, आहेति शेषः । उपस्थितयोः प्रथमत एव नामापरिज्ञानात् एकप्रभृतिशब्देन उल्लेखः । सौधातके—एतन्नु सहागतस्य नामतः सम्बोधनम्, [सुधातुरपत्यं पुमान् इति सौधातकिः, सुधातृशब्दात् अपत्यार्थे "सुधातुरकङ् च" (४।१।९७ पा०) इति अकङ्, चकारात् इञ् च ]। भूयिष्ठेत्यादि ।—भूयिष्ठ—बाहुल्येन [ इदमेषामतिशयेन बहु इत्यर्थे बहुशब्दात् "अतिशायने तमबिष्ठनौ" (५।३।५५ पा०) इति इष्ठन्, ततश्च "बहोर्लोपो भू च बहोः" (६।४।१५८ पा०) इति बहोर्भूरादेशः, ततश्च "इष्ठस्य यिट् च" (६।४।१५९ पा०) इति बहोः परस्य इष्ठस्य लोपः यिडागमश्च इति भूयिष्ठपदं सिद्धम् ] सन्निधापिताः निमन्त्रणेन उत्सवेन च समुपस्थापिता अतिथिजना यस्मिन् तस्य तथोक्तस्य अनेकाभ्यागतजनसनाथस्येत्यर्थः । भगवतः,—ऐश्वर्य्यशालिनः, [ एतेन वनवासी तपस्वी अपि वाल्मीकिः समागतातिथीनामातिथ्ये शक्तिमानित्यर्थो व्यज्यते ]। आश्रमपदस्य—आश्रमस्थानस्य, तापसावासस्येत्यर्थः, ("पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः । पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः" इति मेदिनी)। समधिकारम्भरमणीयता—समधिकारम्भेण प्रचुरतररूपेण अतिथिसत्कारानुष्ठानेन अतिथिसेवार्थं बहुतरस्थानासनपानभोजनपरिवेशनादिकार्य्यगौरवेणेत्यर्थः, रमणीयता चारुता, सुदृश्यत्वमित्यर्थः । दृश्यतां—साक्षात्क्रियताम् । तथाहि—तमेवार्थम् अवगच्छ ।

सामान्यतः यदेतद् आश्रमपदस्य आतिथ्यसम्पादनायोजनरामणीयकमुक्तं तदेव समर्थयमान आह, नीवारेति ।—तपोवनमृगः आश्रमचारिणः [ एतेन तपोवने मुनिभिः

गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्य्यते ॥ १ ॥

---

स्नेहं संवर्द्धिततया अतिविश्वस्त इति बहुलोकसमागमेऽपि निर्भीक इत्यर्थो व्यज्यते ] सद्यःप्रसूतया अचिरमुक्तगर्भया प्रियया स्वपत्न्या पीतात् [ समाने अह्नि इति सद्यः, पृषोदरादित्वात् साधुः । सद्यः प्रसूता इति सद्यःप्रसूता, "सह सुपा" ( २।१।४ पा० ) इति समासः । इह सद्योग्रहणं मृग्याः सातिशयतृष्णावत्त्वद्योतनार्थम् । प्रसूतेति कर्त्तरि क्तः । सा चासौ प्रिया चेति सद्यःप्रसूताप्रिया, तया पीतम् इति सद्यःप्रसूताप्रियापीतं तस्मात् । च्युतसंस्कृतिदोषदुष्टतया नायं पाठः समीचीनतया प्रतिभाति, "प्रसूताप्रिया" इत्यंशे प्रसूताशब्दे प्राप्तस्य पुंवद्भावस्य अभावात् । न च "स्त्रियाः पुंवत्—" ( ६।३।३४ पा० ) इत्यनेन पूरणीप्रियादिषु परेषु पुंवद्भावस्य प्रतिषेधात् कथमत्र पुंवद्भावप्राप्तिरिति वाच्यम्, अस्य सूत्रस्य बहुव्रीहिसमासविषयतया कर्म्मधारये "पुंवत्कर्म्मधारयजातीयदेशीयेषु" (६।३।४२ पा०) इत्यनेन सामान्यतः प्राप्तस्य पुंवद्भावस्य कथमपि प्रतिषेद्धुमशक्यत्वात् ; अत एव केचनात्र "सद्यःप्रसूतप्रियापीतात्" इति पाठान्तरं कल्पयन्ति इति सुधिया स्वधिया विभाव्यम् ] अभ्यधिकम् अतिरिक्तं पीतावशिष्टमित्यर्थः, [ एतेन तिर्य्यग्योनिरपि अयं मृगः स्वप्रियाप्रणयपरवशः स्वस्य बुभुक्षापिपासयोर्विद्यमानत्वेऽपि प्रेयस्यामत्यनुरागेण सद्यःप्रसूततया तस्याः पिपासायाः प्राबल्यं जानानः तामादौ आपरितोषं पाययित्वा, तद्भुक्तावशिष्टं पिबतीत्यर्थो व्यज्यते ] उष्णं मधुरञ्च सुखाद्यमित्यर्थः, [ उष्णञ्च मधुरञ्च इति उष्णमधुरं, नीललोहितादिवद्विशेषणसमासः । अचिरमुक्तगर्भाया हि उष्णद्रव्यपानम् आशु यन्त्रणोपशमकमिति उष्णोक्तिः प्रकृतोपयोगितामापद्यते ] नीवारौदनमण्डं तृणधान्यान्नमण्डं, पर्य्याप्तं यथेष्टं यथा तथा आचामति पिबति ; [ आङ्पूर्वात् चमतेर्लटि आचामति इति सिद्धम् "आङि चमः इति वक्तव्यम्" ( वा० ) इति दीर्घः, अन्यत्र चमति विचमति इत्यादि । अत्र मण्डस्य पर्य्याप्तपानकथनेन आश्रमे अमितातिथिजनभोजनोपयोगिप्रचुरान्नाद्यायोजनं, तथा प्रियापीतावशिष्टे मण्डे प्रियोच्छिष्टतया अस्य सर्वाधिकसमादरश्च व्यज्यते इति बोध्यम् ] मण्डस्य बहुलत्वात् सद्यःप्रसूताऽपि मृगी न समस्तं मण्डं पातुं शशाक, अवशिष्टेन मृगस्यापि पर्य्याप्त आहारोऽभूदित्यर्थः । किञ्च सर्पिष्मतः सघृतस्य, घृतपक्वस्येत्यर्थः, भक्तस्य अन्नस्य ( "पोलाओ" इति भाषा ) स्फुरता उद्गच्छता गन्धेन सौरभेण मनाक् ईषत्, ( "मनागत्यल्पमन्दयोः" इति मेदिनी ) अनुसृतः अनुगतः मिश्रितः इत्यर्थः, कर्कन्ध्वाः कोल्याः फलैः मिश्राणां

सौधातकिः। आअदं अणज्झाअकारणं सविसेसभूदं अज्ज जिणकुच्चाणं। * (ख)

प्रथमः। [ विहस्य। ] अपूर्वः कोऽपि ते बहुमानहेतुर्गुरुषु सौधातके ! (ग)

* आगतमनध्यायकारणं सविशेषभूतमद्य जीर्णकूर्चानाम्

शाकानां वास्तूकादीनां पचनादुत्थित आमोदः घृतपक्कभक्तामोदसहितः कोलिफलमिश्र शाकपाकाद्भवगन्धविशेष इत्यर्थः, परिस्तीर्य्यते सर्व्वतो व्याप्नोति। [ परिस्तीर्य्यते इति कर्म्मकर्त्तरि प्रयोगः ; यद्वा—कर्म्मणि एवायं प्रयोगः, वायुना इति कर्त्तृपदम् एतत्कल्पे ऊहनीयम्। अत्र स्वभावोक्तिरलङ्कारः, तथाच दर्पणः,—"स्वभावोक्तिर्दुरूहार्थ-स्वक्रियारूपवर्णनम्" इति ]। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

( ख ) जीर्णकूर्च्चानां—जीर्णं वार्द्धकेन शुक्लीभूतं कूर्चं श्मश्रु येषां तेषां पक्व-श्मश्रूणामतिवृद्धानामित्यर्थः। यद्वा—जीर्णं शिथिलं कूर्चं भ्रूद्वयान्तर्वर्त्ति स्थानं येषां तेषां, वार्द्धके हि भ्रुवोर्मध्यदेशः श्लथीभवति इति सिद्धम् ( "कूर्चमस्त्री भ्रुवोर्मध्ये कठिन-श्मश्रुकैतवे" इति मेदिनी )। आगतम्—आगमनम्, उपस्थितिरिति यावत्। सविशेषभूतं—विशेषरूपम्, केनापि उपायेन उपेक्षितुमशक्यमित्यर्थः। [ विशेषेण सह वर्त्तमानम् सविशेषं, ततश्च सविशेषं भूतम् इति सविशेषभूतं "सह सुपा" ( २।१।४ पा० ) इति समासः द्वितीयातत्पुरुषो वा। वसिष्ठादेः शिष्टत्वस्य असन्दिग्ध-तया विशेषतया अध्ययननिषेधः, साधारणातिथेस्तु न तथेति सविशेषपदतात्पर्य्यम् ]। अनध्यायकारणम्—अनध्यायस्य स्वाध्यायाभावस्य कारणं, शिष्टसमागमरूप इत्यर्थः।—"अनध्यायं प्रकुर्व्वीत शिष्टे च गृहमागते" इति वचनात् शिष्टसमादरानध्यायः शास्त्र-सम्मत एव इति बोध्यम्। सोपहासवचनमिदम्।

( ग ) विहस्य—विकृतहास्यं विशेषहास्यं वा कृत्वा, ग्राम्यस्य कूर्चशब्दस्य तादृश-सर्व्वजनमान्येषु वसिष्ठादिषु प्रयुक्तत्वादस्य विकृतहास्यं विशेषहास्यं वा ज्ञेयम्। गुरुषु—पूज्येषु, अभ्यागतेषु—वसिष्ठादिषु, अभ्यागतस्य गुरुत्वे प्रमाणं यथा,—"गुरुरग्नि-र्द्विजातीनां वर्णानां ब्राह्मणो गुरुः। पतिरेको गुरुः स्त्रीणां सर्व्वत्राभ्यागतो गुरुः ॥" इति। अपूर्व्वः,—अभिनवः। कोऽपि—असाधारणः इत्यर्थः। बहुमानहेतुः,—बहुमानस्य विशिष्टगौरवस्य हेतुः कारणं, वर्त्तते इति शेषः ; विशिष्टगौरवपात्रेषु

सौधा। भो भाण्डायण! किंणामधेओ एसो महन्तस्स त्थविरसत्थस्स धुरन्धरो अज्ज चीरधारओ अदिधी आअदो?*(घ)

भाण्डायनः। धिक् प्रहसनम्। नन्वयमृष्यशृङ्गाश्रमात् अरुन्धतीपुरस्कृतान् महाराजदशरथस्य दारानधिष्ठाय भगवान् वसिष्ठः प्राप्तः, तत् किमेवं प्रलपसि? (ङ)

---

* भो भाण्डायन! किंनामधेय एष महतः स्थविरसार्थस्य धुरन्धरोऽद्य चीरधारकोऽतिथिरागतः?

एतेषु तव सम्मानप्रदर्शनमेव उचितं, त्वया तु पात्रापात्रे अविविच्यैव पूज्यत्वप्येतेषु परिहासव्यञ्जकः शब्दः प्रयुक्त इत्ययुक्तमेवाचरितमिति भावः। यद्वा सौधातकिं प्रति प्रथमतापसस्य इयं सोल्लुण्ठनोक्तिरिति ध्येयम्।

(घ) भाण्डायन!—इदन्तु प्रथमतापसस्य नाम्ना सम्बोधनम् [भण्डस्य महर्षेर्युवाऽपत्यमिति भाण्डायनः, भण्डशब्दात् "गर्गादिभ्यो यञ्" (४।१।१०५ पा०) इति यञ्, ततः "यञिञोश्च" (४।१।१०१ पा०) इति फक्]। स्थविरसार्थस्य—वृद्धसमूहस्य, धुरन्धरः,—श्रेष्ठः, [धुरं धरति इति धुरन्धरः, धुर् शब्दात् धरतेः खच्प्रत्ययेन निपातनात् सिद्धम्]। चीरधारकः,—जीर्णवसनधारीत्यर्थः। किंनामधेयः,—किं नामधेयम् आख्या यस्य सः, किमाख्य इति यावत्। स्थविरधुरन्धर इति हास्यकरः प्रयोगः।

(ङ) प्रहसनम्—गुरुजनान् प्रति उपहासम्, असम्मानसूचकवाक्यप्रयोगम् इत्यर्थः। धिक्—निन्दायाम्, एवं परिहासः शिष्टविगर्हिततया सर्व्वथैव अयुक्त इत्यर्थः, [प्रहसनमित्यत्र धिक्शब्दयोगे द्वितीया]। "स्थविरसार्थस्य धुरन्धरः" इति "चीरधारकः" इति च प्रयोगः परिहासव्यञ्जकः। नन्विति सम्बोधने। अरुन्धती-पुरस्कृतान्—अरुन्धत्या तन्नामवसिष्ठपत्न्या पुरस्कृताः; यद्वा—अरुन्धती पुरस्कृता अग्रेसरी येषां तान् तथोक्तान्। दारान्—भार्य्याः, कौशल्यामित्यर्थः। अधिष्ठाय—तेषां नायको भूत्वेत्यर्थः। प्राप्तः,—समागतः, अतिथिः सन्नुपस्थित इत्यर्थः। तत्—तस्मात्। किं—कथम्। एवम्—उक्तरूपेण। प्रलपसि—निरर्थकं कथयसि, उपहससीत्यर्थः, नैतद् युज्यते इति भावः।

सौधा। हुं वसिट्ठो। * (च)

भाण्डा। अथ किम्? (छ)

सौधा। मए उण जाणिदं, वग्घो वा विओ वा एसो त्ति। † (ज)

भाण्डा। आः किमुत्तं भवति? (झ)

सौधा। तेण परावड़िदेण ज्जेव सा वराइआ कल्लाणिआ मड़मड़ाइदा। ‡ (ञ)

* हुं वशिष्ठः!

† मया पुनर्ज्ञातं, व्याघ्रो वा वृको वा एष इति।

‡ तेन परापतितेनैव सा वराकिका कल्याणिका मड़मड़ायिता।

(च) हुमिति प्रश्ने ("हुं वितर्के परिप्रश्ने" इत्यमरः)।

(छ) अथ किम्? [सम्मतिसूचकपदमिदम् अव्ययम् "और क्या?" इति हिन्दी भाषा] अयं वसिष्ठ एवेत्यर्थः।

(ज) पुनः,—किन्तु। ज्ञातं—विदितम्। किं ज्ञातमित्याह, एष इति।—एषः,—जीर्णकूर्चादिमान् समागतः,—अभ्यागतः। व्याघ्रः,—द्वीपी। वृकः,—कुक्कुराकारव्याघ्रभेदः। वाकारद्वयं वितर्के, (वा स्याद् विकल्पोपमयोर्वितर्के पादपूरणे" इति मेदिनी "कोकस्त्वीहामृगो वृकः" इत्यमरः) व्याघ्रवृकादिवद्-बहुरोमपूर्णसर्व्वशरीरत्वात् अस्य तत्त्वेन वितर्कः। सोपहासोक्तिरियम्।

(झ) आः इति—अविरक्तिक्रोधव्यञ्जकमव्ययम् ("आ प्रगह्यं स्मृतौ वाक्येऽप्यास्तु स्यात् कोपपीड़योः" इत्यमर.)। उक्तं—कथितं, त्वयेति शेषः, किमेतद् अयुक्तं भणसीति समुदितार्थः; महान् दोषावहस्ते अनुचितवाक्प्रयोग इति भावः। यद्वा—श्रेष्ठ ज्येष्ठञ्च वशिष्ठमेवमुपहससि इत्ययुक्तमेव।

(ञ) परापतितेनैव—आगतमात्रेणैव, व्याघ्रादिवदित्यर्थः। सा—अस्मत्-परिचिता। वराकिका—दीना, स्वयमात्मबाधासमर्थत्वेन शोच्येत्यर्थः। कल्याणिका—वत्सतरी ["कल्लोडिका" इति पाठे स एवार्थः]। मड़मड़ायिता—मड़मड़ेति शब्देन चर्वयित्वा भक्षिता। मड़मड़ेति अस्थिचर्वणकालीनोऽव्यक्तानुकरण-

भाण्डा। समांसो मधुपर्क इति आम्नायं बहुमन्यमानाः श्रोत्रियायाऽभ्यागताय वत्सतरीं महोक्षं वा महाजं वा निर्वपन्ति गृहमेधिनः, तं हि धर्मसूत्रकाराः समामनन्ति। (ट)

शब्दः। [ तादृशस्य अनुकरणशब्दात् "अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्" (५।४।५७ पा०) इति डाच्, ततश्च मडमडाकरोति इत्यर्थे "लोहितादिडाज्भ्यः क्यष्" (३।१।१३ पा०) इति क्यषि मड्मडाय इति नामधातोः कर्मणि क्तः, स्त्रियां मड्मडायिता ]। व्याघ्रादिर्यथा सहसा आगत्यैव यं कञ्चिदाहत्य भक्षणार्थं चर्व्वणे आत्मानं नियोजयति, तथा अयमपि इति; तत् कथं न भणामि "व्याघ्री वा वृकी वा" इत्यादीति भावः।

(ट) "समांसो मधुपर्कः" इत्याम्नायप्रमाणमुपन्यस्य वशिष्ठस्य वत्सतरी-मांसभक्षणे प्रत्यवायं निरस्यन्नाह, समांस इति।—मांसेन सह वर्त्तमानः इति समांसः, पलसहित इत्यर्थः। मधुपर्कः,—अतिथ्यादिपूजोपचारभेदः, [ मधुना पृच्यतेऽसौ इति मधुपर्कः मधु + पृच् + घञ् ]। मधुपर्कमाह कालिकापुराणे,— "दधि सर्पिः जलं क्षौद्रं सितैताभिस्तु पञ्चभिः। प्रोच्यते मधुपर्कस्तु सर्वदेवौघ-तुष्टये॥" इति। इति—एवम्, उक्तरूपानुपूर्व्विकमित्यर्थः। आम्नायं—वेदवचनम् [ आम्नायते अभ्यस्यते इत्याम्नायः वेदः। आङ्पूर्वात् म्नाधातोः घञ्प्रत्ययः ]। बहुमन्यमानाः,—असन्दिग्धप्रमाणत्वेन आद्रियमाणाः। गृहमेधिनः,—गृहैर्दारैर्मेधन्ते सङ्गच्छन्ते इति गृहमेधिनः गृहाश्रमस्थाः। अभ्यागताय—गृहागताय अतिथये इत्यर्थः। श्रोत्रियाय—अधीतवेदाय ब्राह्मणाय, [ छन्दोऽधीते इति घप्रत्ययेन श्रोत्रियः सिद्धः ] श्रोत्रियलक्षणमाह देवलः,—"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा। षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित्॥" इति। तथा च शाङ्करभाष्यम्—"जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते। विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते॥" इति। वत्सतरीम्—अल्पवयस्कां गावत्सां, द्विहायनीमित्यर्थः। [ वत्सशब्दात् अतिबाल्यार्थे "वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे" (५।३।९१ पा०) इति तरप्, ततश्च स्त्रियां ङीप् ] महोक्षं—महावृषभं, [ महांश्चासौ उक्षा चेति विग्रहे "अचतुर विचतुर—" (५।४।७७ पा०) इति अच्-प्रत्ययान्तो निपातः ]। महाजं—वृहच्छागम्। निर्वपन्ति—भोजनार्थं ददति, घ्नन्ति इत्यर्थः। ननु "समांसो मधुपर्कः" इति श्रुतेः देवोद्देश्यकमधुपर्कपरतया श्रोत्रियाय तदर्पणं न युज्यते इत्याह, तमिति।—तं—श्रोत्रियब्राह्मणोद्देश्यक वत्सतरी-

सौधा। भो णिग्गिहीदोसि। * (ठ)

भाण्डा। कथमिव ?

सौधा। जेण आअदेसु वसिट्ठमिस्सेसु वच्छदरी विस-सिदा, अज्ज ज्जेव पज्जागदस्स राएसिणो जणअस्स भअवदा वम्मीएण वि दहिमहुहिं ज्जेव णिव्वत्तिदो महुवक्को, वच्छदरी उण विसज्जिदा। † (ड)

* भो ! निगृहीतोऽसि।

† येन आगतेषु वसिष्ठमिश्रेषु वत्सतरी विशसिता, अद्य एव पर्य्यागतस्य राजर्षे-र्जनकस्य भगवता वाल्मीकिनाऽपि दधिमधुभिरेव निर्वर्त्तितः मधुपर्कः, वत्सतरी पुनः विसर्जिता।

महोक्षमहाजानाम् अन्यतमनिर्वापरूपमित्यर्थः। धर्म्मसूत्रकाराः,—धर्म्मशिक्षार्थं विधि-निषेधात्मकोपदेशसूत्ररचयितारः, धर्म्मशास्त्रप्रणेतारः मन्वादयः इत्यर्थः। समामनन्ति —समुपदिशन्ति। हि-शब्दो निश्चयवाचकः। तदनुसारेणैव अद्य परमश्रोत्रियाय वसिष्ठाय कल्याणिका दत्तेति भावः।

(ठ) निगृहीतः,—पराभूतः, स्वपक्षसमर्थनेऽसमर्थत्वात्, मयेति शेषः। अनेन सौधातकिः भाण्डायनस्य ज्ञानवत्त्वमुपहसति। मधुपर्कस्य जीवहिंसासमेतस्य शास्त्रार्थत्वे सर्व्वत्रैव तदनुष्ठानं स्यात्, तत्तु न भवतीति त्वम् अनर्थकं कथयसीति भावः।

(ड) मधुपर्कानुरोधेन जीवहिंसा न शास्त्रार्थः, तत्र तस्याः नियतत्वे अद्यैव वाल्मीकिना जनकाय दत्ते मधुपर्केऽपि वत्सतरी दत्ता स्यादिति युक्त्या भाण्डायनोक्तेः अयौक्तिकत्वं द्रढयति, येनेति।—येन—हेतुना। वसिष्ठमिश्रेषु—महामान्येषु वसिष्ठेषु [ गौरवे बहुत्वम्, अत्र मिश्रशब्दः पूज्यत्वबोधकः ] आगतेषु—अभ्यागतरूपेण उप-स्थितेषु सत्सु। वत्सतरी—द्विहायनी गौरित्यर्थः। विशसिता—मारिता, [ व्यापा-दनार्थकात् विपूर्व्वात् शसतेः कर्म्मणि क्तः, स्त्रियां टाप् ] मधुपर्कार्थमिति शेषः। किं तेन ? इत्याह, अद्येति।—अद्यैव—अस्मिन्नेव दिवसे, [ एवकारेण दिनान्तर-व्यवच्छेदः, तेन च सद्यःसंघटनतया न विस्मृतिसम्भावनेत्याशयो द्योत्यते ]। पर्य्यागतस्य—समुपस्थितस्य। राजर्षेः,—राज्यस्वामिनः तपस्विनः, अभ्यर्थनार्थमिति शेषः, [ एतेन विशेषणेन तदुद्देश्यकमधुपर्के नाल्पहानिसम्भवः इति व्यज्यते। ]

भाण्डा। अनिवृत्तमांसानामेवं कल्पमृषयो मन्यन्ते, निवृत्तमांसस्तु तत्रभवान् जनकः। (ढ)

वाल्मीकिनाऽपि—सर्वशास्त्रज्ञेन महर्षिणा प्राचेतसेनापि इत्यर्थः। अत्र शास्त्रज्ञानविरहितस्य तु अज्ञतया कदाचित् प्रमादसम्भवेऽपि साङ्गवेदविद्यापारदर्शिनो वाल्मीकेस्तु सर्वथा तदसम्भवः इत्यपिकारार्थः। दधिमधुभिरेव—विक्रतदुग्ध-चौद्रप्रभृतिभिरेवेत्यर्थः, एवकारेण वत्सतरीव्यवच्छेदः। निर्वर्त्तितः,—सम्पादितः। पुनः,—किन्तु। विसर्जिता—परित्याजिता, न तु मधुपर्कघटकपदार्थपूरणाय आलब्धेत्यर्थः। अत्रायं भावः,—"समांसो मधुपर्कः" इति श्रुतेर्यदि अभ्यागतसाधारणमधुपर्कपरता स्यात, स्यादपि वाल्मीकेर्जनकोद्देश्यकमधुपर्के वत्सतरीविशसनम्, अतः श्रुतेर्देवाद्युद्देश्यकमधुपर्कपरतैव सामान्यतो मधुपर्कस्य दधिघृतमधुशर्कराभ्यविहितत्वात्। उक्तञ्च,—"दधि सर्पिर्जलं चौद्रं सिता चैतैश्च पञ्चभिः। प्रोच्यते मधुपर्कस्तु क्वचिदन्यविधोऽपि च॥" इति।

(ढ) भाण्डायनः सौधातकि शास्त्रस्य प्रकृतार्थनिर्णये भ्रान्तमालोक्य सम्प्रति मधुपर्के समांसत्वामांसत्वयोरधिकारिभेदेन व्यवस्थां प्रदर्श्य तस्य भ्रमनिरासपुरःसरं स्वमतमेव द्रढयति, अनिवृत्तेति।—ऋषयः,—धर्मशास्त्रप्रणेतारः मुनयः। अनिवृत्तमांसानाम्—अपरित्यक्तमांसभोजनानां, मांसभक्षणशीलानामित्यर्थः, [ निवृत्तं मांसं येषां ते निवृत्तमांसाः, न निवृत्तमांसाः इति अनिवृत्तमांसाः, तेषाम्; यद्वा—न निवृत्ताः इति अनिवृत्ताः मांसादनिवृत्ताः इति अनिवृत्तमांसाः तेषामिति विग्रहः। अत्र मांसपदेन लक्षणया मांसभोजनं बोध्यते ]। एवं—"समांसो मधुपर्कः" इति श्रुतिसिद्धं मधुपर्कं मांसदानरूपम्। कल्पं—विधिम्। मन्यन्ते—स्मरन्ति। नन्वेवञ्चेत् कथं तर्हि वेदविदामग्रेसरेणापि वाल्मीकिना तन्नानुसृतमित्याह, निवृत्तेति।—तु किन्तु। तत्रभवान्—पूज्यः, ("त्रिषु तत्रभवान् पूज्यस्तथैवात्रभवानपि" इति वैजयन्ती)। जनकः,—तन्नामा राजर्षिः। निवृत्तमांसः,—मांसभक्षणाद् विरतः, अत एव तस्मिन् आगते विसर्ज्जिता, अनिवृत्तमांसे पुनर्वसिष्ठे उपस्थिते प्रथमकल्पभूता वत्सतरी दत्तेति भावः। नन्वेवं मधुपर्के मांसदानस्य अनिवृत्तमांसस्थले शास्त्रीयत्वेन दातुः तथा कर्त्तव्यत्वेऽपि पलितकेशस्य वर्षीयसो वसिष्ठस्य तद्भोजनन्तु अयुक्तमेवेति चेन्न, मधुपर्के प्रदत्तमांसस्य अभोजने प्रत्यवायश्रवणात् वसिष्ठेन तन्नापेक्षितम्; तथाच—मनुः,—"नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः। स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्॥ न मांसभक्षणे दोषो न मद्ये न च

सौधा। किं णिमित्तं ? * (ग)

भाण्डा। स तदैव देव्याः सीतायाः तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः संवृत्तः, तथास्य कतिपये संवत्सराश्चन्द्रद्वीप-तपोवने तपस्तप्यमानस्य। (त)

---

* किं निमित्तम् ?

---

मैथुने। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला॥" इति। न चैवं सति राजर्षे जनकस्य प्रत्यवायभागित्वमिति शङ्क्यं, तस्य वैखानसव्रतावलम्बित्वेन निरामिषाशित्वात्, तथाच यमः,—"भक्षयेत् प्रोक्षितं मांसं सकृद्ब्राह्मणकाम्यया। दैवे नियुक्तः श्राद्धे वा नियमे च विवर्जयेत्॥" इति सर्वं सुधीभिर्विभाव्यम्।

(ग) किं निमित्तं—किं कारणम् ? जनकस्य निवृत्तमांसत्वे को हेतुरित्यर्थः।

(त) सौधातकिना पृष्टो भाण्डायनः जनकस्य मांसनिवृत्तौ हेतुमाह, स इति।—सः,—जनकः। तदैव—सीतायाः निर्वासनवार्त्ताश्रवणाव्यवहितोत्तरमेव। तादृशं—तथाविधम् अतिभीषणमित्यर्थः। दैवदुर्विपाकं—दैवं पूर्वजन्मार्जितं कर्म्म, "पूर्वजन्मार्जितं कर्म्म तद्दैवमिति कथ्यते" तथा,—"प्राग्जन्मनि कृतं कर्म्म शुभं वा यदि वाऽशुभम्। दैवशब्देन निर्दिष्टमिह जन्मनि तद् बुधैः॥" इति। पूर्वजन्म च वर्त्तमानजन्मकालस्य प्राक्काल इति बोध्यम्। शरीरस्य प्रतिक्षणध्वंसित्वात् प्रागवर्त्तिशरीरस्य च परकालेऽनवस्थानात् कर्म्म च अपरशरीरकृतमपीति बोध्यम्। तस्य दुर्विपाकः दुष्टः परिणामः कुफलमिति यावत् [विपच्यते इति विपाकः, विपूर्वात् पचतेः भावे घञ्] तं दुर्भाग्यदुर्विलसितमिदमित्यर्थः। वैखानसः,—वानप्रस्थः [विशेषेण खनति विदारयति धर्मार्थम् आत्मानं क्लेशयति इति वैखानसः। वि + खन + डः अन – असुन् कर्म्म० स्वार्थे अण्] वानप्रस्थाश्रममाह याज्ञवल्क्यः,—"वानप्रस्थाश्रमं वक्ष्ये तत् शृण्वन्तु महर्षयः! पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत् सहैव वा॥" इत्यादि। वानप्रस्थस्य धर्म्मो यथा गारुडे एकोनपञ्चाशत्तमेऽध्याये—"भूशय्या मूलफलाशित्वं स्वाध्यायस्तप एव च। संविभागो यथान्याय धर्म्मोऽयं वनवासिनः॥" इत्यादि। तस्य च मांसवर्ज्जनमाह कूर्म्मपुराणं—"पुरोडाशं चरूंश्चैव विधिवन्निर्वपेत् पृथक्। देवताभ्यश्च तन्मुला वन्यं मेध्यतरं हविः॥ शेषं समुपभुञ्जीत लवणञ्च स्वयं कृतम्। वर्ज्जयेन्मधुमांसादि भौमानि कवकानि च॥" इत्यादि। संवृत्तः,—जातः, गार्हस्थ्यधर्मं परिहाय वनवासी सन् वृक्षमूलमाश्रितः इत्यर्थः। तथा—एवंविधाऽवस्थया

सीता। तदो किं त्ति आअदो ? * (थ)

आत्रेयी। चिरन्तनप्रियसुहृदं प्राचेतसं द्रष्टुम्। (द)

सीता। अवि अज्ज सम्बन्धिणीहिं समं संवुत्तं से दंसणं ण वत्ति। † (ध)

आत्रेयी। सम्प्रत्येव भगवता वसिष्ठेन देव्याः कौशल्यायाः सकाशं भगवती अरुन्धती प्रहिता, यत् स्वयमुपेत्य वैदेहो द्रष्टव्य इति। (न)

* ततः किमिति आगतः ?

† अपि अद्य सम्बन्धिनीभिः समं संवृत्तमस्य दर्शनं न वेति।

वानप्रस्थरूपेणेत्यर्थः। अस्य—जनकस्य। कतिपये—कियन्तः [ कतिपयशब्दस्य "प्रथमचरमतयाल्पार्द्ध—" ( १।१।३३ पा० ) इति सर्व्वनामत्वे जसः श्यादेशः ]। संवत्सराः,—अब्दाः, अतीता इति शेषः। चन्द्रद्वीपतपोवने—चन्द्रद्वीपस्य तदाख्यस्य कस्यचित् स्थानस्य तपोवने आश्रमे। तपस्यमानस्य—तपस्यामनुतिष्ठतः, [ अत्र "तपस्तपःकर्म्मकस्यैव" ( ३।१।८८ पा० ) इत्यनेन तप् धातोरात्मनेपदम् यक् च ]।

( थ ) ततः,—तस्मात् चन्द्रद्वीपतपोवनादित्यर्थः। किमिति—कथम्। आगतः, —इहोपस्थितः।

( द ) चिरन्तनेति।—चिरन्तनः,—चिरकालीनः, प्रियसुहृत्—प्रेमास्पदमित्रं, तं—प्राचीनबन्धुमित्यर्थः, [ अत्र चिरं भवः इत्यर्थे चिरमित्यव्ययात् "सायञ्चिरं प्राह्णे प्रगे—" ( ४।३।२३ पा० ) इति ट्युल्, तुट् च ]। प्राचेतसं—वाल्मीकिम्। द्रष्टुं—साक्षात्कर्तुं, पूर्व्वोक्तसीतोक्तिवाक्यस्थेन "आगत." इत्यनेन अन्वयः।

( ध ) अत्र अपि शब्दः प्रश्नार्थकः। सम्बन्धिनीभिः,—कुटुम्बिनीभिः कौशल्या-प्रभृतिभिः। समं—सह, ( "साकं सार्द्धं समं सह" इत्यमरः )। अस्य—जनकस्य। दर्शनं—साक्षात्कारः। संवृत्तं—सञ्जातम्, ( अत्र—"अद्य सम्बन्धिनीभिः समम् अस्य दर्शनं संवृत्तं न वेति अपि ज्ञायते ?" इत्येवमन्वयः कार्य्यः ; अन्यथा नवेत्यत्र विकल्पबोधक-वा-शब्देनैव जिज्ञासाया अपि अर्थत एव बोधनात् अपेर्निरर्थकत्वापत्तिः स्यादिति ध्येयम् )।

( न ) प्रहिता—प्रेरिता। वक्ष्यमाणसंवादं वक्तुमिति शेषः। किमर्थमित्याह,

सौधा। जधा एदे त्थविरा परप्परं मिलिदा, तधा अह्मे वि वटुएहिं समं मिलिअ अणज्झाअमहूसवं खेलन्ता सम्भावेम्ह । * (प) [ इति परिक्रामतः । ]

भाण्डा। तदयं ब्रह्मवादी पुराणराजर्षिर्जनकः प्राचेतस-वसिष्ठावुपास्य सम्प्रति आश्रमवहिर्वृक्षमूलमधितिष्ठति ; य एषः (फ),—

---

* यथा एते स्थविराः परस्परमिलिताः, तथा आवामपि वटुभिः समं मिलित्वा अनध्यायमहोत्सवं खेलन्तौ सम्भावयावः ।

---

यदिति । स्वयम—आत्मना, न तु प्रतिनिधिनेत्यर्थः । स्वयमनुपस्थितौ वैवाहिके ममादरशैथिल्यप्रकाशः सम्भवेदिति भावः । उपेत्य—उपस्थाय । वैदेहः,—विदेहाधिपतिर्जनकः; [ विदेहस्य ईश्वरः इति वैदेहः "तस्येश्वरः" ( ५।१।४२ पा० ) इति विदेहशब्दात् [illegible] ] । द्रष्टव्यः,—साक्षात्कर्त्तव्यः ; तथा च इदानीमपि कुटुम्बिनीभिः समं साक्षात्कारो नाभूत्, कौशल्यायाः तत्रानुपस्थितत्वादिति तात्पर्य्यम् ।

( प ) स्थविराः,—वृद्धाः । परस्परमिलिताः,—अन्योन्यमेकत्र समवेताः । आवां—सौधातकि-भाण्डायनौ । वटुभिः,—अल्पवयस्कैः ब्राह्मणैः । खेलन्तौ—क्रीड़न्तौ, खेलनेनेत्यर्थः, [ "लक्षणहेत्वोः क्रियायाः" (३।२।१२६ पा०) इति क्रियायाः परिचायके हेतौ चार्थे वर्त्तमानाद्धातोर्लटः शतृ शानच्-विधानात् अत्र खेलतेः हेत्वर्थे शतृप्रत्ययः ] अनध्यायमहोत्सवं—पाठविघ्नरूपमानन्दजनकव्यापारम् । सम्भावयावः,—सम्मानयावः, क्रीड़या उपभुञ्ज्वहे इत्यर्थः ।

( फ ) तत्—तस्मात्, कौशल्यया सममिदानीमपि साक्षात्काराभावादित्यर्थः । अयं—पुरतः परिदृश्यमानः । ब्रह्मवादी—वेदोपदेष्टा, अधीतवेदवेदान्त इत्यर्थः, [ ब्रह्म वदितुं शीलमस्य इति ब्रह्मशब्दपूर्वात् वदतेः शीलार्थे णिन् प्रत्ययः ] प्राचेतस-वशिष्ठौ—वाल्मीकिवशिष्ठौ । उपास्य—आराध्य, दर्शनसंलापादिकं कृत्वेत्यर्थः । वृक्ष-मूलम्—आश्रमतरोरधोदेशम् [ वृक्षमूलमिति "अधिशीङ्स्थासां कर्म" ( १।४।४६ पा० ) इत्यधितिष्ठतेरधिकरणस्य कर्मत्वम् ] । य एष इति अव्यवहितेन श्लोकस्थेन "तप्यते" इति क्रियापदेनान्वयः ।

हृदि नित्यानुषक्तेन सीताशोकेन तप्यते।
अन्तःप्रसृतदहनो ज्वलन्निव वनस्पतिः॥ २॥

[ निष्क्रान्तौ। ]

इति विष्कम्भकः। (ब)

---

प्राचेतसोऽपि प्रियतमायाः दुहितुः सीतायाः सापवादपरित्यागेन अन्तर्निखातशल्यं विदेहनाथं तदवस्थापन्नमालोक्य भाण्डायनः तस्य तदानीन्तनीमवस्थां वर्णयन्नाह, हृदीति।—हृदि अन्तःकरणे नित्यानुषक्तेन सततावस्थितेन सीताशोकेन सीतावियोग-दुःखेन, अन्तर्मध्ये प्रसृतः उद्वेल्लितः, [ प्रसुप्त इति पाठे—निहितः, प्रदीप्त इति पाठे तु—प्रज्वलितः इत्यर्थः ] दहनो वह्निर्यस्य सः [ सीताशोक दहन इवेति ध्वनिः ] तथाभूतः अभ्यन्तरलीनपावक इत्यर्थः, ज्वलन् ज्वलिष्यमाणः इत्यर्थः, वनस्पतिः शमीवृक्ष इव तप्यते तापमनुभवति, जनक इति शेषः। [ अत्र—उपमानामालङ्कारः, सा च—इवशब्दवाच्यतया श्रौती। एवं वनस्पतिसाधारणे अन्तर्लीनपावकत्वस्य असम्भवतया सामान्यशब्दस्य विशेषपरतानियममङ्गीकृत्यैव शमीरूपवनस्पतिविशेष-बोधनेऽपि वक्तुमुचितस्य शमीरूपस्य वनस्पतेर्विशेषतोऽकथनात् अपि अविशेषरूपो दोषश्चिन्त्यः ]। पथ्यावक्त्रं वृत्तम्॥ २॥

( ब ) विष्कम्भकस्य लक्षणादिकन्तु पूर्वमुक्तम्; सम्प्रति शुद्ध-सङ्कीर्णभेदेन भिन्नयोस्तयोः कतरोऽयमिति विचार्य्यते; तथाहि,—"मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः। शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः॥" इति दर्पण-वचनात् भाण्डायन सौधातकि रूपाभ्यां नीचमध्यमपात्राभ्यां सम्प्रयोजिततया अयं सङ्कीर्णरूप एव भेदेऽन्तर्भवति। न चैतयोरुभयोरेव मुनिशिष्यतया मध्यमपात्रत्वमिति तादृशाभ्यां ताभ्यां सम्प्रयोजितस्यास्य शुद्धताया एव उचितत्वात् कथं सङ्कीर्णरूपत्वमिति वाच्यम्, एतयारेकस्य सौधातकेर्मध्यमपात्रत्वाभावेन तथात्वात्। अथ किं नाम नीचत्व मध्यमत्वयोर्निष्कृष्टलक्षणमिति चेत् शृणु, संस्कृतभाषाभाषित्वमेव मध्यमत्वं, प्राकृतादिभाषा भाषित्वञ्च नीचत्वमिति ब्रूमः, तथा च सौधातकेरसंस्कृतभाषितया नीचलक्षणान्तर्गतत्वाद् अस्य सङ्कीर्णरूपत्वमेवेति सुधीभिर्विभाव्यम्। एवं "स तदैव देव्याः सीतायास्तादृशं दैवदुर्विपाकम्" इत्यादिना भाण्डायनवाक्येन वृत्तानां, तथा "सम्प्रत्येव भगवता वशिष्ठेन देव्याः कौशल्यायाः" इत्यादिना च भाण्डायनवाक्येन वर्णिष्यमाणानां कथांशानां निदर्शनतया विष्कम्भकलक्षणसङ्गतिर्बोध्या।

[ ततः प्रविशति जनकः । ]

जनकः।—अपत्ये यत् तादृग् दुरितमभवत् तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन् मर्माणि क्रकच इव मन्युर्विरमति ॥३॥

प्राणेभ्योऽपि प्रियतमायाः आसन्नप्रसवायाः असहायाः सीतायाः पूतस्वभावायाः अपि सापवादनिर्वासनवार्त्ताश्रवणात् प्रभृति दुःसहशोकावेगेनान्तर्दूयमानः जनकः विलपति, अपत्य इति।—अपत्ये दुहितरि सीतायां तादृक् तथाविधम् अतिशोकावहतया अनिर्वचनीयमित्यर्थः, यद् दुरितम् आसन्नप्रसवावस्थायां वननिर्वासनरूपं दुर्गतं दुरवस्थेति यावत्, अभवत् जातं, महता विपुलेन तीव्रेण उग्रेण, अत्यन्तदुःसहेनेत्यर्थः, व्यथयता दुःखयता [ णिजन्तात् व्यथधातोः मित्त्वात् शतृप्रत्यये कृते "मितां ह्रस्वः" (६।४।९२ पा०) इति ह्रस्वः ] तथा व्रणितं क्षतं, सञ्जातव्रणमिति यावत्, [ व्रणं सञ्जातमस्य इति व्रणितं, व्रणशब्दात् "तदस्य सञ्जातं तारकादिभ्य इतच्" (५।२।३६ पा०) इति इतच् ] हृदयं येन तेन तथोक्तेन तेन दुरितेन विषक्तः हृदि दृढतरं निहितः नव इव नूतन इव, कालातिपातेऽपि अमन्दीभूत इत्यर्थः, अत एव पटुः कुशलः, त्यागिनोऽपि मम हृदयाच्छेदने समर्थ इत्यर्थः, पक्षे—छेदनपटुः, अतितीक्ष्णत्वात् छेदनकुशल इति यावत्, धारावाही धारया सातत्येन, निरन्तरमित्यर्थः, वहति सञ्चरतीति धारावाही निरन्तरस्थायी, अनिवृत्त इति यावत्, पक्षे—धारया कर्त्तनसाधनाग्रभागेण वहति पुनः पुनः निर्गमोद्गमाभ्यां सरतीति तथोक्तः, मर्माणि अन्तःसन्धिस्थानानि निकृन्तन् विदारयन्, पक्षे—छिन्दन्, अत एव क्रकचः करपत्रमिव [ "क्र" इति अव्यक्तशब्दं कचति शब्दायते इति क्रकचः करपत्रं, क्र-शब्दपूर्वात् कचतेः पचाद्यच् ] मे मम मन्युः सीतानिर्वासनजनितः शोकः ( "क्रकचोऽस्त्री करपत्रम्" इति "मन्युः दैन्ये क्रतौ क्रुधि" इति चामरः ) चिरेणापि कालातिक्रमेणापि न विरमति न शाम्यति। [ रमधातोरात्मनेपदित्वेऽपि अत्र विपूर्वात् रमतेः "व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम् ] सीतानिर्वासनं मामतिशयं व्यथयतीति भावः। [ अत्र उपमामालङ्कारः, सा च उपमानोपमेयगतसाधारणधर्मस्य औपम्यवाचकपदस्य च वाच्यतया पूर्णा ; तथा "नव इव" इत्यत्र उत्प्रेक्षा चेत्यनयोरङ्गाङ्गिभावेन सङ्करः ]। शिखरिणी वृत्तम् ॥ ३ ॥

कष्टम् एवं नाम जरसा दुःखेन च दुरासदेन भूयः पराक-सान्तपन-प्रभृतिभिस्तपोभिरात्तरसधातुः अनुपयुज्यमानो न अद्यापि मे दग्धदेहः पतति !! अन्धतामिस्रा हि असूर्य्या नाम ते लोकास्तेभ्यः प्रतिविधीयन्ते ये आत्मघातिन इत्येवमृषयो मन्यन्ते, अनेकसंवत्सरातिक्रमेऽपि च प्रतिक्षणपरिभावना-स्पष्टनिर्भासः प्रत्यग्र इव दारुणो न मे दुःखसंवेगः प्रशाम्यति। अयि मातर्देवयजनसम्भवे देवि सीते! ईदृशस्ते निर्माणभागः परिणतः, येन लज्जया स्वच्छन्दमाक्रन्दितुमपि न शक्यते। हा हा पुत्रि! (भ)—

(भ) कष्टमित्यतिदुःसहदुःखसूचकमव्ययम्। एवम्—इत्थं, साम्प्रतमनुभूयमानेनेत्यर्थः। जरसा—वार्द्धकेन। दुरासदेन—दुःसहेन। दुःखेन—सीतानिर्वासनसमुत्थेन शोकेन। पराकेत्यादि।—पराकः द्वादशदिवसं व्याप्य उपवाससाध्यः प्रायश्चित्तरूपः व्रतविशेषः, तथाच मनुः,—"यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्। पराको नाम कृच्छ्रोऽयं सर्वपापापनोदनः॥" इति। बृहस्पतिश्च "जपहोमरतः कुर्य्याद् द्वादशाहमभोजनम्। पराक एष विख्यातः सर्व्वपापप्रणाशनः॥" इति च। सान्तपनं—पञ्चगव्यकुशोदकपानेनैकदिनम् उपवासेन चैकदिनमिति द्वैदिवसिकव्रतभेदः, [सन्तापयति इति ल्युट्, ततः स्वार्थे अण्] तथा च मनुः,—"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम्॥" इति। याज्ञवल्क्यश्च—"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। जग्ध्वा परेऽह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन्॥ पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः। सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः॥" इति। पराकश्च सान्तपनञ्च ते पराकसान्तपने, ते प्रभृतिनी आदिनी येषां तैः [अत्र प्रभृतिशब्देन—"एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत्। उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतम्॥" इति मनूक्तलक्षणकचान्द्रायणादिपरिग्रहो बोध्यः]। तपोभिः,—क्लेशसम्पाद्यैः व्रतैः, कायशोषकनियमविशेषैरिति यावत्। भूयः,—बाहुल्येन। आत्तरसधातुः,—आत्ताः गृहीताः, विशोषिता इति यावत, रसाः रक्तप्रभृतयः द्रवपदार्थाः धातवः,—रसादयो मांसप्रभृतयो यस्य स तथोक्तः, अत्र शरीरान्तर्वर्त्तिद्रवमात्रमेव रसशब्दार्थं, तदन्यो धातुरिति बोद्धव्यम्। यद्वा—रसा एव धातवः देहधातवः रसाद्य-

मांसमेदोऽस्थिमज्जशुक्ररूपा यस्य सः, ("रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्य्ये देहधात्वम्बुपारदे ॥" इति मेदिनी) अत एव अनुपयुज्यमानः,—अन्नपानादिना असेव्यमानः, अन्नपानादिजन्यां पुष्टिमनधिगच्छन्नित्यर्थः ; यद्वा—न उपयुज्यते कार्य्यम् इति अनुपयुज्यमानः, जरसा दुःसहेन सीताविवासनक्लेशेन तथा शरीरशोषकैर्बहुक्लेशैश्च नितान्तक्षीणदुर्बलतया कायिकमानसिकसर्वविधव्यापारे सम्यगपटुरित्यर्थः । दग्धदेहः,—दग्धपदार्थवत् सारशून्यः कायः । न पतति—न विशीर्य्यते न भूमिसात् भवतीति यावत्, यथा सुसंहष्टेनाग्निना दग्धस्थूणो गृहादिः अन्तःसारशून्यत्वेऽपि कदाचित् प्रत्यवतिष्ठते ; तथा सततमन्तर्ज्वलता सीताशोकाग्निना दग्धीभूतोऽपि मे कायः नाद्यापि पततीति मे दुर्भाग्यमेव अत्र निदानमिति भावः । ननु यद्येवं दुःसहक्लेशदग्धस्यापि ते देहस्य न स्वतः पातः, तदा त्वयैव भृगुपातादिना त्यज्यतामयमित्याह, अन्धेति ।—अन्धतामिस्राः,—अन्धम् अन्धकरणं तामिस्रं तमःसंहतिः प्रगाढ़ं तम इत्यर्थः, यत्र अतिभीषणदुःखोत्पादका इत्यर्थः । [ अन्धयति इति अन्धं "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (३।१।१३४ पा० ) इति अचप्रत्ययः । तमिस्रं तमस्ततिः, तमिस्रमेव इति तामिस्रम् इति स्वार्थे अण्, अन्धं तामिस्रं येषु ते अन्धतामिस्राः ] अत्र अन्धतामिस्रशब्दः "तमिस्रमन्धतामिस्रं महारौरवरौरवौ । नरकं कालसूत्रञ्च महानरकमेव च ॥" इत्यादिना मनुना गणितेषु एकविंशतिनरकभेदेषु द्वितीये नरके बोध्यः । असूर्य्याः,—नास्ति सूर्य्यः सूर्य्यकरः येषु ते सूर्य्यरश्मिरहिताः, आलोकमात्ररहिताः इत्यर्थः, [ अत्र "असुर्य्याः" इति ह्रस्वमध्योऽपि पाठः परिदृश्यते, तत्र असुराणामिमे इत्यसुर्य्याः असुरसम्बन्धिनः पातालादय इत्यर्थः । तत्त्वतो विचार्य्यमाणे तु अयमेव पाठः साधीयान्, तथाहि—"असुर्य्या नाम ते लोकाः" इति कविवाक्यांशो हि "असुर्य्या नाम ते लोका अन्धेन तमसाऽऽवृताः । तांस्ते प्रेत्यापि गच्छन्ति ये के चात्महनो जनाः ॥" इति वाजसनेयिसंहितावचनस्यैव पूर्व्वप्रतीकः, तथा च तत्र ह्रस्वमध्यपाठस्यैव सत्त्वात् अत्रापि ह्रस्वमध्य एव पाठो युक्तः । न च तत्रापि ह्रस्वमध्यत्वे किं प्रमाणमिति वाच्यम्, "असुराणामिमे इत्यसुर्य्याः" इति तद्भाष्यव्याख्यादर्शनात्, परञ्च "अन्धेन तमसाऽऽवृताः" इति विशेषणेनैव गतार्थत्वे सूर्य्यालोकाभावबोधकस्य दीर्घमध्यस्य "असूर्य्याः" इति विशेषणस्य वैयर्थ्याच्च । उक्तसंहितायाम् उद्धृतमन्त्रस्य आध्यात्मिकभाष्यव्याख्यादर्शने तु मूलपाठस्य व्याख्या अन्यथैव प्रतीयते, तथा च भाष्यम्—"अथ काम्यकर्म्मपरान् निन्दति । ये के च वै केचित् नराः आत्महनः आत्मानं घ्नन्तीत्यात्महनः अविद्वांसः काम्यकर्म्मपराः विद्यमानस्याजरामरस्यात्मनोऽविद्यादोषेण तिरस्करणादात्महन्तारः ते प्रेत्य मृत्वा देहं त्यक्त्वा तान्

अनियतरुदितस्मितं विराजत्-
कतिपयकोमलदन्तकुड्मलाग्रम्।

लोकान् जन्मानि स्थावरान्तानि अपिगच्छन्ति प्राप्नुवन्ति। तान् कान्?—नाम प्रसिद्धं, ते ये यत्तदोर्व्यत्ययः, ये लोकाः लोक्यन्ते दृश्यन्ते भुज्यन्ते कर्म्मफलानि यत्रेति लोका जन्मानि, असुर्य्याः असुराणामिमे असुर्य्याः, असुषु प्राणेषु रमन्ते असुराः प्राणपोषणपराः अद्वैतमपेक्ष्य देवा अपि असुराः। कीदृशाः लोकाः?—अन्धेन तमसा अदर्शनात्मकेनाज्ञानेन आवृताः आच्छादिताः। अनात्मज्ञाः पुनर्जायन्ते म्रियन्ते चेत्यर्थः।" इति। एवञ्च भाष्यकारमते अस्यांशस्य व्याख्या भाष्येणैव गतार्थेति न पुनस्तदर्थं प्रयासः कृत इति सुधीभिर्विभाव्यम्] लोकाः,—अतिघोरनरकस्थान-विशेषाः। तेभ्यः,—आत्मघातिभ्यः तेषां प्राप्त्यर्थमित्यर्थः, ["तेभ्यः" इत्यत्र—"कर्म्मणा यमभिप्रैति स सम्प्रदानम्" (१।४।३२ पा०) इति सम्प्रदानतया चतुर्थी]। प्रतिविधीयन्ते—निर्दिश्यन्ते। तत्र प्रमाणं यथा,—"अन्धं तमः प्रविशन्ति ये के चात्म-हनो जनाः" इति श्रुतिः। ननु नरकभीतेरात्महत्या मा भूत् कालप्रतीक्षा तु कर्त्तुं शक्यते एव, काले सर्व्वस्यैव विलयदर्शनात् अस्यापि दुःखस्य अवसानं सम्भवीत्याह, अनेकेति।—अनेकेषां बहूनां संवत्सराणाम् अब्दानाम् अतिक्रमेऽपि अपगमेऽपि। प्रतिक्षणेति।—प्रतिक्षणं परिभावनया परिचिन्तया स्पष्टः परिस्फुटो निर्भासः प्रकाशः यस्य स तथोक्तः, प्रतिक्षणं मनसि वर्त्तमान इत्यर्थः। ["स्पष्टः" इति पदं णिजन्तस्य स्पश्धातोः क्तप्रत्ययेन "वा दान्तशान्तपूर्ण—" (७।२।२७ पा०) इति निपातनात् पक्षे सिद्धं,] अत एव प्रत्यग्र इव—चिन्तात्यागेन अलुप्तत्वात् नूतन इव प्रतीयमान इत्यर्थः। दारुणः,—हृदयविदारणः। दुःखसंवेगः,—शोकप्राबल्यम्। मातः!—यज्ञ-भूमिसमुद्भूततया अतिपवित्रत्वात् मातृसमे! यद्वा—मातरिति स्निग्धायां सीतायां सस्नेहसम्बोधनम्। देवयजनसम्भवे!—यज्ञभूमिसमुत्पन्ने! [एतेन एवं पवित्रायास्ते ईदृक् परिणामः विरुद्ध एवेति व्यज्यते]। ईदृशः,—एवम्प्रकारः सापवादनिर्वा-सनरूपः। निर्म्माणभागः,—सृष्टेः परिणामः इत्यर्थः। येन—असत्परिणामेन हेतुना। लज्जया—सापवादनिर्वासननिमित्तया त्रपया। स्वच्छन्दं—छन्दानुरूपं, यथेच्छमित्यर्थः। आक्रन्दितुमपि—उच्चैः रोदितुमपि; तादृक्चरित्रदोषापवादेन निर्वासितां त्वामुद्दिश्य मयि रुदति लोकाः मां दुश्चरित्रतनयाशोकविह्वलमालोक्य निन्दिष्यन्तीति भावः।

प्रियजनविरहे हि जगतस्तन्मयतया नियततदवस्थापरिभावनया च तन्मूर्त्तिः सतत-मेव भावयितुर्मनसि जागर्त्तीति प्राणेभ्योऽपि प्रियतमां नयनमनोरमां सीतां तद्गतेन

वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमञ्जुजल्पितं ते ॥ ४ ॥
भगवति वसुन्धरे! सत्यमतिदृढाऽसि। (म)—

मनसा सम्प्रत्यविरतमनुचिन्तयन् जनकः स्मृतिपथसमारूढां तदीयां शैशवावस्थामुपवर्णयन्नाह, अनियतेति।—अनियतं विषयसम्बन्धरहितम्, अहेतुकमिति यावत्, रुदितं रोदनं स्मितं मदुहसितञ्च यस्मिन् तत् तथोक्तं विराजन्ति विकासमानानि कतिपयानि शिशुत्वात् अल्पसङ्ख्याकानि, विचतुराणीति यावत्, कोमलानि सुकुमाराणि ("कचि" इति भाषा) दन्तकुड्मलानां दशनमुकुलानाम् अग्राणि पुरोभागा यस्मिन् तत् तथोक्तं, कुड्मलसदृशकोमलविरलदन्तवदित्यर्थः, तथा स्खलत् पतत् सर्व्ववर्णानुच्चारणात् न परिस्फुटमुच्चरदित्यर्थः, असमञ्जसं न कर्त्तृकर्म्मक्रियादिसमन्वयसूचकयथौचितविभक्त्यादिसमन्वितं, मञ्जु ललितं मुखरत्वात् सुश्राव्यमिति भावः, जल्पितं भाषितं वचनमिति यावत्, यस्मिन् तत् तथोक्तं, शिशोः बालिकायाः ते तव वदनं कमलमिव वदनकमलम् अल्पं वदनकमलम् इति वदनकमलकं, शिशुकालिकम् अरविन्दसुन्दरमाननमित्यर्थः, यद्वा—मञ्जु इति च्छेदः; जल्पितस्य विशेषणम्। तथात्वे स्मित-मुख-वाक्यानीति त्रीणि स्मरणीयानि बोध्यानि। [ "वदनकमलकम्" इत्यत्र—"अल्पे" (५।३।८८ पा०) इति अल्पार्थे कन् ] स्मरामि चिन्तयामीत्यर्थः, प्राणाधिके! न जाने त्वमिदानीं क्व गतेति, तथापि आशैशवं विभिन्नाकारैव नियतपरिलक्षिता ते कुसुमसुकुमारा मूर्त्तिः सततं स्मृतिपथमारूढा मामाकुलीकरोतीति भावः। [ अत्र रुदितहसितपदानुरोधात् मुखकमलमित्युपमितसमासः, रुदितहसितयोः मुख एव सम्भवात् मुखस्य प्राधान्यं, तच्च उपमितसमासेनैव भवतीति उपमायाः साधकसद्भावेन उपमाऽलङ्कार एव, रूपके सति प्रधानीभूते वदनरूपे कमले रुदितस्मितयोर्विशेषणविधया अन्वयाऽसम्भवात्। सा च समासे उपमावाचकस्य इवशब्दस्य लोपात् लुप्ता; तथा स्वभावोक्तिश्चेत्यनयोः परस्परनिरपेक्षतया तिलतण्डुलवत् संसृष्टिः ]। अभिज्ञानशकुन्तलेऽपि अस्यानुरूपः श्लोकोऽयं परिदृश्यते; यथा,—"आलक्ष्यदन्तमुकुलाननिमित्तहासैरव्यक्तवर्णरमणीयवचःप्रवृत्तीन्। अङ्काश्रयप्रणयिनस्तनयान् वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति॥" इति। पुष्पिताग्रा वृत्तम्॥ ४॥

(म) भगवति—माहात्म्यशालिनि प्रतीकारसमर्थे! इत्यर्थः। वसुन्धरे—रत्नाधिष्ठात्रि! इत्यर्थः। [ अत्र वसूनामधिष्ठातृतया तवान्तःकरणस्य एतावत् काठिन्यं जातं, यद् एतादृशीं दैवदुर्लभामपि तनयां पुरतो भ्रश्यन्तीमालोक्य न कोऽपि

त्वं वह्निर्मुनयो वसिष्ठगृहिणी गङ्गा च यस्या विदु-
र्माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः ।

प्रतीकारः कृतः इति तिरस्कारो व्यज्यते ]। सत्यं—निश्चितमेव, नात्यत्र कोऽपि सन्देह इति यावत्। अतिदृढाऽसि—अतिकठिनहृदयाऽसीत्यर्थः, कन्यायास्तथाविधपरित्यागरूपदुःखदर्शनादिति भावः।

सीताम् अतिपूतां विदित्वाऽपि केवलं राजधर्म्मानुसारेण तां निर्वासयता रघुपतिना अतिदृढत्वमवलम्बितं, वसुन्धरायास्तु तदानीं तादृग्दृढताऽवलम्बने कस्यापि न्याय्यहेतोरसद्भावात् तथा न युक्तमाचरितमित्याशयवान् मिथिलापतिरस्या दृढत्वमेव ख्यापयति, त्वमिति।—त्वं पूर्वोक्तसम्बोधनीयेश्वरा पृथिवी, वह्निरग्निः, मुनयो तपःप्रभावात् त्रिकालविदः वसिष्ठवाल्मीकिप्रभृतयः वसिष्ठगृहिणी वसिष्ठपत्नी अरुन्धतीत्यर्थः, गङ्गा पतितपावनी सुरधुनी च, यदि वा तथा रघोः रघुवंशीयाना-मित्यर्थः, कुलगुरुः कुलमूलत्वेन पूजनीय इत्यर्थः, यद्वा—वंशस्य आदिपुरुषः [ "रघोः कुलगुरुः" इत्यत्र सापेक्षत्वेऽपि गमकत्वात् समासः ] देवः दैवशक्तिसम्पन्नः स्वयं साक्षा-दित्यर्थः, [ अत्र स्वयमिति तृतीयान्तमात्मबोधकमव्ययम् "प्रकृत्यादिभ्य उपसंख्यानम्" ( वा० ) इति तृतीया ] भास्करः सूर्य्यश्चेत्यर्थः, यस्याः सीतायाः माहात्म्यं महिमानं सच्चरित्रत्वपातिव्रत्यादिकमिति यावत्, विदुः जानन्ति [ विदधातोर्लटः प्रथम-पुरुषस्य बहुवचने रूपं "विदो लटो वा" ( ३।४।८३ पा० ) इति झेरुसादेशः। न च "तेषां परः क्रियाकालेकत्वे" इति क्रमदीश्वरकृतसूत्रेण नामयुष्मदस्मत्सु वाच्येषु तेषां यः परः, स एव भवति, तथाच—स च त्वञ्च अहञ्च गच्छामः, स च त्वञ्च गच्छथः, अहञ्च त्वञ्च स च गच्छामः, इति नियमात् अत्र युष्मत्समभिव्याहृतनाम-कर्तृकत्वेऽपि "विदुः" इति क्रियायां कथं प्रथमपुरुषविभक्तिरिति वाच्यं; नाम-युष्मदस्मदां परं परं प्रधानमिति नियमस्य प्रायिकत्वात्। न च तत्रापि किं प्रमाणमिति वाच्यम्, "अहं वा कुम्भकर्णो वा त्वं वा भ्राता विभीषणः। इन्द्रजिद्वा निकुम्भो वा वहेयुर्भारमीदृशम् ॥" इत्यत्र वहधातोर्नामयुष्मदस्मत्कर्तृकत्वेऽपि प्रथमपुरुषप्रयोगदर्शनात्। केचित्तु "विदुः" इति न क्रियैकवचनः, तथा सति पृथिव्यादीनां सर्वेषामेव अन्यानपेक्षप्रमाणत्वप्रतीतिर्न भवति, अपितु कर्तृपदेषु "मुनयः" इत्यस्य बहुत्वमादाय नामविभक्तिः प्रयुक्ता; अन्यत्र तु यथायोग्य विभक्ति-परिणामेन सङ्गतिः कार्य्या, तथाच त्वं यस्या माहात्म्यं वेत्थ, वह्निर्वेद, मुनयो विदु-

विद्यां वागिव यामसूत भवती, शुद्धिं गतायाः पुर-
स्तस्यास्त्वं दुहितुस्तथा विशसनं किं दारुणेऽमृष्यथाः ॥५॥

[ नेपथ्ये । ] इत इतो भगवतीमहादेव्यौ । ( य )

रित्येवमन्वयः इत्याहुः ] भवती त्वं यां सीतां वाक् सरस्वती देवी विद्यामिव ज्ञानमिव, अथवा—वाग् उपनिषद्रूपा वाणी विद्यामिव तत्त्वविद्यामिव असूत जनयामास, वाक् यथा विद्याम् उद्गिरति तद्वत् त्वं निर्दोषां याम् उत्पादयामासिथेत्यर्थः, हे दारुणे ! कठिनहृदये ! पुरः तव अग्रतः एव जगद्व्यापिस्वरूपतया अग्निपरीक्षाक्षेत्रे लङ्कायामपि तदानीं तवास्तित्वसत्त्वादिति भावः ; शुद्धिं शोधनं, निर्दोषत्वमिति यावत्, गतायाः प्राप्तायाः अग्निपरीक्षायां निर्दोषत्वेन ज्ञातायाः अदुष्टाया इत्यर्थः, [ "शुद्धिं गतायाः पुरः" इत्यत्र "तद्वत्तु या देवतम्" इत्यपि पाठो दृश्यते, तत्रायमर्थः,— तद्वत् वह्निगङ्गाभास्करवत् या जानकी देवतं देवतारूपतया माननीयेत्यर्थः, अत्र विधेयप्राधान्यात् क्लीवत्वम् ; देवता एव इति दैवतं स्वार्थे अण्, मात्यादिशब्द-वत् क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इति स्त्रीलिङ्गस्यापि देवताशब्दस्य स्वार्थिकप्रत्ययान्तस्य क्लीवत्वम् ] तस्याः तद्रूपायाः मूर्त्तिमत् पवित्रता-स्वरूपायाः इत्यर्थः, दुहितुः स्वकन्याया अपि सीतायाः तथा तेन प्रकारेण अनाथायाः यथा प्रतीकारचेष्टां विनैवेत्यर्थः, विशसनं निर्वासनदण्डेन वने व्याघ्रादिभिः प्रतिघातनं किं कथं केन प्रकारेणेत्यर्थः, अमृष्यथाः सोढवती ; सीता यदि यथार्थत एव दुश्चरित्रा स्यात्, तदा शास्त्रतः कृतापराधायाः तस्या एवं निर्वासने तव आनुकूल्यं तस्यां कथमपि न सम्भवेत्, परन्तु स्वसमक्षमग्नौ परीक्षितविशुद्धभावायाः आसन्न प्रसवायाः स्वसुतायाः निरपराधत्वं चरित्रोत्कर्षञ्च तत्त्वतो विदित्वाऽपि दृष्ट्वाऽपि च पुरत एव ईदृगतिभीषणम् अहेतुकं परिणामं न कथमपि प्रतिविदधिथ इत्यहो भवत्याः नैष्ठुर्य्यम् इति भावः । [ अत्र प्रस्तुतायाः पृथिव्याः अप्रस्तुतानां वह्न्यादीनाञ्च सर्वेषामेव एकयैव वेदनक्रियया अन्वयात् दीपकालङ्कारः, तल्लक्षणं यथा दर्पणे,— "अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥" इति, तथा "विद्यां वागिव" इत्यंशे श्रौती उपमेत्यनयोः परस्परनिरपेक्षतया संसृष्टिः, [illegible] च यस्या विदुः" इत्यंशे समुच्चयालङ्कारश्च व्यज्यते ]। शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

( य ) सौधातकिकृतप्रश्नोत्तरावसरे भाण्डायनेन "स्वयमुपेत्य वैदेहो द्रष्टव्यः" इति कौशल्यां द्रष्टुं वशिष्ठेन प्रहिता भगवत्यरुन्धतीति यत् कथितं, सम्प्रति इत एवा-

जनकः। [दृष्ट्वा।] अये ! गृष्टिनोपदिश्यमानमार्गा भगवती अरुन्धती। [उत्थाय।] कां पुनर्महादेवीत्याह। [निरूप्य।] हा ! कथं महाराजदशरथस्य धर्मपत्नी प्रियसखी मे कौशल्या ? क एवं प्रत्येति सैवेयमिति। (२)—

आसीदियं दशरथस्य गृहे यथा श्रीः
श्रीरेव वा किमुपमानपदेन, सैषा।

गच्छन्तीं कौशल्योपेतां तामेवारुन्धतीं कञ्चुकी गन्तव्यपथं दर्शयन् नेपथ्यादाह, इत इति।—इत इतः,—एतस्मिन् एतस्मिन् अध्वनि ; अथवा,—इतः एतस्मिन् अध्वनि इतः आगच्छतः [इण् धातोः लट् तस्]। भगवतीमहादेव्यौ—अरुन्धतीकौशल्ये इत्यर्थः, चलतामिति शेषः।

(२) अये इति सम्भ्रमसूचकमव्ययम्, ("अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च" इति मेदिनी)। गृष्टिना—तदाख्येन कञ्चुकिना। उपदिश्यमानमार्गा—प्रदर्श्यमानपथा। महादेवीति।—"भगवतीमहादेव्यौ" इति नेपथ्योक्तवाक्यान्तर्गतमहादेवीशब्दः। निरूप्य—पर्य्यवेक्ष्य, हेतुभिर्विचार्य्य वा। हा कथमिति।—अत्र हाशब्दो विषादसूचकः। धर्म्मपत्नी—सहधर्म्मचारिणी [धर्म्मस्य पत्नी इति धर्म्मपत्नी, अश्वघासादिवत् तादर्थ्ये षष्ठीसमासः]। प्रत्येति—विश्वसिति। येयं कौशल्या प्राक् परमानन्दसन्दोहमनुभवन्ती वहन्ती च किमप्यनिर्वचनीयरामणीयकं निर्निमेषमस्माभिरवलोकिता, सम्प्रति असौ नानाविधशोकसन्तप्ता परिक्षीणमलिनाकृतिरिति तां सेयमिति प्रत्यभिज्ञातुमपि न पारयामीति भावः।

प्रत्यभिज्ञानायोग्यत्वं दर्शयति, आसीदिति।—इयं परिदृश्यमाना परन्तु अप्रत्यभिज्ञातव्या कौशल्या इत्यर्थः, दशरथस्य सार्व्वभौमायोध्याऽधिपतेः गृहे श्रीर्यथा लक्ष्मीरिव आसीत्, रामवनगमनदशरथमरणादेः प्राक् साक्षात् राजलक्ष्मीरिव तत्रातिष्ठदित्यर्थः। औपम्यवाचकस्य यथाशब्दस्य प्रयोगे हि, तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वरूपस्य भेदगर्भस्य सादृश्यस्यावबोधात् राजलक्ष्म्या सह अस्याः भेदोऽवगम्यते इति तदभेदमेव समर्थयितुमाह, श्रीरेव वेति।—वा अथवा उपमानपदेन औपम्यवाचकयथाशब्दप्रयोगेण किम् ? उपमाद्योतकयथाशब्देनालमित्यर्थः, उपमानभूतया श्रिया अस्या अभेदत्वात् भेदगर्भौपम्यवाचकपदप्रयोगो निरर्थक इति भावः। सा लक्ष्मीसदृशी लक्ष्मीभूता वा

कष्टं वतान्यदिव दैववशेन जाता
दुःखात्मकं किमपि भूतमहो ! विपाकः ॥ ६ ॥

एषा कौशल्या, वत हा, कष्टं दुःखम् [ अत्र दुःखातिशयद्योतनार्थः "वत" "कष्टम्" इति समानार्थकपदद्वयप्रयोगः ] दैववशेन विधिवशेन अननुकूलभाग्येनेत्यर्थः, दुःखात्मकं दुःखस्वभावं, दुःखरूपेण उपादानेन निर्म्मितमिति यावत्, [ दुःखमेव आत्मा स्वभावो यस्य तत् दुःखात्मकं "शेषाद्विभाषा" ( ५।४।१५४ पा० ) इति समासान्तः कप्रत्ययः । "आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि" इति विश्वः ] अन्यद् अपरं मनुष्यातिरिक्तमित्यर्थः, किमपि अज्ञाताश्रुतपूर्वं किञ्चिद् भूतं जीवविशेषः जाता सम्पन्ना । [ उद्देश्यविधेयस्थले हि प्रायशः विधेयप्राधान्यस्य सिद्धान्तितत्वेऽपि "उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्य" इति काशिकावचनात् आख्यातपदेन प्रधानक्रियायाः बाधाच्च अत्र आख्याते उद्देश्यप्राधान्यस्वीकारेण जातेत्यत्र स्त्रीत्वमिति बोध्यम् ] । अहो ! विपाकः दशापरिणामः ; अस्या एवम्भूतं शोचनीयपरिणामं न कोऽपि मनसा अपि अचिन्तयदिति भावः । [ अत्र प्रथमपादे उपमाऽलङ्कारः, सा च यथाशब्दद्योतिततया श्रौती । द्वितीयपादे च रूपकं, प्रतिषेधशून्ये कौशल्यारूपे उपमेये भीरूपस्य उपमानस्य तादात्म्यारोपात् । न चात्र भीरूपेण विषयिणा अभेदाध्यवसानेन कौशल्यारूपस्य विषयस्य अधःकरणात् अतिशयोक्तिरेव युक्तेति वाच्यं, रूपकातिशयोक्त्योः अन्योन्यभेदव्यवस्थापनार्थं हि रूपकलक्षणान्तर्गतविषयदले वाच्यत्वविशेषणस्य आवश्यकत्वम्, अन्यथा "लतामूले लीनो हरिणपरिहीणो हिमकरः स्वयं हाराकारा गलति जलधारा कुवलयात् । धुनीते बन्धूकं तिलकुसुमजन्मा हि पवनो वहिर्द्वारे पुष्पं परिणमति कस्यापि कृतिनः ॥" अत्र अतिशयोक्तिस्थले रूपकलक्षणस्यातिव्याप्तिः, निरपह्नवविषये मुखादौ निष्कलङ्कचन्द्राद्युपमानतादात्म्यारोपात् । रूपकलक्षणे विषये वाच्यत्वविशेषणदाने तु अत्र विषयस्य मुखादेरवाच्यतया न रूपकलक्षणस्य अतिव्याप्तिशङ्काऽपि । एवञ्च प्रकृते "इयम्" इत्यनेन आरोपविषयस्य शब्दतः उक्तत्वात् नातिशयोक्तिः, अपितु रूपकमेवेति सुधिया स्वधिया पर्यालोचनीयम् । एवमत्र वक्तुमिष्टस्य कौशल्यायाः दशरथगृहे सकलकल्याणनिदानत्वस्य वैलक्षण्यप्रतिपादनार्थं "श्रीरिव वा" इत्यनेन पूर्वोक्तश्रीसादृश्यस्य निषिद्धवदाभासमानतया आक्षेपश्च ; तथा "कष्ट वतान्यदिव" इत्यत्र भावाभिमानिन्युत्प्रेक्षा च इत्येषामलङ्काराणां मिथो निरपेक्षतया संसृष्टिः ] । वसन्ततिलकं वृत्तम् ॥ ६ ॥

अयमपरप्रायो दशाविपर्य्यासः । ( ख )
य एव मे जनः पूर्व्वमासीन्मूर्त्तो महोत्सवः ।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम् ॥ ७ ॥

(ख) अयम्—अनुभूयमानः, कौशल्यया सह साक्षात्काररूपः । अपरप्रायः,—बाहुल्येन अपरः अन्यथाभावप्राप्तः इति यावत् । [ "अपरः प्रायः" इति पाठे—अपरभावं गत इत्यर्थः, प्रपूर्वात् गत्यर्थात् इण्धातोरच् । "अपरः पापः" इति च पाठे—पापः जन्मान्तरीयपापकारणकः अधर्म्मजन्यः इत्यर्थः, अयं पुनरपरः पापहेतुकः अवस्थान्तरोपपातः इति समुदितार्थः ] । दशाविपर्य्यासः,—अवस्थावैकल्यं, विपरीतावस्थासमागमः इत्यर्थः, जातः मनीति शेषः ; इतः पूर्वं केवलमहं सीतायाः सापवादनिर्वासनवृत्तान्तश्रवणेन नियतमन्तर्दाहं दग्धः, साम्प्रतन्तु आवयोः परस्परसन्दर्शनेन समुद्बोधितपूर्व्वस्मृतितया भीषणदावदाहसदृशोऽयमपरविधोऽन्तर्दाहः समुत्पन्न इति भावः ।

उक्तामवस्थाविपर्य्यासमेव कथयति, य इति । य एव कौशल्यारूपः जनः पूर्वं सीतायाः निर्वासनात् तथा प्रियसखस्य दशरथस्य परलोकगमनाच्च प्रागित्यर्थः, मे मम सम्बन्धे मूर्त्तः शरीरी दर्शनादिना अतिशयानन्दजनकत्वात् मूर्त्तिमानित्यर्थः, महोत्सवः परमानन्दसन्दोह इवेत्यर्थः, आसीद् बभूव, रामेण दुःसाध्ये धनुर्भङ्गे साधिते सर्व्वगुणगणवरेण्याय धन्याय तस्मै स्वसुतां पण्यभूतां सीतां समर्प्य दशरथकौशल्यादिभिः वैवाहिकादिसम्बन्धेन मिलितो जनकः सांसारिकसुखसम्पदः परां कोटिमुपभुञ्जानः यस्याः कौशल्यायाः दर्शनं महोत्सवमिवाशीगणदिति भावः । तस्य एव प्रियदर्शनस्य जनस्य दर्शनं साक्षात्कारः क्षते शरीरस्य निकृत्तस्थाने स्फुटितव्रणादौ वा क्षारं लवणमिव ( "क्षारो रसान्तरे धूर्त्ते लवणे काचभस्मनोः" इति मेदिनी ) असह्यं अत्यन्तदुःखजनकत्वात् सोढुमशक्यं [ सह्यते यत् तत् सह्यं, न सह्यम् असह्यं "शकिसहोश्च" ( ३।१।९९ पा० ) इति यत्प्रत्ययः ] जातं संवृत्तम् । [ अत्र प्रथमार्द्धे निरपह्नवविषये कौशल्यारूपे जने महोत्सवतादात्म्याध्यासात् रूपकं, तत्रापि अत्यन्तासम्भवस्य मूर्त्तत्वरूपस्य वैशिष्ट्यस्य आरोपणात् अधिकारूढवैशिष्ट्यरूपकम् ; तथा द्वितीयार्द्धे उपमा चेत्यनयोः परस्परनिरपेक्षतया संसृष्टिः । केचित्तु अत्र विरूपयोः संघटनात् विषमालङ्कारोऽपीत्याहुः ] । अनुष्टुप् वृत्तम् ॥ ७ ॥

[ ततः प्रविशति अरुन्धती कौशल्या कञ्चुकी च। ]

अरु। ननु ब्रवीमि, द्रष्टव्यः स्वयमुपेत्य वैदेह इत्येष वः कुलगुरोरादेशः ; अत एवाहं प्रेषिता, ततः कोऽयं पदे पदे महान् अनध्यवसायः ? (व)

कञ्चुकी। देवि ! संस्तभयात्मानम्। अनुरुध्यस्व भगवतो वसिष्ठस्यादेशमिति विज्ञापयामि। (श)

---

(व) ननु—भोः, कौशल्यामुद्दिश्य एतदामन्त्रणम्। स्वयम्—आत्मना, न तु प्रतिनिधिप्रेरणेनेत्यर्थः। उपेत्य—उपगम्य। वैदेहः,—विदेहराजो जनकः इत्यर्थः। द्रष्टव्यः,—साक्षात्कर्त्तव्यः। कुलगुरोः,—वशिष्ठस्य। आदेशः,—आज्ञा। अत एव—स्वयं गत्वा साक्षात्कर्त्तव्यत्वादेव। अहम्—अरुन्धती, [ स्ववाक्ये अस्मच्छब्दप्रयोगेण आज्ञायकस्य गुरुत्वं सूचितम् ]। प्रेषिता—प्रेरिता युष्मत्कुलगुरुणेति शेषः ; असहायायाः कुलवध्वास्तव अन्यसाहचर्य्यमन्तरेण यत्र कुत्रापि गमनानौचित्यात् तत्साहचर्य्यसम्पादनार्थं भर्त्तृप्रेषिताऽहमागतेति भावः। ततः,—कुलगुरोरादेशस्य अनुपेक्षणीयत्वादित्यर्थः। पदे पदे—प्रतिपादविक्षेपम् [ अत्र "नित्यवीप्सयोः" ( ८।१।४ पा० ) इति वीप्सायां द्विर्वचनम् ]। महान्—अतिशयः, स्थेयानिति यावत्। अनध्यवसायः,—अनुद्यमः, वैवाहिकदर्शने महती अनभिमतिरिति यावत्, [ अत्र "महानध्यवसायः" इति पाठे—अस्मासु स्थितास्वेव तत्कन्यायाः एवं दशापरिणामात् कथं तस्य अग्रतः वर्त्तिष्ये इति पदे पदे एव अवस्थानोद्योगः इत्यर्थः, यद्वा—"महानध्यवसायः" इत्येकं समस्तपदं वैदेहदर्शने अत्यन्ताभिनिवेश इत्यर्थः ]।

(श) आत्मानं—मनः, हृदयमिति यावत्, ( "आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि" इति मेदिनी )। संस्तभय—धैर्य्यावलम्बनेन स्थिरीकुरु। अनुरुध्यस्व—अनुसर, आत्मानं नियम्य वसिष्ठस्य आदेशं प्रतिपालयेत्यर्थः, स्वयमुपेत्य वैदेहं पश्यन्ती तत् सम्भावयेति यावत्। दशरथान्तःपुरचारिणः गृष्टि-नामधेयस्य कञ्चुकिनः वचनमिदम्। कञ्चुकिलक्षणं यथा—"अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्व्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते। जरावैक्लव्ययुक्तेन विशेद् गात्रेण कञ्चुकी॥" इति।

कौशल्या। ईदिसे काले मिहिलाधिवो दट्ठव्वो त्ति समं ज्जेव सव्वाइं दुक्खाइं समुब्भवन्ति। ण सक्कणोमि उव्वत्तमाणमूलबन्धणं हिअअं अवत्थावेदुं। * (च)

जनक। अत्र कः सन्देहः? (स)—

सन्तानवाहीन्यपि मानुषाणां दुःखानि सद्बन्धुवियोगजानि।
दृष्टे जने प्रेयसि दुःसहानि स्रोतःसहस्रैरिव संप्लवन्ते॥ ८॥

* ईदृशे काले मिथिलाधिपो द्रष्टव्य इति सममेव सर्वाणि दुःखानि समुद्भवन्ति। न शक्नोमि उद्वर्त्तमानमूलबन्धनं हृदयमवस्थापयितुम्।

(च) स्वस्यां जीवन्त्यामेव तत्सुतायाः सर्व्वजनसमक्षमेवं सापवादनिर्वासनेन स्वां सापराधामिव मन्यमाना कौशल्या स्वगमने पदे पदे अनध्यवसायनिदानं स्वयं विवृणोति, ईदृशे इति।—ईदृशे—रामारण्यवास-पतिनाश कुषाविवासनादिभिरतिदारुणे। सममेव—दुःखकारणानां पौर्वापर्य्येऽपि युगपदेव। दुःखानि—रामारण्यवासादीनि कष्टानि। समुद्भवन्ति—उद्भवन्ति, समुद्भूय मे मर्म्म पीड़यन्तीति यावत्। उद्वर्त्तमानमित्यादि।—उद्वर्त्तमानम् उत्पाटितं मूलबन्धनं यथास्थानावस्थितिहेतुभूतं प्रधानबन्धनं यस्य तत् तथोक्तम्; दुःसहदुःखझटिकासंवेगाच्छिन्नबन्धनमिति यावत्। हृदयं—मनः। अवस्थापयितुं—यथास्थं संस्थापयितुमित्यर्थः। न शक्नोमि—न प्रभवामि, न समर्थाऽस्मीत्यर्थः। [उद्वर्त्तमानेत्यत्र उद्वहमानेति पाठे—उद्वहते उद्वेल्लतीति उद्वहमानं उद्वेल्लत् वेगादुच्छलितमित्यर्थः]।

(स) अत्र—अस्मिन्, प्रेयसि जने दृष्टे शकलक्लेशोद्भवरूपे विषये इत्यर्थः। कः सन्देहः,—का विप्रतिपत्तिः, त्वदुक्तं यथार्थमेव—"स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति भावः।

सम्प्रति श्लोकं निःसन्देहत्वमेव विवृणोति, सन्तानेति।—मानुषाणां मानवानां [मनोरपत्यानि इति मानुषाः, मनुशब्दात् "मनोर्जातावञ्यतौ षुक् च" (४।१।१६१ पा०) इति अञ्प्रत्ययः षुगागमश्च, पक्षे मनुष्याः] सन्तानेन धारावदविच्छेदेन वहन्ति प्रवर्त्तन्ते इति सन्तानवाहीनि धारावाहीण्यपि अविरतमन्तःकरणे प्रवहमाणानीति यावत्, सतः आदृतस्य परमप्रेमास्पदस्येति यावत्, [सन्निति शतृप्रत्ययान्तस्य अस्धातोः रूपम्। बन्धौ सद्विशेषणदानेन असद्बन्धुवियोगे दुःखाभावः सूचितः। "सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्" इत्यमरः] बन्धोरात्मीयजनस्य पुत्रवध्वादेः

कौशल्या। कहं वच्छाए वहुए एव्वं गदे तस्स राएसिणो मुहं दंसेह्म ? * (छ)

* कथं वत्साया वध्वा एवं गते तस्य राजर्षेः मुखं दर्शयामः ?

[ संबध्नाती बन्धुश्चेति सद्बन्धुः तस्येति विग्रहे "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" ( २।१।६१ पा० ) इति कर्म्मधारयः समासः। बध्नाति मनः स्नेहादिनेति बन्धधातोः औणादिकेन उप्रत्ययेन बन्धुरितिपदं सिद्धम् ] वियोगाद् विच्छेदाद् जायन्ते उत्पद्यन्ते यानि तथोक्तानि प्रियजनविप्रयोगजन्मानि दुःसहानि असह्यानि दुःखानि कष्टानि प्रेयसि प्रेमनिलये आत्मीये इत्यर्थः, [ अयमनयोरतिशयेन प्रियः इति विग्रहे प्रियशब्दात् द्वयोरेकोत्कर्षे "द्विवचनविभज्योपपदे तरबीयसुनौ" ( ५।३।५७ पा० ) इति ईयसुन्, ततश्च "प्रियस्थिरस्फिरोरुबहुल—" ( ६।४।१५७ पा० ) इति प्रियस्य प्रादेशः, एकस्वरत्वात् अकारलोपाभावश्च ] जने दृष्टे साक्षात्कृते सति स्रोतःसहस्रैरिव सहस्रधाराभिरिव संप्लवन्ते उच्छलन्ति सीमानमतिक्रम्य ऊर्द्धं चलन्तीत्यर्थः, हृदयमाच्छाद्य शोकस्य प्रादुर्भावो भवतीति भावः। अस्यानुरूपोक्तिर्यथा कुमारसम्भवे—"स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति। [ अत्र प्रकृते धारावाहिकदुःखावेगे प्रवाहसहस्रसंप्लवसम्भावनात् उत्प्रेक्षा नाम अलङ्कारः, सा च इवशब्दोत्थापिततया वाच्या, तथा संप्लवात्मकक्रियारूपभावपदार्थसम्भावनात् भावाभिमानिनी चेति; एवं सन्तानवाहिन्यपि" इत्यत्र अपिशब्देन उत्थापितः विरोधालङ्कारश्च ; तथाहि सुदुःसहमपि दुःखादिकं धारावाहिकरूपेण अनुभूयते चेत्, तदा कालेन तत् सुसहमेव जायते इति हि स्वभावः ; अत्र तु दुःखानां सन्तानवाहित्वेऽपि दुःसहत्वकथनाद् विरोधः। स च चिरानुभूतदुःखस्य सुसहत्वेऽपि प्रियजनसमागमे पुनर्नवीभूततया दुःसहत्वात् अपनेतुं शक्यते। एवञ्च—"अत्र समुच्चयरूपप्रयोजनस्य असत्त्वेऽपि अपिशब्दप्रयोगाद् अधिकपदत्वदोषः" इति प्रत्युक्तं,तस्याच विरोधद्योतकतया सार्थकत्वादिति विभावनीयम् ]। इन्द्रवज्रा वृत्तम् ॥ ८ ॥

( छ ) वत्सायाः,—स्निग्धायाः इत्यर्थः। वध्वाः,—स्नुषायाः। एवम्—इत्थम्। गते—प्राप्ते, एवम्भूतायाम् अतिदारुणायां दशायामुपस्थितायां सत्यामित्यर्थः। राजर्षेः, —मुनिव्रतावलम्बिनः नरपतेर्जनकस्य, [ अत्र "कर्म्मणा यमभिप्रैति स सम्प्रदानम्" ( १।४।३२ पा० ) इति चतुर्थीप्राप्तौ सम्बन्धमात्रविवक्षया षष्ठी ]। कथं मुखं दर्शयामः,—स्वात्मानं प्रकाशयामः ? निष्कारणं सहधर्म्मिणीं विवासयतो रामस्य माता अहं तस्या एव पितुः समक्षम् आत्मानं प्रकाशयितुं सम्प्रति नितरां लज्जे इति भावः।

अरु।—एष वः श्लाघ्यसम्बन्धी जनकानां कुलोद्वहः।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ॥ ९॥

कौशल्या। एसो सो महाराअस्स हिअआणन्दो वच्छाए*

---

* एषः सः महाराजस्य हृदयानन्दो वत्साया वध्वाः पिता राजर्षिः॥

---

कौशल्याकञ्चुकिभ्यामुपेता जनकसमीपमायान्ती अरुन्धती तरुमूलसमासीनं जनकं दूरतः साङ्गुलिनिर्देशं दर्शयन्ती आह, एष इति।—एषः पुरोवर्त्ती वो युष्माकं श्लाघ्यः अतिप्रशस्यः सम्बन्धी बन्धुः वैवाहिकसम्बन्धवानित्यर्थः, [श्लाघ्यश्चासौ सम्बन्धी चेति श्लाघ्यसम्बन्धीति नीललोहितादिवत् विशेषणसमासः] जनकानां जनकवंशीयानां कुलस्य वंशस्य उद्वहः प्रवर्त्तकः, कुलश्रेष्ठ इत्यर्थः, तस्मादेव वंशस्य प्रवर्त्तितत्वादिति भावः, वर्त्तते इति शेषः; [उत् ऊर्द्धं वहति प्रापयति इति व्युत्पत्त्या उद्वहस्य श्रेष्ठार्थत्वम्। पचादित्वाद् अच्प्रत्ययः] यस्मै यस्मै जनकाय यं जनकम् अभिप्रेत्य इत्यर्थः [अत्र "कर्म्मणा यमभिप्रैति स सम्प्रदानम्" (१।४।३२ पा०) इति सम्प्रदाने चतुर्थी] याज्ञवल्क्यो याज्ञवल्क्य इति नाम्ना प्रसिद्धः संहिताकारः मुनिः "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते॥" इत्युक्तलक्षणः तपस्वी, परम् अयनं प्रतिपाद्यमिति परायणं, तदेव इति पारायणं [स्वार्थे अण्प्रत्ययः] ब्रह्म ईश्वर एव पारायणं प्रधानप्रतिपाद्यं यस्य शास्त्रस्य तत्, वेदमित्यर्थः, जगौ कथयामास, उपदिदेश इति यावत्; यद्वा—ब्रह्म वेदम् इति द्वितीयान्तं पदम्; पारे अयनं गमनं यस्मिन् कर्म्मणि तद् यथा स्यात् तथा समाप्तिपर्य्यन्तमित्यर्थः, जगौ कथयामास इत्यन्वयः। अथवा—पारं समाप्तिम् अयते अनेनेति पारायणं समस्तांशः ब्रह्मणो वेदस्य पारायणं सकलं वेदमित्यर्थः, पूर्ववत् जगावित्यनेनान्वयः। जनकयाज्ञवल्क्यसंवादः यथा बृहदारण्यकोपनिषदः पञ्चमाध्यायस्य प्रथमत एव—"जनको वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव, कः स्विदेषां ब्राह्मणानामनूचानतम इति स ह गवां सहस्रमवरुरोध दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः। तान् होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति। ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाच एताः सोम्योदज सामश्रवा इति" इति। अनुष्टुब् वृत्तम्॥ ९॥

(क) महाराजस्य—स्वामिनो दशरथस्य। हृदयानन्दः,—चित्ताह्लादहेतुः, [हृदयम् आनन्दयति यः सः हृदयानन्दः आनन्दयतेः पचाद्यच्]। वध्वाः,—स्नुषायाः

वच्छए पिदा राएसो !! हद्धी ! हद्धी ! सव्वाविद म्हि अणुवट्ठिद-महूसवे दिअहे । हा देव्व ! सव्वं ज्जेव तं णत्थि । * (क)

जनकः । [ उपसृत्य ] । भगवति अरुन्धति ! वैदेहः सीरध्वजोऽभिवादयते । (ख)—

यया पूतम्मन्यो निधिरपि पवित्रस्य महसः
पतिस्ते पूर्वेषामपि खलु गुरूणां गुरुतमः ।

हा धिक् ! हा धिक् ! सर्वाविता अस्मि अनुपस्थितमहोत्सवे दिवसे, हा दैव ! सर्वमेव तन्नास्ति ।

(क) सीतया । अनुपस्थितमहोत्सवे—सीतापरित्यागेन अनुपस्थितः विलयं गतः, महोत्सवो यस्मिन् तादृशे काले । सर्वाविता—सवमुपस्थित्या साक्षात्कारणात् सन्मानिता ; सीतायाः पुत्रप्रसवात् परमुपस्थितमहोत्सवे दिवसे अनेनाहम् आगमनाऽऽदिना सर्वाविता भविष्यामीति विपुलाऽऽशया वर्द्धिताऽहं सम्प्रति शोकजनकव्यापारात् परं दुःखमये दिवसे अतिथिरूपेणैवामुना राजर्षिणा दर्शनादिना आनिमग्नौरवाऽस्मीति भावः । सर्व्वमेव तन्नास्ति—आह्लादकरं सर्व्वमेव मे सम्प्रति न वर्त्तते, यतः स महाराजो दिवमगमत्, सीता सर्वावितपुत्राऽपि मे वधूः नास्ति, रामादिरपि शोकसंभिन्नहृदयः नात्र वर्त्तते, तत् कुतो मे एवंविधायाः सन्मानन-मित्याशयः ।

(ख) वैदेहः,—विदेहदेशाधिपतिः । सीरध्वजः,—सीरः लाङ्गलं, ध्वजे यस्य स तथोक्तः, लाङ्गलाङ्कितध्वज इत्यर्थः, ( "सीरोऽर्कहलयोः पुंसि" इति मेदिनी ) । अभिवादयते—नमस्करोति, त्वामिति शेषः ।

अथारुन्धत्याः पातिव्रत्यादिधर्म्मयोगात् सातिशयपूतस्वभावतया त्रिभुवनवन्दनीय-त्वमावेदयति, ययेति ।—पवित्रस्य अतिविशुद्धस्य, त्रिलोकीपावनस्येत्यर्थः, महसः तेजसः, ब्रह्मतेजसः इत्यर्थः, तपःसिद्धेरिति यावत्, निधिरपि आस्पदमपि, तथा, पूर्व्वेषां पूर्व्वतनानाम्, आद्यानामिति यावत्, गुरूणां श्रेष्ठानां, ब्रह्मर्षीणामित्यभिप्रायः, अपि गुरुतमः प्रधानतमः, प्रधानगुरुत्वेनाभिमतः, ( ब्रह्मर्षिमण्डलेषु अस्यैव महर्षेः वशिष्ठस्य प्राधान्यमावेदितमिति ज्ञेयम् ) ते तव, पतिः स्वामी, वशिष्ठ इत्यर्थः, यया भवत्या, पूतम्मन्यः आत्मानं पूतं मन्यते, ["आत्ममाने—" ( ३।२।८३ पा० ) इति खश्। "अरुर्द्विषद—" ( ६।३।६७ पा० ) इति मुमागमः ] खलु नूनम्,

त्रिलोकीमङ्गल्यामवनितल-लोलेन शिरसा
जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम् ॥ १० ॥

अरु। परं ज्योतिस्ते प्रकाशताम्, अयं स त्वां पुनातु देवः परोरजाः, य एष तपति। (ग)

---

ब्रह्मर्षिषु प्रवरस्य महर्षेर्वसिष्ठस्य पुत्रतमत्व त्वयैव सुसम्पन्नमिति भावः। त्रिलोकीति। —त्रयाणां लोकानां समाहारः त्रिलोकी, तस्याः मङ्गल्यां मङ्गलाय हितां, [ मङ्गलात् हितार्थे यत्प्रत्ययः ] त्रिभुवनमङ्गलकारिणीमित्यर्थः, जगद्वन्द्यां सर्व्वलोकपूज्याम्; विशेषणद्वयमेतदुषस्यपि योज्यम्। भगवतीं षडैश्वर्य्यशालिनीं, भवतीमिति शेषः, देवीम उषसमिव प्रातःसन्ध्याऽधिष्ठात्रीं देवतामिव, [ ननु उषःशब्दस्य नित्यक्लीबत्वं मेदिन्याममरे च दृश्यते, "उषम् प्रत्युषसि क्लीवम्" इति मेदिनी, "प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्यूषसी अपि"इत्यमरः,तथा च कथमत्र स्त्रीत्वमिति चेदत्रोच्यते,—उषःशब्दस्य कालमात्रवाचित्वे तु क्लीवत्व, प्रातराद्यधिष्ठातृदेवतावाचित्वे तु स्त्रीत्वमिति, उषाः प्रातरधिष्ठात्री देवता इति दीक्षितः,—"प्रतिपदापद्विपत्संपच्छरत्संसत्परिषदुषः- संवित्क्षुत्पुन्मुत्समिधः। "उषः प्रत्युषसि क्लीवं पिङ्गप्रस्तात्र योषिति" इत्यमरटीका च। वाचस्पत्येपि स्त्रीत्वमस्याऽऽम्नातमित्यवधेयम् ] अवनितललोलेन—अवनेः भूमेः, तल पृष्ठे, लोलेन चञ्चलेन, लुठितेनेत्यर्थः, भूतलनमितेन इति यावत्, शिरसा मूर्ध्ना, वन्दे प्रणमामि। उषःपक्षे,—महसः निधिः सूर्य्य इति प्रत्येतव्यम्, अन्यत् समानम्। [उषोदेवीं यथा भूमितलस्पर्शिशिरसा सर्व्वेऽभिवादयन्ते, तथा जगद्वन्द्यां भगवतीमपीति देव्या उषसा सहाबन्धत्या अवैधर्म्म्यसाम्योपदेशात् श्लेषानुप्राणिता पूर्णोपमाऽलङ्कारः]। शिखरिणी वृत्तम् ॥ १० ॥

(ग) परं—प्रधानं, ज्योतिः,—ब्रह्माख्यं तेजः, परब्रह्मेत्यर्थः, ते—तव, प्रकाशताम्—आविर्भवतु; ब्रह्मज्योतिःसाक्षात्कारस्ते भूयादिति भावः। अयं—प्रत्यक्षीभूत इत्यर्थः, सः,—प्रसिद्धः, देवः,—सूर्य्य इति यावत्; परोरजाः,—रजसः,—रजोगुणात्, परः,—अतीतः। [राजदन्तादित्वात् परशब्दस्य पूर्व्वनिपातः, पारस्करादित्वात् सुट् च निपात्यते] रजोगुणेनास्पृष्टः, विशुद्धसत्त्वगुणसम्पन्न इति यावत्। त्वां—भवन्तं, पुनातु—पवित्रीकरोतु, [आशिषि लोट्]। य एषः,—सर्व्वप्रत्यक्षगोचरः इत्यभिप्रायः, तपति—तापनेन जगत् पवित्रीकरोति, अपूतस्य ब्रह्मज्ञानोदयासम्भवादित्यभिप्रायः। "य एवासौ तपति, तमुद्गीथमुपासीत" ( छान्दो० १ अध्यायः ३ खण्ड० १ मन्त्रः ) इति छान्दोग्ये उद्गीथरूपतया आदित्यस्यैवोपासना विहितेति ज्ञेयम्।

जनकः । आर्य्य दृष्टे! अपि कुशलमस्याः प्रजापालस्य मातुः ? (घ)

कञ्चुकी । [ स्वगतम् ] । निर्विशेषमतिनिष्ठुरमुपालब्धाः स्मः । [ प्रकाशम् ] । राजर्षे! अनेनैव मन्युना अचिरपरित्यक्त-राममुखचन्द्रदर्शनां नार्हसि त्वं दुःखयितुमतिदुःखितां देवीम् । रामभद्रस्यापि दैवदुर्नियोगः कोऽपि, यत् किल

(घ) आर्य्य !—माननीय !, एतस्य वयोऽधिकतया समादराऽऽतिशय्यप्रदर्शनार्थमेतत् । दृष्टे !—कञ्चुकिन ! दृष्टिरिति कञ्चुकिनो नामेति ज्ञेयम् । अपि—प्रश्ने । प्रजापालस्य—प्रजाः पालयति [इति पालयतेः "कर्मण्यण्"(३।२।१ पा०) इति कर्त्तरि अण्] तस्य रामस्येत्यर्थः, केवल प्रजाः पालयति, न तु पत्नीमिति तु व्यङ्ग्यार्थः । मातुः,—जनन्याः, कौशल्याया इत्यर्थः । कुशलम् ?—शुभम् ? ["चतुर्थी चाशिष्यायुष्य—" (२।३।७३पा०) इति आशिषि पाक्षिकी षष्ठी ] । प्रश्नारम्भार्थमेव स्वहृद्गतः सीतायाः रामेण परित्यागात् स्वश्लाघ्यसम्बन्धस्यापरिगणनेन हेतुना जनकेनैवमौदासीन्यविधया परिपृष्टमित्यवधेयम् । प्रोक्तवचसा जनकेन रामे कौशल्यायाञ्च महान् विरागो व्यक्तीकृत इति ज्ञेयम् ।

(ङ) निर्विशेष—निः,—नास्ति, विशेषः,—भेदो यस्मात् तत्, अननुरूपमेवेत्यर्थः, अतिनिष्ठुरं—निरतिशयकठोरम्, अतिपरुषाचरमिति यावत् । उपालब्धाः स्मः,—तिरस्कृताः भवामः । राजर्षेः जनकस्य प्रोक्तवचसा वयं सर्वे सममेवाधिक्षिप्ताः, यतः "प्रियसखि ! कुशलं ते" इति साक्षादसम्बुध्य मत्समीपे प्रोक्तसोल्लुण्ठनवचन-मुदीरितमित्यभिप्रायः । राजर्षे !—जनक !, अनेनैव मन्युना—सीतानिर्वासनजनितेन शोकेन क्रोधेन वा । अचिरेति ।—अचिरं त्वरितं, त्यागवार्त्ताश्रवणोत्तरक्षण एवेत्यर्थः, परित्यक्तं परिहृतं, रामभद्रस्य रघुमणेः, मुखचन्द्रस्य दर्शनम् अवलोकनं यया तादृशीं, सीताविवासनेन भवानिव इयमपि नितरां निर्व्विण्णा जाता, तेनेयं स्वपुत्रमुखमपि एतावन्तं कालं नानुपश्यति इत्यभिप्रायः । अतिदुःखितां—सञ्जातप्रबलदुःखां, दुःखयितुं—मुदुःखितां कर्त्तुमित्यर्थः, ["तत्करोति—" (ग०) इति णिचि तुमुन् ] दुःखितायाः पुनः दुःखोत्पादनं न कर्त्तव्यमेवेति भावः । नार्हसि—न युज्यसे, अतः क्रोधेनेदृशसोत्प्रासवाक्यात् विरमेत्यभिप्रायः । अथ भगवतः रघुमणेरपि निर्दोषतां प्रतिपादयति, रामेत्यादिना ।—दैवदुर्नियोगः,—अन्यान्तरीयविषमदुर्दैवनियोगः

समन्तात् प्रवृत्तबीभत्सकिंवदन्तीकाः पौरजानपदा नाग्निपरिशुद्धिमप्यल्पकाः प्रतियन्ति, इत्यतो दारुणमनुष्ठितम्। (ङ)

जनकः। आः! कोऽयमग्निर्नाम अस्मत्प्रसूतिपरिशोधने!! कष्टम्! एवंवादिना जनेन रामपरिभूता अपि वयं पुनः परिभूयामहे। (च)

अरु। [निश्वस्य]। एवमेतत्, अग्निरिति वत्सां प्रति परिलघूनि अक्षराणि, सीतेत्येव पर्य्याप्तम्। हा वत्से! (छ)—

मित्यर्थः। यत्—यस्मात्, दुर्द्दैवनियोगादिति यावत्। समन्तात्—सर्व्वत्र। प्रवृत्तेति।—प्रवृत्ता प्रचरिता, बीभत्सा जुगुप्सिता, किंवदन्ती जनापवादः, कौलीनमिति यावत्, येषां ते। ["नद्यृतश्च" (५।४।१५३ पा०) इति कप्प्रत्ययः] सीताऽलीकापवादजल्पका इत्यर्थः। अल्पकाः,—नीचाऽऽशयाः, पौरजानपदाः,—पुरवासिनः अयोध्याप्रदेशवासिनश्च। अग्निपरिशुद्धिमपि—अग्निना विशोधनमपि, अग्निपरीक्षया प्रमाणितनिर्दोषतामपीति यावत्। न प्रतियन्ति—न विश्वसन्ति, सुदूरलङ्कापुरे एतस्यानुष्ठानादित्यभिप्रायः। अतः,—अनेनैव हेतुना, दारुणं—भीषणं, निर्वासनरूपं मर्म्मभेदि कर्म्मेति यावत्, अनुष्ठितम्—आचरितं, रामभद्रेणेति शेषः। अतः दुर्द्दैवविपाकं विभाव्य मन्युं परिहरेति वाक्यार्थः।

(च) आः!—इति अमर्षसूचकमव्ययम्। ("आः स्यात् कोपप्रपीडयोः" इत्यमरः) कोऽयं—न कश्चिदित्यर्थः; पावनताविधाने अस्मत्प्रसूतिसमीपे सोऽतिलघुरिति भावः। एवंवादिना—"अग्नौ सीतायाः शुद्धिः" इत्येवं वाक्यं वदतेत्यर्थः, जनेन—नगरजनेन, अयोध्यावासिना च लोकेनेति यावत्। रामपरिभूताः,—रामेण परिभूताः, जनापवादेन सीताया निर्वासनात् अवमानिताः इत्यर्थः। परिभूयामहे—परिभूताः स्मः। सीतायास्त्यागात् विशेषतस्तु सापवादत्यागादत्यन्तमवमानिता वयं रामेण, सम्प्रति प्रसूतिपरिशोधनरूपमेवम् असत्यं वाक्यं वदता जनेन पुनरपि विशेषतः लाञ्छिता भवामः, इति तु समुदितार्थः।

(छ) एवमेतत्—भवता यदुदीरितं, तत् सर्व्वथैव सत्यमिति भावः। स्वयमपि प्रागुक्तवाक्यस्य सत्यतां प्रमाणीकरोति, अग्निरित्यादिना।—वत्सां प्रति—वत्सायाः सीतायाः सम्बन्धे, तया सह तुलनयेति यावत्, अग्निरिति—अग्निर्नाम, परिलघूनि—अतितुच्छानि; अक्षराणि—भावाभिव्यञ्जकवर्णाः। अग्निरिति वर्णमालोच्चारणा-

शिशुर्वा शिष्या वा यदसि मम तत् तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति।

---

ण्येव भवन्ति, न तु अर्थप्रकाशकानि भवन्ति, महातेजसः समीपे अल्पतेजस इव तव अपेक्षेजो न स्फुरति, अतः परिशुद्धिविषये सीतासमीपे अग्निरिति नामाऽपि न कर्त्तव्यं, सीतायास्तस्य हीनत्वादिति भावः। सीतेत्येव पर्याप्तं—तेन हि शुद्धिविषये सीतेति वर्णोच्चारणेनैव सम्यक्, एवञ्च सीता इति वर्णानामुच्चारणेनैव सर्वं पवित्रं स्यात्, का तस्याः सामान्यपावनान्तरेण शुद्धिः? इति भावः। हा वत्से!—हे सीते! (वक्ष्यमाणश्लोकेनान्वयः)।

अथ जातिवयोगुणेषु गुणानामेव प्राधान्यमभिधाय सीतायाः शुद्धिमत्तमत्वं प्रतिपादयति, शिशुर्वेति।—त्वं शिशुर्वा अल्पवयस्का बालिका वा, मम शिष्या वा अन्तेवासिनी वा, मदन्तीः उपदेष्टव्या वेत्यर्थः, असि भवसि, यत् यादृशी एव, भवसि इति शेषः, तत् शिशुत्वं शिष्यत्वं वा, तथा तादृगेव; तिष्ठतु वर्त्तताम्; त्वं मत्समीपे प्राक् यादृशी आसीः, इदानीमपि तथैव तिष्ठेः, नाहमधुना तव शिशुत्वविषये शिष्यत्वविषये वा कमपि विपर्ययं साधयितुमिच्छामीति भावः; नन्वेवञ्च सति विशेषः ज्ञानां शिशौ शिशुत्वबुद्धेः, शिष्ये च शिष्यत्वबुद्धेः सदा संस्थापनमेवोचितं, तत् कथमधुना अन्यथेति नाभिमन्यसे, इत्यपेक्षायामाह, विशुद्धेरिति।—विशुद्धेः पवित्रतायाः; निर्दोषताया इति यावत्, उत्कर्षस्तु अतिरेक एव, स्वतःशुद्धिरूप इति यावत्, त्वयि भवत्यां, मम मे, भक्तिम् अनुरागं, द्रढयति सुदृढां करोति, वर्धयतीत्यर्थः; अयोवस्थां शिष्यायामपि पतिव्रताकुलशेखरभूतायां त्वयि समधिकां पवित्रतां विलोक्य विस्मयीभूतायाः ज्यायस्याः गुरुपत्न्याः अपि मे अकपटा भक्तिः समुदेतीति समुदितार्थः। न केवलं मम, अपि तु युगपदेव सर्वेषां निरवद्या भक्तिः त्वयि समजनि इत्याह, शिशुत्वमिति।—शिशुत्वं शैशवं, स्त्रैणं वा स्त्रीत्वं वा, भवतु अस्तु, तवेति शेषः, एतावता न हि ते पूज्यत्वहानिः भवितुमर्हतीति भावः; जगतः त्रिलोक्याः, वन्द्याऽसि पूजनीयाऽसि; अतिविशुद्धियोगादिति भावः। ननु वत्सु, शिशुत्व-मित्यर्थः। स्त्री अपि शिशुरपि, कथं जगद्वन्द्याऽसि? इत्येतत् प्रदर्शयितुमर्थान्तरं न्यस्यति, गुणा इति।—गुणाः पातिव्रत्यशालीनत्वादिधर्माः, पूजास्थानं पूजायाः आधाराः, समादरस्येति यावत्, स्थानम् आस्पदं, गुणा हि पूज्यत्वविधायकाः भवन्तीति भावः; गुणिषु तत्तद्गुणसमन्वितेषु, लिङ्गं स्त्रीत्वपुंस्त्वादिकं चिह्नं, न च न हि, वयः बाल्यकौमारादिकम्, अल्पवयस्त्वं प्रवयस्त्वं वेत्यर्थः, न च नैव, पूजास्थानं

शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्याऽसि जगतो
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः॥ ११॥

कौशल्या। अम्मो! उम्मीलन्ति वेअणाओ। * (ञ)

[इति मूर्च्छति] (ञ)।

जनकः। हा कष्टं! किमेतत्? (ञ)

अरु। राजर्षे! किमन्यत्? (ट)—

* अहो! उन्मीलन्ति वेदनाः।

भवेदिति शेषः। पुंस्त्वजरापलितत्वादिभिरेव केवलं जनाः पूजां न लेभिरे, सर्व्वत्र गुणानामेव पूज्यत्वप्रयोजकतया, त्वं पातिव्रत्यादिगुणमहिमभिः सर्व्वेषां प्रपूजनीया भवसीति भावः। [अत्र चकारद्वयेन नञ्द्वयेन च प्रत्येकं लिङ्गस्य वयसश्च समुदितयोश्च तयोः पूजास्थानत्व प्रतिषिद्धमिति ज्ञेयम्। अत्र सामान्येन गुणानां पूज्यत्वविधायकेन वस्तुना, विशेषस्य सीतायाः जगद्वन्द्यत्वरूपवस्तुनः सोपपत्तीकरणात् सामान्येन विशेष-समर्थनरूपोऽर्थान्तरन्यासालङ्कारः; अपि च लिङ्गवयसोः पूज्यताहेतुत्वनिरासात् आक्षेपे परिसङ्ख्याऽलङ्कारः, एतयोः परस्परमङ्गाङ्गिभावतया संस्थितिः सङ्करः]। शिखरिणी वृत्तम्॥ ११॥

(ञ) अहो!—हा! अतिक्लेशकरमित्यर्थः; वेदनाः,—शोकसमुद्भूतव्यथासमूहाः, उन्मीलन्ति—उद्भवन्ति, नवीभावमासाद्य मां नितरां व्यथयन्तीति यावत्; सीतायाः गुणगानमाकर्ण्य संस्मृत्य च विवशां मां तद्विरहशोकः पुनः नितरां विह्वली-करोतीति भावः।

(ञ) इति मूर्च्छति—एतावदुक्त्वा कौशल्या सम्मोहभावमभिनयतीत्यर्थः।

(ञ) हा कष्टम्!—अहो! निरतिशयं हृदयविदारकमिति यावत्, एतत्—कौशल्यायाः मूर्च्छितत्वं, किम्?—कथमभूदिति भावः; किमर्थं हि इयं मूर्च्छिता भवति तत् न जाने इत्याशयः।

(ट) किमन्यत्?—अपरं किमत्र मूर्च्छाऽऽगमने कारणं भवतीति भावः; दारुणं शोकवह्निं सोढुमपारयन्ती कुतनवदुषा इयं कौशल्या सहसा मूर्च्छिता भविष्यति।

स राजा तत्सौख्यं स च प्रियजनस्ते च दिवसाः
स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम् ।
विपाके घोरेऽस्मिन्नथ खलु विमूढा तव सखी
पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति ॥ १२ ॥

जनकः । कष्टं ! सर्वथा नृशंसोऽस्मि, यच्चिरस्य दृष्टान् प्रियसुहृदः प्रियान् दारान् न स्निग्धं पश्यामि । (ठ)—

---

अथ मूर्च्छाऽऽगमहेतुं विशेषेण विवृणोति, स राजेति ।—सुहृदि प्रियसखे, त्वयि भवति, जनके इत्यर्थः, दृष्टे अवलोकिते सति, मनस्साक्षात्कारसमकालमेवेत्यर्थः, सः प्रसिद्धः, राजा दशरथः, तत् अनिर्वचनीयं, सौख्यं सुखसमूहः, स च प्रसिद्धः, प्रियजनः सीतारामचन्द्रादिबालकसमुदायः, ते च प्रसिद्धाः, महाऽऽनन्दपूर्णा इति यावत्, दिवसाः दिनानि, तदखिलम् एतत्सर्वमेव, दशरथादिसुखमयदिवसपर्य्यन्तं वस्तुजातमित्यर्थः, स्मृतौ स्मरणपथे, आविर्भूतम् आयातम् ; [ आविर्भवतेः कर्त्तरि क्तप्रत्ययः ] । अथ अनन्तरं, पूर्व्ववृत्तान्तजातस्मरणात् परमेवेत्यर्थः, अस्मिन् अनुभूयमाने, घोरे भीषणे, विपाके विपदि, दशाविपरिणामे इति यावत्, स्मृते सति इत्यर्थः ; तस्य राज्ञः दशरथस्य मृतत्वेन, रामस्य प्रभुत्वात् सीतात्यागकर्तृत्वेन च हेतुना, तत्कालेन सह एतत्कालस्य सुमहत् वैषम्यमवलोक्येति भावः ; तव सखी स्निग्धमित्रभूता कौशल्येत्यर्थः, विमूढा खलु विगतचेतना जातेति शेषः । एतदेवार्थान्तरन्यसनेन विशदीकरोति, पुरन्ध्रीणामिति ।—हि यस्मात् कारणात्, पुरन्ध्रीणां कुलस्त्रीणां, चित्तं मानसं, कुसुमसुकुमारं पुष्पमिव कोमलं, स्वल्पेनैव सन्तापेन विलीयमानमिति यावत्, भवति अस्ति ; यत एतासामतिकोमलं चेतः किञ्चिदपि सन्तापमसहिष्णु भवति, तस्मादेवेयं कौशल्या सहसा विमूर्च्छिता जातेति वाक्यार्थः । [ अत्र सामान्येन पुरन्ध्रीचित्तेन सार्द्धं विशेषस्य कौशल्याचेतसः कुसुमसुकुमारतया सोपपत्तीकरणात्, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः ; अपि च तद्राजसंस्मरणरूपैकेन कारणेन कौशल्याया विमूढीभवनस्य सम्पद्यमानत्वेऽपि तत्सौख्यरूपाणां कारणान्तराणां खलेकपोतिकान्यायात् तत्साधकत्वेन समावेशात् समुच्चयालङ्कारः ; कुसुमेन सार्कं चित्तस्य समासेन अवैधर्म्यसाम्योपदेशाच्च लुप्तोपमालङ्कारः ; एतेषान्तु परस्परसापेक्षतया संस्थितेः सङ्करः] । शिखरिणी वृत्तम् ॥ १२ ॥

(ठ) कष्टम्—अतिदुःखप्रदमित्यर्थः, सर्व्वथा—सर्वप्रकारेण, [illegible]

स सम्बन्धी श्लाघ्यः, प्रियसुहृदसौ, तच्च हृदयं.
स चानन्दः साक्षादपि च निखिलं जीवितफलम् ।

यावत्, नृशंसः,—निर्दयः, अस्मि—भवामि, यत्—यस्मात् कारणात्, चिरस्य दृष्टाम्—बहुकालात् परम् अवलोकिताम्, प्रियसुहृदः,—अतिस्निग्धस्य सख्युः दशरथस्य, प्रियाम्—प्रेमाऽऽस्पदीभूताम्, दाराम्—स्त्रियं कौशल्यां, स्निग्धं—सस्नेहं, सप्रश्रयमिति यावत्, न पश्यामि—न अवलोकयामि ; दुहितुः सीतायाः निर्वासनशोकेन इत्यमेवेदानीं खिन्नमानसः विकलश्च भवामि, यत् स्निग्धमित्रस्य राज्ञः दशरथस्य प्रियां भार्य्यां बहोः कालात् परं दृष्टामपि नाहमिदानीं सप्रश्रयमवलोकयामि, अपि तु तां अननुभूतामिव मन्ये, अतो नास्ति मत्तः अधिकः कश्चित् क्रूर इति भावः ।

अथ राजनि दशरथे प्राक्तन स्वप्रेमाऽऽतिशय्यं स्फुटीकृत्य प्रतिपादयति, स सम्बन्धीति ।—सः प्रसिद्धः, राजा दशरथः इत्यर्थः, श्लाघ्यः महाकुलसम्भूतत्वात् प्रशंसनीयः, सम्बन्धी मद्दुहित्रा सह रामस्य परिणयात् वैवाहिकसम्बन्धवान्, असौ दशरथः, प्रियसुहृत् प्रियः प्रीतिमान्, शोभनं हृदयं यस्य असौ सुहृत्, [“सुहृद्दुर्हृदौ मित्रामित्रयोः” (५।४।१५० पा०) इति हृदयशब्दस्य हृदादेशः] सुष्ठुहृदयवांश्च, स्निग्धसखः इत्यर्थः ; तच्च हृदयं स हि दशरथः मे हृदयरूपः, असौ तु मम द्वितीयं हृदयमिव अभूदिति भावः, [ अत्र तच्छब्दस्य विधेयप्राधान्यात् क्लीवत्वं ज्ञेयम् ] ; स दशरथः, साक्षात् प्रत्यक्षः, आनन्दः हर्षः, ममेति शेषः, अपि च किञ्च, निखिलं समग्रं, जीवितफलं आत्मधारणप्रयोजनभूतम्, असौ इति शेषः, इह जन्मनि मज्जीवनस्य यद् यद्धि प्रार्थनीयम् आसीत्, तत् सर्व्वमेवासौ अभूदिति भावः । शोकजातेनापरितुष्यन् पुनः तस्य परमाऽऽत्मीयत्वं संस्थापयति, शरीरमिति ।—तथा शरीरं देहभूतः, जीवो वा प्राणस्वरूपो वा, तदधिकम् एतस्मात् जीवनादधिकं यदि वा किञ्चित् प्रीतिकरं वस्तु स्यात्, असौ तु मे तत्स्वरूप एवाऽऽसीदिति भावः, अतः अस्मात् कारणादेव, प्रियतमः निरतिशयमेव प्रीत्यास्पदीभूतः, महाराजः सम्राट्, श्रीमान् राजलक्ष्म्याः आश्रयः, दशरथः, मम किमिव नाऽऽसीत् ? [ इवशब्दो वाक्यालङ्कारे ] । इह जगति जीवविषयेषु अधिकं किं हि वस्तु विद्यते, यदसौ मम नाभूदिति भावः ; तेनैव केवलं विरहितः अहं सर्व्वं शून्यमिव पश्यामि, नास्ति मे अधुना किञ्चिदपि इति विलपयामि इत्याशयः । अत्र आसीत् इति क्रियापदं पूर्व्ववाक्यषट्केऽपि योजनीयम् ।
[ अत्र एकस्मिन्नेव दशरथे हृदयजीवितफलशरीरजीवत्वानां तादात्म्येनाभेदाध्यासादेव निरङ्गं मालारूपकमलङ्कारः ; अपि च आनन्दस्य मूर्त्तत्वासम्भवेऽपि साक्षात्त्वेन कथनात्तेन अत्यन्ते सम्बन्धरूपातिशयोक्तिरलङ्कारः ; अपि च शरीरात् हृदयात्

शरीरं, जीवो वा, तदधिकमतो वा प्रियतमो
महाराजः श्रीमान् किमिव मम नाऽऽसीद्दशरथः ? ॥१३॥

कष्टम् ! इयमेव सा कौशल्या !!—

यदस्याः पत्युर्वा रहसि परमं दूषितमभू-
दभूवं दम्पत्योः पृथगहमुपालम्भविषयः ।
प्रसादे कोपे वा तदनु मदधीनो विधिरभू-
दलं वा तत् स्मृत्वा दहति यदवस्कन्द्य हृदयम् ॥ १४ ॥

जीवनाद्यधिकप्रियवस्तुनः अभावात् तदसम्बन्धेऽपि तत्सम्बन्धोक्तेः तदेवातिशयोक्तिश्च ; एवं किमिव नाऽऽसीदिति वाक्यार्थं प्रति प्रागुपात्तवाक्यार्थानां हेतुभततयोपन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ; आनन्दजनकस्य दशरथस्य आनन्दरूपतया अभिधानात् हेतोः हेतुमता सह अभेदोक्तेः अभिधाहेतुरलङ्कारश्च,एषां परस्पर-सापेक्षतया संस्थितेः सङ्करः] । शिखरिणी वृत्तम् ॥ १३ ॥

अथैतयोः कौशल्यादशरथयोः स्वस्यातीवात्मरङ्गत्वं प्रदर्श्य, शोकस्य दुर्भरत्वं विवृणोति, यदस्या इति ।—अस्याः कौशल्यायाः, पत्युः वा अस्याः स्वामिनः राज्ञः दशरथस्य वा, रहसि निर्ज्जने, परमम् अत्यर्थं, यत् दूषितं प्रणयापराधः, अन्योऽन्यकृतः प्रणयकलहः इत्यर्थः, अभूत् आसीत्, कौशल्यादशरथौ पुरा रहसि यत् परस्परं कृतकं प्रणयकोपमकुरुतामिति वाक्यार्थः ; दम्पत्योः जायापत्योः कौशल्या-दशरथयोः, पृथक् विभिन्नं, जायायाः पत्युश्च परस्परनैरपेक्ष्येणेति यावत्, अहम् उपालम्भस्य तिरस्कारस्य, प्राक् प्रणयकोपावसरे राज्ञी कौशल्या मामित्थमुवाच, यत् तव प्रियसखः मयि एवमन्याय्यमाचरितवान्, भवदनुरोधादेवाहं सर्व्वमसहिषि, नातः परं कदाऽपि तत् सहिष्ये इति, एवमेवासावपि सततमुवाचेत्येवंरूपस्य विषयः आस्पदम्, अभूवम् आसं, तत्र पुरेति शेषः ; तदनु तत्पश्चात्, कृतकप्रणयकलहोत्पादना-नन्तरमेवेत्यर्थः, प्रसादे उभयोः प्रसन्नतासम्पादनविषये, कोपे वा क्रोधोत्पादने वा, मदधीनः ममाऽऽयत्तः, विधिः व्यवस्था, अभूत् आसीत्, तौ च दम्पती प्रसादयितुं कोपयितुं वा, एकः अहमेव समर्थोऽभवमित्यर्थः ; वा अथवा, तत् पूर्व्ववृत्तं, स्मृत्वा अलम्, ["अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" (३।४।१८ पा०) इत्यलंयोगात् क्त्वाप्रत्ययः] तथाविधपूर्व्ववृत्तान्तस्मरणमधुना निष्प्रयोजनमित्यर्थः, यत् पूर्व्ववृत्तस्मरणं, हृदयं मानसम्, अवस्कन्द्य आक्रम्य, शोषयित्वेत्यर्थः, दहति भस्मीकरोति ; तत्स्मरणं सन्तप्त इवाग्नीं हृदयमेव केवलं शोकाऽऽकुलं भवति, तेन तदालोचना अधुना परिहरणीयेति भावः ।

अरु। हा कष्टम्! अतिचिरनिरुद्धनिश्वासनिष्ठुरं हृदय-
मस्याः। (ड)

जनकः। हा प्रियसखि! (ढ)

[इति कमण्डलूदकेन सिञ्चति]। (ण)

कञ्चुकी। सुहृदिव प्रकटय्य सुखप्रदः

प्रथममेकरसामनुकूलताम्।

[अत्र दूषितत्वरूपकारणस्य दम्पत्योः स्थितत्वेन उपालम्भरूपकार्य्यस्य च जनकगतत्वेन कार्य्यकारणयोर्भिन्नदेशगतत्वात् असङ्गत्यलङ्कारः]। शिखरिणी वृत्तम्॥ १४॥

(ड) अतिचिरेत्यादि।—अतिचिरं—सुदीर्घं कालं व्याप्येत्यर्थः, निरुद्धः,—स्तम्भितः, यः निश्वासः,—श्वासमारुतः, तेन निष्ठुरं—कठोरं, श्वासनिरोधेन निश्चल-मिति यावत्; ("कठोर निष्ठुरं दृढम्" इत्यमरः); अस्याः,—कौशल्यायाः, हृदयं—वक्षःस्थलम्, अनुभूयते इति शेषः; तथा च वक्षःस्थलमस्याः निस्पन्दमनुभूयते, तत् किमियं शोकाऽऽवेगं सोढुमपारयन्ती गतजीवनाऽभूदिति भावः।

(ढ) हा—खेदे, प्रियसखि!—कौशल्ये!, त्वमधुना कीदृशीं दशां गताऽसीति शेषः।

(ण) कमण्डलूदकेन—कमण्डलुसलिलेन, सिञ्चति—उक्षति, सुशीतलीकरोति, इति यावत्; मोहापसारणार्थं कौशल्यायाः इति शेषः।

अथ कञ्चुकी राज्ञ्याः कौशल्यायाः ईदृशीं दशां विलोक्य, विधातुः कदाचित् प्रियसखवत् आनुकूल्यकारित्वं कदाचिच्छत्रुवत् आधिप्रदायकत्वं वाचा व्यक्तीकृत्य नितरामनुशोचति, सुहृदिवेति।—विधिः विधाता, सुहृदिव मित्रमिव, प्रथमम् आदौ, बाल्यात्प्रभृति रामवनवासं यावदित्याशयः, एकरसाम्—एकः एकविधः, रसान्तरेणा-विमिश्रः इति यावत्, रसः आस्वादः यस्याः तथाविधाम्, ("रसो गन्धे रसः स्वादे तिक्ताऽऽदौ विषरागयोः" इति मेदिनी) दुःखाविमिश्रानियतसुखप्रवाहिणीमिति यावत्, अनुकूलताम् आनुकूल्यं, हितैषितामित्यर्थः, अस्याः कौशल्यायाः इति शेषः; प्रकटय्य प्रकाश्य, दर्शयित्वेति यावत्, सुखप्रदः सन् सुखदायको भूत्वा, पुनः भूयः, पश्चादित्यर्थः, अकाण्डविवर्त्तनदारुणः,—अकाण्डे अनवसरे, सहसेति यावत्, विवर्त्तनेन परिवर्त्तनेन, प्रतिकूलताविधानेनेत्यर्थः, दारुणः भीषणः सन्, दुर्हृदिव अकस्मात् दुर्विषहदुःखप्रदो भूत्वेति यावत्; अहो! अतिदुःख-मात्मेतदित्यर्थः, मर्म्मारुजं मामवस्थां विधिरपि प्रददाति, दारुणं दुःख-

पुनरकाण्डविवर्त्तनदारुणो
विधिरहो! विशिनष्टि मनोरुजम् ॥ १५ ॥

कौशल्या। [ संज्ञां लब्ध्वा ]। हा वच्छे जाणइ! कहिं सि? सुमरामि दे विआहलच्छीपरिग्गहेक्कमण्डणं पप्फुरन्तसुद्धहसिदमुद्धमुहपुण्डरीअं, आपफुरन्तकोमुदचन्दचन्दिआसुन्दरेहिं अङ्गेहिं उल्लासेहि, जादे! पुणोवि उक्कोएहि उच्छङ्गं, सव्वदा महाराओ भणादि, एसा रहुउलमहत्तराणं वहू, अम्हाणं उण जणअसम्बन्धेण दुहिदिआ एव्व। * (त)

* हा वत्से जानकि! क्वासि? स्मरामि ते विवाहलक्ष्मीपरिग्रहैकमण्डनं प्रस्फुरच्छुद्धहसितमुग्धमुखपुण्डरीकम्, आस्फुरत्कौमुदचन्द्रचन्द्रिकासुन्दरैरङ्गैरुल्लासय, जाते! पुनरप्युद्योतयोत्सङ्ग, सर्वदा महाराजो भणति,—एषा रघुकुलमहत्तराणां वधूः, अस्माकं पुनर्जनकसम्बन्धेन दुहिता एव।

मुत्पाद्य नियतं मानसं प्रमथ्नातीत्यर्थः; प्राक् इयं महिषी कौशल्या कीदृशी आसीत्, अधुना दुर्दैवप्रभावात् कीदृशी जातेति पश्य, इत्यहो! दैवगतिः दुर्व्वितर्क्यैवेत्याशयः। [ अत्र दैवेन विरूपयोः सुखदुःखयोः एकत्र सङ्घटना प्रदर्शितेति विषमालङ्कारः; अपि चैकस्य विधेः अनुकूलतायाः मनोरुजश्च जनकत्वेन एकस्यानेकगोचरतया पर्य्यायालङ्कारः, सुहृदिवेत्युपमाऽलङ्कारश्च, एतेषां परस्परसापेक्षतया स्थितेः सङ्करः ]। द्रुतविलम्बितं वृत्तम् ॥ १५ ॥

(त) क्वासि?—कुत्र वर्त्तसे? ते—तव। विवाहेत्यादि।—विवाहस्य—परिणयस्य, या लक्ष्मीः,—शोभा, सीमन्तसिन्दूरादिधारणैः विवाहकालसम्भूता या अनिर्व्वचनीया सुषमेति यावत्, तस्याः परिग्रहः,—स्वीकारः एव, एकम्—अद्वितीयं, मण्डनं—भूषणं यस्य तथाविधम्; आहार्य्यशोभां विनैव वैवाहिकशोभया अतिरमणीयमित्यर्थः। प्रस्फुरदिति।—प्रस्फुरत्—विलसत्, शुद्ध—निर्म्मलं, हसितं—स्मितं यस्मिन् तथाविधम्, अत एव मुग्धं—मनोहरं, मुखं—वदनं, पुण्डरीकमिव—कमलमिव, [इत्युपमितसमासः]; मृदुहसितेन विकचधवलसिताम्भोजमिव मनोरमं तव मुखमिति भावः। स्मरामि—चिन्तयामि। आस्फुरत्यादि।—आ—सर्व्वतोभावेन, स्फुरन्ती—प्रकाशमाना, दिशो विदिशश्चान्तरालमपि समुल्लासयन्तीत्यर्थः; कौमुदस्य—कार्त्तिकमासस्य, शरत्कालस्येति यावत्, कालान्तरात् एतत्कालस्य सुधाप्रचुराभिः कौमुदीभिः समधिकसमुल्लासिततया

कञ्चुकी। यथाऽऽह देवी।—

पञ्चप्रसूतेरपि राज्ञ आसीत् प्रियो विशेषेण सुबाहुशत्रुः।
वधूचतुष्केऽपि यथैव शान्ता प्रिया तनूजाऽस्य तथैव सीता॥१६॥

---

तथा व्यवहारः इति ज्ञेयम्। चन्द्रस्य—शशधरस्य, या चन्द्रिका—ज्योत्स्ना, तद्वत् सुन्दरैः,—मनोरमैः, सुखस्पर्शैरिति यावत्, अङ्गैः,—अवयवैः, उल्लासय—आनन्दय, मच्छरीरं स्निग्धस्पर्शैः तवाङ्गकैः सुशीतलं कुरु इति समुदितार्थः। जाते!—हे वत्से! पुनरपि—भूयोऽपि, उत्सङ्गं—मदीयं क्रोड़म्, उद्योतय—प्रकाशय, सुशोभितं कुरु उपवेशनेनेति यावत्, सर्व्वदा—सर्व्वस्मिन्नेव काले, महाराजः,—दशरथः, भणति—कथयति। [अत्र अतीतेऽपि लटः प्रयोगः तात्कालिकत्वाभिप्रायेण, महाकविप्रयुक्तत्वाद्वा अविरुद्ध एवेति ज्ञेयम्]। रघ्वित्यादि।—रघुकुलस्य—रघुवंशस्य, महत्तराणाम्—अतिमहतां, भगवन्नत्प्रभृतीनामतिमहिमशालिनामस्मत्पूर्व्वपुरुषाणामित्यर्थः, वधूः,—स्नुषा, पुनः,—किन्तु, जनकसम्बन्धेन—राजर्षिजनकेन सह मित्रत्वसम्बन्धात्, दुहिता एव—कन्यैव; जनकेन सह मैत्री तस्य या कन्या सा ममापीति भावः।

अथ तदुक्तिं यथार्थत्वेन समर्थयति कञ्चुकी, पञ्चेति।—पञ्च प्रसूतयः अपत्यानि यस्य, तथाविधस्यापि, एका कन्या शान्ता, चत्वारः पुत्राः रामादयः इति मिलित्वा दशरथस्य पञ्चापत्यानि इति ज्ञेयम्; राज्ञः दशरथस्य, सुबाहुशत्रुः,—सुबाहुर्नाम रावणानुचरो राक्षसविशेषः, तस्य शत्रुः निहन्ता, रामः इत्यर्थः, विशेषेण अन्येभ्यः आधिक्येन, प्रियः प्रेमाऽऽस्पदीभूतः, आसीत् अभूत्; पञ्चभ्यश्चापत्येभ्यः राममेव महाराजः दशरथः निरतिशयं पिप्रायेति भावः; तनूजा कन्या, शान्ता महर्षेः ऋष्यशृङ्गस्य पत्नी, अस्य राज्ञः दशरथस्य, यथैव यादृगेव, प्रिया प्रीतिभाजनम्, आसीदिति शेषः, वधूचतुष्केऽपि—वधूनां सीतोर्म्मिलाश्रुतकीर्त्तिमाण्डवीनां, चतुष्केऽपि चतुष्टयेऽपि, चतसृषु सीताऽऽदिषु स्नुषासु इत्यर्थः, [ निर्द्धारणे सप्तमी। यद्यपि सर्व्वत्र निर्द्धारणार्थे बहुत्वस्यैव व्यवस्था भूयस्तया दृश्यते इति विभाव्यते, तथाऽप्यत्र एकवचनानुसरणेऽपि बहुत्वस्यार्थगतत्वेन सामञ्जस्यात् निरपवादमेवैतदिति ज्ञेयम् ]। सीता जानकी, तथैव तादृशी एव, शान्तावदेवेत्यर्थः, प्रिया प्रीतिकरी, आसीत् इति शेषः; सत्यमेतत्,—अपत्येषु रामे इव वधूषु सीतायामेवासौ राजा सातिशयं प्रीतिमान् बभूवेति भावः। [अत्र सीतारामरूपयोः प्रस्तुतयोः पदार्थयोरेकयैव आसीदिति क्रियया अभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः; शान्तया सह सीतायाश्च अवैधर्म्यसाम्योपदेशादुपमा च, इत्येतयोः परस्परसापेक्षतया स्थितेः सङ्करः]। उपजातिः वृत्तम्॥१६॥

जनकः । हा प्रियसख महाराज दशरथ ! एवमसि सर्वप्रकारहृदयङ्गमः कथं विस्मर्य्यसे ? (ख)—

कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं
सम्बन्धे विपरीतमेव तदभूदाराधनं ते मयि ।
त्वं कालेन तथाविधोऽप्यपहृतः सम्बन्धबीजन्तु तद्
घोरेऽस्मिन् मम जीवलोकनरके पापस्य धिग्जीवितम् ॥१७॥

(ख) प्रियसख !—प्रियबन्धो ! एवमसि—इत्थम्भूत एव भवसि । किम्भूतोऽसि एतदेवाऽऽह, सर्व्वेति ।—सर्व्वप्रकारेण—सर्व्वथा, हृदयङ्गमः,—हृदयं गच्छतीति ["गमेः सुप्युपसङ्ख्यानम्" (वा०) इति खच्प्रत्ययः] हृद्यः, मनसाऽऽह्लादक इत्यर्थः, त्वमिति शेषः; सत्यं हि यथार्थं स्निग्धया मैत्र्या हृदयाऽऽकर्षक एव भवसीत्यर्थः; कथं—केन प्रकारेण, विस्मर्य्यसे ?—मानसात् दूरीकर्त्तुं शक्यसे; त्वमेव हि मम परमनिजभूतः अभवः, यत् बहुतिथे काले व्यतीतेऽपि त्वामधुनाऽपि नाहं विस्मर्त्तुं पारयामीति भावः ।

अथ तादृशप्रियबन्धुवियोगात् स्वजीवने नितरामनास्थां प्रकटयति, कन्याया इति ।—कन्यायाः तनयायाः, वधूभूताया इति यावत्, पितरः पितृपितामहाऽऽदयः, जामातुः वरस्य, परिणेतुरित्यर्थः, आप्तं जनम् आत्मीयं लोकं, पितृपितृव्यादिस्वजनसमुदायमिति यावत्, पूजयन्ति संवर्द्धयन्ति, सत्कारेण आद्रियन्ते इत्यर्थः । किल इति प्रसिद्धौ । सम्बन्धे पारिणाय्यसम्पर्के, संस्थापिते सतीति शेषः, रामाऽऽदिभिः सह सीताऽऽदीनां परिणयेन रघुकुलनिमिकुलयोः सम्बन्धने सम्पन्ने सतीति भावः; ते तव, मयि जनके, तत् लोकप्रसिद्धं, जामातृस्वजनेषु कन्यागुरुजनकृतमित्यर्थः, आराधनं संवर्द्धनं, विपरीतमेव अन्यथाभूतमेव, सामाजिकरीत्यननुरूपमेवेत्यर्थः, अभूत् आसीत्; लोके हि कन्यागुरुजनाः जामातुः स्वजनान् संवर्द्धयन्ति इति दृश्यते, परन्तु जामातॄणां रामाऽऽदीनां गुरुभूताः अपि भवन्तः कन्याजनानां सीतोर्म्मिलाऽऽदीनां गुरुभूतान् अस्मान् जनकाऽऽदीन् सततमेव सौहार्दात् अपूपुजन्, इत्यहो भक्तिभावात् सौदार्य्याच्च भवन्तः स्वगौरवबाधसूचकं व्यवहारमपि पराञ्चिहत इति भावः; तथाविधोऽपि तादृशोऽपि, सौजन्यैकनिधिरपीत्यर्थः, त्वं भवान्, कालेन कृतान्तेन, अपहृतः लोकान्तरं नीतः, अकस्मात्कायात् बलात् ग्रहीतः इत्यर्थः, अहो निर्दयत्वं कालस्येति भावः; तत् तथाविधं, सीतापरिणि-

कौशल्या। जादे जाणइ! किं करेमि? दढवज्जलेवघडिअ-बन्धणिच्चलं ज्जेव हदजीविदं मं मन्दभाइणीं ण परिच्चअइ। * (द)

* जाते जानकि! किं करोमि? दृढवज्रलेपघटितबन्धनिश्चलमेव हतजीवितं मां मन्दभागिनीं न परित्यजति।

यावत्, सम्बन्धस्य वैवाहिकसंसर्गस्य, बीजं तु निदानमपि, अपहृतमिति क्रियाविपरिणामेनान्वयः; न केवलं निखिलगुणनिलयं प्रणयनिधिं भवन्तमपहृत्य कालोऽप्रीणात्, अपि तु तेन वैवाहिकसम्बन्धहेतुभूतां सीतामपि बलात् हृत्वा निःशेषमस्मत्सम्बन्धमूलमुच्छिद्य सातिशयं स्वपैशुन्यं व्यक्तीकृतमित्यहो! कारुण्यलेशविवर्जितत्वं कालस्येति तात्पर्यम्। घोरे भयङ्करे, सातिशयक्लेशसङ्कुले इत्यर्थः, अस्मिन् दृश्यमाने, जीवलोकनरके निरयभूते संसारे, पापस्य अपुण्यकृतः, दुराचारस्येत्यर्थः, ममजनकस्य, जीवितं प्राणान्, जीवनधारणमित्यर्थः, धिक् निन्दामि, निन्दनीयमेतदिति यावत्; अथाद्यपि सुहृदि विपन्ने, दुहितुश्च ईदृश्यामचिन्तितायां विषमायां दशायां समापतितायां, दग्धैवाहमिदानीं जीवनमुद्वहामि, अधुना मरणमेव मे श्रेयः इति भावः। [अत्र जीवलोके नरकस्याभेदाध्यासात् निरङ्गं रूपकमलङ्कारः]। शार्दूलविक्रीडितं वृत्तम्॥ १७॥

(द) जाते!—वत्से!, जानकि!—सीते! किं करोमि—किमनुतिष्ठामि; त्वद्वियोगे जीवनविसर्जनमेव मे सर्वदुःखप्रतीकारोपायभूततया साधीयः, किन्तु तत् न सम्भवति, तर्हि किमनुतिष्ठेयमहमधुनेति भावः। दृढेत्यादि।—दृढेन—कठोरेण, सुदीर्घकालस्थायिनेत्यर्थः, वज्रलेपेन—कुलिशमयदुर्भेद्यबन्धनेन, घटितः,—योजितः, सम्पादित इति यावत्, बन्धः,—बन्धनं यस्य तथाविधम्, अत एव निश्चलं—स्थिरम्; एतद्देहं विहायान्यत्र गन्तुमसमर्थमिति भावः। हतजीवितं—दग्धप्राणाः, मन्दभागिनीं—हतभागधेयां, मां—कौशल्यां, न परित्यजति—न विजहाति; यद्यपि त्वद्वियोगशोकविधुराऽहं नियतमेव जीवनं विसृष्टुं यते, तथाऽपि दृढबद्धाः मे प्राणाः एतद्देहं परित्यज्य गन्तुं न शक्नुवन्ति, सर्व्वविधः मे प्राणपरित्यागप्रयासः सर्वथैव निष्फलतामेतीति भावः।

अव । आश्वसिहि राजपुत्रि ! वाष्पविश्रामोऽप्यन्तराले कर्त्तव्य एव, अन्यच्च—किं न स्मरसि—यदवोचद्दृष्यशृङ्गाऽऽश्रमे युष्माकं कुलगुरुः ? तदुपजातमेव, किन्तु कल्याणोदर्कं भविष्यति । (ध)

कौशल्या । भगवदि ! अदिक्कन्तो मणोरहो । * (न)

अव । तत् किं मन्यसे राजपुत्रि ! मृषोद्यं तदिति ? नखेदं सुक्षत्रिये ! अन्यथा मन्तव्यं, भवितव्यमेव तेन । (प)—

* भगवती ! अतिक्रान्तो मनोरथः ।

(ध) राजपुत्रि !—कौशल्ये ! आश्वसिहि—समाश्वस्ता भव, त्वमिति शेषः वाष्पाणाम्—अश्रूणां, विश्रामः,—परिहारः, अन्तराले—अभ्यन्तरे, अन्तराऽन्तरेत्यर्थः, कर्त्तव्य एव—विधातव्य एव ; इत्थं निर्भरमनियतं शोकावेगात् मा रुदिहीति भावः । रोदनविरतौ हेतुं निर्दिशति, अन्यच्चेति ।—अन्यच्च—अपरञ्च, दुःखकारणात् भिन्नञ्चेत्यर्थः, सुखकारणमिति यावत्, किं न स्मरसि—किमधुना न चिन्तयसि ; किमिति तदित्याह,यदिति ।—युष्माकं—भवतीनां,कुलगुरुः,—कुलपुरोहितः, महर्षिः वशिष्ठ इत्यर्थः, ऋष्यशृङ्गस्य—जामातुः, आश्रमे—तपोवने, यदवोचत्—यदकथयत्, भद्रे ! पुत्रपूर्णोत्सङ्गामेव वधूं द्रक्ष्यसीति वचनं यदुदीरयदिति भावः। तदुपजातमेव—तादृशं वाक्यं सम्पन्नप्रायमेव, नाव संशयलेशोऽस्तीति एवशब्दार्थः, ऋषिवचसामन्यथाभवितुमनर्हत्वादित्याशयः । कल्याणोदर्कं—कल्याणं—शुभमेव, उदर्कः,—भावि फलं यस्य तत्, शुभपरिणाममित्यर्थः, भविष्यति—सम्पत्स्यते । अचिरादेव भवती सीतासुतौ कुशलवौ निरीक्षिष्यसे, अतः महाऽऽनन्दकरे वस्तुनि समापन्नमाने शोकं विमुच, अन्यथा रोदनस्याशुभकरत्वात् महानमर्थाऽऽपातो भविष्यतीति भावः ।

(न) मनोरथः,—अभिलाषः, सीतासमागमविषयक इति यावत्, अतिक्रान्तः,—विलुप्तः, विनष्ट इत्यर्थः ; श्वापदसङ्कुलेऽरण्ये जनस्थाने विवासितायाः सीतायाः जीवन्त्याः सम्भवेऽवासम्भवितत्वात्, तत्पुत्रदर्शनाऽऽशा सुतरामेव सुदूरं गतेति भावः ।

(प) राजपुत्रि !—हे नृपसुते ! कौशल्ये ! तत्—तर्हि, किं मन्यसे—किमवगच्छसि ? सम्भावयसीत्यर्थः ; तत्—कुलगुरोः वशिष्ठस्य वचनं, मृषोद्यं—मिथ्याभूतम्, [ मृषा मिथ्या, उद्यते कथ्यते इत्यर्थे मृषोपपदात् वदतेः "राजसूय-

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयो भूत् ।
भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता
नैते वाचं विप्लुतां व्याहरन्ति ॥ १८ ॥

[ नेपथ्ये कलकलः । सर्वे आकर्णयन्ति ] ।

---

सूर्य्यरुच्य—" (३।१।११४ पा०) इति क्यप् निपातितः ]। सुक्षत्रिये!—सत्कुल-वंशसम्भूते! [ क्षतः विपदः त्रायते इति क्षत्रः, तस्यापत्यमित्यर्थे "क्षत्राद्घः" (४।१।१३८ पा०) इति घप्रत्यये क्षत्रियः, तज्जातीया स्त्री इत्यर्थे "अर्य्यक्षत्रियाभ्यां —" (वा०) इति सूत्रेण आनुगागमे ङीषि च क्षत्रियाणी, पक्षे क्षत्रिया च सिद्धं पुंयोगे तु क्षत्रिया इत्यपि ज्ञेयम् ]। इदं—प्रोक्तं गुरुवचनम्। अन्यथा—अन्यप्रकारं, मिथ्याभूतमित्यर्थः, न हि—नैव, मन्तव्यम्—आशङ्कितव्यं, त्वयेति शेषः। तेन—गुरुवचनेन, भवितव्यमेव—अवश्यभाव्यमेव ; सुमङ्गलवचसामव्यर्थतया त्वं नूनमचिरा-देव पुत्रसुशोभितोत्सङ्गां वधूं जानकीं द्रक्ष्यसीति भावः।

अथ प्रज्ञाचक्षुषामृषीणां वचसामवितथतां प्रतिपादयति, आविर्भूतेति।—आविर्भूतं स्वयं प्रकाशितं, बुद्धिवृत्तौ प्रस्फुरितमिति यावत्, ज्योतिः तेजः, ब्रह्मतत्त्वरूपमित्यर्थः, येषां तेषां, कृतब्रह्मसाक्षात्काराणामिति भावः ; ब्राह्मणानाम् ऋषीणां वसिष्ठप्रभृतीनां, ये व्याहाराः उक्तयः, तेषु व्याहारेषु, [ अत्र बहुवचनं सर्वेषामेव वचसां सत्यताप्रतिपादनार्थमिति ज्ञेयम् ] संशयः सन्देहः, मिथ्यात्व-शङ्केत्यर्थः, मा भूत् न अस्तु, तवेति शेषः, हि यतः, एषाम् ऋषीणां, वाचि वचसि, भद्रा उत्तमा, ("भद्रो वाच्यवत् श्रेष्ठसाधुनोः" इति विश्वः) अव्याहतेति यावत्, लक्ष्मीः सिद्धिः, अविचलार्थसम्पत्तिरित्यर्थः, निषक्ता संलग्ना, नित्यानुबद्धा इति यावत्, अस्तीति शेषः ; तेन हि, एते ब्राह्मणाः, विप्लुतां मिथ्याभूतां, विफलामित्यर्थः, वाचं वाक्यं, न व्याहरन्ति न भाषन्ते; ब्रह्मविदां ब्राह्मणानां सत्यभाषितया नूनं तत् फलवत् भविष्यतीति भावः। [ अत्र तथाविधब्राह्मणानां व्याहृतेषु असंशयितत्वरूपकार्य्यस्य तद्वागविप्लुतत्वरूपकारणेन समर्थनात्, कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः]। शालिनी वृत्तम् ॥ १८ ॥

जनकः। अद्य खलु शिष्टानध्याय इत्युद्धतं खेलतां बटूनां कलकलः। (फ)

कौशल्या। सुलहसोक्खं दाव बालत्तणं होदि। [निरूप्य] अम्महे! एदाणं मज्झे को एसो रामभद्दलच्छीपरिसोहिदेहिं सावट्ठम्भमुद्धललिदेहिं अङ्गेहिं अम्हाणं वि लोअणाइं सीदलावेदि? * (ब)

* सुलभसौख्यं तावद् बालत्वं भवति। अहो! एतेषां मध्ये क एष रामभद्रलक्ष्मीपरिशोभितैः सावष्टम्भमुग्धललितैरङ्गैरस्माकमपि लोचनानि शीतलयति?

(फ) अथ बटूनां कोलाहले हेतुमुपन्यस्यति, अद्येति।—अद्य खलु—अस्मिन्नहनि एव, शिष्टानां—सदाचारानुवर्त्तिनां, वेदविदां ब्राह्मणानामित्यर्थः, तथा चोक्तं वसिष्ठेन षष्ठाध्यायावसाने,—"पारम्पर्य्यागतो येषां वेदः सपरिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः॥" इति। अनध्यायः,—वेदाध्ययनवर्ज्जनम्; तथा च स्मृतिः,—"अनध्यायश्च कर्त्तव्यः शिष्टे च गृहमागते" इति। जनसमागमे अनध्यायमाह भगवान् मनुरपि—"अनध्यायो द्रवमाने समवाये जनस्य च" इति (चतुर्थाध्याये १०८ सङ्ख्यकश्लोकार्द्धे)। सदाचारानुपालकानां महतां वसिष्ठप्रभृतीनामागमनात् भगवता वाल्मीकिना तेषामुपचारकरणार्थं सम्मानप्रदर्शनार्थञ्च बटूनां वेदाध्ययनाद्विरामः प्रदत्त इति भावः। इति—अस्मात् हेतोः, अध्ययनात् विरामलाभादित्यर्थः, उद्धतम्—अनियन्त्रितम्, उच्छृङ्खलमिति यावत्, खेलतां—परिक्रीडमानानां, बटूनां—ब्राह्मणबालकानां, कलकलः,—कोलाहलः, समुद्भूत इति शेषः।

(ब) बालत्वं—शैशवम्। सुलभेति।—सुलभम्—अक्लेशलभ्यं, सौख्यम्—आनन्दः, सुखसन्तानः इति यावत्, यस्मिन् तथाभूतं, बाल्ये वयसि हि वैषयिकविविधचिन्तानामनुदयात् चित्तोद्वेजककारणविरहाच्च कोमलमतयः शिशवः येन केनापि च वस्तुना विमलं सुखमुपभुञ्जते, सदा सुखेन कालं नयन्ति चेति भावः। निरूप्य—सम्यगवलोक्य। रामभद्रेति।—रामभद्रस्य—रामचन्द्रस्य, या लक्ष्मीः,—शरीरशोभा, तदङ्गसुषमासदृशसुषमेति यावत्, [ अत एव निदर्शनाऽलङ्कारः ] तया परिशोभितैः,—अलङ्कृतैः; अवष्टम्भेन—सौष्ठवेन सह वर्त्तमानानि, सावष्टम्भानि, सर्व्वेषां सुघटिततया निखरीरम्याणीत्यर्थः, ("सौष्ठवं स्यादवष्टम्भः" इति हलायुधः)

अत्र। [अपवार्य्य सहर्षोत्कण्ठं स्वगतम्]। इदं नाम तद्भागीरथी-निवेदितरहस्यं कर्णामृतं, न त्वेवं विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति। (भ)

जनकः। कुवलयदलश्यामस्निग्धः शिखण्डकमण्डनो
वटुपरिषदं पुण्यश्लोकः श्रियेव सभाजयन्।
पुनरपि शिशुर्भूत्वा वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम्? ॥१९॥

---

अत एव मुग्धानि—हृदयाकर्षकाणि, मनोहराणीति यावत्, ललितानि—सुकुमाराणि, विन्यासमाधुर्य्यसमन्वितानि इति यावत्, तैः; तथा चोक्तम् उज्ज्वलनीलमणौ,—"विन्यासभङ्गिरङ्गानां भ्रूविलासमनोहरा। सुकुमारा भवेद् यत्र ललितं तदुदीरितम्॥" इति। अङ्गैः,—अवयवैः, अस्माकमपि—कौशल्यादीनां, शोकविकलेन्द्रियाणामित्यपिकारार्थः। लोचनानि—नयनानि, शीतलयति—प्रीणयति, रञ्जयतीत्यर्थः।

(भ) अपवार्य्य—कौशल्यादयः प्रस्तुतरहस्यं यथा न शृण्वन्ति तथा पराङ्मुखीभूय प्रकाश्येत्यर्थः, "तद्भवेदपवारितम्। रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते" इति दर्पणात्। हर्षः,—आनन्दः, उत्कण्ठा—औत्सुक्यञ्च, ताभ्यां सह वर्त्तमानं यथा तथा, स्वगतम्—आत्मगतम्, आहेति शेषः। भागीरथ्या—गङ्गया, निवेदितं—मां प्रति कथितं, रहस्यं—गोप्यं, जन्मावस्थित्यादिकमित्यर्थः यस्य तत्, कर्णामृतं—कर्णयोः,—श्रवणयोः, अमृतं—सुधा, तदिव सुखकरमित्यर्थः। इदं नाम तत्—कर्णसुखजनकलवकुशाख्यसीतापुत्रद्वयरूपं वस्त्वित्यर्थः। पुरा भागीरथी अवचनत्प्रेर्षं सीतासुतद्वयविषयकं यद्वचनमस्मभ्यमुवाच, अन्ये तद्वाक्यविषयभूतः सीतासुतः कोऽप्यु बालकेषु कश्चिद् भविष्यति इति भावः। अनुमाय सामान्यतः ज्ञातुं शक्तत्वेऽपि विशिष्य ज्ञानाभावमाह, न त्वेवमिति।—तु—किन्तु, एवम्—इत्थं, न विद्मः,—न जानीमः, [अत्र बहुवचनप्रयोगस्तु परमसुखजनकरामभद्रतनयावलोकनेन स्वस्मिन् माहात्म्यं द्योतयति इति विभाव्यम्]। आयुष्मतोः,—दीर्घजीविनोः। अयं कतरः,—कुशो लवो वेत्यर्थः।

अथ रामचन्द्रस्याङ्गसौष्ठवसाम्यात् वटुष्वेकं सीतासुतं प्रत्यभिज्ञाय सातिशयं हर्षमनुभवति, कुवलयेति।—कुवलयस्य नीलोत्पलस्य, दलानीव पत्राणीव, श्यामः मेचकः, स्निग्धः मसृणश्च, इन्दीवरकुसुममिव श्यामलसौम्यमूर्त्तिरित्यर्थः; शिखण्डकाः

कञ्चुकी। नूनं क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये। (म)

जनकः। एवमेव। तथा हि,—

चूड़ाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम्।

काकपक्षाः एव, मण्डनं भूषणं यस्य सः, काकपक्षधरः इति यावत्; पुण्या पवित्रा, श्रीः शोभा, यस्य सः, [ "शेषाद्विभाषा" (५।४।१५४ पा०) इति समासान्तः वैभाषिकः कप्रत्ययः, ] पवित्रलक्ष्मीकः इत्यर्थः; वटूनां विप्रबालकानां, परिषदं समाजं, श्रिया शरीरलावण्येन, सभाजयन् इव भूषयन्निव, ["सभाज प्रीतिदर्शनयोः" इति ( चु० उ० सक० से० ) धातोर्णिचि शत्रन्तस्य रूपम् ] स्थित इति शेषः, स वत्सः आयुष्मान्, रघुनन्दनः रामचन्द्रः, पुनः भूयः, शिशुः बालः, भूत्वा इव सम्भूयेव, बालरूपतामापन्न इवेत्यर्थः, दृष्टः अवलोकितः, शिशुरूपी भूत्वा मे नेत्रपथमापतितः इति यावत्; अयं पुरतः स्थितः, कः शिशुः, झटिति सत्वरमेव, दृशोः मम नयनयोः, अमृताञ्जनम् अमृतस्य सुधायाः, अञ्जनम् अमृत[illegible]या वर्त्या विलेपनं, कुरुते विदधातीव, शिशु रघुनन्दनसादृश्यात बालकोऽयं तदपत्य[illegible]धियमेव समुत्पादयति इति भावः। [अत्र कुवलयदलेनावैधर्म्यसाम्योपदेशात् समासगता लुप्तोपमाऽलङ्कारः; सभाजयन्निवेति शिशुर्भूत्वेवेति च वाच्या क्रियोत्प्रेक्षानयर्म्। अमृताञ्जनं कुरुते इत्यत्र तु प्रतीयमाना क्रियोत्प्रेक्षाऽलङ्कारः, एतेषां परस्परनैरपेक्ष्येण स्थितेः संसृष्टिः ]। हरिणी वृत्तम्॥ १९॥

(म) ब्रह्म—वेदं, चरति—अधीते यः सः, ब्रह्मचारी—उपनयनात् परं गुरुकुलमध्युष्य वेदमधीयानः बालकः, क्षत्रियश्चासौ ब्रह्मचारी चेति, जात्या क्षत्रियः वेदाध्येता इत्यर्थः, अयं—पुरतः दृश्यमानः इति यावत्, दारकः,—शिशुः, माणवक इति यावत्, इति मन्ये—इत्थं सम्भावयामि; मौञ्जीवसनादिलक्षणैरिति भावः।

ब्रह्मचारिविधृतविशेषलक्षणैः बालस्यास्य क्षत्रियत्वमेव प्रतिपादयति, चूड़ेति।— पृष्ठतः पृष्ठदेशम्, अभितः उभयतः, पृष्ठस्य उभयोः पार्श्वयोः इत्यर्थः, ["अभितःपरितः समया—" (वा०) इति द्वितीया, तसिलः सार्व्वविभक्तिकत्वेन द्वितीयास्थाने तसिल् प्रत्ययः इति ज्ञेयम् ]। चूड़ाचुम्बितकङ्कपत्रं—चूड़ाभिः शिखाभिः, चुम्बितानि संस्पृष्टानि, कङ्कस्य पक्षिविशेषस्य, "काड़्गिला" इति वङ्गभाषाप्रसिद्धस्य, पत्राणि बाणपुङ्खस्थिताः पक्षाः यस्य तथाविधं, तूणीद्वयम्—इषुधियुगलं, उन्नमानशिखा संस्पृष्टसायकाग्रं बाणाधारयुगलमित्यर्थः, ("तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः।

मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठिकं
पाणौ कार्मुकमक्षसूत्रवलयं दण्डं तथा पैप्पलम् ॥२०॥

सूक्ष्माम्" इत्यमरः) ; तथा भस्मनां विभूतीनां, स्तोकेन अल्पपरिमाणेन, अल्पभस्मनेत्यर्थः ; यद्वा—स्तोकं स्वल्पं भस्म तेन, ["पोटायुवतिस्तोक—" (२।१।६५ पा०) इति समासात् स्तोकशब्दस्य परनिपातः। "भस्मस्तोक—" इत्यत्र "भस्मस्तोम—" इति पाठे,—भस्मनां स्तोमः समूहः तेनेत्यर्थः,] पवित्रं पूतं, लाञ्छनं चिह्नं यस्य तत्, भस्मभूतिभूषितमित्यर्थः, उरः वक्षःस्थलम्, अपि च रौरवीं रुरुमृगसम्बन्धीयां, त्वचं चर्म्म, उत्तरीयमित्यर्थः, धत्ते धारयति, अयं दारक इति शेषः। अपि च मूर्वी लताविशेषः, तस्या इयं मौर्वी तया, मूर्व्वालतातन्तुनिर्म्मितयेत्यर्थः, मेखलया कटिसूत्रेण, नियन्त्रितं संयमितं, माञ्जिष्ठिकं मञ्जिष्ठया तन्नाम्ना रञ्जकद्रव्येण रक्तं, मञ्जिष्ठारागरञ्जितमित्यर्थः, [माञ्जिष्ठिकम् इति "लाक्षारोचनाट्ठक्" (४।२।२ पा०) इत्यतिदेशबलात् शैषिकेण वा ठक्। वस्तुतस्तु "माञ्जिष्ठकम्" इति पाठः समीचीनः "तेन रक्तं रागात्" (४।२।१ पा०) इत्यनेन अण्प्रत्ययः, ततः स्वा[illegible]] ; अधोवासश्च परिधेयवसनञ्च, तथा तद्वत् ; पाणौ हस्ते, कार्म्मुकं शरासनम्, अक्षसूत्रवलयं वलयाकारमक्षसूत्रं, जपमालामित्यर्थः, पिप्पलः अश्वत्थः, तच्छाखानिर्म्मितं पैप्पलं, दण्डं ललाटपरिमितां यष्टिं, धत्ते इत्यनुषङ्गेणान्वयः। एतैः क्षत्रियब्रह्मचारिलक्षणैः नूनमेव क्षत्रियब्रह्मचारी भवतीति भावः। ब्रह्मचर्य्यविधौ ब्रह्मचारिणां धारणीयद्रव्यमाह भगवान् मनुर्यथा,—"कार्ष्णरौरववास्तानि चर्म्माणि ब्रह्मचारिणः। वसीरन्नानुपूर्व्व्येण शाणक्षौमाविकानि च॥ मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्य्या विप्रस्य मेखला। क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी॥......कार्पासमुपवीतं स्याद्विप्रस्योर्द्ध्ववृतं त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्॥ ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ। पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्म्मतः॥" इति द्वितीयाध्याये ४१—४५ श्लोकाः। दण्डप्रमाणमाह तत्रैव,—"केशान्तिको ब्राह्मणस्य दण्डः कार्य्यः प्रमाणतः। ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः।" इति ४६ श्लोकः। [अत्र त्वचः प्रभृति दण्डं यावत् अनेकेषां प्रस्तुतानां पदार्थानाम् एकया धत्ते इति क्रियया अभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः ; स च रौरववासःप्रभृतिभिर्विशिष्टैर्हेतुभिः क्षत्रियब्रह्मचारित्वरूपसाध्यस्यानुभूयमानत्वेन जायमानानुमानालङ्कारसङ्कीर्णः। दण्डिमते तु,—"जातिक्रियागुणद्रव्यवाचिनैकत्रवर्त्तिना। सर्व्ववाक्योपकारश्चेत्तमाहुर्दीपकं यथा॥" इति वचनात् क्रियादीपकालङ्कारः]। शार्दूलविक्रीडितं वृत्तम्॥ २०॥

भगवति अरुन्धति ! किमुत्प्रेक्षसे कुतस्त्योऽयमिति ? (य)

अरु । अद्यैव वयमप्यागताः । (र)

जनकः । आर्य्य गृष्टे ! अतीव मे कौतुकं वर्त्तते । तद्भगवन्तं वाल्मीकिमेव गत्वा पृच्छ, इमञ्च बालकं ब्रूहि, केऽप्येते प्रवयसस्त्वां दिदृक्षव इति । (ल)

कञ्चुकी । यदाज्ञापयसि । [ इति निष्क्रान्तः ] ।

कौशल्या । किं भणध ? एव्वं भणिदो आगमिस्सदित्ति ? * (व)

अरु । भिद्येत किं सद्वृत्तमीदृशस्य निर्माणस्य ? (श)

---

* किं भणथ ? एवं भणित आगमिष्यतीति ?

---

(य) अयम्—एषः पुरतो दृश्यमानः बालकः, कुतस्त्यः,—कस्मात् भवः, कस्मात् पितुः मातुश्चायं प्रसूत इत्यर्थः, [ "पञ्चम्यास्तसिल्" ( ५।३।७ पा० ) इति तसिल्-प्रत्यये, "कु तिहोः" ( ७।२।१०४ पा० ) इति किमः कुरादेशः ; "अव्ययात् त्यप्" ( ४।२।१०४ पा० ) इति त्यप्प्रत्ययश्च ] । इति—अत्र विषये, किमुत्प्रेक्षसे—किं मन्यसे, किमनुमिनोषि इत्यर्थः, तद् ब्रूहीति शेषः ।

(र) वयमपि—यूयं यथा तथैव इत्यपिशब्दार्थः, आगताः,—अत्र समुपस्थिताः ; अतः सम्यक् न विद्मः इति भावः ।

(ल) आर्य्य !—मान्य !, गृष्टे—कञ्चुकिन् ? गृष्टिरिति कञ्चुकिनो नामैतदिति ज्ञेयम् । केऽपि एते—तवापरिचिता इमे जना इत्यर्थः, प्रवयसः,—प्रकृष्टं—समधिकमित्यर्थः, वयः,—जीवनकालो येषां ते तथोक्ताः, अतिवृद्धा इत्यर्थः, दिदृक्षवः,—द्रष्टुमिच्छवः, सञ्जाताः इति शेषः । समागताः वृद्धाः अतिशयः त्वां द्रष्टुमिच्छन्ति, अतः तत्समीपं गत्वा तेषामाशां परिपूरय इति बालकं ब्रूहीति समुदितार्थः ।

(व) किं भणथ ?—किं कथयथ ? एवम्—इत्थं, भणितः,—कथितः सन्, आगमिष्यति—आयास्यति, इति—एतत् । युष्माकमाज्ञानुश्रवणमात्रमेवासौ बालकः सम्भ्रमं सत्वरमेवाऽऽगमिष्यति, इति किं वदथेति भावः ।

(श) ईदृशस्य—एवंविधस्य अलौकिकधैर्य्यगाम्भीर्य्यादिसम्पन्नस्येत्यर्थः, निर्माणस्य—निर्मितस्य वस्तुनः,—"कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात्, लोकोत्तरधीसम्पन्नस्यामुष्य बालकस्येति यावत् । सद्वृत्तं—साधुशीलं, सदाचरणमिति

कौशल्या। [निरूप्य]। कहं सविणअं णिसामिदगिट्ठिवअणो विसज्जिदइसिदारओ इदो अहिमुहं पसरिदो ज्जेव सो वच्छो। * (घ)

जनकः। [चिरं निर्वर्ण्य]। भोः किमप्येतत्?—

महिम्नामेतस्मिन् विनयशिशुतामौग्ध्यमसृणो
विदग्धैर्निर्ग्राह्यो न पुनरविदग्धैरतिशयः।

* कथं सविनयं निशामितगृष्टिवचनो विसर्जितर्षिदारकः इतोऽभिमुखं प्रसृत एव स वत्सः।

यावत्, किं भिद्येत?—किं विलुप्येत? स्वयमेव किं नश्येत? इत्यर्थः। [कर्मकर्त्तरि चायं प्रयोगः,] "यत्राऽऽकृतिस्तत्र गुणा वसन्ति" इति न्यायात्; "न ह्याकृतिः सुसदृशं विजहाति वृत्तम्" इति भावः।

(घ) निरूप्य—सविशेषमवलोक्य। निशामितेत्यादि।—निशामितं—श्रुतं, गृष्टेः,—तदाख्यस्य कञ्चुकिनः, वचनं—वाक्यं येन तथोक्तः। विसर्जितेत्यादि।—विसर्जिताः,—परित्यक्ताः, ऋषीणां—मुनीनां, दारकाः,—बालकाः येन सः, इतः,—अस्मिन् देशे, अभिमुखम्—अस्माकं सम्मुखं, प्रसृतः एव—प्रस्थितः एव, वत्सः,—बालकः; अस्मदीयगौरवात् असौ शिशुः कञ्चुकिवचनं श्रुत्वैव सर्व्वान् बालकान् परिहाय अस्मदभिमुखमित एवाभिवर्त्तते इति दृश्यते इति भावः।

अथ शिशौ महिमाऽऽतिशय्यं दृष्ट्वा आत्मनः विलक्षणीभावं विवृणोति, महिम्नामिति।—एतस्मिन् पुरतः दृश्यमाने अस्मिन् शिशावित्यर्थः, अवस्थित इति शेषः। विनयेत्यादि।—विनयेन नम्रतया, शिशुतया शैशवेन, तथा मौग्ध्येन सौन्दर्य्येण च, मसृणः कोमलः, महिम्नां महत्त्वानां, शौर्य्यगाम्भीर्य्याऽऽदिसूचिततेजसामिति यावत्, अतिशयः आधिक्यं, विदग्धैः सुधीभिः, निर्ग्राह्यः निःशेषेणैव ग्रहीतुं शक्यः, सुबोध्यः इति यावत्, न पुनरविदग्धैः अपण्डितैः, निर्ग्राह्यः इत्यनेनान्वयः। एतस्मिन् बालके भूयांस एव विनयशिशुतासौन्दर्य्यविमिश्रिताः महिमनिचयाः तिष्ठन्ति, तान् तु सुधियः विना अन्ये केऽपि सहसा ज्ञातुं न प्रभवन्तीति भावः।

मनो मे इति।—यद्वत् यथा, परिलघुः अत्यल्पोऽपि, अयस्कान्तस्य लौहाऽऽकर्षकमणिविशेषस्य, शकलः खण्डः, अयोधातुं लौहं, हरति आकर्षति, तद्वदिति शेषः, मे मम, वत्सान् अतिशयवत्सः, सम्मोहः मुग्धता, बालकाकारोत्थ-

मनो मे सम्मोहः स्थिरमपि हरत्येव बलवान्
अयोधातुं यद्वत् परिलघुरयस्कान्तशकलः ॥२१॥

लवः। [प्रविश्य स्वगतम्]। अज्ञातनामक्रमाभिजनान् पूज्यानपि नः स्वतः कथमभिवादयिष्ये? [विचिन्त्य]। अयं पुनरविरुद्धः प्रकार इति वृद्धेभ्यः श्रूयते। [सविनयमुपसृत्य]। एष वो लवस्य प्रणामपर्यायः। (घ)

---

सामान्यं महिमानमवलोक्य विस्मयविवशतेति यावत्, स्थिरमपि निश्चलमपि, निर्व्विकारमपीत्यर्थः, मनः चेतः, हरत्येव आकर्षत्येव; सततं वेदान्तशास्त्रादि-समालोचनेन तपःसमाध्यनुष्ठानेन च सुस्थिरमपि चेतः मे इदानीं धैर्य्यं धारयितुं न शक्नोतीति भावः। ["सम्मोहः" इत्यत्र "सम्मादः" इति पाठान्तरं दृश्यते, एतद्दर्शनजनितः आनन्दातिशयः इति तु तदर्थः]। माहशामपि चेतसामाकर्षणात् मन्ये, अयं कोऽपि महामहिमशाली बालको भविष्यति इत्याशयः। [अत्र महिमा-ऽऽतिशय्यसम्पादने विनयादिगुणसमूहानां तत्कारणत्वेन समावेशात् समुच्चयालङ्कारः; अपि च विदग्धानां निर्वाच्यत्वेन व्यवस्थापनात् तद्भिन्नानाञ्च निषेधात् परिसङ्ख्यालङ्कारः; एवमयस्कान्तशकलेन सह बालकस्यास्य वैधर्म्मसाम्योपदेशाच्च श्रौती उपमाऽलङ्कारः। एतेषामलङ्कारत्रयाणां परस्परनिरपेक्षतया स्थितेः संसृष्टिः]। शिखरिणी वृत्तम् ॥२१॥

(घ) अज्ञातेत्यादि।—नाम—नामधेयं, क्रमः,—यथायोग्यम् अभिवादन-पौर्व्वापर्य्यम्, अभिजनः,—वंशश्च, ते अज्ञाताः,—अविदिताः येषां तथोक्तान्, अज्ञातनामैतेषां वृद्धानां नाम जातिं वंशञ्चाहं किमपि नाभिजानामीति भावः। नः,—अस्माकं, पूज्यान्—पूजनीयानपि, संवर्द्धनायोग्यानपीत्यर्थः, स्वतः,—स्वयं, कथं—केन प्रकारेण, अभिवादयिष्ये?—संवर्द्धयिष्ये? नमस्करिष्यामीत्यर्थः। विचिन्त्य—चर्चं विभाव्य। अयं पुनः,—एष एव हि, अधुना स्मृतिपथे समुदित इत्यर्थः, अविरुद्धः,—अविगीतः, लोकतः शास्त्रतः धर्म्मतश्च अनिन्दितः इति यावत्, प्रकारः,—विधिः, भवतीति शेषः, इति—एवं, वृद्धेभ्यः,—प्राचीनगुरुभ्यः, श्रूयते—आकर्ण्यते। किं तत्? एतदेवाह, एष इति।—एषः,—इदानीमनुष्ठीयमानः, वः,—युष्माकं, लवस्य—मे, प्रणामानां—नमस्काराणां, पर्य्यायः,—क्रमः, प्रणामपरम्परेत्यर्थः; अहन्तु युगपत् सर्व्वानेवाभिवादये, तत्रभवतां नामजात्यादिविशेषविज्ञानाभावात्, तत्तु क्रमशः भवन्तः स्वयमेव पौर्व्वापर्य्य-क्रमेण गृह्णन्तु इत्याशयः।

अरुन्धतीजनकौ। कल्याणिन्! आयुष्मान् भूयाः। (ङ)

कौशल्या। जाद! मे चिरं जीव। *

जन। एहि वत्स! [इति उत्सङ्गमारोप्य कृत्वा स्वगतम्]। दिष्ट्या न केवलमुत्सङ्गः, चिरात् मनोरथो मे सम्पूर्णः। (च)

कौशल्या। जाद! इदो वि दाव एहि। [उत्सङ्गे कृत्वा] अम्महे! ण केवलं दरविअसन्तणीलुप्पलसामलुज्जलेण देहबन्धेण कवलिदारविन्दकेसरकसाअकण्ठकलहंसघोसघग्घरसरेण अ रामभद्दमणुहरदि, णं कठिणकमलगब्भपम्हलो सरीरप्फंसोवि तादिसो ज्जेव वच्छस्स!! जाद! पेक्खामि दाव दे मुहम्। [चिबुकमुन्नमय्य निरूप्य सबाष्पाऽऽकूतम्]। राएसि! किं ण पेक्खसि, णिउणं णिरूविज्जमाणं से मुहं वच्छाए बहूए मुहचन्द्रेण संवददि ज्जेव। † (छ)

* जात! मे चिरं जीव।

† जात! इतोऽपि तावदेहि। अहो! न केवलं दरविकसन्नीलोत्पलश्यामलोज्ज्वलेन देहबन्धेन कवलितारविन्दकेसरकषायकण्ठकलहंसनिनाददीर्घदीर्घेण स्वरेण च रामभद्रमनुहरति, ननु कठिनकमलगर्भपक्ष्मलः शरीरस्पर्शोऽपि तादृश एव वत्सस्य!! जात! प्रेक्षे तावत् ते मुखम्। राजर्षे! किं न प्रेक्षसे, निपुणं निरूप्यमाणम् अस्य मुखं वत्साया बध्वा मुखचन्द्रेण संवदति एव?

(ङ) कल्याणिन्—शुभमय! आयुष्मान्—दीर्घायुः, भूयाः,—भवेथाः, सुचिरं जीवनं लभस्व इत्यर्थः।

(च) वत्स!—हे बालक! एहि—मत्समीपमागच्छ। उत्सङ्गे—क्रोडे, कृत्वा—संस्थाप्य, स्वगतम्—आत्मगतम्, आहेति शेषः। दिष्ट्या—भाग्येन, उत्सङ्गः,—क्रोडदेशः, केवलम्—एकमात्रं, न सम्पूर्णः,—न परिपूर्णतां गतः, चिरात्—बहुकालात् परम्, अपि तु मनोरथः,—सीतायाः सुतं स्वक्रोडे धारयिष्यामीत्यभिलाषः, सम्पूर्णः इत्यन्वयः।

(छ) जात!—वत्स! इतोऽपि—अस्मिन् अपि, उत्सङ्गदेशे, एहि—आगच्छ; अवयवाः अवयवानां इव ममापि उत्सङ्गदेशमध्युष इत्यर्थः। इदो वि—इतः—

जनकः । पश्यामि सखि ! पश्यामि ।

कौशल्या । अम्हो ! उम्मत्तीभूदं विअ मे हिअअं किम्पि चिन्तअन्तो बहु विप्पलवदि । * (ग)

* अहो ! उन्मत्तीभूतमिव मे हृदयं किमपि चिन्तयत् बहु विप्रलपति ।

ईषत्, विकसन—प्रस्फुटन्, यत् नीलोत्पलम्—इन्दीवरं, तद्वत् श्यामलः,—श्यामवर्णः, समुज्ज्वल इत्यर्थः, उज्ज्वल—मुदैर्घ्येण तेन ; देहबन्धेन—शरीरसंस्थानेन । कलहंसेत्यादि —तरुणितः,—भणितः, यः अरविन्दानां—पद्मानां, केसरः,— किञ्जल्कः, ("किञ्जल्कः केसरोऽस्त्रियाम्" इत्यमरः), तेन कषायः,—रक्तः, सुमधुर इत्यर्थः, कण्ठः,—कण्ठस्वरः यस्य तादृशः, यः कलहंसः—राजहंसः, तस्य निनादः इव—ध्वनिरिव, दीर्घदीर्घः,—दीर्घप्रकारः इत्यर्थः. [प्रकारे गुणवचनस्य (८।१।१२ पा०) इति द्विर्भावः], सुदीर्घः इति यावत्, तेन ; स्वरेण च—ध्वनिना च, रामभद्रं—रामचन्द्रम्, अनुकरोति—अनुकरोति ; अस्य बालस्य देहः यथा रामचन्द्रसदृशः सुनीलः समुन्नतश्च, तथा अस्य कण्ठस्वरोऽपि इति निष्कर्षः । [“हरतेर्गतताच्छील्ये” (वा० ) इत्यनेन अनुपूर्व्वकात् हरतेः गत्यनुकारे एव आत्मनेपदमनुशिष्टम्, अत्र तु स्वरानुकरणार्थकत्वात् नाऽऽत्मनेपदमिति ज्ञेयम् ] । अपि चास्य देहस्पर्शोऽपि रामचन्द्रस्पर्शवदतिसुखकर एवेत्यावेदयति, नन्विति ।—कठिनस्य—कठोरस्य, परिपूर्णावयवस्येत्यर्थः, कमलस्य—पद्मस्य, यो गर्भः,—अभ्यन्तरभागः, तद्वत् पक्ष्मलः,—सुकुमारः, [पक्ष्मशब्दात् मत्वर्थीयो लच्प्रत्ययः] ; शरीरस्पर्शोऽपि—देहस्पर्शोऽपि, तादृश एव—रामभद्रस्पर्शानुरूप एव, वत्सस्य—अस्य बालकस्य । जात !—वत्स ! प्रेक्षे—पश्यामि, ते मुखं—तव वदनम् । चिबुकम्—अधरनिम्नभागम्, उन्नमय्य—उत्तोल्य, मुखनिरीक्षणार्थमिति भावः, निरूप्य—सविशेषं दृष्ट्वा ; सबाष्पाऽऽकूतं—बाष्पं—हर्षजनिताश्रु, आकूतम्—अभिप्रायश्च, ताभ्यां सह वर्त्तमानं यथा तथा, आहेति शेषः, सीतासुतोऽयमिति विभाव्य बाष्पमाचरन्नेतद्वचनमाहेति भावः । राजर्षे !—जनक ! किं न प्रेक्षसे ?—न पश्यसि किम् ? निपुणं—सावधानं, पुङ्खानुपुङ्खम् इत्यर्थः, निरूप्यमाणं—निरीक्ष्यमाणम्, अस्य मुखं—बालकस्य वदनं, वत्सायाः वध्वाः,—पुत्र्याः सीतायाः, मुखचन्द्रेण—वदनेन्दुना, संवदति एव—अनुकरोति एव, साम्यं प्रकटयत्येव इत्यर्थः ।

(ग) अहो !—आश्चर्य्यम् ! उन्मत्तीभूतमिव—विभ्रान्तमिव, एतस्मिन् बालके सीतारामप्रतिकृतिं दृष्ट्वा विह्वलीभूतमिवेत्यर्थः, मे—मम, हृदयं—मानसं, किमपि—

जनकः। [ निरूप्य ]।—

**वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते**
**सम्पूर्णप्रतिबिम्बितेव निखिला सैवाऽऽकृतिः सा द्युतिः।**

अचिन्तितं वस्तु, चिन्तयत्—अनिशं भावयत्, बहु—नानाविधं, विप्लवति—परिवर्त्तयति, विविधं तर्कयति इत्यर्थः; सीतासुतोऽयमिति कनायत्र मद्हृदयं नितरां विवशमेव भवतीति भावः।

अथ बालके चैतस्मिन् सीतारामयोः सर्व्वथा शरीरव्यवहारादीनां साम्यं प्रकटयति, वत्सायाश्चेति।—अस्मिन् शिशौ कुमारे, वत्सायाः सीतायाश्च, रघूद्वहस्य रघूणामपत्यानि पुमांसः रघवः, ["जनपदशब्दात् क्षत्रियादञ्" (४।१।१६८ पा०) इत्यञ्, "तद्राजस्य बहुषु तेनैवास्त्रियाम्" (२।४।६२ पा०) इत्यञो लुक् बहुत्वञ्च]; तेषामुद्वहः धुरन्धरः तस्य, रामस्य चेत्यर्थः, निखिला समग्रा, सैव तादृश्येव, आकृतिः अवयवसंस्थानं, सा द्युतिः तथाभूतैव कान्तिः,[अत्र तच्छब्दस्य प्रसिद्धार्थकतया यच्छब्दस्यापेक्षा नास्तीति ज्ञेयम्]; सम्पूर्णं समग्रम्, अविकलं यथा तथेत्यर्थः, प्रतिबिम्बिता एव प्रतिफलिता एव; [प्रतिबिम्बमस्याः सञ्जातमित्यर्थे "तदस्य सञ्जातम्"—(५।२।३६ पा०) इति इतचि टाप् चेति ज्ञेयम्]। अभिव्यज्यते लक्ष्यते; सीतायाः रामस्य च शरीरलावण्ययोः सर्व्वथैव साम्यमेतस्मिन् बालके परिलक्ष्यते इति भावः। अपि च नैसर्गिकाः गुणाः अपि दर्पणादौ छायापात इवास्मिन् शिशौ सङ्क्रान्ता इति प्रदर्शयति, सेति।—सा वाणी तत्सदृशमेव वचनं, स एव विनयः तदनुरूप एव नम्रभावः, अतोऽपि सहजः स्वाभाविकः, अकृत्रिम इति यावत्, पुण्यानुभावः पवित्रः प्रभावः, अभिव्यज्यते इत्यनेनान्वयः। अथवा दुराकाङ्क्षया प्रतारित एवाहमित्थं तर्कयामि, इत्यनुशोचति, हा हेति।—हा हा दैव! अहो भागधेय! पारिप्लवं चञ्चलं, सीतारामयोः आकृतिसाम्यमवलोक्य तयोरेवायं पुत्रो न वा इति निर्णेतुमसमर्थतया अतीव व्याकुलमिति यावत्, मम मनः चेतः, किं कथम्, उत्पथैः विपरीतमार्गैः, असम्भव-कल्पनापथैरित्यर्थः, [उत्क्रान्ताः पन्थानः इति विग्रहे "ऋक्पूरब्धूःपथामानक्षे" (५।४।७४ पा०) इति समासान्तः अप्रत्ययः]; धावति? द्रुतं गच्छति? सीतायाः अप्रसवेन तदपत्योत्पत्तेरसम्भावितत्वात् केवलं तदाकृतिसादृश्येन तत्सुत एवायमिति विभाव्य मानसं मे कथं हि नियतं पर्य्याकुलीभवतीति न जाने इति भावः। रघौ एतदनुरूपः श्लोकः दृश्यते, यथा,—

"रूपं तदोजस्वि तदेव वीर्य्यं तदेव नैसर्गिकमुन्नतत्वम्।
न कारणात् स्वाद्विभिदे कुमारः प्रवर्त्तितो दीप इव प्रदीपात्"॥ इति।

सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ,
हा हा देव ! किमुत्पथैर्मम मनः पारिप्लवं धावति ? ॥ २२ ॥

कौशल्या । अत्थि दे मादा ? सुमरसि वा तादं ? * (घ)

लवः । ण हि ण हि । (ङ)

कौशल्या । तदो कस्स तुमं ? † (च) ।

लवः । भगवतो वाल्मीकेः । (छ)

कौशल्या । अइ जाद ! कहिदव्वं कहेहि । ‡ (ज)

---

* अस्ति ते माता ? स्मरसि वा तातम् ?

† ततः कस्य त्वम् ?

‡ अयि जात ! कथयितव्यं कथय ।

---

[ अत्र आकृत्यादीनां सर्वेषां भेदेऽपि तद्रूपत्वेनाभेदाध्यवसायात् भेदे अभेदरूपाऽतिशयोक्तिरलङ्कारः । अभिव्यज्यते इत्येकयैव क्रियया सर्वेषां प्रस्तुतानामाकृत्यादीनामभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः । अपि चोत्पथधावति इत्यनेन भङ्ग्या आश्रितसीताऽभावरूपस्य गम्यस्य वस्तुनः अभिधानात् पर्यायोक्तिरलङ्कारः ; एतेषाञ्च परस्परमपेक्षतया स्थितेः सङ्करः ] । शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

(घ) तातं—जनकं वा, स्मरसि ?—जानासि ? तव मातापित्रोः किं नामधेयम् ? इति भावः ; तयोर्नामाभिज्ञानेन सन्देहनिरासो भविष्यति इत्यभिप्रायः ।

(ङ) न हि न हि—मातरं पितरञ्चाहं नाभिजानामीत्यर्थः । ज्ञानाऽऽविर्भावात् प्रभृत्येव वाल्मीकेराश्रमे अवस्थानात् बालकस्यास्य पित्रोः विशेषतो विज्ञानं नास्तीति ज्ञातव्यम् ।

(च) ततः,—तस्मात् कारणात्, मातापित्रोरनभिज्ञानादेवेति भावः । कस्य—कस्य जनस्य तत्त्वावधानेऽवस्थितः, त्वं, वर्त्तसे इति शेषः ।

(छ) भगवतः वाल्मीकेः,—भगवतो वाल्मीकेः तत्त्वावधाने संवर्द्धितः वर्त्तमानश्चास्मीति भावः ।

(ज) कथयितव्यं—वक्तव्यं, कथय—ब्रूहि ; यदि मातापित्रोर्नामादिकं जानासि, तर्हि तत् यथावत् मामभिधेहि, मा तत् अपलपनेन वञ्चयेति भावः

लवः। एतावदेव जानामि। (झ)

[नेपथ्ये]। भो भोः सैनिकाः! एष खलु कुमारचन्द्रकेतुराज्ञापयति, न केनचिदाश्रमाभ्यर्णभूमिराक्रमितव्येति। (ञ)

अरुन्धतीजनकौ। अये! मेध्याश्वरक्षाप्रसङ्गादुपागतो वत्सश्चन्द्रकेतुरद्य द्रष्टव्य इत्यहो! सुदिवसः। (ट)

कौशल्या। वच्छलक्खणस्स पुत्तओ आणवेदित्ति अमिअबिन्दुसुन्दराइं अक्खराइं सुणीअन्ति। * (ठ)

लवः। आर्ये! क एष चन्द्रकेतुर्नाम? (ड)

* वत्सलक्ष्मणस्य पुत्रक आज्ञापयतीत्यमृतबिन्दुसुन्दराण्यक्षराणि श्रूयन्ते।

---

(झ) एतावदेव—एतत्पर्य्यन्तमेव, जानामि—वेद्मि; वाल्मीकेरन्यत् किमपि मातापित्रादिविषयकं वृत्तान्तजातं नाहमवगच्छामीति भावः।

(ञ) सैनिकाः!—सेनासमवेताः पुरुषाः, सेनाभटा इत्यर्थः। चन्द्रकेतुः,—लक्ष्मणाऽऽत्मजः, आज्ञापयति—आदिशति। केनचित्—कुत्रत्येनापि सैनिकेन, आश्रमाभ्यर्णभूमिः,—आश्रमस्य—वाल्मीकितपोवनस्य, अभ्यर्णा—निकटवर्त्तिनी,[अभिपूर्व्वकादर्द्दतेः निष्ठायां रूपम्]; या भूमिः,—प्रदेशः, तपोवनोपान्तभूमिभाग इत्यर्थः, न आक्रमितव्या—न निरोद्धव्या; आश्रमसमीपं गत्वा तरुलताऽऽदीनां छेदनेन तत्र काऽपि बाधा न जननीया, मुनीनां गौरवात् तत्र शान्तिश्च सर्व्वथा संरक्षणीयेति भावः।

(ट) मेध्येत्यादि।—मेध्यस्य—पवित्रस्य, अश्वमेधीयस्येत्यर्थः, अश्वस्य—वाजिनः, रक्षा—संरक्षणं, तस्य प्रसङ्गात्—अनुरोधात्, अश्वमेधीयाश्वं संरक्षितुमित्यर्थः, उपागतः,—अत्र देशे समुपस्थितः, वत्सः,—आयुष्मान्, चन्द्रकेतुः,—लक्ष्मणाऽऽत्मजः, द्रष्टव्यः,—आलोकितव्यः। अहो! सुदिवसः,—शोभनं दिनम्, आपतित इति शेषः। सौभाग्योदयात् सुप्रभातमिदं समुदितमिति भावः।

(ठ) अमृतबिन्दुसुन्दराणि—अमृतस्य—पीयूषस्य, ये बिन्दवः,—पृषताः, त इव सुन्दराणि—रम्याणि, श्रवणसन्तर्पणानीत्यर्थः, अक्षराणि—वर्णसमुदायाः, आज्ञापयतीत्येतद्वाक्यघटकवर्णसमष्टयः इत्यर्थः, श्रूयन्ते—आकर्ण्यन्ते; पौत्रस्य गौरवसूचकानि वचनानि श्रुतिभिः नितरां सुमधुरतयैवाऽऽस्वाद्यन्ते इति भावः।

(ड) चन्द्रकेतुर्नाम—चन्द्रकेतुरित्याख्यया प्रथितः, क एषः?—कस्य सुतः? कं देशं वाऽयमलङ्करोतीति भावः।

जनकः । जानासि रामलक्ष्मणौ दाशरथी ? (ढ)

लवः । एतावेव रामायणकथापुरुषौ ? (ण)

जनकः । अथ किम् । (त)

लवः । तौ कथं न जानामि ? (थ)

जनकः । तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः । (द)

लवः । ऊर्मिलापुत्रः, तर्हि मैथिलस्य राजर्षेर्दौहित्रः ? (ध)

जनकः । [ विहस्य ] । आविष्कृतं कथाप्रावीण्यं वत्सेन । (न)

जनकः । [ विचिन्त्य ] । यदि त्वमीदृशः कथायामभिज्ञः, तद्-ब्रूहि तावत्, पृच्छामः,—तेषां दशरथाऽऽत्मजानां किंनामधेयानि अपत्यानि केषु केषु दारेषु प्रसूतानि ? (प)

---

(ढ) जानासि ?—वेत्सि ? दाशरथी—रामः दशरथस्य तनयौ ।

(ण) रामायणकथापुरुषौ—महर्षिवाल्मीकिप्रणीतरामायणाऽऽख्यमहाकाव्यस्य प्रधानपात्रभूतौ, एतावेव—भवदुक्तौ वीरौ रामलक्ष्मणावेव, भवतः किम् ? इति शेषः ।

(त) अथ किं—यद्वैवोक्तं भवता, एतत्तु तदेवेत्यर्थः, एतावेव रामायणकथा-नायकौ इत्याशयः ।

(थ) तौ—रामायणकथापुरुषौ, कथं न जानामि ?—किं न वेद्मि ? अधीत-रामायणस्य मे एतयोर्नामसंविज्ञानं विशेषतयाऽस्तीति भावः ।

(द) तस्य—रामायणकथाप्रसिद्धस्येत्यर्थः, लक्ष्मणस्य—सौमित्रेः, आत्मजः,—तनयः, चन्द्रकेतुः,—तदाख्यः कुमारः, भवतीति शेषः ।

(ध) तर्हि—तथात्वे, चन्द्रकेतोर्लक्ष्मणाऽऽत्मजत्वे इत्यर्थः, ऊर्मिलापुत्रः,—तदाख्यायाः लक्ष्मणपत्न्याः तनयः, मैथिलस्य—मिथिलाऽधिपस्य, राजर्षेः,—जनकस्य, दौहित्रः,—दुहितुः तनयः ।

(न) आविष्कृतं—प्रकटीकृतं, कथाप्रावीण्यं—रामायणकथायाम् आत्मनः नैपुण्यं, चन्द्रकेतोः रामायणनिबद्धयोः मातृमातामहयोः नामसमुल्लेखादिति भावः ।

(प) कथायां—रामायणाऽऽख्याने, ईदृशः,—एवम्प्रकारः, अभिज्ञः,—विचक्षणः, तत्—तदा, ब्रूहि—कथय, पृच्छामः,—जिज्ञासामहे, तेषां—प्रसिद्धानां, दशरथाऽऽत्मजानां—रामादीनाम्, [ अत्र शेषे षष्ठी, अपत्यानीत्यनेनाभिसम्बन्धात् ].

लवः। नायं कथाप्रविभागोऽस्माभिरन्येन वा श्रुतपूर्वः। (फ)

जनकः। किं न प्रणीत एव कविना? (ब)

लवः। प्रणीतः, न तु प्रकाशितः। तस्यैव खलु कोऽप्येकदेशः सन्दर्भान्तरेण रसवानभिनेयार्थः कृतः, तच्च स्वहस्तलिखितं मुनिर्भगवान् व्यसृजद्भरतस्य मुनेस्तौर्यत्रिकसूत्रकारस्य। (भ)

किन्नामधेयानि—किमाख्यानि, अपत्यानि—सुताः, रामादीनां के के पुत्रा इति तु तदर्थः, केषु केषु दारेषु—पत्नीषु, प्रसूतानि—सञ्जातानि, किमाख्यपत्नीगर्भसम्भूतानीत्यर्थः, रामादीनां के हि सुताः किमाख्यासु पत्नीषु समभूवन् इति स्पष्टार्थः। [सूतेः सकर्मकत्वेऽपि अकर्मकत्वविवक्षया कर्त्तरि निष्ठेति ज्ञेयम्]।

(फ) कथाप्रविभागः,—अवान्तरेतिवृत्तस्य अंशविशेषः; अन्येन—मद्भिन्नेन केनापीत्यर्थः, श्रुतपूर्वः, [पूर्वं श्रुतः, "सुपा" (२।१।४ पा०) इति समासः पूर्वनिपातश्च], इतः प्रागाकर्णित इत्यर्थः, यदंशे भगवता वाल्मीकिना राघवादीनामपत्योत्पत्तिविवरणमुपनिबद्धं, तदंशोऽस्माभिरन्येन वा इदानीमपि न आकर्णित इति भावः।

(ब) कविना—वाल्मीकिना, किं न प्रणीतः?—न विरचितः? अप्रणीतनिखिलाऽऽख्यानभागोऽपि भवान् यतस्तत् कथयितुं न शक्नोतीति भावः।

(भ) प्रणीतः,—विरचितः, न तु प्रकाशितः,—किन्तु अद्यापि श्रुतिगोचरतां न नीतः। तस्यैव—दशरथसुतानामपत्यविवरणांशस्यैव, एकदेशः,—भागविशेषः, सन्दर्भान्तरेण—अन्येन केनचित् प्रबन्धेन, दृश्यकाव्यरूपेणेत्यर्थः, रसवान्—करुणविप्रलम्भाऽऽद्यरसयुक्तः, अभिनेयार्थः,—अभिनेयः,—अभिनयेन प्रयोज्यः, नटादिभिरनुकरणादिना प्रकाश्य इत्यर्थः, अर्थः,—इतिवृत्तरूपं वस्तु यस्य तथाविधः;—"भवेदभिनयोऽवस्थाऽनुकारः स चतुर्विधः। आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा॥" इति दर्पणः। कृतः,—रचितः; तत्कथाप्रबन्धं विभज्येदं दृश्यकाव्यं विरचितमिति भावः। तच्च—भागविशेषं, स्वहस्तलिखितं—स्वकरेणैव लिखितं, न तु शिष्याऽऽदीनामिति भावः, तच्च नाटकगीतस्य सम्यक्प्रचारितं भवेदिति ज्ञेयम्। मुनिः,—वाल्मीकिः। व्यसृजत्—प्रेषितवान्, अभिनेतुमित्यर्थः। भरतस्य मुनेः,—तदाख्यस्य ऋषेः, तौर्यत्रिकसूत्रकारस्य—नृत्यगीतवाद्यादित्रिकात्मकस्य नाट्यशास्त्रस्य सूत्रविरचकस्य प्रवचनाः, नाट्यशास्त्रनामकेन ग्रन्थविशेषेण नृत्यादीनां नियमबद्धव्यवस्थानां प्रवर्त्तयितुरित्यर्थः; ("तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम्" इत्यमरः)। ["तूर्यं—

लवः । अस्ति आर्य्यः कुशो नाम ।

कौशल्या । जेट्ठो त्ति भणिदं होदि ? * (व)

लवः । एवमेतत्; प्रसवक्रमेण स किल ज्यायान् इति । (श)

जनकः । किं यमजावायुष्मन्तौ ? (ष)

लवः । अथ किम् । (स)

* ज्येष्ठ इति भणितं भवति ?

(व) ज्येष्ठः,—ज्यायान् भ्राता, भणितं भवति—उक्तं भवति, आर्य्य इति कथनेन भ्रातुः ज्येष्ठत्वप्रतीतिरस्ति भावः ।

(श) एवमेतत्—भवत्या ज्येष्ठ इति यदुक्तं, तत्सत्यमेवेत्यर्थः; प्रसवक्रमेण—मातृतः उत्पत्तिक्रमेण, ज्यायान्—ज्येष्ठः, [ वृद्धशब्दात् ईयसुनि "वृद्धस्य च" (५।३।६२ पा० ) इति ज्याऽऽदेशः । यमजयोः प्राक्प्रसूतत्वे एव ज्येष्ठत्वम्; तथा हि देवलः,—

"बहिर्वर्षेषु चारित्वात् यमयोः पूर्व्वजन्मतः ।
यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् ।
सन्तानः पितरश्चैव तस्मिन् ज्येष्ठ्यं प्रतिष्ठितम् ॥" इति ।

अपि च भगवान् मनुः,—"यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता मता ।" इति ।
"जन्मप्राथम्यादेव ज्यैष्ठ्यं यमजयोः, न तु निषेकप्राथम्यात्" इति तु आर्त्ताः ।

(ष) आयुष्मन्तौ—कल्याणिनौ, युवामिति शेषः, किं यमजौ ?—युग्मजातौ ? भवत इति शेषः; यतः प्रसवक्रमेण ज्येष्ठत्वम् अभिदधासि इति भावः ।

(स) अथ किम्—एवमेतदित्यर्थः, इति तु स्वीकारार्थकमव्ययं बोध्यम् । कुशलवाविति नाम्नः कारणं यमजत्वञ्चोक्तं रामायणे यथा,—

"यस्तयोः पूर्वजो जातः स कुशैर्मन्त्रसत्कृतैः ।
निर्म्मार्ज्जनीयस्तु तदा कुश इत्यस्य नाम तत् ॥
यश्चावरो भवेत्ताभ्यां लवेन सुसमाहितः ।
निर्म्मार्ज्जनीयो वृद्धाभिर्लवेति च स नामतः ॥
एवं कुशलवौ नाम्ना तावुभौ यमजातकौ ।
मत्कृताभ्याञ्च नाम[illegible]तियुक्तौ भविष्यतः ॥"

इति ( वा० रा० उ० का० ७९ सर्ग ७—८ श्लोकाः )॥

जनकः। कथय, कथाप्रबन्धस्य कीदृशः पर्य्यन्तः ? (छ)।

लवः। अलीकपौरप्रवादोद्विग्नेन राज्ञा निर्वासितां देवयजनसम्भवां सीतादेवीमासन्नप्रसववेदनामेकाकिनीमरण्ये परित्यज्य लक्ष्मणः प्रतिनिवृत्त इति। (ज)

कौसल्या। हा, हा वच्छे मुद्धचन्दमुहि! को दाणिं दे कुसुमभूदस्स सरीरस्स देव्वदुव्विलासपरिणामो एआइणीए णिवडिदो !! *

* हा हा वत्से मुग्धचन्द्रमुखि! क इदानीं ते कुसुमभूतस्य शरीरस्य दैवदुर्विलासपरिणाम एकाकिन्या निपतितः !!

---

(छ) कथय—अभिधेहि, कथाप्रबन्धस्य—रामायणाऽऽख्यसन्दर्भविशेषस्य, कीदृशः,—किम्प्रकारः, पर्य्यन्तः,—शेषभागः ; यदि रामायणकथायाः अन्ते सीताविषयिका कथा कियत्यपि महर्षिणा उपनिबद्धा भवेत्, तदा सा इदानीं कीदृशी वर्त्तते, तस्या अपत्यं जातं न वा, जातञ्चेत् केन वा परिरक्षितम्, अथच तत्सुतौ न वा इत्याद्यवश्यज्ञातव्यविषयोऽप्यस्माभिः साकल्येन परिगृहीतो भवेदिति तु प्रष्टुराशयः।

(ज) अलीकेति।—अलीकः,—मिथ्याभूतः, यः पौराणां—पुरवासिनां, प्रवादः,—कौलीनं, चारित्र्यापवाद इति॰ यावत्, तेन उद्विग्नः,—व्याकुलः तेन, अयथार्थपौरापवादेन किल विवेकशून्यमनसेत्यर्थः, राज्ञा—रामचन्द्रेण, निर्वासितां—परिवर्ज्जिताम् ; देवयजनसम्भवां—देवाः इज्यन्ते अस्मिन्निति देवयजनं—यज्ञभूमिः, तस्मात् सम्भवः,—उत्पत्तिः यस्याः तां, यज्ञभूमिसमुत्थितामित्यर्थः ; आसन्नप्रसववेदनाम्—आसन्ना—समीपवर्त्तिनी, प्रसवस्य—गर्भविमोचनस्य, वेदना—यातना यस्याः तां, पूर्णगर्भतया समधिककातरामिति यावत्, एकाकिनीम्—असहायां, सीतादेवीं—जानकीम्, अरण्ये—जनस्थानाऽऽख्ये वने, परित्यज्य—रथादवतार्य्य, निर्व्वास्येत्यर्थः, प्रतिनिवृत्तः,—प्रत्यायातः, अयोध्यामिति शेषः। इति—इत्यन्तः एव कथाप्रबन्ध इति भावः।

(झ) मुग्धचन्द्रमुखि!—मुग्धः,—मनोहरः, यः चन्द्रः,—शशधरः, स इव मुखं—वदनं यस्याः तस्याः सम्बोधने, हा राकाशशाङ्कसौम्याऽऽनने! इत्यर्थः। कुसुमभूतस्य—कुसुमैः,—पुष्पैः, भूतस्य—तुल्यस्य, अतिकोमलस्येत्यर्थः, ("युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु" इत्यमरः) शरीरस्य—देहस्य, कः,—अनिर्वचनीयः,

लव:। [ अरुन्धतीं प्रति ]। आर्य्ये ! कावेतौ ? (ग)

अरु। इयं कौशल्या, अयं जनकः।

लव:। [ सबहुमानखेदकौतुकं पश्यति ]। (घ)

जनक:। अहो ! दुर्म्मर्य्यादता दुरात्मनां पौराणाम्। अहो ! रामस्य राज्ञः क्षिप्रकारिता !! (ङ)—

एतद्वैशसवज्रघोरपतनं शश्वन्ममोत्पश्यतः
क्रोधस्य ज्वलितुं धगित्यवसरश्चापेन शापेन वा।—*(२४)

(ग) आर्य्ये !—पूज्ये ! एतौ—मम पुरत: स्थितौ, सीताकृते निर्भरं विलपन्तौ, मयि च सातिशयं स्निह्यन्तावित्यर्थ:, कौ—किन्नामधेयौ, भवत: इति शेष:।

(घ) सबहुमानखेदकौतुकं—महापुरुषस्य रामस्य मातु: श्वशुरस्य च दर्शनात् तत्र बहुमान:; तयोश्च शोकविवशभावमवलोक्य स्वस्य खेद:; प्राक् गुरुसकाशात् समधीतयो: रामायणकथाऽऽश्रितयो: तयो: साक्षाद्दर्शनादेव आत्मन: कौतुकं, तै: सह वर्त्तमानं यथा तथा; पश्यति—अवलोकयति, ताविति शेष:।

(ङ) दुरात्मना—दुर्वृत्तानां, वृथाऽपवादकारितया पापदूषितचेतसामित्यर्थ:, पौराणाम्—अयोध्यावासिजनानां, दुर्म्मर्य्यादता—दुष्टा मर्य्यादा येषां तेषां भाव: तत्ता, मर्य्यादाऽतिक्रम: इत्यर्थ:, सदाचारोल्लङ्घनात् न्याय्यपथविच्युतिरिति यावत्; यतो हि ते महामान्यानां वाल्मीकिप्रभृतीनां वचांसि अविगणय्य निर्द्दोषायामपि सीतायाम् अलीकदोषमुद्भाव्यानर्थजातमेवं सङ्घटयामासुरित्याशय:। रामस्य राज्ञ:,—प्रजापालकस्य; जनाऽयं सापराधा निरपराधा वा इति विशेषं विमृश्यैव तत्र निहितदण्डस्येत्यर्थ:, क्षिप्रकारिता—क्षिप्रं—सहसा, अविविच्येत्यर्थ:, कर्त्तुं शीलं यस्य तस्य भाव: तत्ता, अविमृश्यकारितेत्यर्थ:; यदि हि नवीन: राजा रामचन्द्र: अग्निपरिशुद्धाया: सीताया: अपवादस्यालीकतां जानन्नपि केवलं निखिलप्रजारञ्जनमनुसृत्य कतिपयानां दुर्ज्जनानां वचांसि चाविगणय्य वृद्धैरमात्यवर्गै: सह परामर्शं कृत्वा कार्य्यमकरिष्यत्, तदा नूनमिदमनर्थजातं नोदपत्स्यतेति भाव:।

अथाविमृश्यकारिणो रामादीनां पौराणाञ्च तथाविधान्याय्याऽऽचरणस्य प्रतिकारकरणोचितत्वमाह, एतदिति।—एतत् सीतानिर्व्वासनरूपं, वैशसघोरवज्रपतनं—विशसति हिनस्ति य: स विशस: घातक:, तस्य यत् कर्म्म तत् वैशसं हिंसनमित्यर्थ:, तदेव घोरं भीषणं, वज्रपतनम् अशनिसम्पात: तत्, तीक्ष्णकुलिशप्रपतनतुल्यमतीव

कौशल्या। भअवदि! परित्ताहि परित्ताहि, पसादेहि कुविदं राएसिं। * (च)

वृद्ध। एतद्धि परिभूतानां प्रायश्चित्तं मनस्विनाम्।
राजन्! अपत्यं रामस्ते पाल्याश्च कृपणाः प्रजाः ॥२५॥

---

* भगवति! परित्रायस्व परित्रायस्व, प्रसादय कुपितं राजर्षिम्।

---

मयाऽऽवर्त्तं सीतानिर्वासनरूपं क्रूरं कर्म इत्यर्थः, सीताविवासनं हि हृत्वा कारुणवत् दाहवाहुल्याचमित्याशयः, यश्च निरन्तरम्, अत्यन्तः आलोकयतः, मुहुर्मुहुः चिन्तयत इत्यर्थः, मम जनकस्य, क्रोधस्य कोपानलस्य, चापेन धनुषा, शापेन वा अभिमन्त्रणेन वा, धगिति धग् धग् इत्यव्यक्तानुकरणं शब्दं कृत्वा, ज्वलितुं दहनार्थं प्रज्वलीभवितुमित्यर्थः, अवसरः समयः, समुपस्थित इति शेषः, ["कालसमयवेलासु तुमुन्" (३।३।१६७ पा०) इति तुमुन् प्रत्ययः]। एतत् निर्वासनरूपं घोरं दौरात्म्यं पश्यतः अस्थिरश्च मम कोपानलः ज्वालामाला-ऽऽकुलः सन् प्रथमतः प्राक्परिशीलितेन चापेन, पश्चाच्च राजर्षेः मे नियततपोऽनुष्ठान-जनितप्रभावात् शापेन सरामानेतान् पौरजनान् सहसा दग्धीकर्त्तुमपेक्षतीति भावः। [अत्र एतद्वैशसे वज्रपतनत्वाभेदाऽऽरोपात् निरङ्गं रूपकमलङ्कारः; क्रोधस्य ज्वलनासम्बन्धेऽपि तत्सम्बन्धत्वेनोत्कीर्त्तनादसम्बन्धे सम्बन्धरूपातिशयोक्तिर-लङ्कारश्च। एतत् श्लोकस्य पूर्व्वार्द्धं, परार्द्धञ्चाग्रे द्रष्टव्यमिति ॥ २४ ॥

(च) भगवति!—ऐश्वर्य्यवति! अरुन्धति! इति शेषः; परित्रायस्व—रक्ष, राजर्षेः कोपानलात् सर्व्वान् प्रकृतिजनानिति शेषः, [सम्भ्रमे द्विरुक्तिः]। प्रसादय—परिसान्त्वय, कुपितं—क्रुद्धं, राजर्षिं—जनकम्; अन्यथा कुपितोऽयं राजर्षिः जनकः चापेन शापेन वा सर्व्वेषां नूनं सङ्क्षयं करिष्यतीति भावः।

अथ प्राक् पापिनां दण्डविधानस्यौचित्यं कथञ्चित् समर्थ्य, पश्चात् अपत्यभूतेषु दीनेषु च जनेषु तस्य परीहारं प्रार्थयमाना अरुन्धती राजर्षेः कोपमुपशमयितुं प्रयतते, एतद्धीति।—परिभूतानां तिरस्कृतानाम्, अवज्ञेयमानितानामित्यर्थः, मनस्विनां प्रशस्तमनसाम्, उदारचेतसामित्यर्थः, हि निश्चितम्, एतत् चापग्रहणं शापदानं वा, चापशापादिभिः दण्डविधानैः वैरनिर्य्यातनमिति यावत्, प्रायश्चित्तं प्रापचयमात्रसाधनं, अवमाननाप्रतिकारसाधनमिति यावत्, भवतीति शेषः। युक्तं हि मानिनः भवादृशाः पापप्रसरम् असहमानाः दुर्वृत्तानां यथायोग्यं दण्डं

विधाय दुर्वृत्तिप्रवाहानुपशमं नयन्ति, स्वयञ्च प्रसादं लभन्ते इति भावः । सम्प्रत्येवं तस्य स्वसुविशेषे परीहारस्य न्याय्यत्वं प्रतिपादयति, राजन्निति ।—राजन् ! हे राजर्षे जनक ! रामः ते अपत्यं पुत्रभूत एव, जामातृत्वात् सुहृत्सुतत्वाच्चेति भावः ; कृपणाः दीनाः, सततं हि दयार्हाः इत्यर्थः, प्रजाः प्रकृतयः, पालनाय रक्षणीयाश्च, स्नेहाऽस्पदीभूतेषु बालेषु च हि अपराधिष्वपि मनस्विनः अपराधशतानि सहन्ते, अतो नायं ते क्रोधस्यावसरः, परिहरणीयः खल्वेषामित्याशयः । यद्वा,—परिभूतानाम् अवमानितानां, मनस्विनां मानधनानां, चित्तं मनः, प्रायः बाहुल्येन, एतत् ईदृशं, भवति ; मानिनो हि तिरस्कृताः सन्तः प्रायेणैतस्य प्रतिविधानं कर्तुं यतन्ते इति भावः. अथवा,—मनस्विनां धीराणां, परिभूतानाम् अवमानितानां, कथञ्चित् प्रमादेन असत्कार्य्यकरणात् परं लोकैः निर्भर्त्सितानां सतामित्यर्थः, एतद्धि एतदेव, भवदुक्तप्रकारनिर्भर्त्सनमित्यर्थः, गुरुजनकृततिरस्कारवचनमिति यावत्, प्रायश्चित्तं पापक्षयकारणं,—“प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम् ॥” इत्युक्तलक्षणं निखिलतत्कृतदोषक्षयकारकं विधिबोधितं कर्म्म इति यावत् ; यदि हि कश्चित् मनस्वी भ्रमेण किञ्चित् पापमनुतिष्ठति, ततःपरं गुरुजनाः यदि तं तत्कृते तिरस्कुर्व्वन्ति, तदा तेनैव तिरस्कारेण तस्य सर्व्वपापक्षयो भवति. अतः रामेण दैवात् सीतानिर्व्वासनरूपं यत् अन्याय्यम् आचरितं, तस्य भवत्कृत-तन्निर्भर्त्सनेन समुचितः दण्डः सञ्जात एव, अतः अस्मात्परं किमपि न विधातव्यमिति भावः । अन्ये तु, सुखदुःखानि जनाः स्वकृतप्राक्तनकर्म्मफलभूतान्येवानुभवन्ति इत्यभिप्रायेण व्याचक्षते ; यथा,—हि यतः, परिभूतानां परैः पराभवं गमितानां, मनस्विनां धीराणां, दुःखं स्वीयदुरदृष्टफलभूतमेवेति जानतामित्याशयः, एतत् सीतानिर्व्वासन-रूपवज्रपतनेन जनापवादादिना च मानसदुःखानुभवनमेव, प्रायश्चित्तं प्राक्कृतदुरदृष्ट-निवर्त्तकम् ; भवान् हि जन्मान्तरीयदुरदृष्टानां फलभूतं सीतानिर्व्वासनजन्यदुःखमनुभवति, रामस्तु प्रायश्चित्तदातृतया उपलक्षभूत एव ; तथा च, प्राक्तनदुरदृष्टफलभोक्ता एव भवान्, निरपराधे केवलं कारणभूते रामे वृथा कोपं विजहातु, सर्व्वे मनस्विनः इह दुःखं स्वकृतकर्म्मफलमिति जानन्तः अन्यस्मिन् कोपं न कुर्वन्ति, एतद्विभाव्याऽऽत्मनः स्वार्थं सम्पादय इति भावः । अन्यत्तु समानमेव । [ अत्राप्रस्तुतात् मनस्विसामान्यात् प्रस्तुतस्य जनकस्य, व्याख्यानान्तरेण तु रामस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः ; अपि च एतत्पदप्रतिपाद्यवस्तुना सह प्रायश्चित्तस्याभेदाऽऽरोपादेव निरङ्गं रूपकमलङ्कारः ; परार्द्धस्य तु हेतुभूततयोपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारश्च ; एषां परस्पर-सापेक्षतया स्थितेः सङ्करः ] ॥ २५ ॥

जनकः ।"—शान्तं वा रघुनन्दने तदुभयं तत्पुत्रभाण्डं हि मे
भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरो जनः ॥ २६ ॥

बटवः । [प्रविश्य सम्भ्रान्ताः] । कुमार ! अश्वोऽश्व इति पशुसमाम्नायिकः कोऽपि भूतविशेषो जनपदेषु श्रूयते, सोऽयमधुनाऽस्माभिः प्रत्यक्षीकृतः । (क)

---

अथ परार्द्धेन जनकः स्वकीयकोपोपशम पक्षान्तरेणाऽऽह, शान्तमिति ।—वा पक्षान्तरे, तदुभयं चापधारणं शापदानञ्च, रघुनन्दने रामे, शान्तम् उपरतं, निवृत्तमित्यर्थः, भवतु इति शेषः, रामे तदुभयोरेकोऽपि न प्रयोज्य इति भावः; हि यतः, तत् रघुनन्दन इत्यर्थः, [विधेयप्राधान्यात् क्लीवत्वम्] मे मम, पुत्रभाण्डं पुत्ररूपमूलधनं, मूलधनरूपतया यत्नत एव रक्षणीयमिति भावः । ("स्याद्भाण्डमश्वाऽऽभरणेऽमत्रे मूलवणिग्धने" इत्यमरः) । पुत्रस्नेहभाजनं वा, पुत्रः यथा अकृतकस्नेहपात्रं भवति, तथा रामोऽपि विज्ञेय इति भावः । एवमेव पौरादीनामप्युपरि कोपोपशमे हेतुं निर्द्दिशति, भूयिष्ठेति ।—भूयिष्ठाः अतिबहवः, द्विजाः ब्राह्मणाः, बालाः शिशवः, वृद्धाः प्रवयसः, विकलाः हस्तपाद्याद्यवयवहीनाः, काणखञ्जादय इत्यर्थः, स्त्रैणानि स्त्रीजनसमूहाश्च यस्मिन् तथाभूतः, पौरो जनः पुरवासिवर्गः, भवतीति शेषः ; बालवृद्धादीनामवध्यत्वात् पौरजनस्य तद्बहुलतया सोऽपि अवध्य एव, तेनाहमधुना चापग्रहणात् शापदानाच्च विरतो भवामीति भावः । [अत्र चापादिग्रहणोपशमं प्रति पौरजनेषु द्विजादिभूयिष्ठत्वस्य हेतुत्वोत्कीर्त्तनात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः] । शार्द्दूलविक्रीड़ितं वृत्तम ॥ २६ ॥

(क) सम्भ्रान्ताः,—सत्वराः, व्यग्रा इत्यर्थः, बटवः,—विप्रकुमाराः, प्रविश्य—रङ्गभूमिमागत्य, आहुरिति शेषः । अश्वोऽश्व इति—घोटक इति समाख्यया प्रसिद्धः, [वीप्सायां द्विरुक्तिः] । पशुसमाम्नायिकः,—पशुसमाम्नाये पशुशास्त्रे पशुद्रव्यकयागप्रतिपादकवेदभागे वा विवर्णितः, लक्षणादिनिर्द्देशपुरःसरं तच्छास्त्रे समधिकतया व्युत्पादित इत्यर्थः, कोऽपि—अस्माभिरदृष्टपूर्व्वः, भूतविशेषः,—प्राणिविशेषः, जनपदेषु—देशेषु, ग्रामनगराऽऽदिप्रदेशेषु इत्यर्थः, न तु वनेषु इत्यभिप्रायः, श्रूयते—आकर्ण्यते ; अश्वा नाम ग्राम्याः केचित् पशवः सन्तीति पठ्यते इत्यर्थः । अश्वानां ग्राम्यपशुत्वप्रतिपादकं पैठीनसिवचनं यथा,—"गौरविरजोऽश्वोऽश्वतरो गर्द्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः" इति । सोऽयं—तादृशोऽश्वः इत्यर्थः । प्रत्यक्षीकृतः,—प्रत्यक्षमवलोकितः, स्वचक्षुषैवेति भावः ।

लवः । अश्वोऽश्व इति पशुसमाम्नाये साङ्ग्रामिके च पठ्यते, तद्ब्रूत कीदृशः ? (ञ)

बटवः । श्रूयताम् ।—

पश्चात् पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव ।

---

(ञ) पशुसमाम्नाये—आम्नायते अभ्यस्यते इति आम्नायः,—वेदः, ("श्रुतिः स्त्री वेद आम्नायः" इत्यमरः) पशूनां समाम्नायस्तस्मिन्, यद्वा,—आम्नायः,—उपदेशः, ("आम्नायः कुल आगमे । उपदेशे च" इति हैमः) गुरुपरम्पराक्रमेण समुपदिष्टे पशुनामसंग्रहशास्त्रे इत्यर्थः। साङ्ग्रामिके च—सङ्ग्रामकौशलबोधकशास्त्रे च, धनुर्व्वेदादौ युद्धशास्त्रे चेत्यर्थः, पठ्यते—अधीयते ; एतेनास्य युद्धशास्त्रे विशेषाभिज्ञत्वं प्रतीयते। कीदृशः,—किम्प्रकारः ? अस्तीति शेषः ; यद्यपि वन्या वयं ग्रामीणान् पशून् सर्व्वथा न जानीमः, तथाऽपि वेदादिषु शास्त्रेषु तत्तत्स्वरूपनिरूपणदर्शनादेव तेषां लक्षणाभिज्ञा अपि तत्स्वरूपमिदानीं ज्ञातुमिच्छामः, अपश्यत चेत् वदत इति निष्कृष्टार्थः।

अथ दर्शनानुसारतः अश्वलक्षणं यथासम्भवम् उत्कीर्त्तयति, पश्चादिति ।—पश्चात् शरीरादर्वाक्, देहचरमभागे इत्यर्थः, विपुलं प्रचुरं, स्थूलमिति यावत्, पुच्छं लाङ्गूलं, वहति धारयति, तच्च पुच्छम्, अजस्रं निरन्तरं, धूनोति कम्पयति, सः अश्वः, दीर्घग्रीवः दीर्घा आयता, ग्रीवा गलदेशः यस्य तथाविधः, आयतकण्ठः इत्यर्थः, भवति ; तस्य अश्वस्य, खुराः शफाः, चत्वार एव चतुःसङ्ख्यका एव, नातोऽधिका इत्यर्थः, न हि गवादिवत् द्विधा विभिन्नतया चतुःसङ्ख्यातोऽधिका इति भावः, शष्पाणि बालतृणानि, ("शष्पं बालतृणम्" इत्यमरः) अत्ति भक्षयति, आम्रमात्रान् चूतफलपरिमितान्, शकृत्पिण्डकान् पुरीषखण्डान्, प्रकिरति त्यजति, वा अथवा, आख्यातैः स्वरूपकथनैः, तदाकारवर्णनाभिरित्यर्थः, किम् अलम् ? अधुना तत्स्वरूपवर्णनं निष्प्रयोजनमिति भावः। [ अत्र वारणार्थककिंशब्दयोगात् तृतीया ज्ञेया ]। एह्येहि आगच्छ आगच्छ। [सम्भ्रमे द्विर्वचनम् ]। यामः गच्छामः, त द्रष्टुं वयमिति शेषः, पुनः किन्तु, सः अश्वः, दूरं विप्रकृष्टदेशं, व्रजति गच्छति ; तस्य द्रुतगतिमत्तया अस्माकं त्वरितगमनाभावे तद्दर्शनं न भवेदित्याशयः। [ अत्राश्वरूपैककर्त्तृकारकेण सह वहतिप्रभृतीनामनेकासां क्रियाणामभिसम्बन्धात् दीपकालङ्कारः ; अपि चाऽऽम्रफलेन साकं शकृत्पिण्डानां साम्यस्य प्रतिपादनात् उपमाऽलङ्कारः, यथायथमश्वस्वरूपवर्णनाच्च

अप्याख्याति प्रकिरति शकृत्पिण्डकामास्त्रमात्रान्
किं वाऽऽख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥ २७ ॥

[ इति उपसृत्याजिने हस्तयोश्चाऽऽकर्षन्ति ]। (झ)

लवः। [ सकौतुकोपरोधविनयम् ]। आर्य्याः! पश्यत पश्यत, एभिर्नीतोऽस्मि। [ इति त्वरितं परिक्रामति ]। (ञ)

अरुन्धतीजनकौ। पूरयतु कुतूहलं वत्सः। (ट)

कौशल्या। भअवदि! जाणामि, एदं अणालोअअन्तो ण जीआमि विअ, अदो असदो भविअ पेक्खम्ह दाव गच्छमाणं दीहाउं। * (ठ)

---

* भगवति! जानामि, एतमनालोकयन्ती न जीवामीव, अतोऽन्यतो भूत्वा पश्यामस्तावद्गच्छन्तं दीर्घायुषम्।

---

स्वभावोक्तिरलङ्कारः, इत्येषां परस्परमापेक्षतया स्थितेः सङ्करः। सर्वत्र तच्छब्दोपात्त-कर्त्तरि लटः प्रयोगदर्शनात् "खुरास्तस्य चत्वार एव" इत्यत्र तु तदन्यथाकरणात् प्रक्रमभङ्गदोष इति ज्ञेयम् ]। मन्दाक्रान्ता वृत्तम् ॥ २७ ॥

( झ ) इति—इत्थमुक्त्वेत्यर्थः, उपसृत्य—लवसमीपं गत्वा, अजिने—उत्तरीयभूत-कृष्णसारमृगत्वचि, हस्तयोश्च—करयोश्च, ग्रहणपूर्व्वकमिति शेषः, आकर्षन्ति, लवं वटवः इति शेषः।

( ञ ) कौतुकम्—अश्वदर्शनकौतूहलम्, उपरोधः,—वयस्यानामत्याग्रहः, विनयः,—नम्रता, तैः सह वर्त्तमानं यथा तथेत्यर्थः। आर्य्याः!—भोः मान्याः!, जनकादयः पूज्यजना इत्यर्थः। पश्यत पश्यत—अवलोकयत, [ सम्भ्रमे द्विरुक्तिः ]। युयमिति शेषः। एभिः,—वटुभिः, नीतः,—स्थानान्तरं प्रापितः, अस्मि—भवामि, अहमिति शेषः। युष्मान् विहाय नाहं गन्तुमिच्छामि, किन्तु एते बलात् मां नयन्ति, अत्र किं कर्त्तव्यमिति भावः। त्वरितं—सत्वरं, परिक्रामति—भ्राम्यति, दर्शनोत्कण्ठा-वशादिति भावः।

( ट ) कुतूहलं—कौतुकम्, अश्वावलोकनौत्सुक्यमित्यर्थः, पूरयतु—समापयतु, यदि अश्वं द्रष्टुमिच्छसि, तदा एभिः सह गच्छेति भावः।

( ठ ) एतम्—इमं बालकम्, अनालोकयन्ती—अपश्यन्ती, न जीवामीव—

जनकः। अतिजवेन दूरमतिक्रान्तः स चपलः; कथं दृश्यते ? (ड)

कञ्चुकी। [ प्रविश्य ]। भगवान् वाल्मीकिराह,—"ज्ञातव्यमेतदवसरे भवद्भिः" इति । (ढ)

जनकः। अतिगम्भीरमेतत् किमपि भविष्यति। भगवति अरुन्धति ! सखि कौशल्ये ! आर्य्ये गृष्टे ! स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः। (ण)

[ इति निष्क्रान्तो वृद्धवर्गः ]।

---

प्राणान् न धारयामीव, जानामि—मन्ये, अहमिति शेषः। अतः,—अस्मात् कारणात्, अन्यतः,—अन्यस्मिन् स्थाने, भूत्वा—अवस्थायेत्यर्थः, अन्यत्र गता भवतीति भावः, गच्छन्तं—वटुभिः साईं यान्तं, दीर्घायुषम्—आयुष्मन्तं, लवमित्यर्थः, पश्यामः,—अवलोकयामः।

( ड ) अतिजवेन—अतिवेगेन, दूरं—विप्रकृष्टं देशम्, अतिक्रान्तः,—गतः, चपलः,—चञ्चलमतिः, सः,—बालकः लवः ; बालत्वात् अत एव चञ्चलप्रकृतिरसौ सुदूरं स्थानं प्रस्थित इति भावः। कथं—केन प्रकारेण, दृश्यते ?—अवलोक्यते, चक्षुर्विषयातिक्रमात न ह्यसौ द्रष्टुं शक्यते त्वयेति भावः।

( ढ ) एतत्—युष्माभिः जिज्ञासितं वृत्तं, बालकस्यास्य इतिवृत्तमिति यावत्, अवसरे—यथासमये, भवद्भिः,—युष्माभिः, ज्ञातव्यं—वेदितव्यम्। कालान्तरे यूयं सर्व्वमेव विवरणं मत्तः श्रोष्यथ, इदानीं न वक्तव्यमिति भावः।

( ण ) एतत—अस्माञ्जिज्ञासितं बालस्यास्य विवरणमित्यर्थः, किमपि—अनिर्व्वचनीयमेव, अत एव अतिगम्भीरं—दुरवगाहम्, अतिगोपनीयमित्यर्थः, अलौकिकघटनापूर्णतया मादृशजनैः सहसा भेत्तमशक्यमिति यावत्। भविष्यति—सम्पत्स्यते। भगवति अरुन्धति !—पूज्यतमे वशिष्ठपत्नि। एतस्यां गौरवप्रदर्शनार्थं भगवतीत्युक्तम्। सखि कौशल्ये !—सहचरि प्रियदशरथगृहिणि ! परमात्मीयत्वद्योतनार्थं सखीति सम्बुद्धम्। आर्य्ये गृष्टे !—माननीय कञ्चुकिन् ! अस्य मुक्ताख्यानत्वमाख्यातुम आर्य्येत्युक्तमिति ज्ञेयम्। स्वयमेव—आत्मनैव, न तु प्रतिनिधिना, इत्येवशब्दार्थः, तथात्वे महर्षेर्गौरवहानिः स्यादिति भावः। प्राचेतसं—वाल्मीकिं, पश्यामः,—अवलोकयामः। नो चेदेवं तर्हि एतद्रहस्यं ज्ञातुं न शक्नुमः इति भावः।

बटवः। पश्यतु हि कुमारस्तदाश्चर्य्यम्। (त)

लवः। दृष्टमवगतञ्च, नूनमाश्वमेधिकोऽयमश्व इति। (थ)

बटवः। कथं ज्ञायते ? (द)

लवः। ननु मूर्खाः ! पठितमेव युष्माभिस्तत्काण्डे, किं न पश्यथ, प्रत्येकं शतसङ्ख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारः, तत्प्रायमेवेदमपि दृश्यते ? यदि इह न प्रत्ययः, तद्गत्वा पृच्छत। (ध)

(त) पश्यतु हि—अवलोकयत्वेव, हिशब्दोऽवधारणार्थकः। कुमारः,—लवः, तत्—अश्वरूपं वस्तु, आश्चर्य्यं—विस्मयकरम्; बटुभिरदृष्टपूर्व्वत्वेन अश्वोऽयं विस्मयकरवस्तुविषया उल्लिखितः, इति ज्ञेयम्।

(थ) दृष्टं—प्रत्यक्षीकृतम्, अवगतञ्च—अवबुद्धञ्च, दृष्टेव कोऽयं भवतीति सम्यक् निर्णीतमित्यर्थः; नूनं—निश्चितम्, आश्वमेधिकः,—हयमेधयज्ञीयः, [अश्वमेधः प्रयोजनमस्येत्यर्थे अश्वमेधशब्दात् ठञ् प्रत्ययः] अयमश्वः,—पुरो दृश्यमानः वाजी, भवतीति शेषः।

(द) कथं—केन लक्षणेनेत्यर्थः, ज्ञायते ?—अवधार्य्यते ? अश्वमेधयज्ञस्यायमश्वो भवतीति केन प्रमाणेन स्थिरीक्रियते इति भावः।

(ध) ननु—भोः !, मूर्खाः,—अज्ञाः, बटवः इति शेषः, पठितमेव—अधीतमेव, तत्काण्डे—अश्वमेधाध्याये रामायणस्येत्यर्थः, अश्वमेधसंक्रान्तप्रकरणे इति यावत्; किं न पश्यथ ?—अश्वमेधप्रकरणोक्तं वस्तुजातमत्र यथायथं सम्बद्धमस्तीति किं न यूयमवलोकयत ? इत्यर्थः। किं परिदृश्यते ? तदेवाह, प्रत्येकमिति।—प्रत्येकम्—[एकम् एकं प्रतीत्यव्ययीभावः] सर्व्वस्मिन्नेव भागे इत्यर्थः, शतसंख्याः,—शतं संख्या येषां तथोक्ताः, सर्व्वत्र संख्याशतसमन्विता इत्यर्थः, कवचिनः,—कवचवन्तः, वर्म्मधारिणः इत्यर्थः; दण्डिनः,—दण्डायुधाः, यष्टिधारिण इति यावत्, निषङ्गिणश्च—तूणीरवन्तश्च, रक्षितारः,—अश्वरक्षकाः सैनिकाः, तत्प्रायं—तेषां—कवचिप्रभृतीनां सैन्यानां, प्रायः,—बाहुल्यं यस्मिन् तथाविधं, शतशतकवचिदण्डिनिषङ्गिभिर्नानकसुरक्षितमित्यर्थः। इदमपि—अश्वरूपवस्तु अपि, दृश्यते—अवलोक्यते, अश्वं रक्षितुमेव शतं शतं कवचिनः अन्ये च योद्धारः परिक्राम्यन्तीति दृश्यते; यदि—चेत्, इह—मदीयवचसि, प्रत्ययः,—विश्वासः, न, क्रियेतस्मिन्निति शेषः। तत्—तर्हि,

बटवः । भोः भोः ! किम्प्रयोजनोऽयमश्वः परिवृतः पर्य्यटति ? (न)

लवः । [ सस्पृहमात्मगतम् ] । अये ! अश्वमेध इति विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रियपरिभावी महान् उत्कर्ष-निकषः । (प)

[ नेपथ्ये ] । अयमश्वः पताकेयमथवा वीरघोषणा ।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥ २८ ॥

---

गत्वा—रक्षिजनानां समीपमागम्येत्यर्थः, पृच्छत—जिज्ञासध्वम् ; अश्वरक्षिणां वचसैव यूय इयमेधीयोऽश्वमश्व इति ज्ञास्यथेति भावः ।

( न ) भोः भोः !, सैनिकाः इति शेषः । किम्प्रयोजनः,—किं प्रयोजनम्—उद्देश्यं यस्य सः, किम्फलकः इत्यर्थः, अयमश्वः, परिवृतः,—परिवेष्टितः, रक्षिभिरिति शेषः, पर्य्यटति—विहरति ; कस्मै कार्य्याय इमे सैनिकाः अस्याश्वस्य समन्तात् धृतायुधाः सन्तः सञ्चरन्तीति भावः ।

( प ) सस्पृहं—साग्रहम्, आत्मगतं—स्वगतम्, आहेति शेषः, अश्वमेध इति—अश्वमेधनामकः यज्ञः हि, विश्वविजयिनां— विश्वं—जगत्, विजेतुं—प्रभावेण स्वकर्तुं शीलं येषां तेषां, त्रिलोकीपरिभाविणामित्यर्थः, क्षत्रियाणां—राजन्यसत्तमानां, ऊर्जस्वलः,—ऊर्जः,—बलमस्यास्तीति [ "ज्योत्स्नातमिस्रा—" ( ५।२।११४ पा० ) इति मत्वर्थे निपातः ] बलवान्, सर्वातिशायी इति यावत्, सर्व्वक्षत्रियपरिभावी—सर्वान् क्षत्रियान् परिभवितुं शीलं यस्य तादृशः, राजन्यवृन्दतिरस्कारकारकः इत्यर्थः, महान्—मत्तवत्तरः ; उत्कर्षनिकषः,—उत्कर्षस्य—सर्व्वप्राधान्यस्य, गौरवस्येत्यर्थः, निकषः,—स्वर्णादिधातूनां सारत्वनिर्णायकः प्रस्तरविशेषः, प्रकृते तु तद्वत् सारत्वादेः परीक्षास्थानमित्यर्थः ; अश्वमेधयज्ञस्य केवलं सम्राड्भिरेवानुष्ठीयमानतया सातिशयगौरवाधायकत्वमेतस्य निकषायमाणस्य क्षत्रियाणामिति विज्ञेयम् । अतः सुक्षत्रियेण लवेन सातिशयः आदरः एतस्मिन्प्रकाशीत्यपि द्रष्टव्यम् ; "राजा सार्व्वभौमी-ऽश्वमेधेन यजेत, नाप्यसार्व्वभौमः ।" इत्यापस्तम्बोक्तेः ।

अथ नेपथ्यभाषितेन रक्षिणः अश्वस्यास्याश्वमेधीयत्वं भगवतो रामस्य विजयगौरवञ्च ख्यापयितुं विज्ञापयन्ति, अयमश्व इति ।—सप्तलोकैकवीरस्य सप्तसु भूप्रभृतिषु लोकेषु, "भूर्भुवः स्वर्महश्चैव जनश्च तप एव च । सत्यलोकश्च सप्तैते लोकास्तु

लवः। [ सव्यथमिव ]। अहो ! सन्दीपनानि अक्षराणि। (क)

बटवः। किम् उच्यते ? प्राज्ञः खलु कुमारः। (ख)

---

परिकीर्त्तिता ॥" इत्यग्निपुराणम्। एकः अद्वितीयः, वीरः शूरः तस्य, दशकण्ठस्य रावणस्य, कुलं वंशं, हेष्टि यस्तस्य, रावणवंशान्तकस्य, रामस्येत्यर्थः, अयमश्वः एषः दृश्यमानः अश्वमेधीयः हयः, अथवा किंवा, इयं पताका वैजयन्ती, वीरघोषणा वीरत्वप्रख्यापणं, जगदेकवीरत्वख्यातिः प्रतिज्ञापयित्री इत्यर्थः ; इयञ्च विजयपताका भूयश्च अश्वमेधाश्वः एतौ द्वाविव महाराजस्य रामस्य सर्व्वाधिराजत्वकीर्त्तेः प्रचारार्थमेव उत्सृष्टौ इत्यभिप्रायकं नेपथ्यभाषणं "भोः भोः। किमयोऽजमोऽयमश्वः" इत्यादि-वटूक्तीनामुत्तरार्थमेवोपन्यस्तमित्यवधेयम्। [ वीरेत्यादिविशेषणद्वयस्य साभिप्रायकत्वेनोपन्यस्तत्वात् परिकरालङ्कारः, तथा अश्वेन पताकया च सार्द्धं वीरघोषणायाः अभेदारोपात् निरङ्गं रूपकमलङ्कारः, एतयोरन्योन्यनैरपेक्ष्येण स्थितेः संसृष्टिरिति ]। पथ्यावक्त्रं वृत्तम् ॥ २८ ॥

(क) सव्यथमिव—व्यथया—परोत्कर्षश्रवणजनितया पीडया सह वर्त्तमानं यथा तथैव, समन्तापमिवेत्यर्थः, आहेति शेषः। अहो—इत्यसूयासूचकमव्ययम्, ("अहो धिगर्थे शोके च करुणार्थविषादयोः। सम्बोधने प्रशंसायां विस्मये पदपूरणे ॥ असूयायां वितर्के स्यात्" इति मेदिनी ) सन्दीपनानि—समुत्तेजकानि, क्रोधोत्साह-संवर्द्धकानीति यावत्, अक्षराणि—वर्णराजयः, श्लोकस्यैतस्य उद्धतभावगर्भतया नितरां दुःश्रवत्वमेवेति भावः।

(ख) किमुच्यते ?—किमभिधीयते, एभिः रक्षिपुरुषैरिति शेषः ; नेपथ्यभाषितेन इमे रक्षिणः किमूचुः, तेषां याथार्थ्यं वयं सम्यक्तया अवबोद्धुं न शक्नुमः इति भावः। यद्वा,—किमस्माभिर्वक्तव्यं, तत्र सहसा स्थिरीकर्त्तुं शक्यते इति भावः। प्राज्ञः खलु कुमारः,—कुमारः,—लवः, खलु—निश्चितमेव, प्राज्ञ,—प्रतिभासम्पन्नः ; अतो नूनमसौ रक्षिवचसां तात्पर्य्यं सर्व्वथा अधिगन्तुं शक्नोतीति भावः। अत्रायमाशयः,—प्राक् वयमिममश्वमवलोक्य किमप्यवधारयितुं नाशक्नुम, कुमारः लवस्तु दर्शन-मात्रेणैव आश्वमेधिकोऽयमश्व इति निरणैषीत्, तेन हि मन्यामहे, "अयमश्वः—" इत्यादिकं नेपथ्यभाषणमप्यसौ झटित्येवावभोत्स्यते इति. यद्यपि वयमनभिज्ञा वयमेतद्वचसां तात्पर्य्यग्रहणे, तथाऽप्यस्मासु विशेषाभिज्ञः लव एव सम्यगवबुध्य समुचितमेवास्माभिधास्यति, इति वा भावः।

लवः। भोः भोः! तत् किमक्षत्रिया पृथ्वी!!—यदेवमुद्धत-मुद्घोष्यते? (भ)

[नेपथ्ये]। अरे! महाराजं प्रति कुतः क्षत्रियाः? (म)

लवः। धिग् जाल्मान। (य)—

यदि ते सन्ति सन्त्वेव, केयमन्या विभीषिका।
किमुक्तैः, एतस्याधां पताकां वो हराम्यहम्॥ २८॥

(भ) भोः भोः!, रक्षिण इति शेषः, तत्—तर्हि, रामस्य एकवीरत्वे इति भावः। पृथ्वी—इयं भूमिः, किम अक्षत्रिया?—क्षत्रियजातिशून्या, एतस्यां भूम्यां किम् एकोऽपि क्षत्रियो नास्ति, यः खलु वीरपदभाक् भवेत्? इत्यर्थः; यत—यतः, एवम्—इत्यम्, उद्धतं—सगर्व्वम, उद्घोष्यते—उत्कीर्त्त्यते, युष्माभिः रामस्य वीरत्व-ख्यातिरिति शेषः। अधुना हि पृथिवी निर्वीरा न जाता, येन यूयं रामानुचराः एवं रामस्य वीरत्वगाथां गायथ, तेन हि एवमुद्धतभाषणात् विरमध्वमिति भावः।

(म) अरे—इति सावज्ञसम्बोधने। महाराजं—रामचन्द्रं, प्रति—लक्षीकृत्येत्यर्थः, रामचन्द्रसमीपे इति यावत, क्षत्रियाः,—राजन्यवर्गाः, कुतः?—कुत्र वर्त्तन्ते? इत्यर्थः; समाजः राघवस्य दशाननरिपोरन्तिके अन्ये क्षत्रियाः वीर्य्यविषये किमु स्थातुं शक्नुवन्ति? इति भावः। तथा च रावणनिर्ज्जितानां क्षत्रियाणां क्षत्रियत्वाभिमानं रावणविद्विषः पुरतः अतिलज्जाकरमेवेति तात्पर्य्यम्।

(य) जाल्मान्—अविवेकान्, पामरानित्यर्थः, ("जाल्मः स्यात् पामरे क्रूरेऽसमीक्ष्यकारिणि त्रिषु" इति मेदिनी)। युष्मान् इति शेषः, धिक्—निन्दामि, यतो यूयमीदृशघोषणया वीरवत्याः भूमेः वीरत्वगौरवं निहन्तुमुद्यताः, अतः समुद्धतान् युष्मान् सततं भर्त्सयामि इति भावः।

अथ राघवगौरवकारिणः रक्षिगणान् अधिक्षिपन्नाह, यदीति।—ते भवत्स्वामिनः रावणविजयिनः रामचन्द्रा इत्यर्थः, [गौरवाद् बहुवचनं] यदि चेत्, सन्ति विद्यन्ते, त्वदुक्तप्रकारा भवन्तीत्यर्थः, सन्त्वेव तर्हि तथैव तिष्ठन्तु तावत, तेषामस्थितौ स्थितौ वा का नः क्षतिः उपकृतिर्वा? इति भावः। किन्तु अन्या अपरा, "महाराजं प्रति" इत्यादिरूपेत्यर्थः, केयं विभीषिका? भयप्रदर्शनं, क्रियते इति शेषः, रामस्य वीरत्वगौरवं पुरतः प्रख्याप्य अस्मद्भीति-प्रदर्शनेन किमपि फलं न भविष्यतीति भावः। उक्तैः वाग्विन्यासैः, किम्?

भो भो वटवः ! परिवृत्य लोष्टैरभिघ्नन्तो नयत एनमश्वम्, एष रोहितानां मध्ये वराकश्चरतु । (र)

पुरुषः । [सक्रोधदर्पः प्रविश्य ] । धिक् चापलम् !! किमुक्तवानसि ? *तीक्ष्णतरा ह्यायुधीयश्रेणयः शिशोरपि न इमां वाचमनुसहन्ते, राजपुत्रश्चन्द्रकेतुराकृष्टशरासनः. सोऽप्यपूर्वारण्यदर्शनकौतूहलाऽऽक्षिप्तहृदयो न परापतति अद्यापि, तत् त्वरितमपसर्पतानेन तरुगहनेन । (ल)

---

ञ्चलम् ; वृथा वागाडम्बरः निष्प्रयोजन एवेति भावः । अहं लवः, वः युष्माकं, पताकां वैजयन्तीं, वीरत्वघोषणाभूतामित्यर्थः. शरसम्बाधां शरैः पत्रिभिः, सम्बाधः समाच्छादनं यस्याः तां, कार्म्मुकनिक्षिप्तशरसङ्कुलां कृत्वेत्यर्थः, हरामि बलात् नयामि ; चेत यूयं समर्थाः भवेत, तर्हि एतत्प्रतिकारं कुरुतेति भावः । यद्वा,—शरैः तृणविशेषैः, बाणैर्वा, सम्बाधा मिलनं यस्याः तां शरावबद्धाम्, अतितुच्छामित्यर्थः । अन्यत् समानम् । "शरसम्बाधाम" इत्यत्र "सन्निपत्यैव" इति पाठो बहुषु पुस्तकेषु दृश्यते, तदर्थस्तु सन्निपत्यैव वेगेन धावित्वैव, न तु किञ्चित् विविच्यैवेत्यर्थः । [ अत्र समुदितवाक्यार्थेन, यदि युष्माकं शक्तिः स्यात्, तदा रक्षतैतां पताकामित्याद्यरूपार्थान्तरागमदर्शनात् अर्थापत्तिरलङ्कारः ] ॥ २९ ॥

( र ) भोः भोः वटवः !—ऋषिकुमाराः ! परिवृत्य—वेष्टयित्वा, लोष्टैः,—मृत्पिण्डैः, शिलाशकलैर्वा, अभिघ्नन्तः,—ताडयन्तः, एनमश्वम्—अश्वमेधीयमिमं वाजिनं, नयत—प्रापयत, आश्रमान्तिकं शेषः । एष वराकः,—दयार्हः, दीनोऽयमश्व इत्यर्थः, रोहितानां—मृगविशेषाणाम्, आश्रमस्थानामित्यर्थः, ( "रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे ॥" इति मेदिनी ) । मध्ये—अभ्यन्तरे, चरतु—भ्राम्यतु, आश्रममृग इव अत्रैव तिष्ठत्वित्यर्थः ।

( ल ) सक्रोधदर्पः,—क्रोधेन कोपेन, दर्पेण—अहङ्कारेण च सह वर्त्तमानः, कुपितः अतिगर्व्वितश्चेत्यर्थः, पुरुषः,—कश्चित् दूतविशेष इति यावत्, प्रविश्य—वटुसमाजमागम्य, प्राहेति शेषः । चापलं—बालस्वभावसुलभां चपलताम्, अविमृश्यकारित्वमिति यावत्, धिक्—निन्दामि, यूयं मा एवं चपला भवतेत्यर्थः, किमुक्तवानसि ?—"यदि ते सन्तु" इत्यादिकं किमसम्बद्धं वचनमभिहितवानसीत्यर्थः, नैवं कदापि पुनर्वाच्यमित्याशयः । तथाकरणे दोषमुत्प्रेक्ष्याधुना समीचीनमुपाय-

बटवः । कुमार ! कृतमनेनाश्वेन, तर्जयन्ति विस्फुरितशस्त्राः कुमारमायुधीयश्रेणयः, दूरे चाऽऽश्रमपदमितः, तदेहि, हरिणप्लुतैः पलायामहे । (व)

---

मुपदंशति, तीक्ष्णेति ।—तीक्ष्णानीरसाः,—तीक्ष्णाः,—प्रचण्डाः, स्वल्पेनाप्यपराधेन प्रकुप्यन्तः इत्यर्थः, तथा नीरसाः, —निःप्रेमाणश्च, अतिनिर्दयाश्चेत्यर्थः [ इति विशेषणकर्म्मधारयः ] । आयुधीयश्रेणयः,—आयुधेन चरन्ति ये ते आयुधीयाः.—[ "आयुधात् छ च" ( ४।४।१४पा० ) इति छप्रत्ययः ] योद्धारः, तेषां श्रेणयः,—समूहाः, अतिभीमनिष्कृपशस्त्रधारिसङ्घाः इत्यर्थः, शिशोरपि—बालकस्यापि, का कथा अन्येषां प्रवयसामिति भावः, दृप्तां—गर्व्विताम्, मदोद्धतामित्यर्थः, वाचं—वचनं, नानुसहन्ते—न क्षमन्ते, तव ईदृशीं समुद्धतां वाचं श्रुत्वा नूनं गर्व्विताः रक्षिणः प्रकुप्य समायास्यन्त्येव, सुतरां तदुक्तात् बालकानामपि युष्माकं कथमपि मुक्तिर्न भविष्यतीति भावः । राजपुत्रः,—नृपकुमारः, चन्द्रकेतुः,—तदाख्यः सौमित्रितनयः, आकृष्टशरासनः,—आकृष्टं—गृहीतं, शरासनं—धनुर्येन तथोक्तः, अधिज्यधन्वा इत्यर्थः, सोऽपि—चन्द्रकेतुरपि, न केवलमसौ राजकुमारः अस्माकं सेनानीः एकाकी समायाति, अपि तु असंख्याताः सैनिकाश्च तत्पृष्ठतः समायान्ति इत्यपिशब्दार्थः ; अपूर्व्वारण्यदर्शनकौतूहलाक्षिप्तहृदयः,—अपूर्व्वस्य—अदृष्टपूर्व्वस्य, अनिर्वचनीयस्येति यावत्, अरण्यस्य—तपोवनश्रियः, यद्दर्शनम्—अवलोकनं, तस्य यत् कौतूहलम्—औत्सुक्यं, परमानन्दः इति यावत्, तेन आक्षिप्तं—समाकृष्टं, हृदयं—मानसं यस्य तथोक्तः, रम्यां नैसर्गिकीं तपोवनलक्ष्मीं समवलोक्य निर्भरानन्दोदयात् अतिप्रफुल्लमानसः इत्यर्थः, अद्यापि—इदानीमपि, स्वभावसुन्दरवनस्थलीशोभासन्दर्शनेन विवशभावोदयादिति भावः । न परापतति—न समागच्छति, तत्तद्देशमध्यास्ते इति भावः । तत्—तस्मात्, तदागमनात् प्रागेवेत्यर्थः, त्वरितं—द्रुतम्, अपसर्पत—प्रयात, पलायध्वमित्यर्थः, अनेन—पुरोवर्त्तिना, तरुगहनेन—निविडवनभागेन ; यावदस्माकं सेनानीः समागत्य युष्माकं दुर्व्यवहारं न पश्यति, तावत् अनेन वनभागेन सत्वरं गम्यतां, नो चेत् महाननर्थः सम्पद्येतेति भावः ।

( व ) कुमार !—लव !, कृतम्—अलम्, अनेनाश्वेन—अश्वमेधीयवाजिना, एतद्ग्रहणे अस्माकं प्रयोजनं नास्तीति भावः । कथमित्याह, तर्जेति ।—तर्ज्जयन्ति—भर्त्सयन्ति, सगर्व्वमधिक्षिपन्तीत्यर्थः. विस्फुरितशस्त्राः,—विस्फुरितानि—विलसन्ति, समुत्तोलनावसरे निशिततया समधिकमुज्ज्वलन्ति इति भावः,

लवः। [स्मितं कृत्वा]। किं नाम ! विस्फुरन्ति शस्त्राणि ? (ञ) [धनुरारोपयन्]। (ट)—

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्गारि घोरघनघर्घरघोषमेतत्।

---

शस्त्राणि—आयुधानि येषां तथोक्ताः, आयुधीयश्रेणयः,—आयुधीयानां—शस्त्रधारियोद्धपुरुषाणां, श्रेणयः,—सङ्घाः। इतः—अस्मात् स्थलात्, दूरे—विप्रकृष्टदेशं च, आश्रमपदं—तपोवनभूमिः, वयमाश्रमादतिदूरदेशं समायाता इत्यर्थः। तत्—तस्मात्, आश्रमस्यातिदूरवर्त्तित्वादित्यर्थः, एहि—आगच्छ, भोः कुमार ! त्वमिति शेषः, हरिणप्लुतैः,—मृगवदुल्लम्फनैः, वातमजाः मृगाः यथा उल्लम्फा द्रुत धावन्ति, तद्वदिति भावः। पलायामहे—अपसरामः, स्थानमेतत् विहाय त्वरितं धावामः, वयमिति शेषः, एतस्मिन् स्थाने क्षणमपि न स्थास्याम इत्याशयः।

(ञ) स्मितम्—ईषद्धास्यं, कृत्वा—विधाय, मृदु हसित्वेत्यर्थः। शस्त्राणि—सैनिकानामायुधानि, किमिति—प्रश्ने, नामेति—कोपे, विस्फुरन्ति ?—विलसन्ति, रणोन्मत्ताः सेनासमूहाः बलादस्मान् अश्वमपहर्त्तुं योद्धुञ्च सज्जा भवन्ति किमु ? तर्हि न भेतव्यं, तूर्णमेव मया तत्प्रतिविधानं क्रियते इत्याशयः।

(ट) धनुरारोपयन्—शरासने मौर्व्वीं समारोपयन्, युद्धाय कृतमतिः सज्यं कार्म्मुकं कुर्व्वन्नित्यर्थः, आहेति शेषः।

अथ लवः अश्वरक्षिसैनिकान् धृतनिशितायुधान् युद्धाय सत्वरान् समवलोक्य, तान् तृणाय विगणय्य स्वशौर्य्यंवत्तां चापशिक्षाकौशलञ्च प्रकटीकर्त्तुं हेलया अगन्ति न्यक्करोति, ज्याजिह्वेति।—ज्या शिञ्जिनी, जिह्वा रसना इव [“उपमितं व्याघ्रादिभिः,—” (२।१।५६ पा०) इत्युपमितसमासः] तया, जिह्वाकारया ज्ययेत्यर्थः, वलयितेत्यादि।—वलयिते वलयाकारं प्रापिते, उत्कटे उग्रे, भीषणे इति यावत्, कोटी अटन्यौ, अग्रे इत्यर्थः, दंष्ट्रे विकटौ दन्तौ इव यस्य तत्, कल्पान्ते जगद्ग्रासलोलुपस्य कृतान्तस्य सुदीर्घा रसना यथा विशालौ दन्तौ भृशं स्पृशति, तथा ममेयं चापस्य ज्याऽपि कोटिद्वयं सततं स्पृशतु इति भावः, उद्गारीत्यादि।—उद्गारी उद्गच्छन्, घोरः भयङ्करः, घनस्य मेघस्येव, घर्घरः तथाविधाऽव्यक्तः, घोषः ध्वनिः यस्य तथोक्तम्, अथवा, घोरं भयावहं, घनवत् संवर्त्तादिमेघवत्, घर्घरघोषं घर्घरशब्दम्, उद्गारि उद्गारयिष्यत्, कल्पान्तमेघ इव निरन्तरं सर्व्वप्राणिभयप्रदं शब्दं निनादं करिष्यदित्यर्थः, अत्र पक्षे [“अकेनोर्भविष्य—” (२।३।७० पा०)

ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥ ३० ॥

[ इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे ]।

इति कौशल्याजनकयोगो नाम चतुर्थोऽङ्कः।

---

इति कर्म्मणि षष्ठीप्रतिषेधः ]। एतत् चापं मदीयं धनुः, ( "अथास्त्रियौ धनुश्चापौ।" इत्यमरः। अस्त्रियावित्युक्तेः पुंसि प्रयोगस्य बाहुल्येन सर्वैरादृतत्वेऽप्यत्र "अथाम्रतसक्तहस्तचापाभरणलाञ्छनम्" इति नपुंसकप्रयोगोक्तेः चापशब्दस्य क्लीबे प्रयुक्तमिति ज्ञेयम् )। ग्रासेत्यादि।—ग्रासाय जगतः कवलीकरणाय, प्रसक्तं, हसत् भक्षणाह्लादेन विकटहासं कुर्व्वत्, यत् अन्तकस्य कृतान्तस्य, वक्त्रयन्त्रं यन्त्राकारं वक्त्रं, तस्य या जृम्भा व्यादानं, तद्विडम्बि तदनुकारि, अत एव विकटं विशालम्, उदरम् अभ्यन्तरं यस्य तादृशम्, अस्तु भवतु। लोकसंचयं कर्त्तुं प्रवृत्तस्य कृतान्तस्य वदनं यथा प्रलयसमये प्रचुरभक्ष्यलाभानन्देन साट्टहासं व्यात्तं भवति, तथैव मम चापं विकटां जृम्भां विधाय निखिलं रिपुसैन्यं सपदि निहन्त्वित्यर्थः। [ अत्र जिह्वया सह ज्यायाः, दंष्ट्रया सह कोट्याः, घनेन सह चापघोषस्य, यन्त्रेण सह वक्त्रस्य, जृम्भया सह चापविजृम्भणस्य अवैधर्म्य-साम्यानामुपदेशात् पञ्चोपमा अलङ्काराः, तेषाञ्च परस्परसापेक्षत्वात् सजातीय-सङ्करः, अपि चान्तकवक्त्रस्य जगद्ग्रासकालिकहास्यस्यासम्बन्धेन तत्सम्बन्धोक्ते-रतिशयोक्तिरलङ्कारः, एतेन सह प्रोक्तोपमानां नैरपेक्ष्येण स्थितेः संसृष्टिः, किञ्च एक एवाहं युष्माकं सर्वेषां रक्षिसैनिकानां सपदि संक्षयं करिष्यामि इति च वस्तु व्यज्यते, इत्यलङ्कारेण वस्तुध्वनिः। शब्दालङ्काराः छेकानुप्रासवृत्त्यनु-प्रासाश्च यथायोगं ज्ञेयाः। संयुक्तादिवर्णानां श्रुतिदुःखदायकत्वेन दुःश्रवत्वदोषा-नुकूलत्वेऽपि अत्र वीररसानुकूलत्वेन पुनर्गुणत्वमेवेति ज्ञेयं,—"वक्तरि क्रोधसंयुक्ते वाच्येऽत्यन्तं समुद्धते। रौद्रादौ तु रसेऽत्यन्तदुःश्रवत्वं गुणो भवेत् ॥" इति दर्पणात्। अत्र वीरो रसः, ओजोगुणः गौड़ी च रीतिर्ज्ञेया ]। वसन्ततिलकं वृत्तम् ॥ ३० ॥

---

## चतुर्थाङ्कस्य सङ्क्षेपः ।

अथाङ्केऽस्मिन् प्रथमत एव रङ्गालयप्रविष्टयोः सौधातकिभाण्डायननामधेययोः परस्परमालपतोर्द्वयोर्वाल्मीकिशिष्ययोरन्यतरेण, समागतातिथिसत्कारारम्भरमणीयं तपोवनहरिणपरिपीयमाणोष्णमधुरमण्डविमण्डितम् इतस्ततः सद्यस्ताम्रव्यञ्जनसम्भारसौरभामोदितमाश्रमपदमालोक्य सानन्दं विज्ञापितोऽपरः सौधातकिः शिष्टानध्यायसम्भावनया परां प्रीतिमधिगच्छन् सोपहासं तेषु वार्धकस्य परिचयमपृच्छत् । तेन चैवं पृष्टो विरक्तश्चास्य सोपहासवचनेन, भाण्डायनः सपरिचयमेषामागमनकारणं व्यजिज्ञपत्, न्यषेधच्च तमेवं वृथाप्रलापिनं चापल्यात् । सौधातकिरपि सहचरमुखात् तस्य वसिष्ठेति नामाकर्ण्य वत्सतरीसहितमधुपर्कग्रहणादमुं वृकादित्वेन सम्भावयन् पुनरप्युपाहसत् ।

अथ श्रुतिप्रमाणेन मधुपर्कस्य समांसत्वं प्रमापयन् भाण्डायनः सौधातकिना पुनरपि विदेहनाथके जनके तद्व्यभिचारमापृच्छ्यमानः निवृत्तानिवृत्तमांसभेदेन तत् व्यवस्थापयन्नपि, पुनरपि सहचरेण तेन विदेहपतेर्निवृत्तमांसत्वं कथमित्यपृच्छ्यत । तद्धेतुमाचक्षाणश्चासौ सुतायाः सीतायाः निष्कारणनिर्वासनदुर्विपाकश्रवणोत्थमस्य वैखानसव्रतावलम्बनमेव तत्कारणमचीकथत्, अवदच्च सुहृत्साक्षात्कारमेव आगमनकारणम् । अथ कौशल्यादिभिरस्य साक्षात्कारः संवृत्तो न वेति सौधातकिना पृष्टो भाण्डायनः वैवाहिकेन साक्षात्कारार्थं कौशल्यामानेतुं तत्समीप वसिष्ठेनारुन्धत्याः प्रेषणवृत्तान्तमकथयत् । ततः श्रुताखिलवृत्तान्तः सौधातकिरपि सहचरैः सम्भूय क्रीडया अनध्यायमहोत्सवमनुष्ठातुमियेष । भाण्डायनोऽपि प्राचेतसाश्रमवाह्यभूतं तरुमूलमधितिष्ठन्तं जनकमालोकयन् साक्षेपं सह सहचरेण अन्तर्दधे । इति विष्कम्भसङ्क्षेपः ।

अथ चिन्ताभावसनाथः विदेहनाथः सन्ततमन्तर्ज्वलताऽतिमहता निखिलवासनाविदाहिना शोकाग्निना दन्दह्यमानमानसः, प्रखरकरपत्रवदतिदुःसहं मर्मविदारकं शोकावेगमसहमानः, समवगच्छन् दारुणदुःखदग्धस्यापि देहस्य स्वतः पाताभावं, विभावयन् आत्मघातस्य चिराय घोरनरकोत्पादकत्वं, विलपन् तानिव निष्कारणनिर्वासितां स्वसुतां सीतामुद्दिश्य वारंवारं, स्मरंश्चानियतानितस्मितांशुशोभितं शैशवसम्भूतविरलदशनराजिविराजितं तदीयममलं मुखकमलं

खिद्यमानः, वशिष्ठारुन्धतीगङ्गावह्निभास्करादिभिः सर्वैः स्वयञ्च विदितविशुद्धभावां स्वसमक्षमेवमतिविषमां दशां गमितां सीतामालोक्यापि तद्दोषमप्रतिकुर्वतीं दारुणप्रकृतिं तत्प्रसूतिं भगवतीं वसुमतीं विलक्ष्यासौ तिरश्चकार।

अथ नेपथ्यादुत्थितम् "इत इतो भगवतीमहादेव्यौ" इति कञ्चुकिवाक्यमाकर्ण्य दूरप्रसारितसहृदयदृष्टिप्रदर्शितमार्गां केवलामरुन्धतीमागच्छन्तीमालोक्य, पर्यालोच्य च अपरां महादेवीशब्दप्रतिपाद्यां प्रबलविषादजातविकृतिं क्षीणदीनमलिनाकृतिम् अन्तर्विरूढशोकशल्यां कौशल्यामिति कथमपि निश्चिन्वन्, तदालोकनसमुद्बोधिताखिलपूर्वस्मृतिः मूर्त्तिमदानन्दरूपाया अपि तस्याः साम्प्रतमीदृशमतिभीषणमाकृतिपरिणाममालोकयन् अतिकातरः तामेव उद्दिश्य भृशं विललाप।

कौशल्याऽपि स्वामपराधवतीं मत्वा त्रपापरवशा सहसा वैवाहिकसमीपं यातुमनीहमाना स्वयं कृतानुशयं हृदयं विकृतावस्थमपि स्वस्थं विधाय, कञ्चुक्यरुन्धतीभ्यां संचारितनिजकर्त्तव्या कथमपि शनैरनुसर्त्तुमारेभे। तद्दुःखाक्षिप्तहृदया वशिष्ठजायाऽपि एवमतिनिर्विण्णां तां सान्त्वयन्ती दूरत एव विपुलविटपिमूलनिषण्णमतिविषण्णं मिथिलानायकं जनकं दर्शयामास। दूराद्दृष्ट्वा चेममतिविषमसुताशोकक्षोभमलिनं राजानमसौ स्वकीयं पूर्वकृतदुष्कृतसमवायसदृशमतिनिकृष्टमदृष्टमेव शुशोच।

जनकोऽपि कञ्चुकिकौशल्योपेतामरुन्धतीमागच्छन्तीमालोक्य, स्वयमुपसृत्य प्रथमं त्रिलोकलोकवन्द्याम् अवनितललोलेन शिरसा समभिवन्द्य, समधिगम्य च सकलकल्याणनिदानमाशीर्वचनं तस्याः, पुरःस्थितं कञ्चुकिनमामन्त्र्य, प्रजापालमात्रत्वेन कौशल्यामध्याक्षिपत्, अपृच्छच्च तमेव तस्याः कुशलवार्त्ताम्। कौशल्यापरिचये प्रजापालमात्रत्वकथनात् अन्तर्निगूढार्थं जनककृतमधिक्षेपमनुचिन्तयन् दुःखितान्तःकरणः कष्टैरपि, निष्करुणे सीताविवासने कौशल्यायाः सर्वथा निर्द्दोषत्वं प्रतिपादयन्, समर्थयमानश्च रामकृतस्यापि दारुणाद्भुतकर्मणः अपरिहार्य्यनियतिनिमित्तकत्वं, सीताशोकक्लिष्टामपि तामधिक्षिपन्तं राजानमनुनीय ततो न्यवर्त्तयत्।

मर्मनिहितदुःखशल्या कौशल्याऽपि इत्थं दुःसहशोकसन्तापतप्तं हृदयविदारणं जनकवचनं शतं वारमिवातिदुःसहं मन्यमाना मुमोह। कष्टेन चैवं प्रतिबोधिता विदेहनाथोऽपि सततं सीताशोकेनातिदुःखितामपि तां दारुणवचनैः पुनरपि दुःखयन्ननुशुशोच, विललाप चानुस्मृताखिलपूर्ववृत्तान्तः तमेवातिप्रियं द्वितीयमिव हृदयं सुहृदं दशरथमनुस्मरन्नतिमात्रम्। ततो मोहविलुप्तचेतनां कौशल्यां निःश्वासनिरोधात् म्रियमाणामिवालोक्य जनकेन कमण्डलूदकेनाभिषिच्य प्रत्यबोधयत्।

एवं प्रतिबोधिता चासौ सततमानन्दितायाः सीतायाः स्मितविकसितमनिन्द्यं वदनारविन्दमनुस्मरन्ती निष्कारणनिर्वासितामतिपूतां तामुद्दिश्य नाम्ना कथमपि प्राणैरवियुक्ता भृशं विललाप। तामित्थं विलपन्तीमालोक्य समधिकक्लेशवती कृपापरवती अरुन्धती ऋष्यशृङ्गाश्रमे कुलगुरुणाऽभिहितं सत्यं तथ्यमनुस्मारयन्ती कथमपि तां हताशामाश्वासयामास।

अथाश्रमसमीपे सहसा शिशूनां समपनीतहृदयविषादं कलकलनादमाकर्ण्य सर्व्वेषु कथमयं, कुतस्त्यो वेति निपुणं निरूपयत्सु जनकः शिष्टानध्यायात् क्रीडतां बटूनाम् अयं कोलाहल इत्यकथयत्। अथ कौशल्या दूरादेव तेषु बटुषु कञ्चिदतिमधुरतराकारं सर्व्वथाऽनुकृताभिरामराममुखाकृतिं लोचनलोभनीयं बालकमालोक्य सातिशयं विस्मयमुपागमत्। ततश्चारुन्धत्याऽपि तथैव सम्भावितोऽसौ बालकः कञ्चुकिना लक्षिताखिललक्षणेन क्षत्रियब्रह्मचारीति निरणायि। ततो जनकेनास्य परिचयं पृष्टया अरुन्धत्याऽपि कुतस्त्योऽयमिति निर्णेतुं नाशक्यत। जनकस्तु अतीवकौतूहलाऽऽक्षिप्तहृदयः शिशुमिममाह्वातुम्, अस्य परिचयञ्च विज्ञातुं तमेव कञ्चुकिनं वाल्मीक्याश्रमं प्रेषयामास। कञ्चुकिना समाहूतोऽपि नायं क्रीडामपहाय अत्राऽऽगमिष्यतीति प्रतर्कयन्ती कौशल्या सविनयं गृहीतगृष्टिवचनं बालकमचिरादेव समीपमुपागतमालोक्य विसिष्मिये। मिथिलाधिपोऽपि शिशोरस्य सन्दर्शनमात्रमत्याकृष्टचित्तः कमप्यनन्तमानन्दसन्दोहमवाप।

विहितव्यवहारपटुर्बटुरपि सविनयमुपसृत्य, नमस्कृत्य चातिविनीतः सर्व्वान् अर्चनीयान् पर्य्यायक्रमेण, समधिगम्य च तेभ्यः अवितथान् शुभाशीराशीन्, अरुन्धत्या उत्सङ्गे गृहीतः पुनः कौशल्योत्सङ्गमलञ्चकार। कौशल्याऽपि तमुत्सङ्गे कृत्वा चिराभ्यस्तरामस्पर्शानुरूपमतिकोमलस्पर्शमनुभूय, निरूप्य च निपुणं न केवलं रामभद्रस्य, अपि तु सीतायाश्च प्रकृत्याकृत्योः सविशेषं सौसादृश्यमविकलमतिविस्मिता तदेव वैवाहिकमदर्शयत्। विदेहाधिपतिनाऽपि सर्वं सुनिपुणमालोक्य सविषादं तथैवेति समर्थितम्। अथाकृतिगतसौसादृश्यसन्दर्शनेन प्रबलाशाक्षिप्तहृदया मनसा सीतासुतत्वेन बालकममुमाशङ्कमाना, कुतस्त्यस्त्वमिति तन्मुखादेव आकर्णयितुमिच्छुरस्य जननी जनकश्चास्ति न वेति समपृच्छत्, अवागच्छच्च तं बालकमविज्ञातपितृपरिचयं केवलमाशैशवं वाल्मीकिस्वामिकमिति।

परस्परमेवमालपद्भिः तैः सर्वैः सहसा नेपथ्योत्थिता चन्द्रकेतोरादेशघोषणा समश्रावि, निरणायि च तच्छ्रवणात् जनकारुन्धतीभ्यां रामाश्वमेधाश्वपरिरक्षणार्थमागतश्चन्द्रकेतुरिति। शिशुरसौ कोऽयं चन्द्रकेतुरिति विज्ञातुमशक्तो जनकमपृच्छत्,

समदर्शयच्च विदेहपतिमुखात् तच्छ्रावात्मजत्वेन तस्य परिचयं विज्ञाय तस्य रामायणकथाप्रावीण्यं* विस्तरात्। जनकोऽपि तं तथा कथाऽभिज्ञं विज्ञाय, दशरथात्मजानां कति सुताः केषु केषु च दारेषु अजायन्तेत्यपृच्छत्। तेनैवं पृष्टोऽसौ बालकोऽपि कविना प्रणीतस्यापि तत्कथांशस्य सर्व्वथाऽप्रकाशितत्वेन तस्मिन् स्वस्यानभिज्ञत्वमविख्यापयत्, अस्मिन्नपच्च ज्यायसा कुशेन परिरचितस्य तद्भागस्य अभिनयार्थं भरताश्रमप्रेरणवृत्तान्तम्। एतावताऽप्यपरितृप्तेन मिथिलेशेन प्रकाशित-भागस्यैव अवधिभागं पुनः पृष्टोऽसौ बालकः आसन्नप्रसवायाः निर्व्वासितायाः सीतायाः लक्ष्मणकर्त्तृकं निर्जने वने परित्यागमेव प्रकाशितभागस्य अवधिमकथयत्।

तच्चाकर्ण्य तामतिदुःखितामुद्दिश्य सर्व्वेषु भृशं विलपत्सु, अदृष्टपूर्व्वाश्वसन्दर्शनोत्-फुल्लहृदयाः केचन मुनिबालकाः झटिति प्रविश्य तत्स्वरूपवर्णनपुरःसरं तद्दे-वाद्भुतमालोकयितुं लवमप्याचकर्षुः। लवोऽपि स्वां सहचरकृतामवस्थां विज्ञाप्य तैर्मान्यैः कथमपि अनुमतः सत्वरं तत्रोपस्थाय, समवलोक्य च तमश्वमतिनिपुणम्, आश्वमेधिकोऽयमिति निरणयत्। सहचरास्तु तद्वचसि अप्रतीता अश्वपालानुद्दिश्य "किमर्थोऽयमश्वः" इति पृच्छन्तः "अयमश्वः पताकेयम्" इत्यादिकमतिगर्व्वितमुत्तरमश्रौषुः। लवोऽपि तदाकर्ण्य, साटोपम् अश्वपालानाहूय तावन्तमधिचिक्षेप। तेन चाति-क्रुद्धः कश्चित्सदर्पसैनिकः समागत्य लवमतिमात्रमधर्षयत्। अथ कोपप्रस्फुरिता-धरम् अतिभीषणाकारं तं सैनिकमालोक्य भीतभीतैर्वटुभिः तस्मात् शुष्ककलहा-न्निवर्त्तितुं मुहुरनुरुद्धः क्रुद्धश्चातिमात्रं साटोपसैनिकवचसा, विप्रकृतः सिंह-शावक इवातिदृप्तो लवः सशरशरासनाकर्षणेन निजवचनानुरूपं शौर्य्यातिशयं प्रदर्शयन् भयाभीषितान् सहचरानाश्वासयामासेति।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-कुलपतिकल्प-"बि, ए" इत्युपनामक-
श्रीमज्जीवानन्दविद्यासागर-भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण-श्रीमन्नित्यबोधविद्यारत्नाभ्यां
परिवर्त्तित-परिवर्द्धितायां सुखबोधिनीसमा-
ख्यायाम् उत्तररामचरितव्याख्यायां
चतुर्थोऽङ्कः ॥ ४ ॥

---

## अथ पञ्चमोऽङ्कः।

[ नेपथ्ये ]। भो भोः सैनिकाः! जातं जातमवलम्बनमस्माकम्। (क)—

नन्वेष त्वरितसुमन्त्रनुद्यमान-
व्यावल्गत्प्रजवनवाजिना रथेन।
उद्घातप्रचलितकोविदारकेतुः
श्रुत्वा वः प्रधनमुपैति चन्द्रकेतुः ॥ १ ॥

---

(क) भोः भोः सैनिकाः,—योद्धृवर्गाः, अस्माकं—सैनिकानाम्, अवलम्बनम्—आश्रयः, सुसहाय इति यावत्, जातं—सम्पन्नं, लब्धमित्यर्थः। लवेन निहन्यमानानाम् अस्माकं सेनासमूहानां रक्षणार्थं सेनानीः चन्द्रकेतुः त्वरितमेव समायाति, अतो न युष्माभिः भेतव्यमिति भावः।

अथ रक्षिसैनिकानामधिनायकस्य चन्द्रकेतोः त्वरितमेव युद्धस्थलसमागमनप्रकारमाह, नन्वेष इति।—ननु भोः सैनिकाः!, एषः पुरत एव दृश्यमानः इत्यर्थः, चन्द्रकेतुः तदाख्यः अस्माकमधिनायकः सौमित्रितनयः, वः युष्माकं, प्रधनं युद्धं, समाकर्ण्य श्रुत्वा, ऋषिकुमारैः सह संवृत्तं तुमुलं युद्धमुपश्रुत्येत्यर्थः, त्वरितेति।—त्वरितेन त्वरान्वितेन, अत्युत्कण्ठितेनेत्यर्थः, सुमन्त्रेण तन्नाम्ना सारथिप्रवरेण, नुद्यमानाः प्रेर्यमाणाः, सञ्चाल्यमाना इत्यर्थः, व्यावल्गन्तः प्रधावन्तः, प्रजवनाः अतिवेगशालिनः, वाजिनः अश्वाः यस्य तथाविधेन, रथेन स्यन्दनेन करणेन, तादृशरथमारुह्येत्यर्थः, उद्घातेति।—उद्घातेन बन्धुरदेशेषु प्रतिघातेन, उन्नतावनतभूमिषु वेगेन सञ्चालनात् प्रतिहतिप्रापितेन हेतुनेत्यर्थः, प्रचलितः भृशं विकम्पितः, कोविदारकेतुः कुद्दालध्वजः, काञ्चनारकाष्ठनिर्मितध्वजदण्ड इत्यर्थः, यस्य तथाविधः, ("कोविदारे चमरिकः कुद्दालो युगपत्रकः" इत्यमरः) उपैति आगच्छति; अस्माकं युद्धवार्तामुपश्रुत्य सत्वरं रणभूमिमेवागच्छति, तेन चास्माकमिदानीमवलम्बनं जातमिति भावः। [ अत्र प्रजवनत्वं प्रति व्यावल्गनत्वस्य हेतुत्वेनोपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथोत्तरार्द्धे केतुः केतुरित्यत्रान्त्ययमकालङ्कारश्चेत्यनयोः नैर-

[ ततः प्रविशति सुमन्त्रसारथिना रथेन धनुष्पाणिः साद्भुतहर्षसम्भ्रमश्चन्द्रकेतुः ] ।

चन्द्र । आर्य्य सुमन्त्र ! पश्य ।—

मुनिजनशिशुरेकः सर्वतः सैन्यकाये
नव इव रघुवंशस्याप्रसिद्धः प्ररोहः ।
दलितकरिकपोलग्रन्थिटङ्कारघोर-
ज्वलितशरसहस्रः कौतुकं मे करोति ॥ २ ॥
किरति कलितकिञ्चित्कोपरज्यन्मुखश्री-
रनवरतनिगुञ्जत्कोटिना कार्मुकेण ।

पेक्ष्येण स्थितः कस्याः ]। प्रहर्षिणी वृत्तम् ;—"त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" इति लक्षणात् ॥ १ ॥

अथ चन्द्रकेतुः लवस्य शौर्य्यातिशय्यं शरीरसंस्थानञ्च समवलोक्य विस्मय-परवशतां व्यातनोति, मुनिजनेति।—नवः नूतनः, अचिरोद्गत इत्यर्थः, रघु-वंशस्य रघुकुलस्य, अप्रसिद्धः अभिनवोदयात् सर्व्वथा परिचयाभावेन सर्व्वत्र प्रसिद्धिमनधिगत इत्यर्थः, प्ररोह इव अङ्कुर इव, एकः एकाकी, असहाय इत्यर्थः, मुनिजनशिशुः मुनिदारकः, प्रच्छन्नं रघुवंशीयं तेजः बिभ्रत् कश्चिदयमृषि-कुमार इत्यर्थः, एतादृशालौकिकतेजसां रघुकुलादृते कुत्राप्यदर्शनादिति भावः ; सर्व्वतः सर्व्वस्मिन्, सैन्यकाये सैन्यव्यूहे, हस्त्यश्वरथपादातरूपसेनासमुदाये इत्यर्थः, दलितेति।—दलितानां निर्म्मथितानां, करिकपोलानां हस्तिगण्डस्थलानां, ये ग्रन्थयः सन्धिभागाः, तेषां टङ्कारेण शराघातजनितेन टमित्याकारकभीषणशब्देन, घोरं भया-नकं यथा तथा, ज्वलितानि प्रदीपितानि, पाषाणसमकठोरकरिकुम्भेषु पतनात् अग्नि-ज्वालायुक्तानीति यावत्, शराणामायुधानां, सहस्राणि यस्य तथाविधः सन्, निशित-शरसहस्राणि विसृज्य मत्तेभकोटिभागान् विपाटयन् योद्धृवर्गांश्च तथाविधशरजालेन विह्वलीकुर्व्वन्नित्यर्थः, मे मम, कौतुकं कुतूहलं, करोति जनयति। रघुकुल-सच्छायः कोऽयं हि मुनिबालकः संग्रामे अलौकिकशौर्य्यातिशय्यं प्रकटीकृत्य आयुधवर्षणेन करिकुलानि रथिवर्गांश्च व्याकुलीकुर्व्वन् मम विपुलां प्रीतिं जनयतीति समुदितार्थः। [नवाङ्कुरेण सार्द्धं मुनिजनशिशोरवैधर्म्म्यसाम्योपदेशादुपमाऽलङ्कारः ]। मालिनी वृत्तम् ॥ २ ॥

अनन्तरेण बालस्यास्य शौर्य्यातिशय्यं प्रकटीकरोति, किरतीति।—कलितेन

समरशिरसि चञ्चत्पञ्चचूड़श्चमूनाम्
उपरि शरतुषारं कोऽप्ययं वीरपोतः ॥ ३ ॥

आश्चर्यमाश्चर्यम् !!

सुमन्त्रः । आयुष्मन् !—

अतिशयितसुरासुरप्रभावं शिशुमवलोक्य तवैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥ ४ ॥

---

समुद्भूतेन, किञ्चित्कोपेन ईषत्क्रोधेन, रज्यन्ती रक्तरागवती, लोहितायमानेति यावत्, मुखश्रीः वदनशोभा यस्य तथोक्तः, अतितेजस्वितया अन्येषां वीरत्वख्यातिमसहिष्णोः लवस्य कोपोदयात् मुखमण्डलस्य रक्तिमरागः ज्ञेयः। अपि च, चञ्चन्त्यः रणकर्म्मणि समन्तात् मस्तकसञ्चालनेन इतस्ततः चलन्त्यः, पञ्चचूड़ाः पञ्चसंख्यकाः शिखाः यस्य तथोक्तः, मस्तककम्पनात् चलित-काकपक्ष इत्यर्थः। ( एतेन "एकशिखस्त्रिशिखः पञ्चशिखो वा" इति बौधायन-स्मरणात् कृतचूड़ाकर्म्मणां रघुकुलसन्तानानां पञ्चशिखाधारणं कुलाचारः आसी-दित्यनुमीयते इति ज्ञेयम् ); कोऽपि अज्ञातनामधेय इत्यर्थः, अयं वीरपोतः वीर-शिशुः, समरशिरसि रणमूर्द्धनि, युद्धक्षेत्राग्रभागे अवस्थितः सन्नित्यर्थः, अनवरतेति ।— अनवरतं निरन्तरं यथा तथा, निगुञ्जन्त्यौ शब्दायमाने, कोटी अटन्यौ यस्य तथा-विधेन, कार्म्मुकेण धनुषा, चमूनां सैनिकानाम्, उपरि सेनासमूहोपरीत्यर्थः, शर-तुषारं बाणतुहिनं, किरति वर्षति ; अतिक्षिप्रहस्ततया अजस्रबाणवर्षणात् कुमारनिक्षिप्तशरराजयः करकावर्षणानीव अन्वभूयन्त चन्द्रकेतुसैनिकैरिति भावः। [ अत्र तुषारैः सह शराणां साम्योक्तेः लुप्तोपमाऽलङ्कारः, छेकानुप्रासवृत्त्यनुप्रास-शब्दालङ्कारौ यथायोगं द्रष्टव्यौ। शराणामसंख्येयत्वद्योतनाय तुषारसाम्यं प्रदर्शितं, तेन न परिमाणगतन्यूनत्वादनुचितार्थतादोषशङ्का कार्य्येति ]। मालिनी वृत्तम् ॥ ३ ॥

अथ सुमन्त्रः कुमारे लवे शौर्य्येण शरीरलावण्येन च सर्व्वथा राघवसाम्यं विनिर्द्दिशति, अतिशयितेति ।— आयुष्मन् ! दीर्घायो ! चन्द्रकेतो !, "आयुष्मन् रथिन् सूतः" इत्यालङ्कारिकवचनात् । अतिशयितः अतिक्रान्तः, सुराणां देवानाम्, असुराणां दितिसुतानाञ्च, प्रभावः शौर्य्यं येन तथाभूतं, तवैव भवत एव, तुल्यरूपं समानाकारम्, आकारेण भवत्सदृशशौर्य्यशालिनमित्यर्थः, शिशुम् अमुं बालकम्, अवलोक्य दृष्ट्वा, कुशिकसुतस्य कुशिकनन्दनस्य विश्वामित्रस्य, मखद्विषां यज्ञविघात-

चन्द्र। इममस्त्वेकमुद्दिश्य भूयसामारम्भ इति हृदयमपत्रपते। (ख)—

अयं हि शिशुरेककः समरभारभूरिस्फुरत्-
करालकरकन्दलीकलितशस्त्रजालैर्बलैः।
क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै-
रमन्दमदुर्दिनर्द्विरदवारिदैरावृतः॥ ५॥

---

कानां राक्षसानां, प्रमाथे संहारे, कौशिकक्रतुहन्तॄन् मारीचादिनिशाचरसमूहान् निहन्तुमित्यर्थः, धृतधनुषं कार्म्मुकधारिणं, रघुनन्दनं रामभद्रं, स्मरामि चिन्तयामि; रणकर्म्मणि अस्य बालस्यालौकिकं विक्रमं निरुपमं लावण्यञ्च समवलोक्याहं विस्मयविवशो मन्ये, पुनः बालरूपीभवन् भगवान् रघुनाथः विश्वामित्रसवे क्रतुविघातिनः राक्षसान् निहन्तुं संप्रवृत्तः किमु? इति भावः। आकारेण पराक्रमेण चायं बालकः रामसदृश एव प्रतिभाति इत्याशयः। [पुरा किल विश्वामित्रप्रार्थनया रामचन्द्रः सलक्ष्मणः राज्ञः दशरथस्यादेशात् तदीयं सवं गत्वा यज्ञद्रुहः राक्षसानवधीदिति रामायणी वार्त्ता। अत्र सदृशवस्त्वनुभवात् रघुनन्दनस्मृतेरुदयात स्मरणालङ्कारः, तथा शिशौ सुरासुरप्रमाथातिशायित्वस्यासम्बन्धेऽपि तत्सम्बन्धोक्तेः असम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः, अपि च तत्रैव तुल्यरूपमित्युक्तेरुपमा च, एषाञ्चान्योन्यमापेक्षतया स्थितेः सङ्करः]। पुष्पिताग्रा वृत्तम्॥ ४॥

(ख) तु—किन्तु, एकम्—असहायम्, इमं—बालकम्, उद्दिश्य—अभिलक्ष्य, भूयसां—बहूनामस्मत्सैनिकानाम्, आरम्भः,—युद्धोपक्रमः, अभूदिति शेषः, इति—अस्माद्धेतोः, हृदयं—मानसम, अपत्रपते—लज्जते; एकेनानेन शिशुना सह सर्व्वेषामस्माकं रणोद्यमः सैन्यसमवायानाम् अशक्तिसूचकतया अतीव लज्जाजनक इति भावः।

अथ लवस्य शौर्य्यातिशय्यं विवृणोति, अयमिति।—अयं पुरतः दृश्यमानः, एककः एकाकी, शिशुः हि बाल एव, समरेति।—समरस्य युद्धस्य, भारे अतिशये, तुमुले एतस्मिन् संग्रामे इत्यर्थः, भूरि प्रभूतं यथा स्यात्तथा, स्फुरन्ति देदीप्यमानानि, करालानि भीषणानि, कराः हस्ताः, कन्दल्यः इव गुल्मभेदा इव, [इत्युपमितसमासः] ताभिः, गुल्मविशेषसदृशसुविशालैः सुदृढैश्च करैरित्यर्थः,

सुमन्त्रः । वत्स ! एभिः समस्तैरपि किमस्य ? किं पुन-
र्व्यस्तैः ? (ग)

"करायां कन्दलीभिः प्ररोहैः शाखाभिः पल्लवीभिरित्यर्थः" इति केचित्तु व्याख्यानं न मनोरमं, कोषादौ प्ररोहार्थे कन्दलीशब्दस्य प्रयोगादर्शनात्, तथाहि,—( "कन्दलं त्रिषु कपालेऽप्युपरागे नवाङ्कुरे। कलध्वनौ कन्दली तु मृगगुल्मप्रभेदयोः ॥" इति मेदिनी )। कलितानि परिस्फुटीतानि, शस्त्रजालानि आयुधवृन्दानि यैः तथाविधैः, अपिच, क्वणन्तीभिः शब्दायमानाभिः, कनकस्य सुवर्णस्य, किङ्किणीभिः क्षुद्र-घण्टिकाभिः, झणझणायिताः झणझणाः झणझणाः भूताः, झणझणेत्यव्यक्तं शब्दं कुर्व्वन्तः इत्यर्थः, [ "अव्यक्तानुकरणाद्—" ( ५।४।५७पा० ) इति डाचि, "डाचि विवक्षिते—" ( वा० ) इति द्वित्वे च कृते झणझणाशब्दात् "लोहितादि-डाज्भ्यः—" ( ३।१।१३पा० ) इति क्यषि कृते सिद्धस्य झणझणायेति नामधातोः कर्त्तरि निष्ठायां रूपमेतदिति ध्येयम् )। स्यन्दनाः रथाः येषां तैः, रथकिङ्किणीशब्दानां झणझणेत्याकारकाव्यक्तनिनादैन सर्व्वाः दिशः वधिरीकुर्व्वद्भिः इत्यर्थः, अमन्दैः प्रभूतैः, मदैः दानवारिभिः, दुर्द्दिनानीव मेघाच्छन्नानि अहानीव, रणोन्मत्ततया अनियतमेव मदजलक्षरणात् मेघाच्छन्नदिवसवत् प्रतीयमाना इत्यर्थः, ये द्विरदाः हस्तिनः, ते एव वारिदाः मेघाः येषु तैः, वर्षासु मेघाच्छन्नेषु अहःसु नवजलधराः यथा निरन्तरमेव जलानि वर्षन्ति, तथैवार्थाद्द्विरदा हि दानवारिभिः भूमितलमभिषिञ्चन्तीति वस्तु-स्थितार्थः। अमन्दः अनल्पः, मदः मदस्रावः, दुर्द्दिनं वर्षमिव येषां तादृशाः, द्विरदाः गजाः, वारिदाः मेघा इव येषु तथोक्तैः इति वा विग्रहः। बलैः अक्षौहिणीभिः, आवृतः आच्छादितः, अभूदिति शेषः ; एकं हि बालकं पराभवितुं प्रभूतानामसङ्ख्य-सैनिकानामुपरोधः निरतिशयां मे लज्जां जनयतीति भावः। ( अत्र करैः सह कन्दलीनां तथा दुर्द्दिनैः सह द्विरदानाञ्च साम्योपदेशात लुप्तोपमा, एवं द्विरदेषु मेघानामभेदाध्यासात् निरङ्गरूपकमलङ्कारः, एतेषाञ्च नैरपेक्ष्येण संस्थितेः संसृष्टिः ] । पृथ्वी वृत्तम् ॥ ५ ॥

(ग) समस्तैरपि—निखिलैरपि, सम्मिलिततया स्थितैरपीत्यर्थः, एभिः,—सैनिकैः, अस्य—शिशोः लवस्य, किम्—अलम् ; एते सेनासमुदायाः सम्मिलिताः सन्तः युध्यमाना अपि एकाकिनः अस्य शिशोः किमपि कर्त्तुं न शक्नुवन्तीति भावः। व्यस्तैः,—विभक्तैः, किं पुनः ?—विभज्य स्थितानां कथा दूरत एवास्तामिति भावः।

चन्द्र । आर्य्य ! त्वर्य्यताम्, अनेन हि महानाश्रितजन-प्रमाथोऽस्माकमारब्धः । (च) तथाहि,—

आगुञ्जद्गिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वरं
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् ।
वेल्लद्भैरवरुण्डमुण्डनिकरैर्वीरो विधत्ते भुवः
तृष्यत्कालकरालवक्त्रविघसव्याकीर्य्यमाणा इव ॥ ६ ॥

(च) आर्य्य !—पूज्य सुमन्त्र !, त्वर्य्यतां—त्वरा क्रियतां, त्वयेति शेषः, सत्वरं रथः चाल्यतामिति भावः । अनेन—एतेन शिशुना, महान्—अतिशयः, आश्रितजनानाम्—उपजीविसेनासमूहानां, प्रमाथः,—ध्वंसः, आरब्धः,—अनुष्ठितः ; अयोऽस्मदाश्रितानामस्मत्सैनिकानां संरक्षणाय मया सत्वरं युद्धस्थलं गन्तव्यम्, अतो भवता तूर्णं सवेगं रथः नीयतामित्याशयः ।

अथ बालकस्यालौकिकं युद्धपाटवं व्याचष्टे, आगुञ्जदिति ।—आगुञ्जन्त्यः ज्यानिर्घोषश्रवणेन प्राणभयात् अतीव गभीरं बृंहितध्वनिं कुर्व्वन्त्यः, गिरीणां पर्व्वतानां, ये कुञ्जाः लतागृहाः, तेषु याः कुञ्जराणां हस्तिनां, घटाः घटनाः, समुदयाः इत्यर्थः, ("करिणां घटना घटा" इत्यमरः) तासां विस्तीर्णः भूयस्तया उत्पादितः, कर्णानां श्रवणानां, ज्वरः पीड़ेति यावत्, येन तथाविधं, मौर्व्वीटङ्कारमुपश्रुत्य प्राणभयात् समन्तात् बृंहितं कुर्व्वतां गिरिचराणां नागानामपि श्रवणेन्द्रियपीडां जनयन्तमित्यर्थः ; आगुञ्जतां अव्यक्तया गर्ज्जतां, गिरिकुञ्जकुञ्जराणां पर्व्वतनिकुञ्जचराणां हस्तिनां, घटाभ्यः समूहेभ्यः, विस्तीर्णः प्रदत्तः, कर्णज्वरः कर्णव्यथा येन तथोक्तम् इति वा विग्रहः, निभृतस्थानप्रियेभ्यः वन्यगजेभ्योऽपि दुःश्रवरवेण श्रवणपीड़ां संप्रयच्छन्तमित्यर्थः, अमन्दैः अनल्पैः, गम्भीरैरित्यर्थः, दुन्दुभीनां रणवाद्यविशेषाणां, रवैः शब्दैः, आध्मातं परिपूर्णं, प्रवर्द्धितमिति यावत्, ज्यानिर्घोषं शिञ्जिनीनिनादम्, उज्जृम्भयन् आविष्कुर्व्वन्, उत्पादयन्निति यावत्, वीरः शूरः लवः, वेल्लद्भैरवेति ।—वेल्लतां विचेष्टमानानां, समन्तात् चलतामित्यर्थः, भैरवाणां भीषणानां, रुण्डानां कबन्धानाम्, अपमूर्द्धक्रियायुक्तकलेवराणामित्यर्थः, ("कबन्धः कथ्यते रुण्डः" इति हलायुधः) ये मुण्डनिकराः शिरःसमूहाः, आयुधसमूहैः निकृत्ताः सन्तः स्वदेहात् विभिन्नस्थानपतिताः मस्तकनिवहाः इत्यर्थः, तैः, (अत्रापि मुण्डविरहितक्रिया-युक्तकलेवराणामेव रुण्डशब्दवाच्यतया रुण्डेषु मुण्डधर्मो न घटते इति शङ्कते,

सुमन्त्रः। [स्वगतम्]। कथमीदृशेन सह वत्सस्य चन्द्रकेतो-र्द्वन्द्वसम्प्रहारमनुजानीयाम्? [विचिन्त्य।] अथवा इक्ष्वाकुगृह-वृद्धाः खलु वयं, प्रत्युपस्थिते च का गतिः? (ङ)

---

तथाऽपि येषां योद्धृशरीराणामायुधादिभिः छिन्नेषु मुण्डेषु कबन्धभावो जनितः, तेषान्तु नतदेहाना पिशाचोपहतानामिव अधुना कबन्धभावमापन्नत्वात् तत्र प्राप्तमुण्डयोगमभिप्रेत्य "कण्ठमुण्डनिकरैः" इत्युक्तमिति ज्ञेयम्) भुवः रण-भूमीः, तृप्यदिति।—तृप्यतः प्रभूतभक्ष्यभक्षणेन तृप्तिमापन्नस्य, कालस्य कृतान्तस्य, यत् करालं भीषणं, वक्त्रं मुखं, तस्य विघसैः भुक्तावशिष्टैः, ("भक्तं विघसो यज्ञशेष-भोजनशेषयोः" इत्यमरः) व्याकीर्य्यमाणाः इव समाच्छाद्यमाना इव, व्याप्य-माना इवेत्यर्थः, विभर्त्ति करोति। जगद्ग्रसितुमभ्युद्यतस्य कृतान्तस्य यथेच्छ-मुपभोगात् परितृप्ततया भयङ्करात् तदाननविवरात् विगलितैः अस्मत्सैन्यानां शिरोभिः रणभूमिरियं समाच्छन्नेव प्रतीयते इति भावः। अहो! सुमहानस्मत्सैन्य-संक्षयः क्रियते वीरेणानेन, तत् त्वरितमेव मया यातव्यम् एतेषामस्मत्सैनिकानां संरक्षणायेति तात्पर्य्यम्। [अत्र कुञ्जरघटानां कर्णज्वरासम्बन्धेऽपि तत्सम्बन्धोक्तेः असम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः, तथा भुवः व्याकीर्य्यमाणत्वस्य सम्भाव-नयोत्कीर्त्तनादुत्कटैककोटिकसंशयसमुदयेन वाच्या क्रियोत्प्रेक्षाऽलङ्कारः, एतयोश्च नैरपेक्ष्येण स्थितेः संसृष्टिः। गुञ्जतेः भ्रमरकर्त्तृकतया प्रसिद्धेः, कुञ्जरध्वनौ तथा प्रसिद्धेरभावात् तत्र तत्प्रयोगकृतः ख्यातिविरुद्धतादोषः "आगुञ्जद्गिरि" इत्यत्र "आबृंहद्गिरि" इति पाठेन समाधेयः, "बृहि शब्दे च" इति भौवादिकबृंहिधातुना सिद्धेः, "बृंहितं करिगर्जितम्" इत्यमरोक्तेश्चेति ज्ञेयम्]। शार्दूलविक्रीडितं वृत्तम्॥ ६॥

(ङ) कथं—केन प्रकारेण, ईदृशेन—अद्भुतशौर्य्यशालिना अमुना लवेन इत्यर्थः, वत्सस्य—आयुष्मतः, द्वन्द्वसम्प्रहारं—द्वन्द्वस्य—एतयोः द्वयोरित्यर्थः, सम्प्रहारः,—युद्धः तं, द्वन्द्वयुद्धमिति यावत्, अनुजानीयाम्?—अनुमोदयामि? अनुमन्येयेत्यर्थः; अमितपराक्रमशालिनाऽनेन सह युद्धे यदि काऽपि चन्द्रकेतोः क्षतिः स्यात् तर्हि महाननर्थः उत्पद्येतेति भावः। इक्ष्वाकुगृहवृद्धाः,—इक्ष्वाकूणाम्—इक्ष्वाकुवंशीयानां, गृहे—भवने, वृद्धाः,—वृद्धत्वं गताः, अत्र स्थिताः वर्षीयांसः सम्भूताः इत्यर्थः, प्रत्युपस्थिते—सम्मुखमापतिते अस्मिन् संग्रामे इति यावत्, का

चन्द्र। [सविस्मयलज्जासम्भ्रमम्]। धिक्, प्रतिनिवृत्तानि सर्वतः सैन्यानि मम!! (च)

सुमन्त्रः। [रथवेगमभिनीय]। आयुष्मन्! स एष वाग्विषयीभूतस्ते प्रवीरः। (छ)

चन्द्र। [विस्मृतिमभिनीय]। आर्य्य! किं तन्नामधेयमाख्यातमाख्यायकैः? (ज)

---

गतिः?—कः अभ्युपायः? युद्धकरणात् कथममुं निवारयामः? यतः निखिलसैन्यसंहारकारिणा अनेन बालेन सह युद्धोपदेशं विना कोऽप्यन्यः विधिरत्र न दृश्यते इत्यर्थः, वयमाशैशवात् इक्ष्वाकूणां भवने स्थित्वा सदैव संग्रामानिवर्त्तनरूपं तेषां कुलधर्म्मं पश्यामः, एवञ्च यद्भावि तद्भवतु एव, तत्सदाचारानुवर्त्तिना अवश्यमेव कुलधर्म्मं विजानता मया चन्द्रकेतवे समरकर्म्मोपदेशः प्रदातव्यः इति भावः।

(च) सविस्मयलज्जासम्भ्रमं—लवस्यासामान्यं युद्धकौशलं दृष्ट्वा विस्मयः, एकाकिना लवेन सह युद्धं कर्त्तुमसमर्थानां स्वसैनिकानां विमुखीभावं दृष्ट्वा लज्जा, अपिच स्वयमुपस्थाय युद्धे तेषां साहाय्यं कर्त्तुं सम्भ्रमः,—त्वरा, तैः सह वर्त्तमानं यथा तथेत्यर्थः, आहेति शेषः। सर्व्वतः,—सर्व्वाभ्यः दिग्भ्यः, सर्वतोभावेनेत्यर्थो वा, प्रतिनिवृत्तानि—विमुखीभूतानि, सर्व्वासु दिक्षु पलाय्य गतानीत्यर्थो वा, सैन्यानि—बलानि, धिक्—निन्दामीत्यर्थः; एकाकिना अमुना वीरेण पराजितान् रणभूमेश्च परावर्त्तिनः अस्मद्वीरपुरुषान् अतश्च तिरस्करोमीति भावः; युद्धभूमौ सत्त्वाधियाणां पृष्ठप्रदर्शनस्य घृणाकरत्वादित्याशयः।

(छ) रथवेगं—स्वचालितस्यन्दनस्य जवम्, अभिनीय—नाटयित्वा, आहेति शेषः। आयुष्मन्!—चिरजीविन्!, स एषः,—पुरतोऽयं दृश्यमानः इत्यर्थः, एतावन्तं कालं यद्विषयिणीं कथामावां कथयावः इति यावत्, प्रवीरः,—महायोद्धा लवः, वाग्विषयीभूतः,—वाचां—संलापानां, विषयीभूतः,—गोचरीभूतः; तव कथोपकथनयोग्यस्थलवर्त्ती वीरोऽयमिदानीं सञ्जातः, अतोऽमुना सहाधुना त्वं यथेच्छमालपितुं शक्नोषीति भावः।

(ज) विस्मृतिं—लवस्यालौकिकं युद्धकौशलं विलोक्य तत्परिचयविस्मरणम्, अभिनीय—नाटयित्वा, आहेति शेषः। आर्य्य—पूज्य!, सुमन्त्र! इति यावत्, तन्नामधेयम्—एतस्य वीरस्य नाम, किम् आख्यातं—कथितम्? आख्यायकैः,—सन्देश-

सुमन्त्रः। वत्स! लव इति। (क)

चन्द्र। भो भो लव! महाबाहो! किमेभिस्तव सैनिकैः? ।
एषोऽहमेहि मामेव, तेजस्तेजसि शाम्यतु ॥ ७ ॥

सुमन्त्रः। कुमार! पश्य पश्य।—

व्यपवर्त्तत एष बालवीरः पृतनानिर्मथनात् त्वयोपहूतः।
स्तनयित्नुरवादिभावलीनामवमर्दादिव दृप्तसिंहशावः॥ ८ ॥

चारिभिः, दूतैरित्यर्थः; चरैः युद्धारम्भसमये एतस्यार्भकस्य किं नामाभिहितं तत् अहं विस्मरामि, स्मरसि चेत् तत् कथयेति भावः। एतेन धर्म्मयुद्धसमये दूताः स्वपरपक्षीयाणां योद्धृपुङ्गवानां परिचयं सम्प्रददुरिति प्राचीना प्रथा आसीदित्यनुमीयते।

(क) वत्स!—आयुष्मन्!, लव इति—लव इत्याकारकं, लवेत्यानुपूर्व्व्यावच्छिन्नमित्यर्थः, अस्य बालकस्य नामधेयमिति शेषः।

अथादौ लवं समस्मानं सम्बोध्य संवर्द्ध्य च तेन सह वीरजनानुरूपं युद्धं कर्त्तुं प्रार्थयते, भो भो लवेति।—भो भो महाबाहो! लव। आजानुलम्बितभुज! लव!, तव एभिः सैनिकैः मदीयैः सेनासमूहैः, किम्? अलम्, एभिः सामान्यसैनिकपुरुषैः सह महावीरस्य तव युद्धं न शोभते इत्यर्थः; सामान्यसैनिकावमर्दनात् विरमतु इत्याशयः। एषोऽहम् अयमहं तव समकक्षः प्रतियोद्धेत्यर्थः, मामेव एहि मामेव आगच्छ, मया सह युध्यस्वेत्यर्थः। अथ फलितमाह, तेजः इति।—तेजः त्वदीयं शौर्य्यं, तेजसि मदीये अमिते आत्ते प्रभावे, शाम्यतु निर्व्वाणमधिगच्छतु, यथा अकिञ्चित्करं वह्निज्योतिः महति तपनतेजसि प्रशमेति, तथैव ते तेजः मदीये महति तेजसि विशीर्णोत्विति भावः। एतेन स्वस्याधिकबलत्वं व्यक्तीकृतमिति ज्ञेयम्। [अत्र तेजःपदार्थस्य श्लिष्टतया वह्न्यर्थकत्वात् वह्निपराक्रमयोर्भेदेऽपि अभेदाध्यवसायमूलाऽतिशयोक्तिरलङ्कारः]। पथ्यावक्त्रं वृत्तम् ॥७॥

अथ युद्धाद्विरम्य लवः वाक्यानुसारतः स्वेषामन्तिकमागच्छतीत्याह, व्यपवर्त्तत इति।—एषः अयं पुरतः स्थितः, बालवीरः अमितपराक्रमसम्पन्नः शिशुः, लवः इत्यर्थः, त्वया उपहूतः पूर्व्वोक्तप्रकारेण आकारितः सन्, दृप्तसिंहशावः मदोद्धतः केशरिशिशुः, स्तनयित्नुरवात् मेघगर्ज्जनात्, मेघध्वनिमाकर्ण्येत्यर्थः, ["ल्यब्लोपे कर्म्मण्यधिकरणे च" (वा०) इति पञ्चमी] इभावलीनां हस्ति-

[ ततः प्रविशति त्वरितोद्धतक्रमो (ञ) लवः ]।

लवः। साधु, राजपुत्र! साधु, सत्यमैक्ष्वाकः खल्वसि। तदयं परागत एवास्मि। (ट)

[ नेपथ्ये महान् कलकलः ]।

लवः। [ सावेगं परावृत्य ]। कथम्!! इदानीं भग्ना अपि प्रतिनिवृत्य युद्धाभिसारिणः पर्य्यवष्टभ्य निघ्नन्ति मां चमूपतयः!!! धिग् जाल्मान्। (ठ)—

यूथानाम्, अवमर्द्दादिव दमनादिव, पृतनानिर्म्मथनात् पृतनानां सैन्यानां, निर्म्मथनात् संचयात्, सैन्यसङ्घविनाशादित्यर्थः, व्यपवर्त्तते विरमति, सैन्यनाशं परिहृत्य इत एवागच्छतीत्यर्थः; यथा गर्व्वितः सिंहशिशुः घनध्वनिमुपश्रुत्य गजकुलमथनोद्योगं परिहृत्य ततोऽप्यधिकबलं मत्वा मेघं समाक्रमितुकामः क्रममनुबध्नाति, तथैवायं शौर्य्योद्दीप्तः वीरपोतः भवतः अतिदृप्तं ममाह्वानमाकर्ण्य इत एवाभिवर्त्तते इति समुदितार्थः। [ अत्र दृप्तसिंहशावेन सह बालवीरस्य वैधर्म्यसाम्योपदेशात् उपमाऽलङ्कारः ]। मालभारिणी वृत्तम्;—"विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम्।" इति लक्षणात्। औपच्छन्दसकन्तु अस्यैव वृत्तस्य नामान्तरमिति ज्ञेयम्॥ ८॥

(ञ) त्वरितोद्धतक्रमः,—त्वरितः,—सत्वरः, उद्धतः,—गर्व्वितश्च, क्रमः,—पदविक्षेपः यस्य तथाभूतः सन्, अत्र समकक्षवीरलाभजनितौत्सुक्यात् त्वरा, स्ववीर्य्यातिशय्याच्च औद्धत्यं क्रमस्येति ज्ञेयम्।

(ट) राजपुत्र!—राजकुमार!, चन्द्रकेतो!, साधु साधु—समीचीनम्, अभिहितं भवतेति शेषः; समबलेनैव वीरेण योद्धव्यमित्यभिप्रेत्य यदुक्तं तत् सुशोभनमेवेति भावः; [ हर्षे द्विर्व्वचनम् ]। सत्यं—यथार्थम्, ऐक्ष्वाकः,—इक्ष्वाकुकुलसम्भूतः, खलु—निश्चितम्, असि—भवसि; इक्ष्वाकुवंशीयानां वीराणामनुरूपवीर्य्यभूयिष्ठवाचां व्याहरणादिति भावः। तत्—तस्मात्, इक्ष्वाकुवंशीयस्य प्रतिपक्षवीरस्य भवतः लाभादित्यर्थः, अयम्—एषोऽहमित्यर्थः, परागतः,—प्रतिनिवृत्तः, भवत्समीपमुपस्थित इति यावत्, अस्मि—भवामि, अतो मया सह यथेप्सितं युध्यस्वेत्याशयः।

(ठ) सावेगं—सोत्कण्ठं, परावृत्य—पराङ्मुखीभूय, भूयः सैन्यानामभिमुखः

अयं शैलाघातक्षुभितवडवावक्त्रहुतभुक्-
प्रचण्डक्रोधार्चिर्निचयकवलत्वं व्रजतु मे।
समन्तादुत्सर्पन् घनतुमुलसैनाकलकलः
पयोराशेरोघः प्रलयपवनाऽऽस्फालित इव ॥ ९ ॥

[ इति परिक्रामति ]।

मृत्वेत्यर्थः, आहेति शेषः। कथं—किम् !! इदानीम्—अधुना, भग्ना अपि—मया निर्ज्जिताः सन्तः युद्धभूमेः पलायनपरा अपि, चमूपतयः,—सेनान्यः, प्रतिनिवृत्य—पुनः युद्धस्थलमुपागम्य, मम युद्धविरतिं दृष्ट्वा पुनः प्रत्यावर्त्तनं कृत्वेत्यर्थः, युद्धाभिसारिणः,—समराभिलाषिणः, भूयः योद्धुमभीप्सवः इति यावत्, पर्य्यवष्टभ्य—वेष्टयित्वा, परिवार्य्येत्यर्थः, मम समन्तात् सदर्पमवस्थायेति भावः; मां निघ्नन्ति—प्रहरन्ति, मामभिलक्ष्य बाणान् विकिरन्ति इति यावत्। जाल्मान्—मूर्खान्, अतिनीचान् सेनान्य इति भावः। धिक्—निन्दामि; पराजयात् परमपि पुनः योद्धुमभिमनसः असमीक्ष्यकारिणः निर्लज्जान् वीरापसदानेतान् अतश्च निन्दामीति भावः।

अथ सेनासमूहानां दुर्व्यवहारमभिसमीक्ष्य तत्संचयाभीप्सुः सकोपमाह, अयमिति।—समन्तात् परितः, सर्वा दिशः अभिव्याप्येत्यर्थः, उत्सर्पन् उद्गच्छन्, अयं श्रूयमाण इत्यर्थः, घनेति।—घनः निविड़ः, तुमुलः सङ्कुलः, भयावहः इत्यर्थः, सैनाकलकलः सैन्यानां कोलाहलः, प्रलयेति।—प्रलय-पवनेन कल्पान्तवायुना, 'क्षयकालोत्थसंहारपवनेनेत्यर्थः, आस्फालितः आलोड़ितः, उद्वेलितः इत्यर्थः, पयोराशेः समुद्रस्य, ओघ इव प्रवाह इव, मे मम, शैलेति।—शैलानां पर्व्वतानां, समुद्रान्तर्वर्त्तिनामिति यावत्, आघातेन सङ्घर्षेण, जल-मग्नशैलसङ्घप्रतिघातेनेत्यर्थः, क्षुभितः उद्दीपितः, यः वड़वावक्त्रहुतभुक् अश्वावदन-विनिर्गतवह्निः, वाड़वाग्निरिति यावत्, तद्वत् प्रचण्डः भयावहः, यः क्रोधार्चि-र्निचयः कोपानलशिखासमूहः, तस्य कवलत्वं ग्रासत्वं, व्रजतु प्राप्नोतु; समुद्रगर्भस्थशैलैः प्रतिघातं प्राप्य प्रवर्द्धितः वाडवाग्निः यथा प्रलयकालोदितसंहारवायुसञ्चालिततथा ऊर्म्मिमालाकुलं पयोधिसलिलराशिं विशोषयति, तथैव मदीयः क्रोधः चपोनैव प्रोद्धतानाममीषां सैनिकानां समन्तात् श्रूयमाणमेतं कलकलनादं समूलमेवोपशमयतु इति भावः। एतेन सर्वानेवैतान् नीचान् सैनिकानचिरादेव हनिष्यामीत्यर्थः स्फुटीकृत इति ध्येयम्। [पुरा किल और्व्वस्य महर्षेः समुद्भूतः वह्निः सर्वाणि जगन्ति दग्धुं प्रवृत्ते,

चन्द्र। भो भोः कुमार!—

अत्यद्भुतादसि गुणातिशयात् प्रियो मे,
तस्मात् सखा त्वमसि, यन्मम तत्तवैव।
तत् किं निजे परिजने कदनं करोषि?
नन्वेष दर्पनिकषस्तव चन्द्रकेतुः॥ १०॥

---

तद्दृष्ट्वा भगवान् ब्रह्मा तं वड़वामुखे संस्थाप्य तस्य समुद्रसलिलभक्ष्यत्वं प्रकल्पितवान्, तद्वध्यसौ पारावारान्तरवस्थाय प्रवर्द्धितजलराशिं विशोषयतीति पौराणिकी वार्त्ता, तथाच मत्स्यपुराणे,—"वड़वामुखेऽस्य वसतिः समुद्रे वै भविष्यति।……एषोऽग्निरन्त-काले तु सलिलाशी मया कृतः॥" इत्याद्यनुसन्धेयम्। अत्र पयोराशेरौर्वेण सह सेनाकलस्याविधर्म्यसाम्योपदेशादुपमाऽलङ्कारः, तथा हुतभुजा सह प्रचण्डक्रोधाग्निनां साम्यात् लुप्तोपमा च, इत्यनयोः निरपेक्षतया स्थितेः संसृष्टिः]। शिखरिणी वृत्तम्॥ ९॥

अथास्यालौकिकं शौर्य्यं विलोक्य परितुष्यन् चन्द्रकेतुः सामवादेन तथौद्धत्यभूयिष्ठं व्यवहारं परिहर्त्तुमनुं प्रर्णादयति, अत्यद्भुतादिति।—अत्यद्भुतात् अतिविस्मयकरात्, एकाकिना बालेन असंख्यातानां योद्धृपुरुषाणां पराभवजननादिति भावः, गुणातिशयात् शौर्य्यातिरेकात्, मे मम, प्रियः अतिवल्लभः, असि भवसि, तस्मात् प्रियत्वादेव, त्वं सखा मित्रम्, असि भवसि; यद्यपि भवानस्मत्सैन्यसैन्यानां वृथा संक्षयकरणात् शत्रुभूत एव भवति, तथाऽपि मया वीरेण वीरत्वगौरवरिरक्षिषुणा, ते वीर्य्यातिशयञ्च पश्यता परितुष्टेन सता, भवान् प्रियसख इत्यभिनन्द्यते इति भावः। अत एव यत् वस्तु, मम मत्सम्बन्धि, तत् वस्तु, तवैव भवत्संसृष्टमेव; सखिभावस्य संस्थापनात् त्वां मामन्तरा कियतोऽपि पार्थक्यस्याभावादिति भावः। तत् तस्माद्धेतोः, मम त्वदीयत्वेन हेतुनेत्यर्थः, किं कथं, निजे स्वीये, परिजने परिवारे, अतीवान्तरङ्गजने इत्यर्थः, कदनं विमर्द्दनं, हननमित्यर्थः, करोषि विदधासि, स्वपक्षानेव निहंसीत्यर्थः, स्वाश्रितपरिजनानां निहिंसनं भवादृशानां महाबलानां सर्व्वथैवानुचितमिति भावः। प्रागतिविनीतव्यवहारेण कथञ्चित् परितोष्येदानीं वीरोचितभावं प्रदर्शयन्नाह, नन्वेष इति।—ननु भो लव!, एष चन्द्रकेतुः चन्द्रकेतुनामाहं, तव भवतः, दर्पनिकषः दर्पस्य वीरत्वगर्व्वस्य, निकषः परीक्षास्थानमित्यर्थः; निकषप्रस्तरे यथा गुणज्ञैः सुवर्णस्य सारासारवत्त्वस्य परीक्षा क्रियते, तथा अहमेव तव वीरत्वातिशयस्य सारतां सर्व्वथा सम्परीक्षिष्ये,

लवः। [ सहर्षसम्भ्रमं परावृत्य ]। अहो! महानुभावस्य प्रसन्नकर्कशा वीरवचनप्रयुक्तिर्विकर्त्तनकुलकुमारस्य। तत् किमेभिः? एनमेव तावत् सम्भावयामि। (ड)

[ पुनर्नेपथ्ये कलकलः ]।

लवः। [ सक्रोधनिर्वेदम् ]। आः!! कदर्थितोऽहमेभिर्वारं वारं वीरसंवादविघ्नकारिभिः। [ तदभिमुखं परिक्रामति ]। (ढ)

---

तदेहि, निष्फलसैन्यसंचयात् विरम्य मया सह युध्यस्व, अत्रैव ते रणकण्डूया निर्वापिता भविष्यतीति भावः। [ अत्र चन्द्रकेतौ दर्पनिकषत्वस्याभेदारोपात् निरङ्ग रूपकमलङ्कारः ]। वसन्ततिलकं वृत्तम्॥ १०॥

(ड) प्रतिपक्षवीरस्य लाभात् हर्षः, युद्धौत्सुक्यात् सम्भ्रमः,—त्वरा, ताभ्यां सह वर्त्तमानं यथा तथा, परावृत्य—चन्द्रकेतोरभिमुखीभूय, आहेति शेषः। अहो—इति विस्मये, महानुभावस्य—महान्—विपुलः, अनुभावः,—महत्त्वं यस्य तथाविधस्य, महामहिमशालिन इत्यर्थः। विकर्त्तनकुलस्य—सूर्य्यवंशस्य, कुमारस्य—सन्तानस्य, चन्द्रकेतोरित्यर्थः। प्रसन्नकर्कशा—प्रसन्ना—निर्म्मला, धीरास्निग्धा इत्यर्थः, कर्कशा—परुषा च; महावंशप्रसूततया अस्य वचनानां स्वतःसिद्धमेव कोमलत्वं, शौर्य्यभूयिष्ठ-भूषिततया स्वाभाविकमेव औद्धत्यसम्पृक्तत्वञ्चेति ज्ञेयम्। वीरवचनप्रयुक्तिः,—वीरस्य—शूरस्य, यानि वचनानि—वाक्यानि, तेषां प्रयुक्तिः,—प्रयोगः; वीरा हि यथा सदा वीरत्वव्यञ्जकानि वचांसि समुदीरयन्ति, तथैवायं श्रवणाभिरामां वाचं व्याचष्टे इति भावः। तत्—तस्मात्, समबलयोद्धृलाभादित्यर्थः, एभिः,—नीचैः रक्षिसैनिकैः, किम्?—अलम्; एतेषा दुर्बलानां सैन्यानां कदनं विफलमिति भावः। एनमेव—अमुं वीरं लवमेव, सम्भावयामि—सम्मानयामि, तावदिति—वाक्यालङ्कारे। वीरेण सह वीरोचितं संयुध्य वीरगौरवरक्षां करोमि, रणपिपासाञ्च अमुष्य निवर्त्तयामि इति भावः।

(ढ) क्रोधेन—कोपेन, निर्वेदेन—स्वावमाननया च सह वर्त्तमानं यथा तथेत्यर्थः, आहेति शेषः; पुनः पुनः निर्जितानामपि सैनिकानां युद्धप्रवृत्तिदर्शनात् क्रोधः, तेषां वराकाणामत्यर्थसंचयकरणेऽपि तत्तत्सामान्यसैनिकक्षतस्वनिर्यातन-प्रयासदर्शनात् आत्मनि कथञ्चित् घृणाया उदयात् निर्वेद इति ज्ञेयम्। आः,—इति कोपसूचकमव्ययम्, ("आस्तु स्यात् कोपपीड़योः" इत्यमरः)। वीरसंवादविघ्न-कारिभिः,—वीरेण शूरेण चन्द्रकेतुना सह, यः संवादः,—संग्रामकाङ्क्षोचितः

चन्द्र। आर्य्य ! दृश्यतामितद्द्रष्टव्यम्। (ग)—

दर्पेण कौतुकवता मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा।
द्वेधासमुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम्॥ ११॥

संलापः इत्यर्थः, तस्य विघ्नं—प्रतिबन्धं कुर्व्वन्ति ये तैः; तथा युद्धकोलाहलं कृत्वा वीरेण चन्द्रकेतुना सह मयामि मम निरन्तरं बाधामुत्पादयद्भिरिति भावः। एभिः,—सैनिकैः, वीरापसदैरित्यर्थः। कदर्थितः,—उत्पीडितः, [ कु कुत्सितः, अर्थः .प्रयोजनमिति "कोः कत्तत्पुरुषेऽचि" ( ६।३।१०१ पा०) इति कुशब्दस्य कदादेशः, कदर्थः कृतः इति "तत्करोति—" (ग०) इति णिचि निष्ठायां रूपम् ] लाञ्छित इति यावत्, अस्मीति शेषः; एते पामराः सेनामुखाः मम वीरत्वप्रकाशने निरन्तरमन्तरायमुत्पादयन्तः मामत्यर्थमेवोद्वेजयन्ति, अतः एतान् समूलघातं हनिष्यामीति भावः। तदभिमुखं—तेषां क्षुद्राणामन्तरायकारिणां सैन्यानां सम्मुखं, परिक्रामति—धावति।

(ग) आर्य्य !—पूज्य सुमन्त्र !, दृश्यताम—अवलोक्यताम्, एतत्—पुरोवर्त्ति, द्रष्टव्यं—दर्शनयोग्यं वस्तु, लवस्यास्मत्सैनिकसंचयार्थं समन्तात् केशरिसुतवदभिधावनमित्यर्थः।

अथ रणभूमिषु प्रकटीकृतां लवस्य तामेव विस्मयावहां चेष्टां विशदीकृत्य व्याचष्टे, दर्पेणेति।—कौतुकवता अतिविस्मयकरेण, दर्पेण गर्वेण, मयि ममोपरि, बद्धलक्ष्यः बद्धं निविष्टं, लक्ष्यं दृष्टिविक्षेपः येन तथाविधः, अतिविस्मयावहदर्पेण माम्मयि निहितदृष्टिः सन् मदभिमुखमभिधावित इत्यर्थः; यद्वा,—चन्द्रकेतोः कीदृक् शौर्य्यमस्तीति ज्ञातुं यत् कौतुकं स्वकीयं कौतूहलं तदस्यास्तीति तेन, दर्पेण वीरत्वगर्व्वेण हेतुना, अपरेषां शौर्य्यज्ञानार्थं यत् कौतुकं तत्सहितस्य स्वकीयासामान्यवीरत्वदर्पस्य सत्त्वादित्यर्थः, बद्धलक्ष्यः कृतदृष्टिपातः, मद्वीरत्वदर्शनौत्सुक्यात् सदर्पं मयि कटाक्षं विनिक्षिपन्नित्यर्थः, पश्चात् पृष्ठतः, बलैः सैन्यैः रस्मदीयैः, अनुसृतः अनुधावितः, उदीर्णम् उद्धृतं, शरनिक्षेपाय उन्मीलितमिति यावत्, धनुः कार्म्मुकं येन तथाविधः, मदीयानामस्मत्सैनिकानां संचयार्थं शरासने शरं सन्धारोपयन्नित्यर्थः, अयं वीरः लवः, द्वेधा द्विप्रकारेण, पुरतः

सुमन्त्रः। कुमार एवैनं द्रष्टुमपि जानाति, वयन्तु केवलं परवन्तो विस्मयेन। (त)

चन्द्र। भो भो राजानः!—

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता-
वत्रैकस्मिन् कवचनिचितैर्मध्यचर्मोत्तरीये।

पश्चाच्चेत्यर्थः, समुद्धतेन प्रचण्डं प्रवहता, कदाचित् पुरतः कदाचित् पश्चाच्चेत्येवं पर्य्याकुलं चलतीत्यर्थः, मरुता वायुना, तरलस्य चपलस्य, चालितस्येत्यर्थः; वात्यया उभयतो नीयमानस्येति भावः; माघवतचापधरस्य माघवतस्य ऐन्द्रस्य, चापस्य धनुषः, धरस्य धारकस्य, मेघस्य वारिवाहस्य, लक्ष्मीं शोभां, वशं धारयति; इन्द्रधनुष्मत् बलाहकः यथा प्रतिकूलवायुना कदाचित् पुरतः कदाचित् पश्चाच्चाभिताड़ितः रम्यां शोभां विधत्ते, तथैवायं जलदश्यामवपुः बालकः मारुतसमैरस्त्रबलैः विताड़ितः ऐन्द्रशरासनवच्छोभमानं कार्म्मुकं वहन् सदर्पं मयि निहितकटाक्षः सन् क्षणं मामेवाक्रमितुकामः पुरतः परिक्रामन् क्षणञ्च निर्यातनैषिणः मत्सैनिकान् तर्ज्जयितुं पश्चादभिधावन् परितः प्रसृतामनिर्व्वचनीयां नैसर्गिकीं श्रियं बिभर्त्तीति सरलार्थः। [ अत्र एकस्य लक्ष्मीमपरः कथं वहतीत्यसम्भवतो वस्तुसम्बन्धस्य बिम्बानुबिम्बभावेन तत्सदृशलक्ष्म्याः धारणेन सामञ्जस्यात् निदर्शनाऽलङ्कारः, मेघमार्घेति छेकानुप्रासश्चेत्यनयोः संसृष्टिः ]। वसन्ततिलकं वृत्तम्॥ ११॥

( त ) कुमार एव—भवानेव, नापरे इत्येवशब्दार्थः, एनं—लवं, द्रष्टुमपि—सम्यक् समीक्ष्यावधारयितुमपि, का कथा यथोचितकृपादिपरीक्षाप्रयासाना-मित्यपिकारार्थः; वीरा एव हि वीरान् परीक्षितुं शक्नुवन्ति, नान्ये इत्याशयः। तु—किन्तु, वयम्—अस्मादृशाः उदासीनाः जनाः इत्यर्थः, विस्मयेन—आश्चर्य्येण, अस्य बालस्याद्भुतरणकर्म्मदर्शनेनेत्यर्थः, परवन्तः,—पराधीनाः, सञ्जाताः इति शेषः; एकश्चन्द्रकेतुरेवैतस्य वीरत्वादिकं विनिर्णेतुं शक्नोति, वयन्तु केवलमस्याभूतपूर्वं विक्रमं विलोक्य विस्मयविवशाः सञ्जाता इति भावः।

अथ पदातिनम् एकं बालं पराभवितुं भूयसा आयासेन सम्प्रवर्त्तमानान् अगणितान् सामन्तनृपतीनवलोक्य घृणया प्रतप्त एतान् धिक्करोति,' संख्यातीतैरिति।—संख्यां परिमाणम्, अतीतैः अतिक्रान्तैः, [ "द्वितीयाश्रितातीत—" ( २।१।२४ पा० ) इति द्वितीयासमासः ] असंख्यैरित्यर्थः, द्विरदेत्यादि।—द्विरदेषु हस्तिषु,

कालज्येष्ठैरचरमवयःकाम्यकाये भवद्भि-
र्योऽयं बद्धो युधि परिकरस्तेन वो धिग् धिगस्मान् ॥१२॥

लवः । [ सक्षोभम ] । कथम्, अनुकम्पते नाम ? [ विचिन्त्य ] । भवतु, कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत् सैन्यानि संस्तम्भयामि । [ इति ध्यानं नाटयति ] । ( घ )

तुरगेषु वाजिषु, तथा स्यन्दनेषु रथेषु च तिष्ठन्ति ये तैः, निषादिभिः अश्वारोहिभिः रथचारिभिश्चेत्यर्थः, अपि च कवचैः वर्म्मभिः, निचितैः आवृतैः, सुदृढवारबाणसंरक्षितशरीरैरिति यावत्, कालज्येष्ठैः कालेन वयसा, ज्येष्ठैः वृद्धतमैः, अतिवर्षीयोभिरित्यर्थः, भवद्भिः युष्माभिः, पदातौ पादचारिणि, पदातिके इत्यर्थः, एकस्मिन् असहाये, नैध्य पवितं, चर्म्म अजिनम्, उत्तरीयम् उत्तरासङ्गः यस्य तस्मिन्, कोमलमृगत्वगाच्छादितगात्रे इत्यर्थः ; सम्पूर्णतया असंरक्षितकलेवरे इति भावः ; अचरमेण अभिनवेन, नूतनेन इत्यर्थः, ( "अचरम" इत्यत्र "अभिनव" इति पाठान्तरम् ) ; वयसा बाल्येन, काम्यः रमणीयः, कायः कलेवरः यस्य तथाविधे, अत्र अस्मिन् कुमारे लवे, युधि समरे, योऽयं परिकरः कटिबन्धः, रणव्यापारे अध्यवसाय इत्यर्थः, बद्धः धृतः, तेन हेतुना, वः युष्मान्, धिक् निन्दामि, अस्मान्, अपीति शेषः, धिक् निन्दामि चेत्यर्थः ; एवंविधमस्मदीयसेनानां जुगुप्सितं संग्रामकर्म्म विलोक्य एतासां नेतृत्वेन वृताः वयमपि अत्यधिकं विलज्जिताः जाता इति भावः । पदातिना सह अश्वारोहिणाम्, असंवृताङ्गेन सह कवचिनां, तथा बालेन सह प्रवयसां संग्रामक्रिया अतीव घृणाकरीति तात्पर्य्यम् । [ अत्र विरूपाणामेव वस्तूनामेकत्र सङ्घटनात् विषमालङ्कारः ] । मन्दाक्रान्ता वृत्तम् ॥ १२ ॥

( घ ) क्षोभेण—चित्तचाञ्चल्येन, मानसव्यथयेति यावत, सह वर्त्तमानं यथा तथा, आहेति शेषः । चन्द्रकेतोः प्रोक्तदयार्द्रवचसां श्रवणात् चित्तसंक्षोभः ज्ञेयः । कथं—किम्, अनुकम्पते—दयते, नाम—कोपे ; मां किमु असमर्थं विभाव्य चन्द्रकेतुः ईदृशं सदयभावं प्रदर्शयति ? तत्तु दुःसहम् इति भावः । विचिन्त्य—क्षणं विभाव्य, पुनराहेति शेषः । भवतु—एवमस्तु इत्यर्थः । कालहरणप्रतिषेधाय—कालस्य—समयस्य, यत् हरणं—क्षेपणं, तस्य प्रतिषेधाय—निराकरणाय, वृथाकालक्षेपविनिवृत्तये इत्यर्थः ; अल्पवीर्य्यैः एभिः सैनिकैः सह युद्धेन वृथा कालक्षेपस्य वारणायेति भावः । जृम्भकास्त्रेण—जृम्भकाख्यास्त्रविशेषस्य प्रयोगेणेत्यर्थः, सैन्यानि—

सुमन्त्रः। तत्किम्!! अकस्मात् अस्मत्सैन्यघोषः प्रशाम्यति? (द)

लवः। पश्यास्येनमधुना सप्रगल्भम्। (ध)

सुमन्त्रः। [ससम्भ्रमम्]। वत्स! मन्ये, कुमारेणानेन जृम्भकास्त्र-मामन्त्रितम्। (न)

चन्द्र। अत्र कः सन्देहः?—

व्यतिकर इव भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति।

सर्व्वाणि बलानि, संस्तम्भयामि—सम्मोहयामि, विचेतनानि करोमीत्यर्थः। ध्यानं—मन्त्रैः जृम्भकास्त्रप्रयोगचिन्तनं, नाटयति—अभिनयति।

(द) तत् किम्!!—किमेतत्!! इत्यर्थः, अकस्मात्—सहसा, अस्मत्सैन्यघोषः,—मदीयसैन्यानां कलकलध्वनिः, प्रशाम्यति?—निर्व्वाति?; आश्चर्यम्!! सहसा सेनाकलकलः कथं निवृत्तः? कश्चित् अभिनवः अन्तरायः सैन्येषु समुदितः किमु? इति भावः।

(ध) एनं—चन्द्रकेतुं, सप्रगल्भं—प्रगल्भः,—प्रगल्भता, अत्र लक्षणया धर्म्मपरत्वादिति ज्ञेयं, गर्व्व इत्यर्थः, तेन सह वर्त्तमानः तम्, अतिदृप्तमित्यर्थः; (यद्यपि "प्रगल्भः प्रतिभान्विते" इत्यमरोक्तेः प्रगल्भशब्दस्य विशेषणत्वात् तेन सह बहुव्रीहिर्नोपपद्यते इति मन्यते, तथाऽप्यस्य लक्षणया प्रगल्भत्वरूपधर्म्मपरत्वमङ्गीकृत्य प्रोक्तसमासः सङ्गमनीयः इति ज्ञेयम्। अत एव कुत्रचित् "सुप्रगल्भं" "प्रगल्भम्" इति च पाठान्तरं दृश्यते, अर्थस्तु तत्पक्षे सुगम एवेत्यवधेयम्)। पश्यामि—अवलोकयामि; स्वप्रभावातिशय्यप्रतिपादकानां प्रागुक्तवचसां प्रयोगेण अस्मुमतिगर्व्वितं मन्ये, तदिदानीमस्य गर्व्वमपनोदयामि इति भावः।

(न) ससम्भ्रमं—सत्वरं, सौत्कण्ठमित्यर्थः, आह इति शेषः, अनेन कुमारेण—एतेन मुनिबालकेन, जृम्भकास्त्रं—जृम्भकनामधेय कृशाश्वतनयभूतं समन्त्रकमायुधम्, आमन्त्रितं—मन्त्रोच्चारणपूर्व्वकं समाहूतं, प्रयुक्तमित्यर्थः, मन्ये—सम्भावयामि; नो चेदेवं तर्हि कथमकस्मात् सेनाकलकलविनिर्वृत्तिरित्याशयः।

अथ चन्द्रकेतुः स्वयमपि सैन्यमण्डलानामवस्थावर्णनमुखेन जृम्भकास्त्राणां प्रयोगं समर्थयन् तत्प्रभावं विशिष्य व्याचष्टे, व्यतिकर इति।—तामसः तमःसम्बन्धी, वैद्युतश्च विद्युत्सम्बन्धी च, भीमः भयङ्करः, व्यतिकरः सम्पर्कः, विद्युतां तमसाञ्च सर्व्वप्राणि-

अथ लिखितमिवैतत् सैन्यमस्पन्दमास्ते
नियतममितवीर्य्यं जृम्भते जृम्भकास्त्रम् ॥ १२ ॥

आश्चर्य्यमाश्चर्य्यम् !!—

पातालोदरकुञ्जपुञ्जिततमःश्यामैर्नभो जृम्भकै-
रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्ज्वलद्दीप्तिभिः।

भयङ्करः युगपत् समवाय इत्यर्थः, पिण्डीभूता सौदामनीतमःसन्ततिः इति यावत्, इह अस्मिन् सैन्यसमुदाये, प्रणिहितमपि सम्प्रणिधानं समीक्षितं नियोजितमपि; किमर्थं मदीयाः सैनिकाः सहसा नीरवाः सञ्जाताः इति परीक्षितं समन्तात् विनिपातितमपीति भावः; चक्षुः मदीयं नयनं, मुक्तमुक्तं तमःसम्बन्धेन आदौ ग्रस्त विद्युत्सम्बन्धेन च पश्चात् मुक्तं परित्यक्तम्; प्रथमतः प्रगाढतमोभिः समावृतं पश्चात् विद्युज्ज्योतिर्भिः विमुक्तीकृतमित्यर्थः; प्रागन्धीकृत्य पश्चात् दर्शनशक्तिसमुल्लासितं कृत्वेति भावः; छिनत्ति निपीडयति, शक्तिहीनं करोतीत्यर्थः। अथ अनन्तरं, सान्धकारज्योतिःपुञ्जप्रकाशात् परमेवेत्यर्थः, यद्वा,—अथशब्दोऽत्र समुच्चयार्थकः, किञ्चेत्यर्थः, ("अथाथो संशये स्यातामधिकारे च मङ्गले। विकल्पानन्तरप्रश्नकार्त्स्न्यारम्भसमुच्चये॥" इति मेदिनी)। एतत्सैन्यम् अस्मद्बलसमुदायः, लिखितमिव चित्रितमिव, चित्रपटार्पितमिवेत्यर्थः, अस्पन्दं स्पन्दरहितं, निश्चेष्टं सदित्यर्थः, आस्ते वर्त्तते, अत एव नियतं निश्चितम्, अमितवीर्य्यम् अपरिमितसामर्थ्यम्, अपौरुषेयशक्तिकमित्यर्थः, जृम्भकास्त्रं जृम्भकाख्य शस्त्रास्त्रतत्त्वभूतं समन्त्रप्रयोगसंहारम् आयुधं, जृम्भते स्फुरति, समुदेतीत्यर्थः; मन्ये, नूनं जृम्भकास्त्राणि प्रादुरभूवन्निति, अन्यथा कथमस्मत्सैन्यानां सपदि उपरोधः, कियत्कालात्परं प्रकाशश्च समभूत्? सैनिकसङ्घश्च चित्रार्पितारम्भ इवावतिष्ठते? इति भावः। [अत्र सैन्यानां लिखितवदवस्थानस्य सम्भावनया उत्कटैककोटिकसंशयसमुदायादुत्प्रेक्षाऽलङ्कारः, अपिच सैन्यानां समूहेषु जृम्भकास्त्रकृतनिष्पन्दीभावादेः सत्त्वात् तदस्त्रजविकारादेरनुमानात्, तथा विच्छित्तिवशात् साधनीभूतसैन्यगतविक्रियाभिः साध्यीभूतस्य जृम्भकास्त्रप्रादुर्भावस्य ज्ञानाच्च अनुमानालङ्कारः, एतयोरङ्गाङ्गिभावेन स्थितेः सङ्करः]। मालिनी वृत्तम् ॥ १२ ॥

अथ तदस्त्राणां प्रसारं प्रभावञ्च विशदीकृत्य प्रतिपादयति, पातालोदरेति।—पातालस्य अधोभुवनस्य, साङ्गलिकघनान्धकारसमावृतस्येत्यर्थः, उदरे

कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवाकीर्य्यते
नीलाम्भोधरतडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव ॥ १४ ॥

---

अभ्यन्तरे, मध्यदेशे इत्यर्थः, ये कुञ्जाः लताप्रतानावृतस्थानानि, लतागृहाः इत्यर्थः, तेषु पुञ्जितानि पुञ्जीभूय संस्थितानि, घनीभूतानीत्यर्थः, यानि तमांसि अन्धकाराः, तैरिव श्यामैः अतिकृष्णवर्णैः; अन्धकाराणामतितीव्रत्व-प्रतिपादनार्थं पातालोदरकुञ्जस्योपादानं ज्ञेयम्; अपिच, उत्तप्तं दृढतरवह्निसंयोगात् पावकसमवर्णतां सम्प्राप्तमित्यर्थः, अत एव स्फुरत् दीप्यमानं, प्रभातरल-ज्योतिर्म्मयमिति यावत्, यत् आरकूटं पित्तलं, ("रीतिः स्त्रियामारकूटम्" इत्यमरः) तस्य यानि कपिलानि पिङ्गलवर्णानि, ज्योतींषि प्रभाः, तद्वत् ज्वलन्त्यः देदीप्यमानाः, दीप्तयः प्रभाः येषां तथाविधैः, अनलतापेन द्रवीभूतपित्तलानां तरलप्रभाभास्वरैरित्यर्थः; एतत्तु विद्युद्विलासप्रकटीकरणार्थमिति ज्ञेयम्; कल्पे-त्यादि।—कल्पस्य ब्रह्मणो दिवसस्य, ("कल्पः शास्त्रे विधौ न्याये संवर्त्ते ब्रह्मणो दिने" इति मेदिनी) युगरूपस्येत्यर्थः, आक्षेपः क्षयः, अवसानमिति यावत्, यस्मिन् तथाभूते काले, युगान्तसमये इत्यर्थः, कल्पावसाने इति यावत्, ये कठोराः दारुणाः, दुर्निवारा इत्यर्थः, भैरवाः भयङ्कराः, मरुतः समवेतोदिताः ऊनपञ्चाशत् वायवः, तैः व्यस्तैः विच्छिन्नैः, विन्ध्याद्रिगात्रात् उत्पाट्य स्थानान्तरं नीतैरित्यर्थः, नीलाः सततमेव संसक्ताः, मेघाः पयोवाहाः येषु तथाविधाः, अत एव तडिद्भिः तदीयविद्युद्भिः, कडाराणि पिङ्गलवर्णानि, ("कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ" इत्यमरः) कुहराणि गुहा येषां ते, ततः नीलाम्भोधाश्च ते तडित्कडारकुहराश्चेति [ विशेषणकर्म्मधारयः ] तैः तादृशैः, विन्ध्याद्रिकूटैरिव विन्ध्यगिरिशिखरैरिव, जृम्भकैः जृम्भकाख्यास्त्रविशेषैः, नभः गगनम्, अवाकीर्य्यते व्याप्यते, सर्व्वतः समाच्छन्नं क्रियते इत्यर्थः; निबिडान्धतमसाच्छन्ने महाप्रलयसमये समुदितैः संवर्त्तकादिभिः प्रचण्डपवनैः निर्द्दयं समाहतानि विच्छिन्नमूलानि विन्ध्यगिरिशिखराणि समन्तात् समुड्डीय यथा प्रचण्ड-तथाविधमेघाघातं संप्राप्य विद्युन्मालाः परितः प्रकिरन्ति सन्ति जगज्जीवानां संक्षयं साधयन्ति, तथैव क्षिलामूनि जृम्भकास्त्राणि अम्बरतलमुदायेषु समुदितानीति भावः। [ अत्र प्रलयपवनेन छिन्नतया समुत्थितैः विन्ध्याद्रिकूटैः सार्द्धं जृम्भकास्त्राणामवैधर्म्य-साम्योपदेशात् उपमाऽलङ्कारः एव, नोत्प्रेक्षा, प्रलयसमये दृष्टिविलोपस्य शास्त्र-सिद्धत्वेन तात्त्विकतया, विन्ध्याद्रिकूटानामपि प्रामाण्यतया वर्णनीयत्वस्य सुसङ्गततया

सुमन्त्रः। कुतः पुनरस्य जृम्भकाणामागमः स्यात्? (प)

चन्द्र। भगवतः प्राचेतसादिति मन्यामहे। (फ)

सुमन्त्रः। नास्य व्यवहारोऽस्त्रेषु, विशेषतो जृम्भकेषु। (ब)

यतः,—

कृशाश्वतनया ह्येते कृशाश्वात् कौशिकं गताः।

अथ तत्सम्प्रदायेन रामभद्रे स्थिता इति ॥ १५ ॥

सुस्थिरत्वात् अकाल्पनिकत्वाच्च कथञ्चिदप्यत्र विषये सम्भावनाया अभावादिति ज्ञेयम्। शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

(प) कुतः,—कस्मात् पुरुषात्, अस्य—लवस्य, [ "शेषे विभाषा" (वा०) इति कर्त्तरि षष्ठी वैकल्पिकी, "केचिदविशेषेण विभाषामिच्छन्ति" इति दीक्षितवचनात्]। जृम्भकाणाम्—एतेषां दैवानामायुधानाम्, [ "उभयप्राप्तौ कर्म्मणि" (२।३।६६ पा०) इति कर्म्मणि षष्ठी ]। आगमः,—लाभः, प्राप्तिरित्यर्थः, स्यात्?—भवेत्?; भगवान् रामस्तु महर्षेः विश्वामित्रात् इमानि अधिगतवान्, अयन्तु कुतः? इति भावः।

(फ) प्राचेतसात्—वाल्मीकेः, आगमः इति शेषः। इति—एवं, मन्यामहे—अनुमिनुमः; अस्यैव महर्षेः शिष्यत्वादित्याशयः।

(ब) अस्य—महर्षेः वाल्मीकेः, अस्त्रेषु—आयुधेषु, व्यवहारः,—स्वेनैव प्रयोगः, शिष्येभ्यो वा उपदेशः इति यावत्, न—नासीत्यर्थः; यद्यपि महर्षिः सर्व्वज्ञतया निखिलं वेत्ति, तथाऽप्ययं केषाञ्चिदप्यस्त्राणां स्वयं सम्प्रयोगं न करोति, शिष्येभ्यश्च वा एतत् नोपदिशति इति भावः; विशेषतः,—विशेषेण, जृम्भकेषु—कृशाश्वतनयभूतेषु अस्त्रेषु, व्यवहार इति शेषः; सामान्यतः अस्त्रव्यवहाराणामदर्शनात् जृम्भकास्त्राणान्तु कथैव नास्तीति भावः।

अथैतेषां जृम्भकास्त्राणां सम्प्रदायं विवृणोति, कृशाश्वेति।—एते जृम्भकास्त्राः अस्त्रविशेषाः, हि इति सम्भ्रमार्थकमव्ययम्; महौजसः प्रजापतेः कृशाश्वस्य तनयत्वादेव जृम्भकाणामादरातिशयप्रकटनार्थमत्र हिशब्दप्रयोगः बोध्यः। ("हि पादपूरणे हेतौ विशेषेऽप्यवधारणे। प्रश्ने हेत्वपदेशे च सम्भ्रमासूययोरपि॥" इति मेदिनी) कृशाश्वतनयाः कृशाश्वेन प्रजापतिना सृष्टाः इत्यर्थः, कृशाश्वानां पूर्व्वतनानां गुरूणां तपसां तेजोभ्यः सम्भूताः इति यावत्; कृशाश्वात् तस्मादेव महापुरुषात्; तस्यैव तपस्तेजोभ्यः समुत्पद्येति भावः; कौशिकं महर्षिं विश्वामित्रं, गताः सङ्क्रान्ताः; गुरुपरम्पराक्रमेण कौशिकं महर्षिमुपाश्रिताः इति भावः; अथ

चन्द्र:। अपरेऽपि परमोपचीयमानसत्त्वप्रकाशाः स्वयं हि मन्त्रद्रष्टारः पश्यन्ति। (भ)

सुमन्त्रः। वत्स! सावधानो भव, परागतः प्रवीरः। (म)

कुमारौ। [अन्योऽन्यं प्रति]। अहो प्रियदर्शनः कुमारः !!। [सस्नेहानुरागं निर्वर्ण्य]। (य)—

अनन्तरं, तत्सम्प्रदायेन तेषामस्त्राणां गुरुपारम्पर्य्यक्रमादुपदेशेनेत्यर्थः, कौशिकोपदेशेनेति यावत्, रामभद्रे श्रीरामचन्द्रे, स्थिताः सङ्क्रान्ताः, रामभद्रमुपाश्रिता इत्यर्थः, इतीति वाक्यसमाप्तौ; ("व्यवस्थिताः" इति पाठान्तरम्)। इत्थं हि एतेषामस्त्राणां गुरुपरम्परासंस्थितिः सुप्रसिद्धा, एतेभ्योऽन्यत्र नास्त्येतेषां समधिगतिः, अतो वाल्मीकौ महर्षौ तस्य उपसङ्क्रमः न हि सम्भवतीति तात्पर्य्यम्। [अत्र जृम्भकास्त्राणामनेकेषु सङ्क्रमणात् पर्य्यायालङ्कारः; तथा तच्छब्देनैव कृशाश्वस्य उपस्थितिसम्भवे पुनः कृशाश्वपदोपादानात् कथितपदत्वदोषः, स च "कृशाश्वात्" इत्यत्र "तस्माच्च" इति पाठे समाधेयः इति]॥ १५॥

(भ) अपरेऽपि—कृशाश्वादिभ्यः अन्येऽपि, परमोपचीयमानसत्त्वप्रकाशाः,—परमम्—अत्यर्थम्, उपचीयमानः,—परिवर्द्धमानः, सत्त्वस्य—सत्त्वगुणस्य, प्रकाशः,—आविर्भावः येषु ते, विशुद्धसत्त्वगुणोद्रेकात् समुद्भासिततेजसः इत्यर्थः, यद्वा,—परमं—सातिशयम्, उपचीयमानः,—परिवर्द्धमानः, सत्त्वस्य—बलस्य, आर्षस्य तेजसः इति यावत्, प्रकाशः,—उदयः येषां ते, मन्त्रद्रष्टारः,—मन्त्रसाक्षात्कर्त्तारः ऋषयः, उग्रेण तपसा श्रुतीनां प्रत्यक्षीकर्त्तार इत्यर्थः, स्वयं हि—अन्योपदेशं विनैवेत्यर्थः, पश्यन्ति—जृम्भकादीन् जानन्ति इत्यर्थः, ज्ञानचक्षुषा सर्वं विज्ञाय दिव्यास्त्राणि लब्धुं शक्नुवन्ति इति यावत्; अतः मन्ये कृशाश्वादिव्यतिरिक्तेभ्यः प्राचेतसादिभ्यः महर्षिभ्योऽपि एतादृशास्त्राणां लवेन लाभः सम्भवेदिति भावः।

(म) सावधानो भव—आत्मरक्षणाय अप्रमत्तो भव, लवस्याक्रमणं प्रति मनः सन्निधेहीत्यर्थः, प्रवीरः,—प्रकृष्टः वीरः, लव इत्यर्थः, परागतः,—समुपस्थितः; यतोऽयं शूरः आक्रमितुकामः इत एव सत्वरं समायाति, अतस्त्वया इदानीमनलसेन सता स्थातव्यमिति भावः।

(य) अन्योऽन्यं प्रति—परस्परमवलोक्य, प्राकृतुविति शेषः। अहो!—इति विस्मयार्थकमव्ययम्; प्रियदर्शनः,—प्रियं—मनोज्ञं, दर्शनम्—अवलोकनं यस्य सः, तथेत्यर्थः, कुमारः,—लवः चन्द्रकेतुश्च। सस्नेहानुरागं—स्नेहेन—प्रेम्णा,

यदृच्छासंवादः किमु ? किमु गुणानामतिशयः ?
पुराणो वा जन्मान्तरनिविडबन्धः परिचयः ? ।
निजो वा सम्बन्धः किमु विधिवशात् कोऽप्यविदितः ?
ममैतस्मिन् दृष्टे हृदयमवधानं रचयति ॥ १६ ॥

अनुरागेण—अत्यन्तासक्त्या च सह वर्त्तमानं यथा तथा, निर्वर्ण्य—दृष्ट्वा, आहतुरिति शेषः ; उभयोः प्रियदर्शनत्वादेव अन्योऽन्यं प्रति स्नेहः, समवयस्कत्वेन सख्तित्वादेव चानुराग इति ज्ञेयम् ।

अथान्योन्यं प्रति स्निह्यन्तौ अनुरज्यन्तौ च कुमारौ विविधं तत्कारणमनुसन्दधाते, यदृच्छेति ।—यदृच्छया हेतुं विनाऽपि, अकस्मादित्यर्थः, संवादः समागमः, किमु ? किम् ; दैववशादेव आवयोः य एषः समागमः सञ्जातः, स एव किमेतस्मिन् हृदयावधानरचनायां हेतुः, तत्र किमपि अन्यत् कारणं नास्ति किम् ? इति भावः ; गुणानां शौर्य्यगाम्भीर्य्यसौजन्यादिगुणसमूहानाम्, अतिशयः आधिक्यम्, उत्कर्ष इत्यर्थः, किमु ? किम् ; ईदृशासामान्यगुणनिचयानां प्रभावस्यात्र सत्त्वादेव तद्बलात् एवं किं समजनीति भावः, गुणाधिके स्वत एव प्रीतिः समुत्पद्यते इत्याशयः ; वा अथवा, जन्मान्तरे अन्यस्मिन् जन्मनि, निविडः दृढः, बन्धः स्नेहमयं बन्धनं यस्य तादृशः, पूर्व्वस्मिन् जन्मनि सुदृढं स्नेहमयपाशेन संयमिततया संस्थित इत्यर्थः, पुराणः प्राक्तनः, परिचयः भ्रातृत्वबन्धुत्वादिरूपः सम्बन्धः, किमु ? इति शेषः ; जन्मान्तरीयसुदृढमैत्र्यादिबन्धनं किमु एतस्मिन् जन्मनि एवं जनयति ? इति भावः ; वा अथवा, विधिवशात् भाग्यवशात्, अदृष्टविवर्त्तनादित्यर्थः, अविदितः अविज्ञातः, कोऽपि अनिर्व्वचनीयः, निजः स्वीयः, सम्बन्धः भ्रातृत्वादिरूपः सम्पर्कः, किमु ? किम् ; अस्मिन् मे भ्रातृत्वादिरूपात् कस्माच्चित् सम्बन्धादेव ईदृशः किमु स्वाभाविकः प्रीतिभावः समुदितः ? यो हि सम्बन्धः दुर्दैवप्रभावादेव इदानीं सम्यक्तया नावबुध्यते इति भावः ; दृष्टे अवलोकिते, एतस्मिन् प्रियदर्शने कुमारे, मम हृदयं मानसम्, अवधानम् ऐकाग्र्यं, प्रीतिप्रवणतामित्यर्थः, रचयति गमयति, प्रणयविह्वलतामासादयतीत्यर्थः ; नूनमनेन बालकेन सह मे कश्चित् जन्मान्तरीयः स्वजनसम्पर्कः आसीत्, यत्प्रभावादेव मम चेतः सहसा ईदृक् विकलं सञ्जातमिति भावः । [ अत्र तरस्वरावलोकनात् परं स्वस्वहृदयावधानं प्रति प्रतिभावशेन विविधानां हेतूनामुपन्यस्तानां तुल्यबलतया एकतरविनिश्चयाभावात् शुद्धः सन्देहालङ्कारः, अपिच, चतुर्थपादस्थवाक्यार्थं प्रति पादत्रितयानां हेतुत्वेनोपन्यासात्

सुमन्त्रः । भूयसा जीविधर्म एषः, यद्रसमयी कस्यचित् क्वचित् प्रीतिः, यत्र लौकिकानामुपचारस्तारामैत्रकं वा चक्षूराग इति, तमप्रतिसंख्येयमनिबन्धनं प्रेमाणमामनन्ति । (२)—

वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, एतयोरङ्गाङ्गिभावतया स्थितेः सङ्करः ] । शिखरिणी वृत्तम् ॥ १६ ॥

(२) भूयसा—बाहुल्येन, प्रायश इत्यर्थः, एषः,—वक्ष्यमाणप्रकार इत्यर्थः, जीविधर्मः,—जीविनां—प्राणिनां, धर्मः,—स्वभावः ; किं तदिति प्रश्ने आह, यदिति ।—यत् कस्यचित्—जनस्य, क्वचित्—कुत्रचित जनविशेषे, रसमयी—अनुरागात्मिका, प्रीतिः,—स्नेहः, जायते इति शेषः ; कञ्चित जनं दृष्ट्वैव नैसर्गिक-प्रीतेरुदयात् कस्यचिज्जनस्य चित्तं यत् समाकृष्टं भवतीति दृश्यते, स एव जीविधर्मः इति भावः । कथमेतज्जायते तत्र लौकिकोक्तिमाह, यत्रेति ।—यत्र—यस्यां प्रीतौ, लौकिकानां—लोकाचाराभिज्ञानां जनानाम्, उपचारः,—व्यवहारः, मानव-समूहाः तद्विषये एवं हि व्याहरन्तीत्यर्थः ; ( "उपचारः" इत्यत्र "व्याहारः" इति पाठान्तरम् ) । तारामैत्रकं—ताराणाम्—अक्षिकनीनिकानां, मैत्रकं—मित्रत्वम्, अक्षिसन्निकर्षात्परमेव परस्परतारकातेजःसम्पर्कजनितम् अकृत्रिमं सख्यं हि भवति इत्यर्थः ; नयनरागभरादेव अहेतुकः केषाचित् सुदृढ़ः प्रणयः इह जगति दृश्यते इति भावः ; यद्वा,—ताराणाम्—उभयेषां द्रष्टॄणां जन्मतारकादीनां, मैत्रमेव मैत्रकम्, [ स्वार्थे कप्रत्ययः ] । परस्परेषां जन्मताराती गणने यत्र मित्रामित्रतार-कादिकं भवति, स एव प्रेमाप्रेमादिहेतुरिति भावः ; वा—पक्षान्तरे, चक्षूरागः,—चक्षुषां—नयनानां, रागः,—अनुरागः, विशुद्धं हि प्रेम किमपि निमित्तान्तरमनपेक्ष्यैव समुदीय अन्योऽन्यावलोकनमात्रं द्वयोरेव मानसमावर्जयति स्नेहप्रवणञ्च करोतीति भावः ; एष हि बङ्गभाषया "चक्षेर देखा" इत्याख्यायते ; ईदृशानुरागस्य केवलं ताराचक्षुर्भिरेव प्राधान्येन निष्पाद्यतया, तारामैत्रकसंज्ञया चक्षूरागसंज्ञया वाऽयं निर्दिश्यते लोकैरिति ज्ञेयम् ; तं—तादृशम्, इह लोके तारामैत्रकादिनाम्ना उप-चरितमित्यर्थः, प्रेमाणं—प्रणयं, सख्यभावमिति यावत्, ( "प्रेमा ना वासवे वाते प्रेमास्त्री स्नेहनर्मणोः" इति मेदिनी ) । अप्रतिसंख्येयं—प्रतिसंख्यातुम्—इयत्तया अवधारयितुमशक्यम्, अतिगभीरतया अप्रतिनेयस्वरूपमित्यर्थः, अनिबन्धनं—नास्ति निबन्धनं—किमपि कारणं यस्य तथोक्तम्, अहेतुकमित्यर्थः, आमनन्ति—कथयन्ति ; अथवा ईदृशाकस्मिकप्रीतिभावस्य प्राक् यानि यानि कारणानि आम्नातानि, तेभ्यः

अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
स हि स्नेहात्मकस्तन्तुरन्तर्मर्माणि सीव्यति ॥ १७ ॥

कुमारौ । ( अन्योऽन्यं प्रति ) ।—

एतस्मिन् मसृणितराजपट्टकान्ते
मोक्तव्याः कथमिव सायकाः शरीरे ।

विनाऽपि लोके केवलम् ईश्वरेच्छयैव निर्निमित्तस्य एतादृशप्रणयस्य समुदयो दृश्यते तत्त्वदर्शिभिः परीक्षकैः इति भावः ।

एतेषान्तु निर्हेतुकानां प्रेम्णां स्वरूपं फलञ्च विशदीकृत्य विवृणोति, अहेतुरिति ।— अहेतुः निर्निमित्तः, प्रागुक्तभ्रातृत्वादिसम्बन्धविशेषविनिर्मुक्त इत्यर्थः, कमपि कारणविशेषमनपेक्ष्य एव जायमान इति यावत्, यः पक्षपातः पक्षे पातः, परस्परं प्रति आसक्तिविशेष इति यावत्, तस्य प्रतिक्रिया प्रतीकारः, निवृत्ति-कारकः कोऽप्यभ्युपायः इत्यर्थः, नास्ति न वर्त्तते ; तस्य स्वाभाविकतया अकृत्रिमत्वा-दित्याशयः ; उपकारादिरूपकारणजन्यस्य तु कृत्रिमतया तद्रूपकारणादेरसमवधान-दशायाम् स्थायित्वादर्शनात्, सहजस्य तु प्रणयस्य सर्व्वस्मिन् काले समभावे-नैव सत्त्वम्, इत्येतावानेवानयोर्भेद इति ज्ञेयम् । स्वरूपमुपवर्ण्य तत्फलमिदानीं विवृणोति, स हीति ।—हि यस्मात्, सः तादृशः सहजपक्षपातरूपः अतिविशुद्धः प्रणयः इत्यर्थः, स्नेहात्मकः स्नेह एव आत्मा स्वरूपं यस्य तादृशः, स्नेहमय इत्यर्थः, तन्तुः सूत्रं, प्रणयसूत्रसन्तान इति यावत्, अन्तर्मर्माणि हृदयादिमर्म-स्थलानि, उभयोरेव अन्तःकरणमित्यर्थः, सीव्यति—ग्रथ्नाति, सुदृढ़ं बध्नातीत्यर्थः ; सौचिकः वस्त्रद्वयं सूक्ष्मसूत्रेण यथा सीव्यति, तथा कोऽप्यविज्ञातपूर्व्वः कारणविशेषः प्रणयिनोः अन्तःकरणद्वयं दुश्छेद्यप्रणयतन्तुना ग्रथित्वा एकीकरोतीति भावः । [ अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, अपिच, स्नेहे तन्तोरभेदारोपात् रूपकमलङ्कारः, अनयोरङ्गाङ्गिभावेन सङ्करः ] ॥ १७ ॥

अथ परस्परं प्रत्यनुरक्तौ कुमारौ स्वस्वहृदयभावं प्रकटयतः, एतस्मिन्निति ।—मसृणः कृतः मसृणितः [ "तत्करोति—"( ग० ) इति णिचि कर्म्मणि क्तः ] संस्कारेण चिक्कणीकृतः, यो राजपट्टः कान्तपाषाणा-परपर्य्यायः मणिविशेषः, यद्वा,—पट्टेषु वस्त्रेषु राजा राजपट्टः [ राजदन्तादिवत् पूर्व्वनिपातः ] विचित्रं रम्यं वस्त्रं, तद्वत् कान्तं मनोहरं तस्मिन्, सौम्यदर्शने इत्यर्थः, एतस्मिन् पुरोवर्त्तिनि, शरीरे देहे, कथमिव केन वा प्रकारेण,

यत्प्राप्तौ मम परिरम्भणाभिलाषात्
उन्मीलत्पुलककदम्बमङ्गमास्ते ॥ १८ ॥
किन्त्वाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना ?
शस्त्रेणापि हि तेन किं, न विषयो जायेत यस्येदृशः ? ।

सायकाः बाणाः, मोक्तव्याः ? त्यक्तव्याः, प्रहाराय निक्षेप्तव्याः इत्यर्थः, मयेति शेषः ; एतस्मिन् मृदुनि कमनीये च शरीरे कठोराः शराः केनापि प्रकारेण मया हननाय निक्षेप्तुं न शक्यन्ते इति भावः ; यत्प्राप्तौ यस्य शरीरस्य, प्राप्तौ लाभे सति, परिरम्भणाभिलाषात् परिरम्भणस्य समालिङ्गनस्य, अभिलाषात् स्पृहावशात्, आलिङ्गितुम् अत्यधिकवासनोदयेन हेतुनेत्यर्थः, मम अङ्गम् अवयवम्, उन्मीलत् उद्गच्छत्, पुलकानां रोमाञ्चानां, कदम्बं समूहः यस्मिन् तथाविधं, यद्वा,—उन्मीलन्तः उद्यन्तः, पुलकाः रोमाञ्चाः, कदम्बानि इव कदम्बकुसुमानीव यस्मिन् तथाविधम्, आस्ते वर्त्तते ; यतः एतच्छरीरस्य परिष्वङ्गाय मदीयशरीरं पुलकाञ्चितं भवति, अतः कथमेतस्मिन् सुतीक्ष्णान् शरान् निपातयेयम् इति भावः ; तथा च एतदतिकमनीयं वपुः शरनिक्षेपस्य नितरामेवानर्हम् इति फलितम् । [ अत्र पूर्वार्द्धगतवाक्यस्थितं शरीरे सायकाविमोचनं प्रति परार्द्धगतवाक्यस्थस्य पुलकोद्गमजनितालिङ्गनाभिलाषस्य हेतुतया उपन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा पक्षान्तरव्याख्याने पुलकेन सह कदम्बकुसुमानां साम्योपदेशाच्च लुप्तोपमाऽलङ्कारः, इत्यनयोरङ्गाङ्गिभावेन सङ्करः ]। प्रहर्षिणी वृत्तम् ॥ १८ ॥

अथ निरतिशयप्रमदोदयात् अन्योऽन्य प्रति स्निह्यन्तौ कुमारौ परस्परकमनीयाङ्गेषु शरसन्धानस्य नितान्तानर्हतां प्रतिपादयन्तावपि वीरजनसमाचारवशात् सायकसम्प्रयोगस्यापरिहार्य्यतां व्याचष्टाते, किन्त्विति ।—किन्त्विति पक्षान्तरे, परन्तु इत्यर्थः ; यद्यपि एतस्मिन् कमनीये वपुषि शरान् मन्तातुं किञ्चिदपि इच्छा न विद्यते, तथाऽपीति भावः ; आक्रान्तकठोरतेजसि आक्रान्तं प्रतिपन्नं, कठोरम् उग्रम्, अतिदुःसहमित्यर्थः, तेजः शौर्य्यं येन तस्मिन् ; एकत्र हयमेधीयाश्वग्रहणात् प्रतिपक्षभूते, अपरत्र च समरभूमौ सगर्व्वं मामाह्वयमाने इति भावः ; लवे चन्द्रकेतौ चेत्याशयः ; शस्त्रं विना आयुधप्रयोगादृते, समरक्रियामन्तरेणेति यावत्, का नाम गतिः ? को हि उपायः सम्भवति ? ; उपायान्तरं नास्तीति सम्भाव्यते इति भावः। शरीरसौभाग्यं परीक्ष्य शस्त्रक्रियाकरणे शस्त्रस्यापि वैफल्यमेवेत्याह, शस्त्रेणेति ।—यस्य शस्त्रस्य, ईदृशः एवंविधः महाबलः वीरः, विषयः प्रयोगगोचरः, परीक्षास्थान-

किं वक्ष्यत्ययमेवमद्य विमुखं मामुद्यतेऽप्यायुधे ?
वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ॥ १९ ॥

सुमन्त्रः। [ सर्वं निर्वर्ण्य सास्रमात्मगतम् ]। हृदय ! किमन्यथा परिकल्पसे ? (ख)—

मित्यर्थः, न जायेत न भवेत्, तेन शस्त्रेणापि आयुधेनापि, हि नूनं, किम् ? किं फलम् ? लभ्यते इति शेषः ; यदि ईदृशलोकातिशायिवीर्य्यशालिना वीरेण साकं न युध्ये, तर्हि मम एतादृशास्त्रशिक्षाकौशलं विफलमेव सञ्जातमिति भावः। अथ युद्धात् विरत्य सामसम्प्रयोगे दोषमुद्भावयति, किमिति।—आयुधे शस्त्रे, उद्यतेऽपि मामेवाभिहन्तुं समुत्थितेऽपि, न केवलं युद्धाय क्रतक्रमे, अपि तु शौर्य्यं परीक्षितुं प्रहर्त्तुकामेऽपि, इत्यपेरर्थः, युद्धविमुखं रणकर्म्मणः निवर्त्तमानं, सङ्ग्रामपराङ्मुखमित्यर्थः ; स्नेहप्रवणमपि इत्याशयः ; माम् अयमेव एष मत्प्रतिपक्षभूतः वीरपोत एवेत्यर्थः ; का कथा अन्येषामिति भावः ; किं वक्ष्यति ? किं कथयिष्यति ? ; दुर्ब्बलत्वेन कापुरुषत्वेन वा भयात् सङ्ग्रामविरतिमनुमाय मम युद्धापाटवमेवाभिधास्यति इति भावः। अतः प्रेमप्रदर्शनस्य नायमवसर इति समाधत्ते, वीराणामिति।—दारुणरसः दारुणः निष्ठुरः, भयङ्करः इत्यर्थः, रसः क्रौर्य्यरूपम् आस्वाद्यमानं वस्तु यस्य तथाविधः, अतिकठोर इत्यर्थः, वीराणां शूराणां, समयः आचारः, ("समयाः शपथाचारकालसिद्धान्तसंविदः।" इत्यमरः) वीररस इत्यर्थः, परस्परनिदारुणरणकर्म्मरूपः व्यवहार इति यावत्, स्नेहक्रमं स्नेहप्रसरं, प्रणयानुवृत्तिमिति यावत्, बाधते हि रुणद्धि खलु ; युद्धे समुद्यतैः वीरैः स्नेहः प्रकाशयितुं न शक्यते इति भावः। [ अत्र सामान्येन वीराणां समयरूपेण वस्तुना विशेषस्य स्वकीयसमाचाररूपस्य वस्तुनः समर्थनात्, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः ; किञ्च यत्रात यच्छब्दस्यान्ते प्रयोगात् विधेयाविमर्षदोषः, तथा हिशब्दस्य पादपूरणमात्रार्थकत्वात् निरर्थकत्वदोषश्च इति केषाञ्चिन्मतं, तत्रास्माकमेवमभिमतं यत्,—यत्तदोः नित्यसम्बन्धात् प्राक् निर्द्दिष्टेन दूरान्वितेनापि तच्छब्देनान्वयबलात् पश्चादुपात्तस्यापि यच्छब्दस्याकाङ्क्षायाः सङ्गत एव विनिवृत्तेः, यत्तच्छब्दद्वयघटितवाक्यद्वितयस्य अर्थप्रतीतेः तादृशविघाताकरणात्, नात्र यच्छब्दस्य प्रागनिर्द्देशकृततद्दोषावसरः, एवं हिशब्दस्यापि निश्चितार्थकतया न तदुपादानकृतनिरर्थकत्वदोष इति ज्ञेयम् ]। शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

(ख) निर्वर्ण्य—निरूप्य, सविशेषं विलोक्येत्यर्थः, सास्रम्—सबाष्पम्—बाष्पेण

मनोरथस्य यद्बीजं तद्दैवेनाऽऽदितो हृतम्।
लतायां पूर्वलूनायां प्रसूनस्याऽऽगमः कुतः ? ॥ २० ॥

चन्द्र। अवतरामि अहमार्य्य सुमन्त्र ! स्यन्दनात्। (ब)

---

सह वर्त्तमानं यथा तथा, अश्रूणि विमुञ्चेत्यर्थः, ("अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते।" इति मेदिनी) आत्मगतं—स्वगतम्, आर्द्देति शेषः। हृदय!—चेतः, किं—कथम्, अन्यथा—अन्यविधं, मायर्षिकुमारः, परं रामचन्द्रस्यैव इत्येवंरूपमित्यर्थः, परिकल्पसे ?—वितर्कयसि, चिन्तयसीत्यर्थः; एतस्मिन् ऋषिकुमारे रामचन्द्रस्य भूयः साधर्म्य्यं विलोक्य रघुमणिसुतत्वेनामुं कथं विभावयसि ? सर्व्वथैवासम्भवात् ईदृशी परिकल्पना त्वया न कार्य्येति भावः।

रामभद्रस्य प्रत्ययवसायमेतस्मिन् कुमारे विलोक्य तन्मूतोऽयं किमु ? इति प्राक् समाशङ्क्य पश्चात् तथाविधाशङ्कायाः अमूलकत्वमाह, मनोरथस्येति।— मनोरथस्य अयं वीरपोतः सीतागर्भसम्भूतः भगवतो रामचन्द्रस्यैव तनयः एवंविधाभिलाषस्येत्यर्थः, यत् बीजं मूलं कारणं, सीतारूपं निदानमित्यर्थः, तत् सीतारूपं बीजमिति यावत्, दैवेन प्रतिकूलादृष्टेन, आदितः प्रथमत एव, हृतं विनाशितम्; एकाकिन्याः गर्भभारमन्थरायाः वैदेह्याः श्वापदसङ्कुले सर्व्वप्राणिभयङ्करे जनस्थाने निर्वासनात् परं क्षणमपि तस्या जीवनस्थित्यसम्भवात् दुरदृष्टेन तथाविधाऽऽशा समूलमेवोत्पाटिता इति भावः। एतदेव व्यतिरेकदृष्टान्तेन विशदीकरोति, लतायामिति।— लतायां व्रतत्यां, पूर्व्वलूनायां पूर्व्वं प्राक्, प्रथमत एवेत्यर्थः, लूनायां छिन्नायां सत्यां, प्रसूनस्य कुसुमस्य, आगमः समुत्पत्तिः, कुतः ? कस्मादेव हेतोः भवेत् ? नैव कथमप्येतत् सम्भवतीत्यर्थः; विलूनायां वल्ल्यां यथा कुसुमानि कदाऽपि न उत्पद्यन्ते, एवमेव निर्वासनात्परं दण्डकारण्ये श्वापदभक्षितायाः सीतायाः सुतोत्पत्तिपरिकल्पना सुदूरपराहतैवेति भावः। [अत्र गर्भभारालसायाः सीतायाः विनाशात् परमपि, तस्या एवायं तनयः अवयवसाम्यात् प्रतिभाति, इत्थं हि परिकल्पनं, छिन्नमूलायाः लतायाः कुसुमोत्पत्तिः यथा न सम्भवति, तथैवासम्भवमेवेति व्यतिरेकेण बीजभूतया सीतया सह लूनलतायाः, मनोरथेन च सह प्रसूनस्य बिम्बप्रतिबिम्बभावावबोधात् वैधर्म्येण दृष्टान्तालङ्कारः] ॥ २० ॥

(ब) आर्य्य!—पूज्य!, सुमन्त्र!—भोः सुमन्त्राख्यसारथे!, स्यन्दनात्—रथात्, अवतरामि—अवरोहामि। सुमन्त्राभिमतग्रहणार्थमुक्तिरियं चन्द्रकेतोः।

सुमन्त्रः। तत्कस्य हेतोः? (अ)

चन्द्र। यतस्तावदयं वीरपुरुषः पूजितो भवति। अपिच खलु आर्य्य! क्षात्त्रधर्मः परिपालितो भवति। न रथिनः पादचारमायोधयन्तीति शास्त्रविदः परिभाषन्ते। (ब)

सुमन्त्रः। [स्वगतम्]। कष्टं वतानुप्रपन्नोऽस्मि। (स)—

कथं न्याय्यमनुष्ठानं माद्दशः प्रतिषेधतु?।
कथं वाऽप्यनुजानातु साहसैकरसां क्रियाम्?॥ २१॥

(अ) तत्—अवतरणं, कस्य हेतोः?—किमर्थम्?; तुमुले एतस्मिन् सङ्ग्रामे कस्मै कार्य्याय त्वं पदातिः भवितुमिच्छसीति भावः। [अत्र "सर्व्वनाम्नस्तृतीया च" (२।३।२७पा०) इति सूत्रेण पाक्षिकी षष्ठी विज्ञेया]।

(ब) यतः,—यस्मात् कारणात्, भूमाववरोहणरूपादित्यर्थः, अयं—पुरो वर्त्तमानः, पादचारीत्यर्थः, वीरपुरुषः,—अलौकिकवीर्य्यविभूषितः कुमारो लवः, पूजितो भवति—सत्कृतो भवति; यतोऽयं पादचारी, अतः पदातिनैव सता मया अनेन सह योद्धव्यं, तेन हि मे विनयः प्रकटीकृतः भवेत्, अयञ्च महावीरः यथायोग्यं सत्कृतोऽपि स्यादिति भावः। कारणान्तरमाह, अपिचेति।—अपिच—अन्यच्च, खलु—निश्चितं, क्षात्त्रधर्म्मः,—क्षत्त्राणामयं क्षात्त्रः, स चासौ धर्म्मश्चेति, क्षत्त्रियजातिनियम इत्यर्थः, युद्धनीतिरिति यावत्, परिपालितः,—संरक्षितः, विधिवदनुसृत इति यावत्, भवति—सम्पद्यते; रथावतरणेन युद्धविधयाणां सदाचारोऽपि यथायोग्यं समादृतः भवेदिति भावः। अत्र शास्त्राभिमतमाह, नेति।—रथिनः,—रथचारिणः, स्यन्दनारूढा योधा: इत्यर्थः, पादचारं—पादेन चारः,—भ्रमणं यस्य तं पदातिं, न आयोधयन्ति—न अभियुञ्जन्ते, न सङ्ग्रामयन्तीत्यर्थः, इति—एवं, शास्त्रविदः,—शास्त्राभिज्ञाः, क्षत्त्रधर्म्मानुशासितारः मन्वादयः इत्यर्थः, परिभाषन्ते—ब्रुवन्ति, आमनन्तीत्यर्थः। "न च हन्यात् स्थलारूढं न क्लीवं न कृताञ्जलिम्।" इति मनुः; "अयं रथस्थो रथं त्यक्त्वा स्थलारूढं न हन्यात्" इति च तद्व्याख्याने कुल्लूकभट्टः। अत्र सुस्फुटमाह चतुर्वर्गचिन्तामणिः, यथा—"रथी च रथिना सार्द्धं पदातिश्च पदातिना। कुञ्जरस्थो गजस्थेन योद्धव्यो भृगुनन्दन!॥" इति।

(स) वत—खेदे, अव्ययमिदम्। कष्टं—कृच्छ्रम्, अनुप्रपन्नः,—प्राप्तः, अस्मि—भवामि, इदानीं कर्त्तव्यं निर्णेतुमपारयन् अतिव्याकुलः संवृत्तोऽस्मीति भावः।

अथ कष्टहेतुं विनिर्द्दिशति, कथमिति।—माद्दशः युद्धनीतितत्त्वज्ञः रघुकुल-

चन्द्र। यदा तातमिश्रा अपि पितुः प्रियसखं धर्मार्थसंशयेषु आर्य्यमेव पृच्छन्ति, तत्किमार्य्यो विमृशति ?। (ङ)

सुमन्त्रः। आयुष्मन्! एवं यथाधर्ममभिमन्यसे। (क)—

---

स्थित्यभिज्ञस्याभिहतो जनः इत्यर्थः, न्याय्यं न्यायादनपेतं, शास्त्रविहितमिति यावत्, अनुष्ठानम् आचरणं, रथावतरणरूपं सुक्षत्रियोचितं व्यवहारमिति यावत्, कथं केन प्रकारेण, प्रतिषेधतु ? निवारयतु ; मद्विधजनानां शास्त्रविरुद्धकार्य्यानुष्ठानोपदेशनमतीव विगर्हितमिति भावः। पश्चान्तरमाह, कथमिति।—कथं वाऽपि केन प्रकारेण च, कया युक्त्या वेत्यर्थः, साहसैकरसां साहसम् अविमृश्यकारित्वं, वीरेणानेन सह पादचारी भूत्वा युद्धकरणरूपमिति यावत्, एकः केवलः, रसः रागः, युद्धप्रवर्त्तको रागविशेषः इति यावत, यस्य ताहशीं, क्रियां कर्म, पादचारयुद्धमिति यावत्, अनुजानातु ? अनुमोदयतु ? अनुमन्तुं शक्नुयादित्यर्थः ; रथादवतीर्य्यानेन वीरबालकेन सहास्मिन् युद्धे चन्द्रकेतोः भाविनीं महतीं विपदं समाशङ्कमानोऽप्यहं रघुकुलस्थितिपरम्परां क्षत्रियाचारश्चाभिजानन् कथमसुं स्वकुलाचारपालनाभिलाषिणं कुमारं धर्म्मयुद्धात् निवर्त्तयितुमुपदिशामि इति भृशं चिन्ताकुलः विषमायां दशायां समापतितोऽस्मीति भावः॥ २१॥

(ङ) यदा—यतः, तातमिश्राः अपि—पूज्यपादाः पितरः रामचन्द्रादयोऽपीत्यर्थः, अतीव नयविदः विचक्षणाः मद्गुरवोऽपि इत्यपिशब्दार्थः, धर्म्मार्थसंशयेषु—धर्म्मश्च अर्थश्च तौ धर्म्मार्थौ, तयोः संशयेषु—"अत्र धर्म्मशास्त्रानुशिष्टः पन्थाः कीदृशः?" "किमु अत्र सन्दिग्धे वस्तुनि कर्त्तव्यम् ? कथं वा अत्र प्रवर्त्तितव्यम् ?" ईदृशेषु धर्म्मसन्देहेषु कर्त्तव्यविषयसंशयेषु च समुपस्थितेषु इत्यर्थः, पितुः प्रियसखं—तेषां जनकस्य दशरथस्य परमं मित्रम्, आर्य्यमेव—पूज्यतमं भवन्तमेव, पृच्छन्ति—जिज्ञासन्ते, कर्त्तव्यावधारणाय भवतोऽभिमतिं प्रार्थयन्ते इत्यर्थः ; सर्व्वत्र, विशेषतः सांशयिकविषयेषु तत्रभवतो निरतिशयप्रावीण्यादिति भावः ; तत्—ततः, पित्रादीनामपि संशयापनोदकत्वेन भवतः अतिविचक्षणत्वादित्यर्थः, किं—कथम्, आर्य्यः,—तत्रभवान् भवानित्यर्थः, विमृशति ?—विचिन्तयति।

(क) आयुष्मन्!—दीर्घायो!, एवम्—इत्थं, रथादवतीर्य्य क्रियमाणमायोधनमित्यर्थः, यथाधर्म्मं—यथाशास्त्रं, धर्म्मशास्त्रानुमोदितमिति यावत्, अभिमन्यसे—अवबुध्यसे ; रथादवतीर्य्यैव युद्धमुचितमिति यदिच्छसि तदसमीचीनमेवेति भावः।

एष साङ्ग्रामिको न्याय एष धर्मः सनातनः।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः॥ २२॥

चन्द्र। प्रतिरूपं वचनमार्य्यस्य। (ख)—
इतिहासं पुराणञ्च धर्मप्रवचनानि च।
भवन्त एव जानन्ति रघूणाञ्च कुलस्थितिम्॥ २३॥

भवद्भोप्सितं अन्यं हि धर्म्मशास्त्रानुमततमेव, एवं हि रघुभिरेतत् सुचिरमनुपाल्यते इत्युक्ता समर्थयति, एष इति।—एषः भवतोऽभीप्सितः पदातिर्भूत्वा पदातिना सह सङ्ग्राम इत्यर्थः, साङ्ग्रामिकः सङ्ग्रामे भवः, युद्धशास्त्रसम्मतः इत्यर्थः, न्यायः नियमः, एष सनातनः चिरन्तनः, धार्म्मिकैः महावीरैः सुचिरमनुपालित इत्यर्थः, धर्म्मः आचारः, शश्वदेवासङ्कुचितचेतसा अनुसृतः पन्था इति यावत्। न केवलमन्ये योधाः एवमनुसरन्ति, परन्तु भवतः पूर्व्वपुरुषाः अपि सततमेवमनुसृतवन्तः इत्याह, इयमिति।—इयं हि निश्चितं, रघुसिंहानां [ रघवः सिंहा इवेत्युपमितसमासात् ] रघुश्रेष्ठाः इत्यर्थः, तेषां, रघूत्तमानां शूराणामिति यावत्, वीरचारित्रस्य वीरोचिताचारस्य, पद्धतिः पन्थाः; ईदृशेनैव सदाचारपथेन रघुपुङ्गवा अनिशं समचरन्, इयमेव तेषामनुमता आसीदिति भावः॥ २२॥

(ख) आर्य्यस्य—पूज्यस्य भवतः, वचनं—पूर्व्वोक्तं वाक्यं, प्रतिरूपम्—अनुरूपं, विधिसङ्गतमित्यर्थः; भवादृशाः धार्म्मिकाः धर्म्मशास्त्रसङ्गतमेव वचनं सततमभिभाषन्ते इति भावः।

अथ स्वकुलक्रमागतसारथेः सुमन्त्रस्य न्याय्यवचनप्रयोगे हेतुं प्रतिपादयति, इतिहासमिति।—भवन्त एव भवादृशाः विज्ञा एव; नान्ये साधारणपुमांस इति भावः; इतिहासं पुरावृत्तं, "धर्म्मार्थकाममोक्षाणामुपदेशसमन्वितम्। पुरावृत्तकथायुक्तमितिहासं प्रचक्षते॥" इत्युक्तलक्षणं पारम्पर्य्योपदेशेन अतीतघटनावलीप्रकाशकं ग्रन्थविशेषमिति यावत्, पुराणञ्च पञ्चलक्षणान्वितं शास्त्रविशेषञ्च, "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम्॥" इत्युक्तलक्षणसमन्वितं ग्रन्थविशेषमित्यर्थः, धर्म्मप्रवचनानि च वर्णाश्रमाणां कर्त्तव्यादिविधायकानि मन्वादिधर्म्मशास्त्राणि च, तथा, रघूणां रघुकुलसन्तानानां, कुलस्थितिं वंशमर्य्यादाञ्च, चिरानुशीलितसदाचारपद्धतिमित्यर्थः, जानन्ति विदन्ति; इह भुवि भवादृशाः विज्ञतमाः अतिविरला एवेति भावः। [ अत्र प्रस्तुताप्रस्तुतपदार्थानामेकयैव जानन्ति इति क्रियया अभिसम्बन्धात् दीपकालङ्कारः; उपात्तवाक्यस्य

सुमन्त्रः । [ सस्नेहास्रं परिष्वज्य ] । ( ग )—

जातस्य ते पितुरपीन्द्रजितो निहन्तु-
र्वत्सस्य वत्स ! कति नाम दिनान्यमूनि ।
तस्याप्यपत्यमनुगच्छति वीरवृत्तं
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ॥ २४ ॥

आनन्तीति क्रियया परिसमाप्तावपि रघूणामित्यनेन पुनरुपात्तत्वात् समाप्तपुनरात्तता-ऽऽख्यो दोषः "कुलस्थितिं रघूणाञ्च भवन्त एव जानते" इत्यनेन समाधातव्यः ॥ २३ ॥

( ग ) स्नेहेन—वात्सल्येन, अस्रेण—आनन्दाश्रुणा च सह वर्त्तमानं यथा स्यात्तथेत्यर्थः, परिष्वज्य—आलिङ्ग्य, आहेति शेषः ।

अथ चन्द्रकेतोः वीरोचितां प्रवृत्तिं विलोक्य प्रीतः सुमन्त्रः तं सस्नेहप्रीतिवचसा परितोषयति, जातस्येति ।—वत्स ! आयुष्मन् चन्द्रकेतो !, इन्द्रजितः सङ्ग्रामे देवराज-स्यापि विजयिनः मेघनादनाम्नः रावणपुत्रस्य, निहन्तुः निसूदनस्य, ( "निहन्तुः" इत्यत्र "विजेतुः" इति पाठान्तरम् ) वत्सस्य निरतिशयस्नेहास्पदस्य, ते पितुरपि तव जनकस्य लक्ष्मणस्यापि, जातस्य समुत्पन्नस्य सतः, अमूनि एतानि, जन्मत आरभ्य अद्य पर्य्यन्तानीत्यर्थः, कति नाम कियन्ति एव, नामेति सम्भावनायां, दिनानि दिवसाः, संवृत्तानीति शेषः, स्नेहास्पदस्य सौमित्रेः जन्मतः प्रभृति अत्यल्पसंख्यकानि खलु दिनानि समतीतानीत्यर्थः ; एतस्य तु वयः एतावदेव अल्पीयः, यदस्माभिः इतः किञ्चित्पूर्व्वमेव तत् परिदृष्टमित्यनुमीयते, सोऽपि इन्द्रवृत्रविजयिनं वीरप्रकाण्डं मेघनादं विनाशितवानिति अतीवाश्चर्य्यम् इति भावः ; तस्यापि एतादृगत्यल्पवयसः शिशोर्लक्ष्मणस्यापीत्यर्थः, अपत्यं तनयः, शिशोरपि शिशुः भवान् चन्द्रकेतुरित्यर्थः, वीरवृत्तं वीरपुरुषाचारम्, अनुगच्छति अनुसरति, परिपालयतीत्यर्थः, दिष्ट्या भाग्येन, आह्लादसूचकमव्ययमेतत्, ( "दिष्ट्या हर्षे मङ्गले च" इति मेदिनी ) दशरथस्य कुलं वंशः, प्रतिष्ठां स्थितिं, गतं प्राप्तं, सगौरवावस्थितिं लब्धमित्यर्थः ; अहो ! सुदिवसः अस्माकं समुदितः, यद्दशरथस्य महाराजस्य कुलस्थितिः, सुयोग्येनापत्येन सततमनुष्ठितवीराचारेण त्वया अविच्छिन्नभावेन संरक्ष्यते, तेनैव हेतुना जगति आर्यं वंशः अविच्छिन्नां ख्यातिं समधिगतवानिति भावः । [ अत्र चतुर्थपादगतवाक्यार्थं प्रति पूर्व्वोक्तपादत्रितयस्थवाक्यार्थानां हेतुभूततयो-पन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ] । वसन्ततिलकं वृत्तम् ॥ २४ ॥

चन्द्र। [सकष्टम्]।—

अप्रतिष्ठे रघुज्येष्ठे का प्रतिष्ठा कुलस्य नः।
इति दुःखेन तप्यन्ते त्रयो नः पितरोऽपरे ॥ २५ ॥

सुमन्त्रः। अहह! हृदयमर्मदारणानि एतानि चन्द्रकेतो-र्वचनानि। (घ)

लवः। हन्त! मिश्रीकृतो रसक्रमो वर्त्तते। (ङ)—

---

अथ रघुकुललक्ष्म्याः सीतायाः पूर्णगर्भायाः निर्वासनात् परमत्यर्थमनुतप्तानां स्वपितॄणां दुःखायमानं मानसमनुभवन् नितरां निर्विन्न चन्द्रकेतुः तदभावादेव स्वकुलस्थितेरकिञ्चित्करतामाह, अप्रतिष्ठे इति।—रघुज्येष्ठे रघुकुलोद्वहे, रामचन्द्रे इत्यर्थः, अप्रतिष्ठे प्रतिष्ठामनधिगतवति सति, अपत्याभावे तद्वंशरक्षायाः अभावात् कुलस्थितिमलभमाने सतीत्यर्थः, नः अस्माकं, कुलस्य वंशस्य, प्रतिष्ठा स्थितिः, का? कीदृशी, भवेदिति शेषः; सर्व्वगुणविभूषिते ज्येष्ठे रामचन्द्रे सन्तति-विरहिते अस्मद्रूपाणां सन्तानानां सतामपि असद्रूपत्वमेवेति भावः; इति अस्माद्धेतोः, अनेनैवेत्यर्थः, दुःखेन शोकेन, नः अस्माकम्, अपरे अन्ये, रामचन्द्रभिन्नाः इत्यर्थः, त्रयः पितरः विसंख्यकाः पितृपादाः, भरतलक्ष्मणशत्रुघ्ना इत्यर्थः, तप्यन्ते दह्यन्ते, मर्म्मव्यथामनुभवन्तीत्यर्थः। [अत्र करुणो रसः रामविषयकरतिभावस्याङ्गमिति रसव-दलङ्कारः] ॥ २५ ॥

(घ) अहह—इति खेदसूचकमव्ययम्। एतानि—इतः प्ागेवोक्तानि इत्यर्थः, चन्द्रकेतोः वचनानि—लक्ष्मणात्मजस्य वाक्यानि, हृदयमर्मदारणानि—हृदयस्य—अन्तःकरणस्य, मर्मणां—जीवस्थानानाञ्च; यद्यपि "सजीवतरं मर्मशतमायुर्वेदविदो भाषन्ते, तेषु वस्तिहृदयशिरांसि त्रीणि प्रधानमर्माणि" इति वैद्यकोक्त्या मर्मशब्देनैव हृदयं लभ्यते, तथाऽपि मर्मान्तरापेक्षया विशेषेण दारणद्योतनार्थं तस्य पृथगुपा-दानम्; यद्वा,—हृदयम्—अन्तःकरणरूपं, मर्म तस्य; यद्वा,—हृदयस्य मर्म्मणां—सन्धिस्थानानां, दारणानि—दार्य्यन्ते—विपाट्यन्ते एभिरिति तथोक्तानि, भवन्तीति शेषः, चन्द्रकेतोः वचांसि अस्माकं मर्माणि विदारयन्तीत्यर्थः।

(ङ) हन्त—इति हर्षे, ("हन्त हर्षेऽनुकम्पायाम्" इत्यमरः) मिश्रीकृतः,—अमिश्रः मिश्रः कृतः,—रसान्तरेणासम्मिश्रीकृतः, स्वविरुद्धैः रसैः एकीभावमापादित इत्यर्थः, रसक्रमः,—रसयोः,—वात्सल्यवीरयोः शृङ्गारवीरयोर्वा, क्रमः,—पर्य्यायः,

यथेन्दावानन्दं व्रजति समुपोढ़े कुमुदिनी
तथैवास्मिन् दृष्टिर्मम, कलहकामः पुनरयम्।
झणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालोल्वणरसः॥ २६॥

---

परस्परविरुद्धरसद्वयमिति यावत्, वर्त्तते—विद्यते; अतः वीरमवलोक्य मम यथा हि स्नेहाधिक्यात् वात्सल्यरसातिरेकः सञ्जायते, तथैव अमुष्य वीरस्य मया सह युद्धे अत्यधिकोत्साहदर्शनात् वीररससमुद्रेकश्च भवतीति दृश्यते इति भावः।

अथ रत्युत्साहस्थायिभावयोः शृङ्गारवीररसयोः एकत्र समये स्वस्मिन् कथं हि सम्मिश्रणभावः समुदितः, तदेव विशदीकृत्य विवृणोति, यथेति।—इन्दौ चन्द्रे, समुपोढ़े समुदिते सति, कुमुदिनी कैरविणी, यथा यद्वत्, आनन्दं हर्षं, विकाशमित्यर्थः, व्रजति प्राप्नोति, अस्मिन् पुरोवर्त्तिनि, कुमारे चन्द्रकेतौ इति यावत्, मम दृष्टिः नेत्रं, तथैव तादृगेव, आनन्दं व्रजति इत्यन्वयः, प्रीति प्रफुल्लतां यातीत्यर्थः; कुमारमिममवलोक्य हर्षातिशय्योदयात् मदीये नयने अनिर्वचनीयमानन्दमनुभवत इति भावः। इत्थं शृङ्गाररसाविर्भावमुपवर्ण्य वीररसोद्रेकमाह, कलहेति।—पुनः किन्तु, कलहकामः कलहम् अनेन चन्द्रकेतुना सह सङ्ग्रामं, कामयते अभिलषति यस्तथोक्तः, समराभिलाषुक इत्यर्थः, अयं बाहुः एष मदीयः भुजः, झणदिति।—झणत्कारेण झणझणेत्याकारकाव्यक्तध्वनिना, क्रूरम् अतिकर्कशं यथा स्यात्तथा, क्वणितः शब्दितः, यो गुणः मौर्वी, यद्वा,—झणत्कारं झणत्काररूपं, झणझणेत्याकारकमव्यक्तमित्यर्थः, क्रूरम् अतिकठोरं, क्वणितं निनादः यस्य तथाविधः यो गुणः ज्या, तेन गुञ्जत् शब्दायमानं, गुरु महत्, धनुः कार्म्मुकं, तस्मिन् धृतं बद्धं, प्रेम प्रणयः, ग्रहणाभिलाष इति यावत्, येन तथोक्तः सन्, भीषणनिनादेन शरासनस्य ज्यां निरन्तरमास्फालयितुमभिलाषुकः सन्नित्यर्थः, विकचविकरालोल्वणरसः विकचः सुव्यक्तः, विकरालः अतिभीषणः, अतिभयावहः इति यावत्, ("करालो दन्तुरे तुङ्गे भीषणे चाभिधेयवत्।" इति मेदिनी) उल्वणरसः उद्धतरसः, वीररसः इति यावत् यस्मिन् तथाविधः, सञ्जात इति शेषः; यद्यपि इमं सौम्यदर्शनं कुमारमवलोक्य सपदि मे नेत्रद्वयं प्रीतिविस्फारितं भवति, तथाऽपि पुरतः महावीरमेतमासाद्य योद्धुमना मदीयो बाहुः ज्यायाः टङ्कारेण दिशं विदिशञ्चापूर्य्य शरान् विमोचयितुमभिलषतीत्यर्थः।

चन्द्र। [ अवतरणं रूपयन् ]। आर्य्य! सावित्रश्चन्द्रकेतुः अभिवादयते। ( च )

सुमन्त्रः। अजितं पुण्यमोजस्वि काकुत्स्थस्येव ते महः।
श्रेयसे शाश्वतो देवो वराहः परिकल्पताम्॥ २७॥

"विरुद्धयोः द्वयोरेव रसयोरेकत्र विचित्रसमावेशः इति परं विस्मितोऽस्मीति भावः। [ अत्र परस्परं विरुद्धयोः स्नेहवैरयोरेकत्र सङ्घटनात् विषमालङ्कारः, तथा कुमुदिन्या सह अवैधर्म्यसाम्योपदेशाच्च श्रौतोपमाऽलङ्कारः, इत्यनयोरङ्गाङ्गिभावेन सङ्करः। किञ्च एतस्मिन् रसस्य स्वशब्देनैवाभिधानात् स्वशब्दोक्तिनिबन्धनो दोषः, "रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि" इति दर्पणोक्तेः। एवमेव गुञ्जनस्य भ्रमरकृते एव प्रसिद्धत्वात् तदन्यत्र धनुर्निःस्वनादौ तथाप्रसिद्धिविरहेण ख्यातिविरुद्धतादोषश्च "गुञ्जत्" इत्यत्र "गर्ज्जत्" इत्यादि शब्दप्रयोगेण परीहारः करणीय इति। श्लोकस्यास्य पूर्व्वार्द्धे रतिस्थायिभावकः शृङ्गारो रसः, प्रसादो गुणः, कैशिकी रीतिश्च, उत्तरार्द्धे तु उत्साहस्थायिभावको वीरो रसः, ओजो गुणः, आरभटी च रीतिः, इत्युभयोः रसयोरेकत्र समावेशात् सम्मिश्रणमिति ज्ञेयम् ]। शिखरिणी वृत्तम्॥ २६॥

( च ) आर्य्य!—पूज्य सुमन्त्र!, सावित्रः,—सवितुः,—सूर्य्यस्यापत्यं पुमान्, सवितृकुलसम्भूतः इत्यर्थः, चन्द्रकेतुः,—तदाख्यः लक्ष्मणात्मजः, अभिवादयते—प्रणमति, भवन्तमिति शेषः; "नामधाहमभिवादयेत्" इत्यादिस्मृतेः स्वनामग्रहण-पूर्व्वकाभिवादनं कृतमिति ज्ञेयम्।

अथ कुलक्रमागतसारथिः सुमन्त्रः अभिवादयमानं कुमारं समुचितेन आशिषा संवर्द्धयति, अजितमिति।—शाश्वतः नित्यः, उत्पत्तिविनाशरहितः इत्यर्थः, देवः द्योतमानः, भगवानित्यर्थः, वराहः शूकररूपेणावतीर्णः, स्वीकृतवराहशरीरः भगवा-न्नारायण इत्यर्थः, काकुत्स्थस्येव काकुत्स्थगोत्रसम्भूतस्य जगत्पतेः रामभद्रस्येवेत्यर्थः, ते तव, अजितं परैरनभिभूतं, पुण्यं पवित्रम्, ओजस्वि अतिप्रबलं, सर्व्वत्राप्रतिहत-मित्यर्थः, महः तेजः, श्रेयसे शुभाय, विजयमङ्गलायेति यावत्, परिकल्पतां सम्पादयतु, सर्व्वतोभावेन विदधातु इत्यर्थः। [ "क्लृपि सम्पद्यमाने च" ( वा० ) इति चतुर्थी; केचित्तु "तादर्थ्ये चतुर्थी वाच्या" ( वा० ) इति सूत्रेण चतुर्थी-मनुशासति। पुरा भीषणसङ्ग्रामे आदिदैत्यस्य हिरण्याक्षस्य निहन्तुः आदिवराह-मूर्त्तिधरस्य भगवतो नारायणस्य अपौरुषेयप्रभावं संस्मृत्य सुमन्त्रः कुमारस्य उपस्थिते सङ्ग्रामे तस्मादेव भगवतो विजयाशिष सम्प्रार्थितवानिति ज्ञेयम्। पुरा हि त्रेतायां

अपिच,—

देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पिता
त्वां मैत्रावरुणोऽपि नन्दतु गुरुर्यस्ते गुरूणामपि ।
ऐन्द्रं वैष्णवमाग्निमारुतमथो सौपर्णमोजोऽस्तु ते
देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् ॥ २८ ॥

---

देवासुरयुद्धे भगवतो नारायणस्य तेजसा आप्यायितः पुरञ्जयो नाम सूर्य्यवंशीयः कश्चित्पराक्रान्तः नरपतिः इन्द्रादिभिः देवसङ्घैः भृशमभिप्रार्थितः वृषभरूपधारिण्यः इन्द्रस्य ककुदमास्थाय सर्व्वमेवासुरबलं निजघान, तेन चासौ काकुत्स्थसंज्ञामवापेति काकुत्स्थशब्दप्रवृत्तिनिमित्तभूता पौराणिकी कथा अत्रानुसन्धेयेति ] ॥ २७ ॥

भङ्ग्यन्तरेण विजयाशिषा कुमारं पुनः संवर्द्धयति, देवस्त्वामिति ।—देवः द्योतमानः, सविता भगवान् सूर्य्यः, समरे सङ्ग्रामे, त्वां भवन्तं, धिनोतु प्रीणयतु, असामान्यं तेजः सम्प्रदाय त्वां संवर्द्धयत्वित्यर्थः, [ "धिवि प्रीणने" इति धातोः लटि रूपम् ]। यः भगवान् सविता, ते तव, गोत्रस्य वंशस्य, पिता जनयिता, प्रवर्त्तकः इत्यर्थः, आदिपुरुष इति यावत्, मैत्रावरुणोऽपि वशिष्ठोऽपि, [ मित्रश्च वरुणश्चेति द्वन्द्वे मित्रावरुणाविति पदात् "देवताद्वन्द्वे च" (६।३।२६ पा० ) इत्यानङ्विधानात्, ततः तयोरपत्यं पुमानित्यर्थे शैषिकः अण्प्रत्ययः, "शिवादिभ्योऽण्" ( ४।१।११२पा० ) इति वा अण्प्रत्ययः, शिवादेराकृतिगणत्वादिति ज्ञेयम्। अत्र "अत इञ्" ( ४।१।९५पा० ) इति इञ्प्रत्ययस्य विधानात् "मैत्रावरुणिः" इत्येव भवितुं युक्तमित्युत्पश्यामः ]। एकस्मिन् कल्पे मित्रस्य कल्पान्तरे च वरुणस्य पुत्रत्वेनास्य ईदृशी संज्ञा सम्भवतीति ज्ञेयम्। त्वां भवन्तं, नन्दतु विजयाशिषा प्रीणयतु, यः मैत्रावरुणः, ते तव, गुरूणामपि पित्रादीनामपि, गुरुः पूजनीयः, भवतीति शेषः, ऐन्द्रम् इन्द्रस्येदम्, इन्द्रसम्बन्धीत्यर्थः, वैष्णवं विष्णोरिदं, विष्णुसम्बन्धीत्यर्थः, आग्निमारुतम् अग्निमरुतोरिदम्, अग्निसम्बन्धि मरुत्सम्बन्धि चेत्यर्थः, वैश्वानरं वायव्यञ्चेति यावत्, [ "देवताद्वन्द्वे च" ( ७।३।२१ पा० ) इति पूर्व्वोत्तरपदवृद्धिः। "इद्वृद्धौ" ( ६।३।२८पा० ) इति अग्नेरिदादेशश्च ]। अथो अपिच, ( "अथाथो संशये स्यातामधिकारे च मङ्गले। विकल्पानन्तरप्रश्नकार्त्स्न्यारम्भसमुच्चये ॥" इति मेदिनी ) सौपर्णं सुपर्णस्य गरुड़स्येदं, गरुड़सम्बन्धीत्यर्थः, ओजः तेजः, ते तव, अस्तु भवतु, इन्द्रादीनां देवानां सदृशं भवतः तेजः भवत्वित्यर्थः; रामेति ।—

लवः। कुमार! अति हि नाम शोभसे रथस्थ एव, कृतं कृतमत्यादरेण। (छ)

चन्द्र। तर्हि महाभागोऽप्यन्यं रथमलङ्करोतु। (ज)

लवः। [ सुमन्त्रं प्रति ]। आर्य्य! प्रत्यारोपय रथोपरि राजपुत्रम्। (झ)

---

रामलक्ष्मणयोः राघवसौमित्र्योः, धनुषः शरासनस्य, या ज्या मौर्व्वी, तस्याः घोषः टङ्कारध्वनिः, स एव मन्त्रः शस्त्रास्त्रप्रयोगार्थम् आम्नायसमुदाय इत्यर्थः, जयं सङ्ग्रामेऽस्मिन् विजयलक्ष्मीमिति यावत्, दैयाद्दैव च दद्यादेव ; अभिमतविक्रमौ रामलक्ष्मणौ यथा सङ्ग्रामे भीषणकार्मुकस्य ज्याशब्देनैव सर्व्वान् रिपून् समूलमुन्मूल्य विजयलक्ष्म्या नियतं युयुभाते, एवमेव भवानेतस्मिन् सङ्ग्रामे जयश्रियं लभतामिति भावः। [ भवाभ्येषां तेजः कथमन्यो वहत्विति वस्तुसम्बन्धः सर्व्वथा असम्भवन्नपि विम्बप्रतिविम्बभावेन इन्द्रादीनां तेजःसदृशमेव तत्तेजोऽस्त्विव्येवमेवावगमयतीत्यतोऽसम्भवद्वस्तुसम्बन्धरूपो निदर्शनाऽलङ्कारः। इह पूर्व्वार्द्धस्थितयच्छब्दयोः तच्छब्देन ताद्दशापेक्षाविरहादेव न विधेयाविमर्षाख्यो दोषः इत्यवधेयम्। दैयाद्दैवेत्यत्र एवकारस्य स्वायोगव्यवच्छेदकार्थकतया नियमेन नियतसम्बन्धस्यैवावबोधनात् न अनियमे नियमाख्यदोषः इत्यवधेयम् ]। शार्दूलविक्रीड़ितं वृत्तम् ॥ २८ ॥

(छ) रथस्थ एव—स्यन्दनाधिरूढ़ एवेत्यर्थः, अति हि—अत्यर्थमेव, नूनमिति यावत्, शोभसे—राजसे, शोभान्वितो भवसीत्यर्थः, नाम—सम्भावनायाम्, इत्यहं सम्भावयामीत्यर्थः; अतः अत्यादरेण—रथावतरणरूपबहुमानप्रदर्शनेनेति यावत्, कृतं कृतम्—अलमलम्; [ सम्भ्रमे द्विर्वचनम् ] अधुना रथादवतीर्य्य त्वया सम्मानप्रदर्शनं न करणीयमिति भावः।

(ज) तर्हि—तदा, मयि रथस्थे सतीत्यर्थः, महाभागोऽपि—महान्—अत्यधिकः, भागः,—भाग्य, वीरत्वसौभाग्यमिति यावत् यस्य तथाविधः, भवानपीत्यर्थः, अन्यं रथम्—अपरं स्यन्दनम्, अलङ्करोतु—भूषयतु, आरोहणेनेति शेषः; भवति महावीरे पादचारिणि मम रथारोहणं न युज्यते इति भावः।

(झ) आर्य्य!—मान्य सुमन्त्र!; चन्द्रकेतौ मैत्रीसंस्थापनात् तत्कृतं सुमन्त्रे बहुमानं विलोक्यैव स्वयमपि तस्मिन्नत्यादरं प्रदर्शितवानिति ज्ञेयम्। रथोपरि—रथस्य—स्यन्दनस्य, उपरि—ऊर्द्ध्वं, स्यन्दने इत्यर्थः, राजपुत्रं—कुमारं चन्द्रकेतुं, प्रत्यारोपय—आरोहय।

सुमन्त्रः । त्वमप्यनुरुध्यस्व चन्द्रकेतोर्वचनम् । (ञ)

लवः । को विचारः स्वेषु उपकरणेषु ? किन्तु अरण्यसदो वयमनभ्यस्तरथचर्य्याः । (ट)

सुमन्त्रः । जानासि वत्स ! दर्पसौजन्ययोर्यथोचितमीरयितुम्; यदि पुनरीदृशं त्वामैक्ष्वाको रामभद्रः पश्येत्, तदा अस्य स्नेहेन हृदयमभिष्यन्देत । (ठ)

---

(ञ) त्वमपि—भवानपि, चन्द्रकेतोः,—कुमारस्य, वचनं—वाक्यं, त्वयि रथारोहणप्रार्थनामित्यर्थः, अनुरुध्यस्व—अनुपालय ; रथारोहणेन एतन्मनोरथं प्रपूरयेति भावः ।

(ट) को विचारः ?—कः विवेकः, को वितर्क इति यावत्, स्वेषु—स्वकीयेषु, आत्मभूतेष्विति यावत् ; एतस्मिन् कुमारे मैत्रीसंस्थापनात् अमुष्य सर्व द्रव्यं मदीयमेव सञ्जातम्, अतः स्वद्रव्यमिव एतद्द्रव्यमपि यथेच्छमेव मया ग्रहणीयं, न हि केनचित् कियानपि संशयः स्वद्रव्यव्यवहारे क्रियते इति भावः ; यद्वा,—स्वेषु—निजप्रयोजनीयेषु, उपकरणेषु—उपकारसाधनीभूतवस्तुषु, सङ्ग्रामोपयोगिरथादिषु इति यावत्, किन्तु—परन्तु, अरण्यसदः,—अरण्ये—वने, सीदन्ति—निवसन्ति ये तथोक्ताः, वनवासिन इत्यर्थः, वयम्—अहमित्यर्थः, [ अस्मदः एकत्वे बहुत्वप्रयोगादिति ] अनभ्यस्तरथचर्य्याः,—अनभ्यस्ता—न शिक्षिता, रथेन—स्यन्दनेन, चर्य्या—सञ्चरणं यैस्तथोक्ताः, अविज्ञातरथारोहणादिव्यवहारा इत्यर्थः, भवाम इति शेषः ; अहं हि आरण्यकः, तेन इतः प्राक् कदापि रथं नारोहयमतोऽधुना रथमारुह्य योद्धुं नाभिलषामि इति भावः ।

(ठ) जानासि—वेत्सि, वत्स !—आयुष्मन् लव !, दर्पसौजन्ययोः,—अहङ्कारविनययोः, यथोचितम्—उचितमनतिक्रम्य [ इत्यव्ययीभावः ] यथोपयुक्तमित्यर्थः, औचित्यस्यापरिहारपूर्व्वकमिति यावत् ; ईरयितुम्—अभिधातुं, व्यवहर्त्तुमित्यर्थः ; यादृशेन वाग्विन्यासेन ओजस्विता सुजनता च व्यक्तीभवति, तादृशीं वाचमभिधातुं त्वं सम्यगभिज्ञो भवसीति भावः ; स्वेषामरण्यनिवासित्वाद्यभिधानेन वन्योऽप्यहं पदातिर्भूत्वैव रथचारिणा भवता सह योत्स्ये, त्वत्तः ईषदपि न बिभेमि, इत्यमात्मनः निर्भीकतायाः तेजस्वितायाश्च प्रकटीकरणात् स्वकीयगर्व्वभावः कियद्धि व्यक्तीभूतोऽभूत, एवमेव चन्द्रकेतोः रथं "स्वेषूपकरणेषु" इत्युक्त्या आत्मीयत्वप्रतिपादनात् स्वस्याति-

लवः। मान्य! सुजनः स राजर्षिः श्रूयते। (ड)

[ सलज्जमिव ]। (ढ)—

वयमपि न खल्वेवम्प्रायाः क्रतुप्रविघातिनः
क इह च गुणैस्तं राजानं न वा बहु मन्यते?।
तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां
विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाऽकरोत् ॥ २८ ॥

---

विनयित्वञ्च सम्यक्तया स्फुटीभूतमभूदित्यवधेयम्। यदि पुनः,—चेद्धि, ईदृशं—शौर्य्यसौजन्यादिगुणगणविभूषितमित्यर्थः, सर्व्वगुणाकरमिति यावत्, त्वां—भवन्तम्, ऐक्ष्वाकः,—इक्ष्वाकुवंशसम्भूतः, इक्ष्वाकुकुलालङ्कार इत्यर्थः, रामभद्रः,—रामचन्द्रः, पश्येत्—अवलोकयेत, तदा—तर्हि, अवलोकनसमकालमेवेति यावत्, अस्य—रामभद्रस्य, स्नेहेन—प्रेम्णा, वात्सल्येनेत्यर्थः, हृदयं—मानसम्, अभिष्यन्देत—द्रवीभूतं भवेत्; गुणग्राही भगवान् रघुमणिः सर्व्वगुणविभूषितं त्वां विलोक्य नूनम् अभूतपूर्व्वां प्रीतिमापद्येतेति भावः।

(ड) मान्य!—पूज्य सुमन्त्र!, सुजनः,—सज्जनः, साधुरित्यर्थः; विनयित्वादिगुणशतविभूषितत्वादिति भावः; स राजर्षिः,—राजश्रेष्ठः; राजा चासौ ऋषिश्चेति विग्रहेण, निखिलराजगुणविभूषितोऽप्यसौ रघुमणिः रामः दमनियमादिगुणयोगात् ऋषिकल्प एव भवतीति भावः; श्रूयते—आकर्ण्यते।

(ढ) सलज्जमिव—लज्जया सह वर्त्तमानं यथा स्यात्तथैव, ईषल्लज्जितः सन्निव इत्यर्थः, आहेति शेषः।

ननु सुजनश्चेत् तत्रभवान् रामचन्द्रः भवतामभिमतः, तर्हि कथं तत्क्रतुविघाताय यज्ञीयाश्वमपहृत्य इत्थमसौजन्यमनुतिष्ठसि? इत्याशङ्कामपनेतुमाह, वयमपीति।—वयमपि अस्मद्विधा जना अपि, अहमपि इत्यर्थो वा, [ अविशेषणयुष्मदस्मदोः एकत्वेऽपि बहुत्वे प्रयोगदर्शनात् ] एवम्प्रायाः प्रायेण बाहुल्येन एवम् [ इति विग्रहे "सह सुपा" ( २।१।४ पा० ) इति समासः ] ईदृशा इत्यर्थः, क्रतुप्रविघातिनः क्रतुं यज्ञं, प्रविघ्नन्ति प्रविध्नन्ति ये तथोक्ताः, यज्ञहन्तारः इत्यर्थः, न खलु नैव; यथा स राजर्षिः सुजनः, तथा वयमपि, न हि मिथ्यापहरणादिक्रियाभिः दुर्वृत्तयः क्रतुविध्वंसकराक्षसप्रायाः वयं भवाम इति भावः। तर्हि किमु रामस्यासौजन्यमवलोक्य विद्वेषवशात तद्यज्ञाश्वं बलाद्गृहीतुमिच्छसि? तदपि नेत्याह, क इहेति।—इह च अस्मिन् जगति पुनः, कः को जनः, गुणैः

चन्द्र। [ सस्मितम् ]। किन्नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः ? (ण)

लव:। अस्त्वमर्षः, मा भूद्वा, एतत्तु पृच्छामि, दान्तं हि राघवं राजानं शृणुमः, स किल नाऽऽत्मना हृप्यति, नाप्यस्य

---

शौर्य्यौदार्य्यसौजन्यादिभिः हेतुभिः ; अशेषगुणविभूषितत्वादिति भावः ; तं राजानं अस्याजनमनुं रामचन्द्रं, न बहु मन्यते वा ? नाद्रियते वा ? न सत्करोति वेत्यर्थः ; अपि तु सर्व्व एव विपुलगुणविशोभितं रामं तद्गुणाकृष्टहृदयाः सन्तः नियतं प्रशंसन्ति, वयमपि तथैव भवामः, क्रतुविघातकाः रामविद्वेषिणश्च न इति भावः। युष्माकं सदाचारवत्त्वे भवाजः रामस्य च बहुसम्मानास्पदीभूतत्वे कथमीदृशः विरोधः सञ्जातः ? इत्याशङ्कामपनयति, तदपीति।—तदपि तथाऽपि, तस्मिन् बहुमान-सत्त्वेऽपीत्यर्थः, खलु नूनं, तुरङ्गमरक्षिणाम अश्वमेधीयाश्वरक्षकाणां, स व्याहारः तादृशी उक्तिः, "अयमश्वः पताकेयम्" इत्यादि रामानुमोदितं सगर्व्वमभिधानमित्यर्थः। अखिलेति।—अखिलानां सर्व्वेषां, क्षमाणां राजन्यानाम्, आक्षेपेण तिरस्कारेण, वीरत्वापकर्षकरूपावमाननेनेति यावत्, प्रचण्डतया अत्युग्रतया, अतिदुःसहत्वेन हेतुनेति यावत्, मे मम, राघवानुयातां सर्वेषां वीराणां तादृशीमवज्ञां सोढुमपारयतः इत्यर्थः, विकृतिं विकारं, क्रोधमित्यर्थः, अश्वधारणप्रवृत्तिरूपं चेतसोऽन्यथाभावमिति यावत्, अकरोत् उत्पादयामास ; निखिलवीराणां निन्दाकरं रक्षिजनानां वचनं निशम्य क्रोधेनैवाहमश्वमिममवरुद्धवान्, न विजयप्रेप्सया, न वा दौर्ज्जन्येनेति मन्तव्य-मित्याशयः। [ अत्राप्रस्तुतेन "कः" इति पदोपस्थाप्यसामान्यार्थेन प्रस्तुतस्य विशेषस्य वक्तुः लवस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः ]। हरिणी वृत्तम् ॥ २९ ॥

( ण ) सस्मितम्—ईषद्धास्यसहितम्, आहेति शेषः। भवतः,—तव, तात-प्रतापोत्कर्षेऽपि—तातस्य—पितृस्थानीयस्य रामचन्द्रस्य, प्रतापः,—प्रभावः, कोष-दण्डजं तेज इत्यर्थः, तस्य य उत्कर्षः,—अतिशयः, अतिरेक इति यावत् तस्मिन्नपि, अमर्षः,—असहनम्, असहिष्णुतेति यावत्, किन्नु ?—किमु खलु ; यद्यपि महावीरस्य भवतः साधारणजनानां वितथा सगर्व्वोक्तिः मर्म्माणि निकृन्तति, तथाऽपि पितृवत्पूज्यस्य तत्रभवतो महारथस्य रघुपतेः राक्षसकुलोच्छेदकस्य ईदृशी तात्त्विकी शौर्य्योक्तिः गुणग्राहिणः गुरुजनानुमतस्य भवादृशस्य चेतः प्रमथ्नातीत्यहो ! अतीव हास्यकरं निरतिशयविस्मयजनकञ्चैतदित्याशयः।

( त ) अमर्षः,—असहनं, परगुणासहिष्णुतेत्यर्थः, अस्तु—भवतु, मा भूद्वा—न भवतु वा ; रामप्रतापोत्कर्षश्रवणविषये कियदपि मे असहनं वर्त्तते न वेति तद्विषयकः

प्रजा ईदृश्यो जायन्ते, तत् किमस्य मनुष्या राक्षसीं वाचं वदन्ति? (त)—

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः।
सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः॥ ३०॥

---

प्रश्नावसरश्चमिदानीं न युज्यते इति भावः; तु—किन्तु, एतत्—इदं, वक्ष्यमाणं विषयजातमित्यर्थः, पृच्छामि—जिज्ञासे, भवन्तमिति शेषः; किमिति तदेवाह, दान्तमित्यादि।— दान्तं—दमादिसम्पन्नं, जितेन्द्रियमित्यर्थः, अनुद्धतभाविणमिति यावत्, हि—निश्चितं, राघवं—रामं, राजानं—निखिलप्रजापालकं, शृणुमः,—आकर्णयामः; सर्व्वे हि जनाः सततं रघुमणिं निरहङ्कारं वश्चिनचामलमौमि अभीक्ष्णमनुशृयते इति भावः; सः,—राघवः, किल—इति वार्त्तायां, ("वार्त्ता-सम्भाव्ययोः किल" इत्यमरः) आत्मना—स्वयं, न दृप्यति—नाहङ्करोति, अस्य—रामस्य, प्रजाः अपि—प्रकृतयोऽपि, ईदृश्यः,—एवंविधाः, गर्व्विता इत्यर्थः, न जायन्ते—न भवन्ति; विनेतुः राज्ञः अतिविनयित्वात् विनेयानां प्रजानां विनीतत्वन्तु सुतरा-मेव सम्पन्नमिति भावः; तत्—तस्मात्, राज्ञः प्रजानाश्चादृप्तत्वादित्यर्थः; सर्व्वेषा-मेव सौशील्यश्रवणादिति भावः; यद्वा,—तत्—तर्हि, स्वयं राज्ञः प्रजानाञ्च दर्पाभावे सत्यपीत्यर्थः, किं—कथम्, अस्य—राज्ञः रामस्य, मनुष्याः—अधिकृताः पुरुषाः, सैनिकजनाः इत्यर्थः, राक्षसीं—राक्षससम्बन्धिनीं, दर्पोद्धतामित्यर्थः, वाचं—वाक्यं, वदन्ति?—भाषन्ते; सुविचक्षणस्यातिविनयिनः नरपतेः अधिकृत-जनानामीदृशं भाषणमतीव लज्जाव्यञ्जकमिति भावः।

का खलु राक्षसी वाक्, किञ्च तस्या अपकारित्वम् इति विवृणोति, ऋषय इति।—ऋषयः मन्वादयः धर्म्मशास्त्रकाराः, उन्मत्तदृप्तयोः उन्मत्तस्य उन्माद-रोगग्रस्तस्य, आसवादिपानेन विभ्रान्तचित्तस्य वेत्यर्थः, दृप्तस्य गर्व्वितस्य च, आत्म-श्लाघानिरतस्येत्यर्थः, वाचं वचनं, राक्षसीं राक्षसजनोचिताम् अतिक्रूरामित्यर्थः, परुषाक्षरभूयिष्ठतया अतिबीभत्सामिति यावत्, आहुः ब्रुवन्ति। तपोधनाः एवं वदन्ति चेत् वदन्तु नाम, तेनास्माकं का क्षतिः? इत्याक्षेपे तस्या अनिष्टोत्पादकतामाह, सेति।—सा वाक्, सर्वेषां सर्व्वप्रकाराणां, वैराणां विरोधानां, शत्रुभावानामिति यावत्, योनिः कारणम्, उत्पादहेतुरित्यर्थः, सा हि तादृशी वागेवेत्यर्थः, लोकस्य जनस्य, तादृशमदोद्धतानां वचसां प्रयोक्तुरित्यर्थः, निर्ऋतिः निर्गता ऋतिः कल्याणं यस्याः तादृशी, ("ऋतिः कल्याणवर्त्मनोः" इति मेदिनी) अलक्ष्मीः इत्यर्थः,

इतिह स्म तां निन्दन्ति, अथेतरामभिष्टुवन्ति । (ग)—

कामान् दुग्धे, विप्रकर्षत्यलक्ष्मीं,
कीर्त्तिं सूते, दुष्कृतं या हिनस्ति ।
तांश्चाप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः ॥ ३१ ॥

("स्यादलक्ष्मीस्तु निर्ऋतिः" इत्यमरः) अलक्ष्मीर्यथा दुरदृष्टवतः पुरुषस्य विविधानि अशुभानि उत्पादयति, एवमेव क्षुद्राणां जनानां गर्व्विता वाक् अनिशमेवाशुभं प्रसूते इति भावः। [अत्र निर्ऋतौ राक्षस्या वाचः अभेदारोपात् निरङ्गं रूपकमलङ्कारः] ॥ ३० ॥

(ग) इतिह—पारम्पर्य्योपदेशः, ("पारम्पर्य्योपदेशे स्यादैतिह्यमितिहाव्ययम् ।" इत्यमरः) लोकपरम्परयैतदनुश्रूयते इति भावः। किमिति ? एतदेवाह, तां निन्दन्ति स्मेति।—तां—पूर्व्वोक्तां राक्षसीं वाचं, निन्दन्ति स्म—तिरस्कुर्व्वन्ति स्म, अथ—अपिच, वाक्यान्तरारम्भार्थकोऽयमथशब्दः, इतराम्—अपरां, सौजन्यविनयादिगुणभूषितां वाचमित्यर्थः, अभिष्टुवन्ति स्म—प्रशंसन्ति स्म, ऋषय इति शेषः; अधन्यां वाचं विहाय सदा माध्वीं वाचं समुदीरयतः जनान् प्राचीनाः महाजनाः आद्रियन्ते स्म इत्यस्माकं पारम्पर्य्योपदेशः इति भावः।

इत्थं राक्षसीं वाचं विनिन्द्येदानीं सूनृतां वाचमभिष्टौति, कामानिति।—या सूनृता वाक्, कामान् मनोऽभिलषितानर्थान्, दुग्धे प्रपूरयति, आनीय ददातीत्यर्थः; यां सूनृतां वाचमुपश्रुत्य हि परितुष्टाः महान्तः श्रोतारः प्रवक्तृभ्यः यथेष्टमभिलषितानि वस्तूनि प्रददतीति भावः; अलक्ष्मीं निर्ऋतिम्, अशुभाधिष्ठात्रीं देवीमित्यर्थः, विप्रकर्षति निरस्यति, दूरीकरोतीत्यर्थः; या च समीरिता सती अमङ्गलं सर्व्वथा निवारयतीति भावः; कीर्त्तिं यशः, सूते जनयति; सन्तो हि तादृशीं वाचं सदैव प्रशंसन्ति, तेन च तद्वाक्यप्रयोक्तुः कीर्त्तिः सर्व्वत्र सुप्रथिता भवतीति भावः; दुष्कृतं पापं, हिनस्ति नाशयति; निरन्तरमभिधीयमाना सा हि अतिपावनी वाक् प्रवक्तॄणां प्राक्तनं पापं समूलमेव उन्मूलयतीति भावः; तां निखिलकल्याणप्रदत्वेन सुप्रसिद्धाम्, अत एव मङ्गलानां शुभानां, मातरं प्रसवित्रीं, सर्व्वमङ्गलनिदानभूतामित्यर्थः, एतां प्रस्तूयमानामित्यर्थः, सूनृतां सत्यां प्रियाञ्चेत्यर्थः, ("सूनृतं प्रिये। सत्ये" इत्यमरः, "सूनृतं मङ्गलेऽपि स्यात् प्रियसत्ये वचस्यपि।" इत्यजयोऽपि) वाचञ्च वाक्यन्तु, धीराः विद्वांसः, पण्डिताः इत्यर्थः, धेनुमपि कामधेनुसदृशीमपि, काम-

सुमन्त्रः। परिपूतस्वभावोऽयं कुमारः प्राचेतसान्तेवासी वदति अभिसम्पन्नमार्षेण संस्कारेण। (द)

लवः। यत् पुनश्चन्द्रकेतो! वदसि, "किन्नु भवतस्तात-प्रतापोत्कर्षेऽप्यमर्षः" इति, तत् पृच्छामि, किं व्यवस्थितविषयाः क्षत्त्रधर्मा इति?। (ध)

---

दुग्धामित्यर्थः, सर्वाभीष्टपूरयित्रीमिति यावत्, आहुः ब्रुवन्ति; चकारोऽत्र समुच्चयार्थकः, तथाच, उन्मत्तदृप्तयोः वचनं राक्षसीमाहुः, सूनृतां वाचञ्च धेनुमप्याहुरित्यर्थः; कामधेनुरिव सूनृता वाणी अभिधातृभ्यः वाञ्छितफलानि प्रयच्छतीति भावः। [अत्र "दुग्धे" इत्यादिक्रियापदानामेकेनैव कर्त्तृपदेनान्वयात् दीपकमलङ्कारः, तथा धेन्वा सह वाचः अभेदारोपात् निरङ्गं रूपकञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः]। शालिनी वृत्तम् ॥ ३१ ॥

(द) परिपूतस्वभावः,—परिपूतः,—अतिपवित्रः, स्वभावः,—प्रकृतिः यस्य तथाभूतः, अतिपवित्रचरित्र इत्यर्थः, प्राचेतसान्तेवासी—प्राचेतसस्य—वाल्मीकेः, अन्तेवासी—शिष्यः, अयं कुमारः,—एषः लवः, आर्षेण—ऋषीणामयमित्यार्षः तादृशेन, ऋषिसम्बन्धिनेत्यर्थः, संस्कारेण—ज्ञानेन, अभिसम्पन्नम्—अभिसम्बद्धम्, अनुगतं यथा तथेत्यर्थः, वदति—भाषते; ऋषयः खलु यथा अलौकिकज्ञानालोकसमुद्भासितां वाचमुदीरयन्ति, एवमेवासौ कुमारः सुशिक्षिततया सुसंस्कृतं स्वराद्यहीनञ्च यथा तथा अभिदधातीत्यर्थः।

(ध) हे चन्द्रकेतो!—भो कुमार!, पुनः,—किन्तु, यत् वदसि—यद्वाक्यं कथयसि; किमिति? तदेवाह, किन्विति।—किन्नु—किमु भोः, प्रश्नार्थकमव्ययम्; भवतः,—तव, तातप्रतापोत्कर्षे—तातस्य—पितृस्थानीयस्य, पितृवत् पूजनीयस्य रामस्येत्यर्थः, यः प्रतापः,—प्रभावः, कोषदण्डजं तेज इत्यर्थः, तस्य उत्कर्षेऽपि—आधिक्येऽपि, पितृकल्पस्य रामस्य जगत्प्रसिद्धप्रभाववत्त्वावपीत्यर्थः, अमर्षः?—क्रोधः, असहनमित्यर्थः, इति, यत् वदसि इत्यनेनान्वयः; तत्—तत्रेत्यर्थः, तद्विषये इति यावत्, पृच्छामि—जिज्ञासे, भवन्तमिति शेषः, किं?—किमु, प्रश्नार्थकमव्ययम्; व्यवस्थितविषयाः,—व्यवस्थितः,—निर्दिष्टः, नियमितः इत्यर्थः, विषयः,—आश्रयः, वृत्तिरिति यावत्, येषां ते, निर्द्धारितार्था इत्यर्थः, केवलं रामचन्द्रनियतवृत्तय इत्याशयः; क्षत्त्रधर्माः—क्षत्त्रस्य—राजन्यस्य, क्षत्त्रियजातेरित्यर्थः, धर्माः,—शौर्यादिगुणविशेषाः; क्षत्त्रियजातेः विशिष्टाः गुणाः केवलं व्यक्तिविशेषे, तत्रापि रामचन्द्रे

सुमन्त्रः। नैव खलु जानासि तं देवमैक्ष्वाकं, यदेवं वदसि, तद्विरम्यतामतिप्रसङ्गात्। (न)—

सैनिकानां प्रमाथेन सत्यमोजायितं त्वया।
जामदग्न्यस्य दमने नैवं निर्बन्धुमर्हसि ॥ ३२ ॥

एव पर्य्याप्ताः सन्तः चासते, नान्येषु केषुचिदपि महावीरेषु? इत्याशयः; एवं न हि कदाचिदपि सम्भवति यत् गुणानां प्रतिनियतपुरुषवर्त्तित्वमिति तात्पर्य्यम्।

(न) ऐक्ष्वाकम्—इक्ष्वाकुवंशतिलकं, देवं—सम्राजं, तं—रामचन्द्रं, नैव खलु जानासि—निश्चितमेव न वेत्सि, यत्—यस्मात् कारणात्, एवम्—इत्थं, प्रागुक्तरूपमित्यर्थः, वदसि—कथयसि, तत्—तस्मात्, रघुमणेरलौकिकशौर्य्याधारत्वविषये तव निरतिशयानभिज्ञत्वादित्यर्थः, विरम्यतां—निवर्त्त्यताम्; ("विरम विरम" इति पाठे—विरम—निवर्त्तस्व, सम्भ्रमे द्विर्वचनम्) अतिप्रसङ्गात्—सावज्ञपरिभाषणात्, रघुपतेरवमाननासूचकसमुद्धतवाक्प्रयोगादित्यर्थः; यदि त्वमपूर्व्वशौर्य्यसौजन्यादिगुणग्रामविभूषितं रघुमणिं कदाऽपि प्राक् प्रत्यक्षीकुर्य्याः, तर्हि एवं सगर्व्वमभिधातुं नोत्सहेथाः, अतो महाजनलाघवसूचकं सम्भाषणं सर्व्वथैव परिहर इति भावः; लोकोत्तरगुणशालिनि तादृशि महावीरे रामचन्द्रे एवं सावलेपवचनं न शोभते, अतः तूर्णमेतस्मात् निवर्त्त्यतामिति समुदिताशयः।

रामलवयोर्विक्रमवैषम्यप्रदर्शनेन लवप्रदर्शितदर्पोद्धतभावस्य अज्ञानविजृम्भितत्वमेव समर्थयमान आह, सैनिकानामिति।—त्वया भवता, लवेनेत्यर्थः, सैनिकानाम् अशक्तेनासमवेतवीराणामित्यर्थः, प्रमाथेन विमर्द्दनेन, विक्लवीकरणेनेत्यर्थः, पराभवेणेति यावत्, सत्यं यथार्थमेवेत्यर्थः, वस्तुत एवेति यावत्, ओजायितम् ओजस्विवदाचरितमित्यर्थः, विक्रमविशेषप्रदर्शनेन स्वस्य वीरत्वं प्रमाणीकृतमिति यावत्; [ओजायितमिति ओजसा इव आचरितमिति विग्रहे ओजःशब्दस्य "ओजःशब्दो वृत्तिविषये तद्वति" इति दीक्षितवचनात् ओजस्विबोधकतया ओजस्विवदाचरितमित्यर्थः लभ्यते, तथाच तदर्थकौजःशब्दात् आचारार्थे "कर्त्तुः क्यङ् सलोपश्च" (३।१।११पा०) इति क्यङि "ओजसोऽप्सरसो नित्यमितरेषां विभाषा" (वा०) इति नित्यं सलोपे ओजायनामधातोर्भावे निष्ठाप्रत्ययेन सिद्धम्] अनन्यजनसहायेनैव त्वया अनाचारयं सादृशं विक्रमञ्च प्रदर्श्य वीरविक्रमोद्धता असंख्येया अपि अशक्तोनिका सद्यः विद्राव्य सावहेलं विजिग्यिरे, प्रत्यक्षपरिदृष्टे तस्मिन् नास्माकं कोऽपि विसंवाद इति भावः। एवञ्चेत् तर्हि कथं मदुक्तावतिप्रसङ्गः सम्भावितः?

लवः । [ सहासम् ] । आर्य्य ! जामदग्न्यस्यापि दमनः स राजा इति कोऽयमुच्चैर्वादः ! ! । ( प )—

सिद्धं ह्येतद्वाचि वीर्य्यं द्विजानां
बाह्वोर्वीर्य्यं यत्तु तत् क्षत्रियाणाम् ।

इत्यत्राह, जामदग्न्यस्येति ।—किन्तु जामदग्न्यस्य जमदग्निपुत्रस्य परशुरामस्येत्यर्थः, [ जमदग्नेरपत्यं पुमानिति विग्रहे, जमदग्निशब्दात "गर्गादिभ्यो यञ्" ( ४।१।१०५ पा० ) इति यञ् ] दमने दर्पहारिणि, पराभवितरि रामे इत्यर्थः, [ दमयतीति दमनः, दमयतेः "नन्दिग्रहिपचादि—" ( ३।१।१३४पा० ) इति कर्त्तरि ल्युः ] इदम् इत्थं, वीरत्वादिक्षत्रधर्म्माः किं राम एव व्यवस्थिताः ? इत्येवमौद्धत्याभिव्यञ्जकं वचनमित्यर्थः, निर्वक्तुं निश्चयेन कथयितुमित्यर्थः, नार्हसि न प्रभवसीत्यर्थः ; त्वया एकाकिनैव यद्यप्यस्मत्सेनासमवेतवीराणां हेलया विद्रावणेन स्वकीयं वीरत्वगौरवमत्यन्तमत्यन्तमेव प्रकटीकृतं, तथाऽपि निःसन्दिग्धः क्षत्रियवंशध्वंसकारिणस्त्रिभुवनैकवीरस्य परशुरामस्यापि पराभवितुः रघुपतेः सर्वातिशायिविक्रमेऽपि तव क्षयमसर्षः कदाऽपि न शोभते इति निष्कृष्टार्थः । [ अत्र वीजायितमिति क्यङ्प्रत्ययेन लवस्य ओजस्विपुरुषेण सार्द्धमवैधर्म्यसाम्यप्रतिपादनादुपमाऽलङ्कारः ] । पथ्यावक्त्रं वृत्तम् ॥३२॥

( प ) सहासं—सुमन्त्रवाक्यस्य असङ्गतत्वबोधादुच्चैर्हाससहितं यथा तथेत्यर्थः, आहेति शेषः ; मत्तोऽपि युष्मत्प्रभोः रामचन्द्रस्य विक्रमाधिक्ये प्रदर्शिता या युक्तिर्भवद्भिर्बलीयसीति मन्यते, सा मया नैव युक्तिमध्ये परिगण्यते इति हासहेतुर्बोध्यः । सः,—असौ भवतां प्रभुरित्यर्थः, राजा—भूपती रामचन्द्र इत्यर्थः, जामदग्न्यस्यापि—जमदग्निपुत्रस्य परशुरामस्यापि, का कथा अन्येषामिति अपिकारार्थः ; दमनः,—पराभविता, इत्ययम्—एवम्प्रकारः एषः इत्यर्थः, कः उच्चैर्वादः !—किम् असीमवीरत्वमाहात्म्यद्योतकं प्रशंसावचनमित्यर्थः ; अपि न किमपीति भावः ।

वीरत्वकीर्त्तिमतः परशुरामस्य विजयित्वोत्कीर्त्तनेन यत् रामस्य त्रिभुवनैकवीरत्वं समर्थितं, तदस्माभिर्न युक्तिमध्ये परिगणितमित्युक्तम्, इदानीं तत्र हेतुं प्रदर्शयन्नाह, सिद्धमिति ।—एतत् इदं, वक्ष्यमाणरूपं ब्राह्मणक्षत्रिययोर्वीर्य्यस्थाननिरूपणमित्यर्थः, सिद्धं प्रसिद्धं, सर्व्वजनविदितमित्यर्थः, यत् द्विजानां ब्राह्मणानामित्यर्थः, [ द्विर्जायते इति व्युत्पत्त्या द्विशब्दोपपदात् जनधातोर्डः, इत्थिविग्रहे आव संख्यासामान्यवाचकस्यापि द्विशब्दस्य वारार्थत्वं बोध्यम् । ननु "जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते" इति वचनेन द्विजत्वप्रापकस्य उपनयनसंस्कारस्य ब्राह्मणादिवर्णत्रयसाधारणतया

शस्त्रग्राही ब्राह्मणो जामदग्न्य-
स्तस्मिन् दान्ते का स्तुतिस्तस्य राज्ञः ? ॥ ३३ ॥

कथं द्विजपदेनात्र ब्राह्मणमात्रपरिग्रह इति चेन्न, अनुपदमेव द्विजविप्रयोर्णां क्षत्रियाणां वीर्यस्य अन्यथा व्याख्यानेन, अत्र सामान्यशब्दस्य विशेषपरत्वन्यायेन सामान्यवाचिनोऽपि द्विजशब्दस्य द्विजविप्रब्राह्मणवाचकत्वात् न कश्चिद्दोषा-वकाशः इत्यवधेयम् ] वीर्यं पराक्रमः, परपरिभवसामर्थ्यमिति यावत्, वाचि हि वाक्ये एवेत्यर्थः, प्रतिष्ठितमिति शेषः, [ अत्र हिशब्दः अन्ययोगव्यवच्छेदरूप-एवकारार्थे प्रयुक्तः, तेन ब्राह्मणानां वाचि एव वीर्यं, न तु क्षत्रियाणामिव बाह्वोरित्यर्थो लभ्यते । ब्राह्मणानां वाक्ये एव वीर्यस्थितौ प्रमाणं यथा ताण्ड्यब्राह्मणे,—"तस्माद्ब्राह्मणो मुखेन वीर्यं करोति मुखतो हि सृष्टः—" इति ] तु किन्तु, बाह्वोः भुजयोः, यत् वीर्यं पराक्रमः, सामर्थ्यमित्यर्थः, तत् क्षत्रियाणां ब्रह्मभुजोत्पन्नानां राजन्यानामित्यर्थः । भवतु तावदेवं, तेन प्रकृते कस्तावदुपयोगः ? इत्यवाह, शस्त्रग्राहीति ।—ब्राह्मणः ब्रह्म-मुखोत्पन्नः द्विज इत्यर्थः, [ एतेनास्य निसर्गदौर्बल्यं सूचितम् ] जामदग्न्यः जमदग्नि-मुनेस्तनयः परशुरामः, शस्त्रग्राही तपःक्लेशेनातिदुर्बलेन हस्तेन शस्त्रधारीत्यर्थः ; न हि तपस्वी ब्राह्मणः तपोदुर्बलाभ्यां भुजाभ्यां शस्त्रमग्रहीदिति कुतस्तस्मात् यस्य कस्यचिदपि क्षत्रियस्य पराजयसम्भावनेति भावः ; तस्मिन् परशुरामे इत्यर्थः, दान्ते रामेण विजिते सतीत्यर्थः, तस्य विजेतुरित्यर्थः, राज्ञः नृपतेः, रामस्येति यावत्, का स्तुतिः ? कः प्रशंसावादः ?, न काऽपीत्यर्थः ; ब्राह्मणा हि नियतं तपःक्लेशेन अनशनक्लेशेन च कर्षितकलेवराः अत एव दैहिकसामर्थ्यपरिहीनाः केवलं कठोरतपःप्रभावेण वाक्साफल्यमधिगच्छन्तः शापबलेनैव द्वेष्यानभिभवन्तीति ब्रह्ममुखसमुत्पन्नानां ब्राह्मणानां मुखे एव सामर्थ्यं, तद्भुजयुगलसमुत्थानां क्षत्रिया-णान्तु भुजयोः, इति भुजबलोल्लेखावसरे रामस्य ब्राह्मणपरशुरामदमनकथोपन्यासेन वीरत्वमाहात्म्यख्यापनं न कथमपि सङ्गच्छते इति भावः ; निजभुजबलपराक्रान्तं कञ्चिदन्यं क्षत्रवीरं यदि रामः कदाचित् पराभविष्यत्, तदैवासौ वीरत्वेन प्रशंसा-भाजनमभविष्यदिति हृदयम् । [ अत्र क्षत्रियाणामेव बाह्वोर्वीर्यमिति कथनेन "ब्राह्मणानां न" इत्यस्य अर्थबललभ्यत्वात्, कथितात् वस्तुनः क्षत्रियात् तादृशान्यस्य ब्राह्मणस्य व्यपोहनात् आर्थी परिसंख्याऽलङ्कारः, सा च परशुरामदमनेनापि रामस्य प्रशंसाया अभावं प्रति ब्राह्मणेति जामदग्न्यविशेषणपदस्य हेतुतयोपन्यासात् काव्य-लिङ्गेन संसृज्यते ] । शालिनी वृत्तम् ॥ ३३ ॥

चन्द्र। [ सोन्माथमिव ]। आर्य्य ! आर्य्य ! कृतमुत्तरो-त्तरेण। (क)—

कोऽप्येष सम्प्रति नवः पुरुषावतारो
वीरो न यस्य भगवान् भृगुनन्दनोऽपि।
पर्य्याप्तसप्तभुवनाभयदक्षिणानि
पुण्यानि तातचरितानि च यो न वेद ॥ ३४ ॥

(क) सोन्माथमिव—उन्माथेन—अत्यन्तमर्म्मघाततया सह वर्त्तमानं यथा स्यात् तथेत्यर्थः, सक्षोभमिति यावत्, [ त्रिलोकपूज्यस्य तातस्य रामस्यापि अवज्ञासूचक-वचनस्य श्रवणेन मर्म्मघातैव एवं मर्म्मवेदनाहेतुरिह बोध्यः ]। ("उन्माथः कूटयन्त्रे स्यात् मारणे घातके पुमान्" इति मेदिनी)। आर्य्य !—मान्य ! [ इति सुमन्त्र-स्यामन्त्रणपदम्। अत्र सुमन्त्रस्य लवोक्तिप्रत्युत्तरप्रदानप्रतिबन्धकताऽऽचरणार्थं सम्भ्रमे द्विरुक्तिर्बोध्या ] उत्तरोत्तरेण—उत्तरस्य—वाक्यस्य, उत्तरेण—प्रत्युत्तरेण इत्यर्थः। कृतम्—अलम्; अयोग्यत्वादीदृशवाक्यस्य उत्तरदानं न विधेयमिति भावः।

रामस्य जामदग्न्यविजयित्वेन सर्व्ववादिसम्मतमपि त्रिभुवनैकवीरत्वमस्वीकुर्व्वतः सुतरामविवेकिनो लवस्योक्तेः प्रत्युत्तरदानस्यापि अनौचित्यमुपपादयितुं सर्व्वथा तस्यार्वाचीनत्वं प्रमापयन्नाह, कोऽपीति।—सम्प्रति इदानीं, कोऽपि अविज्ञात-माहात्म्य इत्यर्थः, अदृष्टाश्रुतपूर्व्वतया अनिर्वचनीय इति यावत्, नवः नूतनः, अपूर्व्व इत्यर्थः, एषः अयं, लवरूप इत्यर्थः, पुरुषावतारः नररूपेणाव पृथिव्यामाविर्भूत इत्यर्थः, जात इति शेषः, [ पुरुषस्यावतारः, पुरुषरूपेण वा अवतार इति पुरुषा-वतारः। अवतारः इति अवपूर्व्वात् तरतेर्भावे "अवे तृस्त्रोर्घञ्" ( ३।३।१२० पा० ) इति घञ्; यद्यप्यस्य सूत्रस्य संज्ञायां तथा करणाधिकरणयोरेव वाच्ययोर्विषयः, तथाऽपि "प्रायानुवृत्तेरसंज्ञायामपि भवति" इति काशिकावचनात् अत्रापि विषय-त्वोपपत्तिर्बोध्या ]। नन्वस्य अभिनवत्वे किं बीजम ? इत्यत्राह, वीर इति।—भगवान् ऐश्वर्य्यादिषड्गुणसम्पन्नतया अलौकिकसामर्थ्यशालीत्यर्थः, भृगुनन्दनः जमदग्निपुत्रः, अपि त्रिःसप्तकृत्वो जगतीपतीनां निहन्ता परशुरामोऽपीत्यर्थः; का कथा अपरेषामिति भावः; यस्य अपूर्व्वपुरुषावतारस्य सम्बन्धे इत्यर्थः, न वीरः न शूरः, वीरपदवाच्य-तया न गणनीय इत्यर्थः, ("वीरः" इत्यत्र "श्लाघ्यः" इत्यपि क्वचित् पाठः) यश्च पर्य्याप्ता सम्पन्ना, सर्व्वतोभावेन पूर्णा इत्यर्थः, सप्तानां भूरादिसप्तसंख्यकानां, [भूरादि-

लवः। को हि रघुपतेश्चरितं महिमानञ्च न जानाति? यदि नाम किञ्चिद्वक्तव्यमस्ति; अथवा शान्तम्। (ब)—

सप्तलोका यथा—"भूर्भुवःस्वर्महश्चैव जनश्च तप एव च। सत्यलोकश्च सप्तैते लोकास्तु परिकीर्त्तिताः॥" इति] भुवनानां लोकानाम्, अभयस्य राक्षसादिविघ्नव्यूहविनाशात् अभयदानस्येत्यर्थः, दक्षिणा प्रतिष्ठा येभ्यः तानि, [दक्षिणायाः कर्म्मप्रतिष्ठापकतया अत्र प्रतिष्ठा एव दक्षिणाशब्दार्थो बोध्यः] यद्वा,—पर्य्याप्ते प्रभूते, सप्तानां भुवनानाम् अभये रक्षाकर्म्मणि, दक्षिणानि अनुकूलानीत्यर्थः; अथवा,—पर्य्याप्ता सम्पूर्णा, सप्तभुवनस्य अभयमेव दक्षिणा दानं येषु तानि, [यज्ञादिवैधकर्म्मसाङ्गतार्थं याजकेभ्यो दीयमानस्य धनरत्नादिकस्यैव दक्षिणाशब्दवाच्यतया अत्र दानरूपोऽर्थः लक्षणया बोध्यः। सप्तभुवनमिति सप्तानां भुवनानां समाहार इति विग्रहे समाहारद्विगौ भुवनशब्दस्य पात्राद्यन्तर्गतत्वात् न स्त्रियां ङीप्] पुण्यानि दोषरहितानि, अतिविशुद्धानीत्यर्थः, तातस्य पूज्यस्य, ज्येष्ठतातस्य रामचन्द्रस्येत्यर्थः, चरितानि अनुष्ठानानि, कृतकर्माणीति यावत्, न वेद न वेत्ति, नावगच्छतीत्यर्थः; येन हि अनन्यसहायेन निजभुजबलेनैव निःसप्तवारान् भुवनगतानशेषानपि क्षत्रवीरानुन्मूल्यता जगदिदं निःक्षत्रियमकारि, त्रिलोकविदितालौकिककीर्त्तिः सोऽपि वीरतया यस्य गणनापदवीं नारोढुमर्हति, तथा स्वबलेन वशीकृतदेवासुरनरस्य त्रिलोकतापिनोऽतिशक्तिमतो राक्षसराजस्यापि वंशं समूलमुन्मूलयतो जगदेकवीरस्य रघुवंशावतंसस्यापि चरितेषु च यस्य न बहुमानं, सोऽयमलौकिकविक्रमोपेतः अपूर्व्वः कोऽपि पदार्थः कस्याश्चिदज्ञातदेशात् पुरुषरूपेण अत्रावतीर्णः, नो चेत् नूनमेवैतयोः कीर्त्तिकलापमयमश्रौषीदिति निष्कृष्टार्थः। [अत्र यद्यपि द्वितीयचतुर्थपादयोर्यच्छब्दस्य उत्तरवाक्यगतत्वेन "आत्मा जानाति यत् पापम्" इत्यादिवत् तच्छब्दस्यानपेक्षितत्वान्न विधेयाविमर्षदोषावकाशः, तथाऽपि चतुर्थपादे चकारस्य "यः" इति कर्त्तृपदोत्तरमेव योजनीयतया "हितान्न यः संशृणुते स किं प्रभुः" इत्यादिवत् अस्थानस्थपदतादोषः स्फुट एवास्ति, स च चतुर्थपादं "पुण्यानि तातचरितानि न वेद यच्च" इत्येवं परिवर्त्त्य समाधातुं शक्यः। इह विवक्षणीययोः लवस्य साहङ्कारत्वानभिज्ञत्वयोर्भङ्ग्यन्तरेण कथनात् पर्य्यायोक्तमलङ्कारः, तथा तृतीयपादे तृतीयकल्पोक्तव्याख्याने, निरपक्षवविषये अभये दक्षिणातादात्म्याध्यासात् रूपकञ्चेत्यनयोरलङ्कारयोः परस्परनिरपेक्षतया संसृष्टिः]। वसन्ततिलकं वृत्तम्॥ ३४॥

(ब) त्रिलोकविश्रुते तातचरितेऽप्ययमनभिज्ञ इति चन्द्रकेतोः सावज्ञं

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु किं वर्ण्यते ?
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।

सीतानुष्ठानवचनमाकर्ण्यातिक्षुब्धः लवः तत्रापि स्वाभिज्ञताप्रदर्शनपूर्व्वकं प्रत्युत्तरमाह, क इति ।—को हि क एव वेत्यर्थः । रघुपतेः,—रघुवंशावतंसस्य रामचन्द्रस्येत्यर्थः । चरितम् अनुष्ठितं, कार्य्यमित्यर्थः । महिमानं—माहात्म्यम् । न जानाति ?—न वेत्ति ?, अपि तु सर्व्व एव जानातीत्यर्थः; अलौकिकरामचरितस्य सर्व्वज्ञानविषयत्वात् मयाऽपि तत् सम्यगेव ज्ञातमिति न तच्चरितानभिज्ञतया तथोक्तमिति भावः । ननु जानासि चेत् तदा कथमेवं प्रलपसि ? इत्याशङ्क्याह, यदीति ।—यदि—इति पक्षान्तरे अव्ययम् । ("पक्षान्तरे चेद् यदि च" इत्यमरः) नाम—इति कुत्सायाम् । ("नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च । सम्भाव्यकुत्साप्राकाश्यविकल्पेऽपि च दृश्यते ॥" इति मेदिनी ) किञ्चित्—किमपि । वक्तव्यं—कथनीयं, पर्य्यालोचयितव्यमित्यर्थः; यथाऽस्य चरिते एकतः माहात्म्यख्यापिका दृश्यते भूयसी घटनावली, तथैव कुत्सापक्षेऽप्यस्य कार्य्यपरम्परा नैव दुर्लभेति समुदिततात्पर्य्यम् । कुत्सापक्षीयवक्तव्यं वक्तुमुपक्रममाण एव परनिन्दाया अवाच्यत्वबुद्ध्या पुनः पक्षान्तरमाह, अथवेति ।—शान्तं—विरतम्, अस्तु तदिति शेषः, तत्कीर्त्तनेनालमित्यर्थः । [ अत्र वक्तुमिष्टस्य रामनिन्दारूपस्य वस्तुनः अतिगुरुत्वरूपविशेषप्रतिपत्त्यर्थं निषेधस्य आभासनादाक्षेपो नाम अलङ्कारः,—"वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये । निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा ॥" इति दर्पणकृदुक्तलक्षणात् ]।

नन्वस्ति चेत् अतिविशुद्धे सर्व्ववादिसम्मतेऽपि रामचरिते किञ्चिदालोचनीयं, तदा तदालोच्यतामेव, किमुपरमेण ? इत्याशङ्क्याह, वृद्धा इति ।—वृद्धाः वर्षीयांसः, वयोज्येष्ठा इत्यर्थः, ते प्रसिद्धा रामादय इत्यर्थः, विचारणीयचरिताः विचारणीयं सत् असत् वेति विवेचनीयं, चरितम् आचरणम्, अनुष्ठितं कर्म्मेत्यर्थः, येषां तथोक्ताः, समालोचनीयकर्म्माण इत्यर्थः, न, भवन्तीति शेषः; केवलं वयसा गौरवास्पदानां तेषामनुष्ठितेषु गुणदोषविचारो बालकैरस्माभिर्न विधेय इति भावः; ततः तिष्ठन्तु अविचारितचरिता एव वर्त्तन्तामित्यर्थः । कुत एतत् इत्याह, किमिति ।—किं वर्ण्यते ? व्याख्यातव्यं किमस्ति ? इत्यर्थः; वर्ण्यमाने सति दोषबाहुल्यात् तच्चरितस्य दोषोद्घाटनमेव भविष्यतीति ततो विरतिरेव श्रेयसीति भावः । तदेव इङ्गितद्वारेण ज्ञापयति, सुन्देति ।—सुन्दस्य जम्भपुत्रस्य, तदाख्यासुरविशेषस्य इत्यर्थः, स्त्रियाः पत्न्याः, ताड़कायाः इत्यर्थः, स्वभावदुर्बलायाः स्त्रियः

यानि त्रीण्यपराङ्मुखान्यपि पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ ३५ ॥

स्त्र्यवध्यायाः अपि कस्याश्चित् अबलायाः इति यावत्, दमनेऽपि विनाशे अनुष्ठितेऽपि इत्यर्थः, स्त्रीवधनिमित्तके महापातके कृते सत्यपीति यावत्, अलुप्तम् अक्षुण्णम्, परिपूर्णमित्यर्थः, यशः कीर्त्तिः, माहात्म्यख्यातिरित्यर्थः, येषां ते तथोक्ताः, अक्षुण्णमहिमान इत्यर्थः, ("अखण्डयशसः" इत्यत्र "अकुण्ठयशसः" इति पाठेऽपि स एवार्थः) ते रामाः, [अत्र गौरवे बहुत्वमवगन्तव्यम्] लोके भुवने, ("लोकस्तु भुवने जने" इत्यमरः) महात्मो हि महानुभावा एव, सर्व्वजनपूज्या एवेत्यर्थः, स्वभावदुर्बलायाः अबलायाः ताड़कायाः वधसाधनेन शास्त्रन्यायविरुद्धमतिविगर्हितं कापुरुषोचितं पापं कर्म्म समाचरतोऽपि रघुपतेः त्रिलोकविश्रुतं यशो नाशतोऽपि कलुषितं, परमसौ त्रिलोकीलोकैः माहात्म्यवत्त्वेन सम्पूज्यत एवेति सोत्प्रासोक्तिरियम्। [स्त्रीहत्यायाः पापजनकतामाह याज्ञवल्क्यः,—"शरणागतबालस्त्रीहिंसकान् संवसेन्न तु। चीर्णव्रतानपि सदा कृतघ्नसहितानिमान् ॥" इति। तथा तिथितत्त्वेऽपि—"अवध्याश्च स्त्रियं प्राहुस्तिर्य्यग्योनिगतेष्वपि।" इति। वस्तुतस्तु राजधर्म्ममनुतिष्ठतो रामस्य ताड़कावधेऽपि न पातकमिति रामायणे तद्वधप्रकरणे आदिकाण्डे पञ्चविंशसर्गे,—"न हि ते स्त्रीवधकृते घृणा कार्य्या नरोत्तम !। चातुर्व्वर्ण्यहितार्थं हि कर्त्तव्यं राजसूनुना॥ नृशंसमनृशंसं वा प्रजारक्षणकारणात्। पातकं वा सदोषं वा कर्त्तव्यं रक्षता सदा॥ राज्यभारनियुक्तानामेष धर्म्मः सनातनः। अधर्म्म्यां जहि काकुत्स्थ ! धर्म्मो ह्यस्यां न विद्यते॥" इति। ताड़कावधकथाऽपि तत्रैव षड्‌विंशसर्गे,—"इत्युक्तः स तु तां यक्षीमश्मवृष्ट्याभिवर्षिणीम्। दर्शयन् शब्दवेधित्वं तां ररोध स सायकैः॥ सा रुद्धा बाणजालेन मायाबलसमन्विता। अभिदुद्राव काकुत्स्थं लक्ष्मणञ्च विनेदुषी॥ तामापतन्तीं वेगेन विक्रान्तामशनीमिव। शरेणोरसि विव्याध पपात च ममार च॥ तां हतां भीमसङ्काशां दृष्ट्वा सुरपतिस्तदा। साधु साध्विति काकुत्स्थं सुराश्चाप्यभिपूजयन्॥" इति]। तथा खरस्य खराख्यराक्षसविशेषस्य, आयोधने तेन सह युद्धे, ("अभ्यमायोधनं युद्धं प्रधनं प्रविदारणम्।" इत्यमरः) यानि त्रीणि अपराङ्मुखाणि अपि पश्चाद्देशे अप्रतिनिवृत्तानि अपि इत्यर्थः, अप्रदर्शितपश्चाद्भागान्यपीति यावत्, पदानि पदक्षेपाः, अस्त्रपातभयेन अविमुखान्येव पश्चात् प्रतिनिवृत्तपदविक्षेपा इत्यर्थः; यद्वा,—पदानि व्यवसायाः, (पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु।" इत्यमरः) आपदसंच्छेदसर्वायवधेधनानन्तरं प्रतिहत-

शक्तिरोषव्याकुलतया दुःखोदयाः ते ते सामयिकचेष्टाव्यापाराः इत्यर्थः, युध्यमान- खरो हि रामस्य धनुश्छेदं कवचपातनं सर्व्वाङ्गवेधनपूर्व्वकरुधिरपातनं कृतवान् इति त्रीणि पदानि लङ्घ्योक्तस्य एवमुक्तिः इति। आसन् अभवन्, ("अपराङ्- मुखानि" इत्यत्र "अकुतोभयानि" इति पाठे,—नास्ति कुतः कस्मादपि, भयं भीति- प्रकाशो येषु तानि, कथमप्यप्रकाशितभीतिसूचकभावानीत्यर्थः; न हि पलायितस्य कुत- श्चिदपि भयसम्भावनाऽस्तीति भावः। खराहवे रामस्य पृष्ठतः पादत्रयापसर्पणकथा यथा रामायणे त्रिंशसर्गे,—"विकलः स कृतो बाणैः खरो रामेण संयुगे। मत्तो रुधिरगन्धेन तमेवाभ्यद्रवत् द्रुतम्॥ तमापतन्तं संक्रुद्धं कृतास्त्रो रुधिराप्लुतम्। अपासर्पत् त्रिचतुरं किञ्चित्त्वरितविक्रमः॥·········रामेण धनुरायम्य खरस्यो- रसि चापतत्॥ स पपात खरो भूमौ दह्यमानः शराग्निना। रुद्रेणेव विनिर्दग्धः श्वेतारण्ये यथाऽन्धकः॥" इत्यादि। प्रतिद्वन्द्विनि अतिप्रत्यासन्ने अन्तरवकाशाभावात् धनुषि शरसंयोगोऽप्यसुकर इति वेगेन स्वाभिमुखमापतन्तं खरमालोक्य रामः पुरतः किञ्चिदवकाशसम्पत्तये त्रिचतुराणि पदानि अपससार, खरेण तु तदेव अपसरणं भीत्या आत्मरक्षार्थं मन्यमानेन एवं कटाक्षः कृतो बोध्यः। युद्धे क्षत्रियकृतपृष्ठ- प्रदर्शनस्य अधर्म्महेतुत्वमाह मनुः,—"समोत्तमाधमैः राजा त्वाहूतः पालयन् प्रजाः। न निवर्त्तेत सङ्ग्रामात् क्षात्रं धर्म्ममनुस्मरन्॥" इति)। अपराङ्मुखानीति सोपहासोक्तिर्बोध्या। वा अथवा, इन्द्रसूनोरिन्द्रपुत्रस्य वालिनः इत्यर्थः, निधने वधे, यत् कौशलं युद्धकार्य्यदक्षता, आसीदिति शेषः; सुग्रीवेण सह युध्यमानं वालिनं प्रति प्रच्छन्नभावेन बाणक्षेपात् युद्धनीतिविरुद्धम् अतिजघन्यं यत् अशक्तिप्रकटनमिति निष्कृष्टार्थः; तत्रापि तस्मिन्नपि, अपिशब्दात् तेषु सर्वेष्वित्यर्थः, जनः त्रिभुवनगतः सर्व्वो लोकः, अभिज्ञः ज्ञानवान्, सर्वे एव तत् सर्वं जानन्तीत्यर्थः; जगद्वासिनो जनाः रघुपतेश्चरितमाहात्म्यं न केवलं दशाननहननाद्यलौकिककर्म्मविचित्रं जानन्ति, अपि तु मारीचवधरूपेण बीभत्स- कर्म्मणा, प्रतिभटकृताक्रमणात् रणे पृष्ठप्रदर्शनेन, तथा कपटयुद्धेन वालिवधाच्च कलुषीकृतमपि जानन्तीति भावः। [वालिनः कपटवधवृत्तान्तो यथा रामायणे किष्किन्धाकाण्डे त्रयोदशादिसर्गे,—"ततस्तु रामानुजराम- वानराः प्रगृह्य शस्त्राण्युदितोग्रतेजसः। पुरीं सुरेशात्मजवीर्य्यपालितां वधाय शत्रोः पुनरागतास्त्विह॥······सर्वे ते त्वरितं गत्वा किष्किन्ध्यां वालिनः पुरीम्। वृक्षैरात्मानमावृत्य व्यतिष्ठन् गहने वने॥······हीयमानमथापश्यत् सुग्रीवं वानरेश्वरम्। प्रेक्षमाणं दिशश्चैव राघवः स मुहुर्मुहुः॥ ततो रामो महातेजा

चन्द्रकेतुः। आः तातपवादभिन्नमर्य्याद! अति हि नाम प्रगल्भसे। (भ)

आर्त्तं दृष्ट्वा हरीश्वरम्। स मरं वीक्षते वीरो वालिनो वधकाङ्क्षया॥ ततो धनुषि सन्धाय शरमाशीविषोपमम्। पूरयामास तच्चापं कालचक्रमिवान्तक:॥······ मुक्तस्तु वज्रनिर्घोषः प्रदीप्ताशनिसन्निभः। राघवेण महावाणो वालिवक्षसि पातितः॥······ ततः शरेणाभिहतो रामेण रणकर्कशः। पपात सहसा वाली निकृत्त इव पादपः॥" इत्यादि]। (क्वचित् पुस्तके च प्रथमचरणस्य "किं वर्ण्यते" इत्यत्र "हुं वर्त्तते" इति पाठो दृश्यते, तत्र हुमिति स्मरणार्थकमव्ययम्; सत्यं तेषाम् महात्म्यसूचकचरितं वर्त्तते इत्येवार्थं स्मारणेन दर्शयति—सुन्देत्यादि। [अत्र लवेन गर्व्वातिरेकजनितसम्भ्रमात् पूजनीयस्यापि रामस्य दोषसमालोचनेन प्रदर्शितः पूज्यपूजाव्यतिक्रमरूपो द्रवो नाम विमर्शसन्धेरङ्गं वेदितव्यम्; तथाच द्रवलक्षणमुक्तं दर्पणकृता,—"द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा" इति। तथा वक्तुमिष्टस्य रामचरितमाहात्म्यापकर्षस्य गुह्यत्वरूपविशेषप्रतिपत्त्यर्थं "किं वर्ण्यते" इत्यनेन निषेधस्य आपाततः प्रतीयमानत्वात् प्रथमभेदान्तर्गतः आक्षेपो नाम अलङ्कारः, स च रामादीनामविचारणीयचरितत्वे "वृद्धाः" इति विशेषणपदस्य हेतुविधया उपन्यासात् काव्यलिङ्गालङ्कारेणान्योन्यनिरपेक्षतया संसृज्यते इति बोध्यम्] शार्दूलविक्रीडितं वृत्तम्॥ ३५॥

(भ) आः—इति कोपसूचकमव्ययम्। ("आस्तु स्यात् कोपपीडयोः" इत्यमरः) सर्व्वातिशायिशौर्य्यशालिनः ज्येष्ठतातस्य अतुलनीयमाहात्म्येऽपि दोषार्पणेनैवास्य कोपहेतुर्बोध्यः। तातापवादभिन्नमर्य्याद!—तातस्य—ज्येष्ठतातस्य, रामस्येत्यर्थः, अपवादेन—निन्दया, तिरस्कारेणेत्यर्थः, भिन्ना—भग्ना, लङ्घितेति यावत्, मर्य्यादा—सदाचारः, सदाचारपद्धतिरित्यर्थः, येन सः, तत्सम्बोधनम्; ["तातापवादभिन्नमर्य्याद!" इत्यत्र "तातापवादिन्! भिन्नमर्य्याद!" इति पृथगामन्त्रणपदद्वयात्मके पाठान्तरेऽप्यर्थ-स्तुल्य एवेति बोध्यम्] त्रिलोकीलोकसम्मानितस्य रघुपतेः कथायां बालकेन विनीतेनैव वर्णितव्यमिति सगर्व्ववचनेन तदुल्लङ्घनात् त्वया न्याय्यपथातिक्रमः कृत इति भावः। अति हि—निरतिशयमेव, अत्र हिशब्दोऽवधारणार्थकः। ("हि हेताववधारणे" इत्यमरवचनात्) प्रगल्भसे—धार्ष्ट्यं प्रकाशयसि, रामस्य अयथार्थनिन्दावादेन आत्मिन् मदं प्रदर्शयसीत्यर्थः। अत्र नाम—इत्यपि क्रोधव्यञ्जकमेव बोध्यम्। ("नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च।" इति मेदिनी)।

लवः। अये! मय्येव भ्रुकुटीधरः संवृत्तः। (म)

सुमन्त्रः। स्फुरितमनयोः क्रोधेन। (य) तथाहि।—

चूडामण्डलबन्धनं तरलयत्याकूतजो वेपथुः
किञ्चित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः।

(म) अये—इति क्रोधव्यञ्जकम्, अनाहूताभन्त्रणार्थकं वा अव्ययम्। ("अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च।" इति मेदिनी। "अये" इत्यत्र "आः!! कथम्" इत्यपि पाठान्तरं दृश्यते) मयि एव—अनतिचिरमेव एतद्गमनमार्ग-संस्थसैनिकविद्रावणेन प्रदर्शितपराक्रमे एवेत्यर्थः। भ्रुकुटीधरः,—समुत्-पादितभ्रूभङ्गः, चन्द्रकेतुकृताधिक्षेपजकोपेन भ्रूभङ्गीपितवदन इत्यर्थः। [ भ्रुवोः कुटी इति भ्रुकुटी, "अभ्रुकुंसादीनाम्" (वा०) इति ह्रस्वस्य वैकल्पिकविधानात् भ्रूकुटीति पदान्तरम्। "अकारोऽनेन विधीयते इति व्याख्यान्तरम्" इति दीक्षित-वचनात् भ्रकुटीत्यपि स्यात्। धरतीति धरः, धृधातोः कर्त्तरि "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (३।१।१३४ पा०) इति पचादित्वादच्, ततश्च भ्रुकुट्या धरः इति षष्ठीसमासः; द्वितीयान्तोपपदसमासे "कर्मण्यण्" (३।२।१ पा०) इत्यस्य बाधाभावात् "प्रायोऽण्विषये च" (वा०) इति अच्प्रत्ययान्तोपपदसमास इति पद्मनाभः]। संवृत्तः,—सञ्जातः; वीर्य्यादिना रामस्य मदपेक्षया आधिक्यसूचनात् मयि कोपप्रकटनमनुचितमिति भावः।

(य) अनयोः,—एतयोः, चन्द्रकेतोर्लवस्य चेत्यर्थः। क्रोधेन—कोपेन, पर-स्परस्पर्द्धासम्भूतेन रोषेणेति यावत्। [ स्फुरितमिति क्रियापदस्य कर्त्तृपदमिदम् ]। स्फुरितम्—आविर्भूतम्; कुमारयोः क्रोधः सञ्जात इति समुदितार्थः। [ स्फुरितमिति स्फुरतेर्भावे निष्ठा ]।

अन्योन्यस्पर्द्धया समुपजातरोषयोः कुमारयोः तदानीन्तनावस्थावर्णनमुखेन कोपोत्पत्तिमुपपादयन्नाह, चूडेति।—आकूतं प्रतिद्वन्द्विपराभवविषयकोऽभिप्रायः, ("आकूतं स्यादभिप्रायः" इति हलायुधः) तस्मात् जायते यः तथोक्तः, परस्पर-दमनेच्छाजनितक्रोधसमुत्थ इत्यर्थः, [आकूतोपपदात् जनेः कर्त्तरि डः ] वेपथुः कम्पः, [ वेपधातोर्भावे अथुच्] चूडामण्डलस्य शिखासमूहस्य, [रघुवंशीयानां क्षत्रियाणां पक्ष-चूड़तया चूड़ायां मण्डलोक्तिः सङ्गच्छते] बन्धनं संयमनं, संयतकेशपाशसमूह-मित्यर्थः, तरलयति विधूनयति, किञ्चित् शिथिलयतीति वा, प्रबलकोपोद्रेकेण शिरःकम्पात् संयतोऽपि कुन्तलभारः समन्ततो विस्रंसते इत्यर्थः, [ तरलं करोतीति

धत्ते कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्त्रं भ्रुवो-
श्चन्द्रस्योत्कटलाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च॥ २६ ॥

तरलयति, तरलशब्दात् तत्करोतीत्यर्थे "तत्करोति तदाचष्टे" (ग०) इति णिच्, ततः तरलीति नामधातोः कर्त्तरि लट्। क्वचित् प्रथमः पादः "क्रोधेनोद्धतधूत-कुन्तलभरः सर्व्वाङ्गजो वेपथुः" इत्येवं पठितो दृश्यते, तत्र सुगम एवार्थः ] स्वयम् आत्मना, स्वभावत एवेत्यर्थः, [ अत्र स्वयमिति तृतीयान्तमव्ययं, "प्रकृत्यादिभ्य उप-संख्यानम्" (वा०) इति तृतीया ] कोकनदच्छदस्य रक्तकमलदलस्य, [ अत्र सदृश-शब्दयोगात् "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" (२।३।७२ पा०) इति वैकल्पिकी षष्ठी। "—अथ रक्तसरोरुहे रक्तोत्पलं कोकनदम्" इत्यमरः। कोकान् चक्रवाकान्, नदति अन्तर्भूतण्यर्थतया नादयतीत्यर्थः, यः तथोक्तः, इति कोकोप-पदात् नदतेः कर्त्तरि अच् ] किञ्चित् ईषत्, सदृशे समाने, प्रकृत्यैव ईषल्लोहिताय-माने इत्यर्थः, नेत्रे नयने, रज्यतः लोहितीभवतः, इदानीं क्रोधोद्रेकात् सम्पूर्णरूपेण रक्तवर्णतामाप्नुतः इत्यर्थः; यद्वा,—कोकनदच्छदस्य किञ्चित् सदृशी नेत्रे स्वयं रज्यत इत्यन्वयः, [ रज्यत इति "रञ्ज रागे" इति दैवादिकरञ्जधातोर्लटि रूपम्, "अनिदितां हल उपधायाः क्ङिति" (६।४।२४ पा०) इति नलोपः ] तथा वक्त्रम् अनयोर्मुखमण्डलं, कर्त्तृ। [ अत्र कुमारयोर्द्वित्वेऽपि "नेत्रे" इत्यत्र "मुखम्" इत्यत्र च यथाक्रमं द्विवचनैकवचनयोः साधुत्वं जात्यपेक्षया बोध्यम्; तथाच चक्षुःश्रवणादीनां जातेर्द्वित्वावच्छिन्नतया "नेत्रे" इत्यत्र द्विवचनेनैव अनयोर्नेत्रचतुष्टयस्य बोधः, तथा "वक्त्रम्" इत्यत्र एकवचनेनैव उभयोर्वदनद्वयस्य बोधो बोध्यः। उच्यते अनेनेति व्युत्पत्त्या वचधातोः करणे त्रप्रत्ययेन वक्त्रमिति सिद्धम् ] अकाण्डे अनवसरे, अकस्मा-दित्यर्थः, ताण्डवितयोः नृत्यन्त्योः, पुनः पुनरूर्ध्वाधःप्रचलितयोरिति यावत्, [ ताण्ड-वितयोरिति, तण्डुना तन्नामकमुनिविशेषेण प्रोक्तमङ्गहारमिति व्युत्पत्त्या तण्डुशब्दा-दुक्तार्थे अण्प्रत्ययेन सिद्धात् ताण्डवशब्दात् तत् सञ्जातमनयोरित्यर्थे "तदस्य सञ्जातं तारकादिभ्य इतच्" (५।२।३६ पा०) इति इतच्। "पुंनृत्यं ताण्डवं प्रोक्तं स्त्रीनृत्यं लास्यमुच्यते" इति वचनात् भ्रुवोः कम्पने ताण्डवशब्दप्रयोगः तत्र निरतिशयोत्कर्ष-सूचको बोध्यः ] भ्रुवोः भ्रूयुगलस्य, भङ्गेन कौटिल्येन, भीषणभ्रूभङ्गविभ्रमेणेत्यर्थः, उत्कटलाञ्छनस्य सुपरिस्फुटकलङ्कस्य, [ उत्कटं लाञ्छनं यस्येति बहुव्रीहिः ] चन्द्रस्य हिमांशोः, च तथा, उद्भ्रान्ता उपरि भ्रमन्तः, भृङ्गाः भ्रमरा यत्र तथोक्तस्य, भ्रमणादुपरि षट्पदालिकुलस्येत्यर्थः, कमलस्य सरसिजस्य, कान्तिं शोभां, साम्यमिति

कुमारौ। तदितो विमर्दक्षमां भूमिमवतराव:। (र)

[इति निष्क्रान्ताः सर्वे]।

इति कुमारविक्रमो नाम पञ्चमोऽङ्कः। (ल)

यावत्, धत्ते धारयति, परिपूर्णचन्द्र-स्फुरितारविन्दयोरनुरूपमेतद्वदनयोराननद्वयं समभिव्यक्तक्रोधलक्षणतया भीषणभ्रूभङ्गेन सुधांशुसङ्गतकलङ्कस्य प्रफुल्लकमलोत्पतद्‌द्विरेफपटलस्य च श्रियमनुकरोतीति पर्य्यवसितार्थः; एभिः शिरःकम्प-नेत्रलौहित्य-भीषणभ्रूभङ्गादिभिर्लिङ्गैरेतयोरन्योन्यक्रोधाविर्भावानुमानात् मन्ये अनतिविलम्बेनैवानयोः समरसमारम्भः सम्भवतीति भावः। [अत्र वदने तादृशचन्द्रकमलयोः शोभासम्बन्धस्य असम्भवेऽपि तत्सम्बन्धकथनेन तच्छोभासदृशशोभां धत्ते इति बिम्बप्रतिबिम्बभावेन उपमायां पर्य्यवसानात् निदर्शनानाम अलङ्कारः, तदुत्थितवैचित्र्यवशेन शिरःकम्प-नेत्रलौहित्यादिभिर्लिङ्गैः कोपस्यानुमानात् अनुमानालङ्कारः व्यज्यते इति अलङ्कारेणालङ्कारध्वनिः]। शार्दूलविक्रीडितं वृत्तम्॥ १६॥

(र) तत्—तस्मात्, ईदृशोद्धत्यस्य नितान्तमसहनीयत्वादित्यर्थः। इतः,—अस्मात् स्थानात्। विमर्द्दक्षमां—विमर्द्दस्य—युद्धव्यापारस्य, क्षमां—योग्यां, युद्धव्यापारोपयोगिनीमित्यर्थः। भूमिं—भुवम्। अवतराव:,—गच्छाव:।

(ल) इति—समाप्तावव्ययम्। ("इति हेतुप्रकरणप्रकाशादिसमाप्तिषु" इत्यमरः) कुमारविक्रमो नाम—कुमारविक्रम इति नाम्ना प्रसिद्धः। [कुमारयोर्विक्रमो यत्रेति बहुव्रीहिः]। पञ्चमः,—पञ्चसंख्यापूरणीभूतः। अङ्कः,—नाटकीयपरिच्छेदः।

---

## पञ्चमाङ्कस्य सङ्क्षेपः।

अथ नेपथ्ये, विपन्नानामस्माकं साहाय्यकार्थं द्रुतं कुमारचन्द्रकेतुः सुमन्त्रेण सारथिना नुद्यमानैः प्रजविभिर्वाजिभिर्वाहितेन रथेन प्रधनस्थलं समुपैतीति समुद्घोष्यारक्षापुरुषाः स्वावलम्बनलाभात् सहर्षं विनेदुः।

कुमारचन्द्रकेतुस्तु समरभूमौ वीरबालकस्यालौकिकं रणकौशलं विलोक्य परं सुमुदे, रघुकुमाराकुरैणैवामुना सुनिशितेन निशितानि क्षुरप्रक्षुरकपोलस्थलेषु सुहृदेषु परिप्लव-ज्वालामालाकुलानि शरसहस्राणि विलोक्य परं कौतुकमवाप च।

सुमन्त्रस्त्वलौकिकशौर्य्यशालिनमिमं बालं, कौशिकमखे निशाचरनिकरकदनोद्यतं साक्षाद्रघुमणिमिवाहं मन्ये इत्याह।

चन्द्रकेतुस्तु तदा वीरमिममलौकिकं पराभवितुं भूयसां मत्तमातङ्गतुरङ्गाणां रथिनां वारिदसन्निभद्विरदारोहिणाञ्च स्वबलानां युगपत्प्रयासं समवलोक्य नितरामत्रपत। सुमन्त्रोऽपि, समवेता अपि एते सैनिकाः किमप्येकं जेतुं न शक्ताः, किं पुनर्विभज्य स्थिताः? इत्यमन्यत।

चन्द्रकेतुराह, आर्य्य! त्वर्य्यतां त्वर्य्यताम्, अयं वीरः ज्यानिर्घोषेण पलाशगिरिकुञ्जमध्यलीनानां कुञ्जराणामपि कर्णव्यथां जनयन् तुमुलं युध्यते, रणे निहतानां मदीयसेनानां कालकवलात् भुक्तोद्वान्तैरिव मुण्डैः कबन्धैश्च रणभूमिं समाच्छादयति च।

तदाकर्ण्य सुमन्त्रः कथमहममुना वीरेण सह चन्द्रकेतुं योद्धुमुपदिशामि इत्येवं यावत् स्वगतमनुदध्यौ, सपदि स्थिरीचकार च इक्ष्वाकुकुलाचारः खलु ईदृशः सङ्ग्रामः, तदधुना अमुना वीरेण सह सङ्ग्रामं विना नान्यं कमपि पन्थानं पश्यामीति।

तदा चन्द्रकेतुः रणात् प्रतिनिवृत्तानि स्वसैन्यानि शतशः धिक्कृतवान्, स्वयञ्च नितरां ललज्जे, विस्मयविवशश्च बभूव। सुमन्त्रस्तु त्वरितमेव रथं चालयन् एष हि वीरो लवः ते पुरत एवाभिवर्त्तते इति चन्द्रकेतुमभ्यधात्।

विस्मृतः सन्निव चन्द्रकेतुः पप्रच्छ सुमन्त्रम्, आख्यायकाः किं नामधेयमस्याभिहितवन्तः? इति। सुमन्त्रः लव इत्याह। ततः चन्द्रकेतुः कुमारं सम्बुध्याह, भो लव! सैनिकैरेभिः सह युद्धेन किम्? मया सह युध्यस्व, तेजः तेजस्येव शाम्यत्विति। सुमन्त्रस्तु तदा कुमारमाह, एष बालवीरः त्वया समाहूतः सन् भवत्सैनिकनिमर्थनं परित्यज्य घनगर्ज्जनमुपश्रुत्य इभावलिमर्द्दनविरतः दृप्तसिंहशिशुरिव इत एवाभिवर्त्तते इति। अथान्तरे त्वरितोत्क्षिप्तपदविक्षेपेण लवः प्रविश्य कुमारमाह, भो राजपुत्र! सत्यं त्वमिक्ष्वाकुकुलालङ्कारभूतोऽसि, अयमहमागच्छामीति।

ततः नेपथ्ये महान् कोलाहलः प्रादुरासीत्। कथमिदानीं पराङ्मुखीभूता अपि चमूपतयः पुनः प्रतिनिवृत्य मां प्रहर्त्तुमभ्युद्यताः!! धिगेतान् जाल्मान्। अहन्तु, महाप्रलये पवनोद्वेलितः समुद्रप्रवाहः यथा सागरगर्भस्थपर्वताघातसन्धुक्षिताभिः वाडवाग्निशिखाभिः सपदि विशोष्यते, तथैव कोपाग्निना सर्व्वानेतान् विमर्द्दयिष्यामीत्युक्त्वा लवः परितः समरं परिक्रमितुमारेभे। ततः कुमारश्चन्द्रकेतुरपि सगर्व्वं मधुरञ्च लवमाह, भोः कुमार! तवालौकिकं गुणातिशयं विलोक्याहमतीव प्रीतः भवामि, अतस्त्वं मे सखा, सखित्वात् यत् मदीयं, तत् त्वदीयमेव, बन्धुः परिजने

ज्जनं विफलमेव, यद्यमेव ते वीरदर्पस्य परीक्षास्थलमिति । लवस्तु सहर्षसम्भ्रमं प्रत्याहृत्य स्वगतमाह, अहो ! दिवाकरकुलकुमारस्य सुमधुराऽपि वीर्य्यगाम्भीर्य्यपूर्णा वाक्प्रयोगचातुरी, तदेतान् परित्यज्येममेव वीरं सम्भावयामीति ।

पुनरपि कलरवः समजनि । लवस्तु, पापैरेभिः मदीयवीर्यविघ्नकारिभिः सैनिकैः भृशं कदर्थित एवास्मीति सक्रोधनिर्वेदमुक्त्वा तदभिमुखमेव पर्यक्रामत् । चन्द्रकेतुस्तु तदा सुमन्त्रमाह, आर्य्य ! द्रष्टव्यमेतदवलोकय, दर्पात् कौतुकाच्चैष वीरः कार्मुकमुद्धृत्य परितः परिक्रामन् मदीयसैन्यैरनुधावितः सन्, प्रतिकूलवायुना पर्य्याकुलः इन्द्रधनुःसुशोभितः नवनीरद इव कीदृशीं रम्यां शोभां बिभर्त्तीति । तदाकर्ण्य सुमन्त्रः कुमार एवैनं वीरं द्रष्टुं जानाति, वयन्तु केवलं विस्मयविवशाः संवृत्ता इत्याह ।

अथ चन्द्रकेतुः सामन्तान् सम्बुध्याह, भो भो राजानः ! वर्म्मभृतोऽसंख्येयाः वर्षीयांसः यूयं तुरगेषु द्विरदेषु रथेषु च समारूढाः सन्तः पादचारिणैकेन चर्म्मोत्तरीयभृता बालकेन सह सङ्ग्रामे बहुपरिकराः संवृत्ताः !! धिग् युष्मानस्मांश्चेति । ततः चन्द्रकेतोरेवंविधं वचनमाकर्ण्य लवः सक्षोभमाह, किं मामेषोऽनुकम्पते नामेति । ततः क्षणं विचिन्त्य स्वगतमाह, भवतु तावत्, वृथा कालक्षयं वारयितुं जृम्भकास्त्रप्रयोगेण सैन्यान्येतानि संस्तम्भयामीति । अथासौ जृम्भकास्त्राणि निध्यातुमारभत, अकस्माच्च सैन्यसङ्क्षोभ, प्रशान्तोऽभूत् । समये चैतस्मिन् सुमन्त्रः ससम्भ्रमं कुमारमाह, वत्स ! वीरपोतेनामुना जृम्भकास्त्रमभिप्रयुक्तमिति । चन्द्रकेतुस्तु, सत्यमेवैतत्, यतः ममापि चक्षुः वैद्युताग्निसम्मिश्रिते घोरेऽन्धतमसे निपतितमिव शक्तिविहीनं सत् क्षणं विकाशतामेति, सैन्यसमूहश्च चित्रलिखितारम्भ इव निस्पन्दमास्ते ; नूनममितवीर्य्यं जृम्भकास्त्रं जृम्भते एव ; आश्चर्य्यमिदं, पातालगर्भस्थितेषु निकुञ्जेषु पुञ्जीभूतैः तमोभिरिव श्यामायमानैरपि पावकोत्तापविगलितपित्तलद्रववद्भास्वरज्योतिर्भिः जृम्भकास्त्रैः कल्पान्तकाले उद्दामोनपश्चात्यपवनविक्षिप्तैः पुञ्जीभूतजलदजालैः विद्युत्पुञ्जप्रोद्दीपितकन्दरैः विन्ध्यगिरिशिखरैरिव परिदृश्यमानैः समन्तात् विमानतलं समाच्छाद्यते इत्याह । कुतः खलु जृम्भकास्त्रमधिगतवान् लवः ? इति सुमन्त्रे पृष्टे प्रत्याह चन्द्रकेतुः, भगवतः प्राचेतसादेवेति मन्यामहे इति । न ह्ययं महर्षिः शिष्येभ्योऽस्त्रविद्यामुपदिशति, विशेषतस्तु जृम्भकास्त्राणि, यतश्चैतानि कृशाश्वात् प्रादुर्भूय कौशिकं हि महर्षिमुपसङ्क्रम्य तत्सम्प्रदायपरम्परया रामभद्रमेव समधिगतानि इत्याह सुमन्त्रः । अपरेऽपि महर्षयः प्राचेतससदृशाः तपस्तेजसा जृम्भकास्त्राणि लब्धुं शक्नुवन्तीति विभावयामीत्याह चन्द्रकेतुः । अथ सुमन्त्रः आह, वत्स, सावधानो भव, वीरश्चैष समागच्छतीति । अथालीकमनायासमेव

कुमारावन्योऽन्यं प्रति स्नेहप्रदर्शनं कर्त्तुमारेभाते; कथं हि अमुं दृष्ट्वा हृदयं मे सपदि विगलितं भवति, कश्चिदविज्ञातः सम्बन्धः किन्तु एतस्मिन्नस्ति इत्यादिकं बहुधा समालोचयामासतुश्च। तदाकर्ण्य सुमन्त्र आह, जीवानामेव हि धर्मः, यत् कस्यचित् कुत्रचित् वा प्रीतिरन्योऽन्यमनुरागभरात् सहसैव सञ्जायते, परस्पर-नयनपातसमकालमेव तस्याः सम्पद्यमानत्वात् तारामैत्रकं चक्षूरागो वा इति संज्ञया तामुपचरन्ति लोकाः, ईदृशं हि प्रेमाणमहेतुकमेवामनन्ति च। यो हि अहेतुकः आसक्तिविशेषः, तस्य कोऽपि निवर्त्तको न दृश्यते, यदसावुभयोरेवान्तर्मर्म्माणि व्याप्य किल तिष्ठतीति। अथ कुमारावपि परस्परमनुदध्यतुः, कथं हि सुचिक्कणराजपट्ट-सन्निभे एतस्मिन् शरीरे शरान् विमोचयामीति; क्षणं निध्याय च, वीराचारवशात् निदारुणस्य मे स्नेहप्रवृत्तिः कुतः? शस्त्रश्लाघायाः वा किं फलं लभे? यद्यनेन सह न युध्ये, रणपराङ्मुखं मामसौ भयादेव विनिवृत्तं वा मंस्यते इति बहुधा विकल्पयामासतुश्च।

सुमन्त्रस्तु तदा लवमवलोक्य सास्रं स्वगतमेवेत्थं बहुधा विललाप, हृदय! कथं विविधं पर्य्यालोचयसि? नासौ रघुनन्दिनतनयः, तस्य तु मूलं कारणं वैदेही दुर्द्दैववशादेवास्माकं विनष्टा। छिन्नायां हि लतायां किमु प्रसूनोत्पत्तिः सम्भवतीति। ततश्चन्द्रकेतुः सुमन्त्रमपृच्छत्, आर्य्य! रथादधुनाऽवतरामीति। कस्य हेतोरिति तु सुमन्त्रः तमाह। तदुत्तरे चन्द्रकेतुराह, वीरोऽयं पदातिः भूत्वैव युध्यते, पादचारिणा पदातिः सन्नेव युध्येतेति धर्म्मशास्त्रविदः आमनन्ति, तेनैवाहमवतरितुमिच्छामीति। सुमन्त्रस्तु तदाकर्ण्य, कथमहमेवं न्याय्यं कर्म्म कर्त्तुं प्रतिषेधामि, कथं वाऽमुना वीरेण सह पादचारिणं कुमारं योद्धुमुपदिशामीति भृशं व्यचिन्तयत्। आर्य्य! धर्म्मार्थ-संशयिते वस्तुनि गुरवोऽपि समाधानाय सततं भवन्तमेवापृच्छन्, तत् कथं भवा-निदानीं विमृशतीत्याह चन्द्रकेतुः। तदाकर्ण्य सुमन्त्र आह, आयुष्मन्! यथाधर्म्ममेव भवानभिभाषते, एष हि साङ्ग्रामिको न्यायः, रघुसिंहास्तु इमामेव पद्धतिं चिरमनु-पालयामासुरिति। चन्द्रकेतुरप्याह, भवन्त एव रघुवंशीयानां कुलस्थितिं धर्म्मशास्त्र-मितिहासञ्च सम्यक्तया जानन्तीति। सुमन्त्रस्तु तदा कुमारं सस्नेहास्रं परिष्वज्याह, अत्यल्पवयसोऽपि इन्द्रजिद्विजयिनः कुमारलक्ष्मणस्यापत्यं भवान् वीरजनमनुसरति, दिष्ट्या रघोः दशरथस्य कुलं प्रतिष्ठामागतमिति। तदाकर्ण्य चन्द्रकेतुः सखेदमाह, रघुवंशप्रधाने रामभद्रे प्रतिष्ठामनधिगतवति सति, अस्माभिरधन्यैः का हि नाम रघुकुलस्य स्थितिः? तेन च नः पितरः निरन्तरमेव दुःखायन्ते। तदाकर्ण्य सुमन्त्र आह, वत्स! हृदयमर्म्मविदारकाणि चन्द्रकेतोः वचनानि भवन्तीति।

लवस्तु तदा, कुमुदबान्धवे कुमुदिनीव मे दृष्टिः कथं हि एतस्मिन् नितरामभि-रज्यति ? कथं वा मदीयोऽयं बाहुः कलहकामः भवतीति विविधं विकल्पितवान्। चन्द्रकेतुः रथादवतीर्य सुमन्त्रं ससम्भ्रममाह, आर्य ! त्वामहमभिवन्दे इति। सुमन्त्रस्तु भगवान् वराहरूपी ते श्रेयः विदधातु, भवद्गुरु इव भवान् सर्व्वत्र विजयलक्ष्मीं लभतामित्याशीः प्रददौ। रथस्थ एव भवानतीव शोभते, अतः अत्यादरप्रदर्शनं मा कृत इति लवेनोक्तः, तर्हि महाभागोऽपि रथमन्यमलङ्करोतु इति चन्द्रकेतुरभि-दधे। तदा लवः सुमन्त्रमाह, आर्य्य ! रथे राजपुत्रं समारोहयेति। त्वमपि कुमारवचनमनुपालयेति सुमन्त्रोऽपि लवमभिहितवान्। स्वं हि द्रव्यं यथेच्छमेवोप-भुज्यते जनैरिति स्वेषां रथानामारोहणे नास्ति दोषः यद्यपि, तथाऽपि वयं रथारोहणे अव्यवगतव्यस्ततया सपदि स्वीकर्तुमेतत् नाभिलषामः। तद्वचनं श्रुत्वा सुमन्त्र आह, दर्पसौजन्ययोः यथायथमभिधातुं भवान् जानाति, भगवान् रघुमणिः त्वामेवंविधं पश्येद् यदि, तदा तस्य हृदयं नून द्रवीभूतं स्यादिति। तच्छ्रुत्वा लव आह, स हि राजर्षिः अतीव सुजनः श्रूयते, वयमपि यज्ञविघातकाः न भवामः, गुणवन्तं तं राजानं वयं समाद्रियामहे एव, परन्तु तुरङ्गरक्षिणां निखिलराजन्याक्षेपसूचिकां सुदुःसहां प्रोद्धतां वाचमाकर्ण्यैवं हि विकृतिमधिगता इति। तदाकर्ण्य सविस्मयमाह चन्द्रकेतुः, गुरुजनानां प्रतापोत्कर्षमुपश्रुत्यापि भवन्तः किमु दुःखायमानमानसाः संवृत्ताः ? इति। तत्र सेऽमर्षः अस्ति, नास्ति वेति तादृशप्रश्नस्य नायमवसरः, परन्त्वेतत् पृच्छामि यत्, स हि राजर्षिः तदीयाः प्रकृतयश्च अतीव दान्ता इति श्रूयते, तर्हि कथमेते मनुष्याः राक्षसीं वाचमभिदधति ? यतो हि तादृशी वाक् सर्व्ववैराणां प्रसूतिः, अलक्ष्म्याश्च निदानम्; प्रियसत्यां हि वाचं सर्व्वे एवाभिष्टुवन्ति, कीर्त्ति-श्चैषा जनयति, अलक्ष्मीञ्च हिनस्ति, तेन हि इमां कामदुघेति मनीषिण आम-नन्तीति लवोऽब्रवीत्। सुमन्त्रस्तु तदाकर्ण्याह, विशुद्धसंस्कारसम्पन्नां वाचमयमुदी-रयतीति।

अथ लवः "किमु भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः ?" इति प्रागुक्तस्य चन्द्रकेतोर्वच-नस्य, अत्रधर्मा—न हि व्यक्तिविशेषे पर्य्याप्ता: इति कृत्वा प्रत्युत्तरमभिदधे। तच्छ्रुत्वा सुमन्त्र आह, भवान् ऐक्ष्वाकं नाभिजानाति, तेन चेत्थं तन्मर्य्यादाविघातकरं वचनमभिदधाति, अश्वसैनिकान् प्रमथ्य तु भवान् सत्यं स्वविक्रमं प्रदर्शितवान्, परन्तु जामदग्न्यदमने भगवति रामभद्रे इत्थमभिधातुं कदाचि नार्हतीति। तदा-कर्ण्य लवः सहासमाह, असौ राजा जामदग्न्यदमन इति प्रशंसावादः न स्तुते: समुद्दीपकिञ्च्य:, यतः द्विजानां वीर्य्यं वाचि एव स्थितं, न बाहौ, तत्र तु क्षत्रियाणा-

मेव सिध्यति, यद्यप्यसौ ब्राह्मणः जामदग्न्यः शस्त्रग्राही आसीत्, तथाऽपि ब्राह्मणतया प्रकृत्या दान्तस्य तस्य दमने का हि भवता राज्ञः प्रशंसा जातेति। तदाकर्ण्य चन्द्रकेतुः सव्यथं सुमन्त्रमाह, आर्य्य! किमनेनोत्तरप्रत्युत्तरेण? कोऽयं भवति नवः वीरावतारः, येन भगवान् भार्गवोऽपि वीरत्वेन न गण्यते, ये च तातपादाः सप्तभुवनाभयदक्षिणां प्रददुः, तेऽपि न ज्ञायन्ते एवानेनेति। एतदाकर्ण्य लवः आह, रघुपतेः महिमानं को हि नाम न जानाति? वृद्धानां तेषां चरितमविचार-णीयमेव, परन्तु स्त्रियं ताड़कां निहत्य तेन सुमहत् स्वं यशः प्रकटीकृतम्, अपिच खरेण सह समरे त्रीणि पदानि परावृत्यासीमं युद्धकौशलमसौ व्यतानीत्। वानरराजेन वालिना सह रणे तु सुतरामेवेति। तदाकर्ण्य चन्द्रकेतुराह, आः!! गुरुजनमर्य्यादा-विलङ्घिन्! इति। लवस्तु तदा प्रत्युवाच, अये! मय्येव कोपकषायितनेत्रो भव-तीति। ततः उभावेव कुमारौ क्रोधेन कोकनदसच्छायनयनौ भ्रमद्भृङ्गारविन्दाय-मानमुखौ च भूत्वा युयुत्सया युद्धानुकूलां भूमिमधिशिश्रियतुरिति।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-कुलपतिकल्प-"बि, ए" इत्युपनामक-
श्रीमज्जीवानन्दविद्यासागर-भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण-श्रीमन्नित्यबोधविद्यारत्नाभ्यां
परिवर्त्तित-परिवर्द्धितायां सुखबोधिनीसमा-
ख्यायाम् उत्तररामचरितव्याख्यायां
पञ्चमोऽङ्कः ॥ ५ ॥

---

# अथ षष्ठोऽङ्कः।

[ ततः प्रविशति विमानेनोज्ज्वलेन विद्याधरमिथुनम् ]। (क)

विद्याधरः। अहो खलु अनयोर्विकर्त्तनकुलकुमारयोः अकाण्ड-कलहप्रचण्डयोः उद्योतितयामलक्ष्मीकयोः अद्भुतोद्भ्रान्तदेवा-सुराणि विक्रान्तचरितानि!!। तथाहि प्रिये! पश्य पश्य। (ख)—

(क) दर्पणोक्तनाटकीयाङ्कलक्षणे "दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः" इत्यादिना युद्धस्य वर्ण्णनीयमध्ये परिगणनात् तत् विष्कम्भकान्तर्वर्त्तितया वर्णयितु-मुपक्रममाण आह, तत इति।—उज्ज्वलेन—भास्वरेण, नानाऽलङ्कारपरिशोभिततया देदीप्यमानेनेत्यर्थः। विमानेन—व्योमयानेन। ("विमानं व्योमयाने च सार्वभौम-गृहेऽपि च" इति मेदिनी। "विमानेनोज्ज्वलेन" इत्यत्र "विमानोज्ज्वलम्" इति "विमानेनोज्ज्वलम्" इति च पाठद्वयं दृश्यते) विद्याधरमिथुनं—देवयोनिविशेष-दम्पती। [ विद्याधरी च विद्याधरश्च इति विद्याधरौ "पुमान् स्त्रिया" (१।२।६७ पा०) इति स्त्रिया पुंसो द्वन्द्वे पुंलिङ्गैकशेषः ] प्रविशति—आगच्छति, रङ्गा-लयमिति शेषः।

(ख) कुमारयोरलौकिकसमरकौशलसन्दर्शनविस्मितो विद्याधरः स्वीयां प्रेयसीं तत् सन्दर्शयन्नाह, अहो इति।—अहो—इति विस्मयव्यञ्जकमव्ययम्। खलु—वाक्यभूषायाम्। अकाण्डकलहप्रचण्डयोः,—अकाण्डे—अनवसरे, अकस्मादित्यर्थः, यः कलहः,—विरोधः, समर इति यावत्, तेन प्रचण्डयोः,—उग्रयोः, आकस्मिक-विवादभीषणयोरित्यर्थः। (अत्र "अकाण्डप्रचण्डकलहयोः" इति विद्यासागरधृतपाठे—अकाण्डः,—आकस्मिकः, प्रचण्डः,—भीषणः, कलहः ययोः तादृशयोरित्यर्थः) उद्योतितयामलक्ष्मीकयोः,—उद्योतिता—प्रकटीकृता उद्दीपिता वा, यामलक्ष्मीः,—यमश्रीः, [ यमस्यापत्यमिति यामी, सा चासौ लक्ष्मीश्चेति यामलक्ष्मीः, "पुंवत् कर्म्मधारयजातीयदेशीयेषु" (६।३।४२ पा०) इति पुंवद्भावः ] याभ्यां तयोः, प्रकाशितराजन्योचितभुजवीर्य्यसम्पदोरित्यर्थः। [ "नद्यृतश्च" (५।४।१५३ पा०) इति समासान्तः कप्। अत्र "उद्योतितयामलक्ष्मीकाणि" इति पाठे—विक्रान्त-

झणज्झणितकङ्कणक्वणितकिङ्किणीकं धनु-
र्ध्वनद्गुरु गुणाटनीकृतकरालकोलाहलम्।
वितत्य किरतोः शरानविरतस्फुरच्चूडयो-
र्विचित्रमभिवर्द्धते भुवनभीममायोधनम्॥ १॥

चरितानीत्यस्य विशेषणतया व्याख्येयम्] अनयोः,—पुरतः परिदृश्यमानयो-रित्यर्थः। विकर्त्तनकुलकुमारयोः,—विकर्त्तनस्य—सूर्य्यस्य, ("विकर्त्तनार्कमार्त्तण्ड-मिहिरारुणपूषणः।" इति सूर्य्यपर्य्याये अमरः) यत् कुलम्—अन्ववायः, तस्य कुमारौ—तत्प्रभृती बालकावित्यर्थः, तयोः लवचन्द्रकेत्वोरित्यर्थः। अद्भुतोद्भ्रान्तदेवासुराणि—अद्भुतेन—आश्चर्य्येण, विस्मयरसेनेत्यर्थः, उद्भ्रान्ताः,—विमूढाः, न्यूनाधिकत्वनिर्णया-क्षमा इत्यर्थः, देवासुराः,—सुरदानवाः यैः तानि, विस्मयविह्वलीकृतसुरासुराणीति यावत्। विक्रान्तचरितानि—विक्रमविलसितानि, विक्रमसूचकानि समरकर्म्माणि वा; अन्तरीक्षविहारिणो देवदानवा अपि प्रकटितालौकिकाभिनवभुजवीर्य्ययो-रनयोः समरकौशलमालोक्य बलवद्विस्मयपारवश्यमधिजग्मुरिति समुदितार्थः। तथाहि—तमेव विस्मयकरं समरव्यापारमवगच्छेत्यर्थः। [पश्य पश्येति विस्मये द्विर्वचनम्]।

विपुलविक्रमेण युद्धमारभमाणयोः कुमारयोः समरकौशलस्य विस्मयकरत्वमेव प्रदर्शयन्नाह, झणदिति।—झणज्झणितानि झणज्झण इत्यव्यक्तं शब्दं कुर्वन्ति, [झणज्झणः शब्दः जातः एषामिति विग्रहे झणज्झणशब्दात् "तदस्य सञ्जातं तारका-दिभ्य इतच्" (५।२।३६ पा०) इति इतच्] यानि कङ्कणानि करभूषणविशेषाः, तानीव क्वणिताः शब्दायमानाः, किङ्किण्यः क्षुद्रघण्टिका यत्र तत्, ["नद्युतश्च" (५।४।१५३ पा०) इति समासान्तः कप्प्रत्ययः। "कङ्कणं करभूषणम्" इति "किङ्किणी क्षुद्रघण्टिका" इति चामरः] यद्वा—झणज्झणितानि यानि कङ्कणानि, तेषामिव क्वणितं रणितं यासां ताः झणज्झणितकङ्कणक्वणिताः, [इति उपमान-पूर्व्वपदो बहुव्रीहिः उत्तरपदलोपश्च] तादृश्यः किङ्किण्यः यत्र तदिति, ("झणज्-झणितकङ्कण—" इत्यत्र "झणज्झणितिकङ्कण—" इति पाठे—झणज्झणिति झणज्झणत् इत्याकारकं, यत् कङ्कणस्य क्वणितं, तद्वत् क्वणितं यासां तादृश्यः किङ्किण्यः यस्मिन् तदित्यर्थः)। [उष्ट्रमुखवत् समासः। अत्र इतौ परे झणज्झण-दित्यव्यक्तानुकरणशब्दात् "अव्यक्तानुकरणस्यात इतौ" (६।१।९८ पा०) इति पररूपैकादेशेन झणज्झणिति पदं सिद्धम्] तथा गुणेन मौर्व्या, कटनीभ्यां

विजृम्भितञ्च दिव्यस्य मङ्गलाय द्वयोरपि।
स्तनयित्नोरिवाऽमन्द्रं दुन्दुभेर्दुन्दुमायितम् ॥ २ ॥

कोटिभ्यां, धनुषः प्रान्तभागाभ्यामित्यर्थः, ("कोटिरस्याटनी" इत्यमरः) कृतः सम्पादितः, करालः भीषणः, अतिमहानित्यर्थः, कोलाहलः शब्दविशेषः यस्य तादृशम्, अत एव ध्वनत् शब्दायमानं, गुरु अत्यदुर्वहं, [धनुरित्यस्य विशेषणम्] अथवा—ध्वनता टङ्कुर्वता, गुरुणा दृढेन, गुणेन शिञ्जिन्या, अटनीभ्यां कोटिभ्याञ्च, कृतः जनितः, करालः विकटः, कोलाहलः कलकलः यस्य तत्, मौर्व्याकर्षणोत्थविकटटङ्कारमुखरितप्रान्तभागद्वयमित्यर्थः; यद्वा,—ध्वनत् आकर्षणेन टङ्कारशब्दं कुर्वत्, गुरुः कठिनः, गुणो मौर्वी ययोः एवम्भूते, ये अटन्यौ अग्रभागौ, ताभ्यां कृतः जनितः, करालो भीषणः, कोलाहलो गभीरशब्दो येन तादृशं, धनुः शरासनं, वितत्य विस्फार्य, प्रसार्येत्यर्थः, [विपूर्वात् तनोतेः ल्यपि "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति (६।४।३७ पा०) इत्यनुनासिकलोपे "ह्रस्वस्य पिति कृति तुक्" (६।१।७१ पा०) इति तुका सिद्धम्] शरान् बाणान्, किरतोः निरन्तरं प्रक्षिपतोः, वर्षतोः इत्यर्थः, अविरतम् अविश्रान्तं, निरन्तरं यथा स्यात् तथेत्यर्थः, स्फुरन्त्यः इतस्ततः शरीरसञ्चालनात् प्रचलन्त्यः, चूडाः शिखाः ययोः तयोस्तयोः, धनुरास्फालनकृतशरीरसञ्चालनात् निरन्तरप्रचलच्छिखयोरित्यर्थः, एतयोः कुमारयोरिति शेषः, भुवनानां लोकानां, जगत्त्रयस्येत्यर्थः, भीमं भयानकं, त्रिभुवनभीतिविधायकमित्यर्थः, विचित्रं विस्मयावहम्, अभिनवकौशलवत्तया अत्याश्चर्यजनकमिति यावत्, आयोधनं युद्धं, [आयुध्यते अस्मिन्निति आयुधेरधिकरणे ल्युट्] अभिवर्द्धते प्रसरति, उत्तरोत्तरमुपचितं भवतीत्यर्थः; ("अभिवर्द्धते" इत्यत्र "अभिवर्त्तते" इति पाठान्तरे सुगमोऽर्थः) समरभुमाववतीर्णाविमौ विकर्त्तनकुलनन्दनौ सज्यं महदपि शरासनम् अनायासेनैव आस्फालयन् अत्यद्भुतसमरकौशलेन त्रिलोकीलोकं विस्मापयतः इति भावः। [अत्र प्रथमपादे कल्पकृपितेत्यत्र समासे औपम्यवाचिनो लोपात् लुप्तोपमा, तथा अनयोः कुमारयोः कविमात्रसंवेद्यचेष्टास्वरूपयोः यथावद्वर्णनात् स्वभावोक्तिरलङ्कारः, एतयोश्चानयोः परस्परनिरपेक्षसंसृष्टिः]। पृथ्वी वृत्तं, तल्लक्षणं यथा,—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः इति ॥ १ ॥

कुमारयोरनयोरलौकिकसमरकौशलमालोकयतां देवानामपि दुन्दुभिध्वानैरुत्साहप्रदर्शनमाह, विजृम्भितमिति।—द्वयोरपि उभयोरपि, लवचन्द्रकेत्वोरित्यर्थः,

तत् प्रवर्त्त्यताम् अनयोः प्रवीरयोः अनवरतम् अविरल-ललितविकचकनककमलकमनीयसंहतिः अमरतरुतरुणमणि-मुकुलनिकरमकरन्दसुन्दरः पुष्पनिपातः । ( ग )

मङ्गलाय कल्याणाय, समरोत्साहवर्द्धनार्थमित्यर्थः, स्तनयित्नोः ध्वनतो जलदस्येत्यर्थः, [ स्तनयतीति विग्रहे स्तनयतेः कर्त्तरि इत्नुः ] इव, आमन्द्रं निरतिशयगुरुगम्भीर-मित्यर्थः, ( "मन्द्रस्तु गम्भीरे" इत्यमरः ) दिव्यस्य स्वर्गीयस्य, [ दिवि भवः इति विग्रहे दिव्शब्दात "तत्र भवः" ( ४।३।५३ पा० ) इति यता दिव्यमिति ] दुन्दुभेः भेर्य्याः, तन्नामवाद्यविशेषस्येत्यर्थः, ( "भेरी स्त्री दुन्दुभिः पुमान्" इत्यमरः । दुम् दुम् इति शब्देन भाति इति दुन्दुभिरित्यमरव्याख्याने महेश्वरः ) दुन्दुमायितं दुन्दु-मित्याकारक्वणितं, [ दुन्दुमायितमिति दुमित्यव्यक्तानुकरणशब्दात् "अव्यक्तानुकरणा-द्व्यजवरार्द्धादनितौ डाच्" ( ५।४ ५७ पा० ) इति डाच्, ततः "डाचि विवक्षिते द्वे बहुलम्" ( वा०) इति द्वित्वे दुन्दुमा इत्यस्मात् "लोहितादिडाज्भ्यः क्यष्" ( ३।१।१३ पा० ) इति क्यषि दुन्दुमाय इति नामधातोर्भावे निष्ठा ] विजृम्भितञ्च सर्वासु दिक्षु व्याप्तञ्चेत्यर्थः ; [ चकारः समुच्चयार्थः, पूर्व्वश्लोकस्थे "अभिवर्त्तते" इति क्रियापदेनेदं समुच्चीयते इति बोध्यम् ] अतीवविस्मयकरमिदं रणनैपुण्यमालोक्य परितुष्यद्भिर्दिवि-षद्भिरपि कृतः अयं गम्भीरभेरीनिनादः कुमारयोरनयोः समरानुरागं सम्यक् विवर्द्धयतीति समुदितार्थः । [ "विजृम्भितञ्च दिव्यस्य" इत्यत्र "विजृम्भितञ्च दिव्यास्त्रम्" इति पाठान्तरं क्वचिद्दृश्यते, तत्रायमर्थः,—द्वयोरपि कुमारयोः दिव्यास्त्रं स्वर्गीयं प्रहरणं, विजृम्भितं समाकीर्णं, परस्परप्रहितेनायुधेन युद्धक्षेत्रं परिव्याप्तमित्यर्थः । एवं द्वयोरपि मङ्गलाय स्तनयित्नोरिव आमन्द्र दुन्दुभेः दुन्दुमायितञ्च विजृम्भितम् आविर्भूतमित्यर्थः । उक्तोभयपाठ एव स्तनयित्नुना सह दुन्दुभेरवैधर्म्यसाम्यकथनादुपमा-ऽलङ्कारः ] । पथ्यावक्त्रं वृत्तम् ॥ २ ॥

( ग ) तत्—तस्मात्, भेरीवादनादिना अमरैरपि रणोत्साहविवर्द्धनादित्यर्थः । प्रवीरयोः,—सप्रकर्षवीरत्ववतोरित्यर्थः । [ प्रकृष्टौ वीरौ इति प्रवीरौ तयोरिति प्रादि समासः ] । अनयोः,—एतयोर्लवचन्द्रकेत्वोरित्यर्थः, शिरसोरिति शेषः । अविरले-त्यादि ।—अविरलैः,—निरन्तरैः, सान्द्रसन्निविष्टैरित्यर्थः, ललितैः,—रुचिरैः, नयन-मनोरमैरिति यावत्, विकचैः,—विकसरैः, सुपरिस्फुटैरित्यर्थः, कनककमलैः,—सुवर्णसरसिजैः, कमनीया—मनोमोहिनीत्यर्थः, संहतिः,—समवायः, राशिरिति यावत्, यस्य स तथोक्तः । ( "अविरलललित—" इत्यत्र "अविरलमुकुलितविकचकनक-

विद्याधरी। ता किं त्ति उण अआलविप्फुरिदतड़िच्छड़ाकड़ारं विअ अंबरं झत्ति संवुत्तं ? । * (घ)

* तत् किमिति पुनरकाण्डविस्फुरिततड़िच्छटाकड़ारमिव अम्बरं झटिति संवृत्तम् ? ।

नयकमलकमनीयसन्ततिः" इति पाठे,—अविरलं—निरन्तरं यथा तथा, स्खलितानां—चलितानां, पतितानामिति यावत्, विकचकनकनयकमलानां—प्रस्फुटितस्वर्णमयपद्मानां, कमनीया—मनोहरा, सन्ततिः—विततिः यस्मिन् स तथोक्तः इत्यर्थः) अमरेत्यादि।—अमरतरूणां—कल्प-पारिजातप्रभृतिदेवपादपानां, तरुणानि—नवोद्गतानि, सद्यःसमुत्पन्नानीति यावत्, यानि मणिमयानि—रत्नात्मिकानि, मुकुलानि—विकासोन्मुखकुड्मलानि, तेषां निकरस्य—सन्ततेः, मकरन्दैः,—मधुभिः ; आद्यतर्पणैरिति भावः ; सुन्दरः,—मनोरमः, सुरभिरिति यावत्। पुष्पनिपातः,—कुसुमवृष्टिरित्यर्थः। प्रवर्त्त्यतां—समारभ्यताम्, *आवाभ्यामिति शेषः। [ प्रहतेर्णिजन्तात् कर्म्मणि लोट्। अत्र "प्रवर्त्ततास्" इति पाठे—भवतु इत्यर्थः, पुष्पनिपातः इति तु अस्मिन् पक्षे कर्तृपदं बोध्यम् ]। सर्वं हि व्यवहारानुरूपमेव शोभते, न तु तद्विरुद्धमिति दृश्यकाव्ये सहृदयवचनप्रतिवचनात्मकवाक्ये सुदीर्घसमासनिबन्धस्य अभिनये अत्यन्तप्रतिकूलतया कवेर्द्दोषापादकतेव प्रतिभातीति बोध्यम्।

(घ) इह वक्तृनामोल्लेखावसरे विद्येति नामैकदेशग्रहणे स्त्रीपुंसयोर्विशेषबोधो न स्यादिति सम्पूर्णतया विद्याधरीति उक्तम्। तत्किमिति—प्रश्नार्थकमेकमव्ययम्। झटिति—सहसा। अम्बरम्—आकाशं, गगनतलमिति यावत्। अकाण्डेति।—अकाण्डे—अनवसरे, अकस्मादित्यर्थः, विस्फुरितानां—प्रस्फुरितानां, विलसितानामित्यर्थः, तड़ितां—विद्युतां, छटाभिः,—दीप्तिभिः, तड़ित्परम्परया इत्यर्थः, कड़ारं—पिङ्गलवर्णमिवेत्युत्प्रेक्षा। ( अत्र "अआलतण्डविदुद्दण्डतरलिदतड़िच्छड़ाकड़ारं" इति पाठान्तरस्य—"अकाण्डताण्डवितोद्दण्डतरलिततड़िच्छटाकड़ारम्" इति संस्कृतानुवादे अयमर्थः, तथाहि—अकाण्डे ताण्डविता—अकस्मात् विस्फुरिता, तथा उद्दण्डम्—उच्चैः यथा तथा, तरलिता—तरङ्गायिता, या तड़िच्छटा तया कड़ारं—पिङ्गलमिति। अस्मिन् पाठे तु उत्प्रेक्षाद्योतकेवशब्दो नास्तीति बोध्यम्)। संवृत्तं—सञ्जातम्। यद्वा,—तत्—इति प्रसिद्धार्थे, किमिति—इति प्रश्नार्थे अव्ययम् ; तथाच, तत्—भास्वरतयाऽतिप्रसिद्धम्, अम्बरं किमिति—पुनः, अकाण्डविस्फुरिततड़िच्छटाकड़ारमिव संवृत्तमित्यन्वयः।

विद्याधरः । तत्किन्नु खलु भद्र । (क)—

त्वाष्ट्रयन्त्रभ्रमिभ्रान्तमार्त्तण्डज्योतिरुज्ज्वलः ।
पुटभेदो ललाटस्थनीललोहितचक्षुषः !! ॥ ३ ॥

---

(क) अप्सरसा भक्त्या गगनपिशङ्गताकारणं पृष्टः विद्याधरोऽपि याथार्थ्यं विनिश्चेतुमशक्नुवन् वितर्कयति, तदिति ।—तत्—इति प्रसिद्धार्थद्योतकम् अव्ययम् । किन्नु—इति वितर्के । खलु—वाक्यालङ्कारे । भद्र—भद्रिमन्निति(?), इदानीमित्यर्थः । एतेषाञ्च पदानां वक्ष्यमाणश्लोकेनान्वयो बोध्यः ।

आकस्मिकगगनपिशङ्गतादर्शनेन विस्मितः विद्याधरः तन्निदानं वितर्कयन्नाह, त्वाष्ट्रेति ।—त्वाष्ट्रस्य विश्वकर्म्मसम्बन्धिन इत्यर्थः, [ त्वक्षतीति त्वष्टा, "त्वक्षू तनूकरणे" इति धातोः कर्त्तरि तृच्, त्वष्टुरिदमिति त्वाष्ट्रं, त्वष्टृशब्दात "तस्येदम् (४।३।१२०पा०) इत्यण् ] यन्त्रस्य शाणभेदस्येत्यर्थः, भ्रमिसाधनपदार्थविशेषस्येति यावत, भ्रमिभिः आवर्त्तनैः, भ्रान्तस्य आवर्त्तितस्य, मुहुर्घूर्णितस्येत्यर्थः, मार्त्तण्डस्य सूर्य्यरश्मेः, यत् ज्योतिः पुनःपुनरावर्त्तनात् तडिच्छटावत् परितः प्रसृतं तेज इत्यर्थः, तदिव उज्ज्वलः देदीप्यमानः ; [ "उपमानानि सामान्यवचनैः" (२।१।५५ पा०) इति उपमानवाचक-ज्योतिःपदेन सामान्यधर्म्मवाचकोज्ज्वलशब्दस्य समासः । इह विग्रहवाक्ये उपमान-पदस्य तत्सदृशे लाक्षणिकत्वज्ञापनार्थम् इवादिशब्दः प्रयुज्यते ] ललाटस्थं भालगतं, [ ललाटे तिष्ठति यदिति ललाटोपपदात्तिष्ठतेः "सुपि स्थः" ( ३।२।४ पा० ) इति कः ] नीललोहितस्य महादेवस्य, [ नीलश्चासौ लोहितश्चेति विग्रहे नीललोहित इति विशेषणसमासः । कण्ठावच्छेदेन नीलतया, जटावच्छेदेन लोहिततया च अस्य नीललोहितेति संज्ञा । स्कन्दपुराणे तु अस्य तन्नामधेयत्वे प्रकारान्तरमुक्तं, यथा,—"नीलं येन ममाङ्गन्तु रक्ताक्तं लोहितं त्विषा । नीललोहित इत्येव ततोऽहं परिकीर्त्तितः ॥" इति ] यत् चक्षुः तृतीयं नयनमित्यर्थः, तस्य, पुटयोः वर्त्मनोः, आवरणयोरित्यर्थः, भेदः विघटनं, समुन्मीलनमिति यावत, किन्नु भद्र, जातः ? इति शेषः । विश्वकर्म्मणा तेजःसङ्कोचनार्थं शाणमारोपितस्य त्विषाम्पतेरत्युग्रतेजोवत् भास्वरं सृष्टिसंहारोद्यतस्य भगवतो धूर्ज्जटेः तृतीयनयनसमुत्थं प्रसिद्धं तेजोऽद्य प्रसृतं किम् ? इति निष्कृष्टार्थः । पुरा किल विश्वकर्म्मा स्वभर्त्तुर्दिवाकरस्य अत्युग्रं तेजोऽसहमानाया दुहितुर्वाक्यात् जामातुस्तेजःखर्व्वतासम्पादनाय तं विवस्वन्तदेवं शाणमारोपयन् पुनः पुनः भ्रामणेन तस्य तेजोह्रासमकार्षीदिति पौराणिककथायां मार्कण्डेयपुराणं यथा—"तवातितेजसा व्याप्तमिदं रूपं सुदुःसहम् । असहन्ती ततः संज्ञा वने चरति वै तपः ॥ श्रुतं मे

[ विचिन्त्य ]। ( च ) आं ज्ञातं, वत्सेन चन्द्रकेतुना प्रयुक्तम- स्त्रमाग्नेयं, यस्यायमग्निच्छटासम्पातः। सम्प्रति हि, ( छ )—

ब्राह्मणी वाक्यं यदि ते देव ! रोचते ॥ रूपं निवर्त्तयाम्येतत् तव कान्तं दिवस्पते !" ॥ इति विश्वकर्म्मणि उक्ते मार्कण्डेय उवाच,—"यतो हि भास्वतो रूपं प्रागासीत् परि- मण्डलम्। ततस्तथेति तं प्राह त्वष्टारं भगवान् रविः ॥ विश्वकर्म्मा त्वनुज्ञातः शाकद्वीपे विवस्वता। भ्रमिमारोप्य तत्तेजःशातनायोपचक्रमे ॥" इत्यादि। सूर्य्यस्य मार्त्तण्डनाम- कारणमुक्तं मार्कण्डेयपुराणे,—"ततस्तां कश्यपः प्राह किञ्चित्कोपप्लुताक्षरम्। किं मारयसि गर्भाण्डमिति नित्योपवासिनी ?॥ सा च तं प्राह गर्भाण्डमेतत् पश्यसि कोपन !। न मारितं विपक्षाणां मृत्यवे तद्भविष्यति ॥······अथान्तरीक्षादाभाष्य कश्यपं मुनिसत्तमम्। सतोयमेघगम्भीरवाग्वाचाशरीरिणी ॥ मारितं ते यतः प्रोक्तमेतदण्डं त्वया मुने !। तस्मान्मुने ! सुतस्तेऽयं मार्त्तण्डाख्यो भविष्यति ॥" इति। (अत्र प्रथमार्द्धे "त्वाष्ट्रयन्त्रभ्रमिभ्रान्तमार्त्तण्डज्योतिरुज्ज्वलम्" इति पाठे,—एतत् उज्ज्वलं त्वाष्ट्रयन्त्र- भ्रमिभ्रान्तमार्त्तण्डज्योतिः किम् ? उत ललाटस्थनीललोहितचक्षुषः पुटभेदो नु ? इति पृथग्वाक्यद्वयरूपेण अन्वयः कार्य्यः)। [ इह प्रकृतस्य दिव्यास्त्रतेजसः नीललोहित- तृतीयनेत्रपुटभेदसम्भवत्वेन संशयात् शुद्धः सन्देहोऽलङ्कारः, स च पूर्वार्द्धगतया लुप्तोपमया सङ्कीर्णः ]। पथ्यावक्त्रं वृत्तम् ॥ २ ॥

( च ) विचिन्त्य—विमृश्य, सप्रणिधानमवधार्य्येत्यर्थः, आहेति शेषः।

( छ ) आम्—इति निश्चयार्थकमव्ययम्। ( "आमेवम्" इत्यमरः। "द्वे निश्चये" इति तट्टीकायां महेश्वरः। "आं ज्ञानविनिश्चये" इति गोपालितश्च ) ज्ञातं—बुद्धं, निर्णीतमित्यर्थः, यथाऽवस्थितं वच्मीति शेषः ; किमेतत् सम्भूतं, तत् मया सम्यक् अवबुध्य- तेति भावः। तदेव दर्शयति, वत्सेनेति।—वत्सेन—पुत्रकेण, अतीव स्नेहास्पदेनेत्यर्थः, ("वत्सः पुत्रादिवर्षयोः। तर्णके नोरसि क्लीवम्" इति मेदिनी ) चन्द्रकेतुना—लक्ष्मण- तनयेन। प्रयुक्तं—विसृष्टं, विमुक्तमित्यर्थः। आग्नेयम्—अग्निदैवताकम्, [ "अग्नि- कलिभ्यां ढग्वक्तव्यः" (वा०) इति ढक्)। समन्ताद्विसारिवह्निशिखमित्यर्थः। अस्त्रम्— आयुधम्। यस्य—अस्त्रस्य। अयं—परिदृश्यमानः इत्यर्थः। अग्नीति।—अग्नीनाम्— अनलानां, छटानां—प्रभाणां, सम्पातः,—उद्गमः, वह्निप्रभाप्रसर इत्यर्थः, परितः परिदृश्यते इति शेषः। हि—यतः, अत एवेत्यर्थः। सम्प्रति—इदानीं, वक्ष्यमाण- श्लोकोक्तान्वयः।

अवदग्धकर्बुरितकेतुचामरै-
रपयातमेव हि विमानमण्डलैः ।
दधति ध्वजाङ्कुशपटाञ्चलेष्विमाः
क्षणकुङ्कुमच्छुरणविभ्रमं शिखाः ॥ ४ ॥

युद्धे वीरेण चन्द्रकेतुना प्रयुक्तानामाग्नेयास्त्राणां विलास एवायमिति विनिश्चित्य तत्प्रयुक्तां विभीषिकां तेषां विशेषतो विभ्रमप्रकारञ्चाह, अवदग्धेति ।—अवदग्धाः प्रायेण प्लुष्टाः, अस्त्रानलशिखासंयोगात् प्रारब्धदाहा इत्यर्थः, अत एव कर्बुरिताः शबलिताः, सञ्जातचित्रवर्णा इत्यर्थः, वह्निप्रभया रक्तत्वात् धूमेन कृष्णत्वात् स्वभावतः श्वेतत्वाच्चास्य चित्रवर्णत्वं ज्ञेयम् ; [कर्बुरा एषां सञ्जाता इत्यर्थे "तदस्य सञ्जातं तारका-दिभ्यः इतच्" (५।२।३६ पा०) इति इतच्प्रत्ययः ] यद्वा,—कर्बुराः कृताः इत्यर्थे ["तत्करोति तदाचष्टे" (ग०) इति णिचि कर्म्मणि क्तः ] केतवः ध्वजाः, चामराणि च येषां तैः, अस्त्रानलशिखासंयोगात् प्रायशः दग्धीभूततया विचित्रध्वजचामरोप-हितैरित्यर्थः, विमानमण्डलैः व्योमयाननिकरैः, हि इति सम्भ्रमार्थकमव्ययम् ; तथाच, ससम्भ्रमं यथा स्यात्तथेत्यर्थः, ("हि पादपूरणे हेतौ विशेषेऽप्यवधारणे । प्रश्ने हेत्वपदेशे च सम्भ्रमासूययोरपि ॥" इति मेदिनी ) अपयातमेव पलायितमेव ; [ अपपूर्व्वकात् यातेः "नपुंसके भावे क्तः" (३।३।११४ पा० ) इति भावे क्तः ] समरदर्शनोत्सुकानां देवानां विमानानि भस्मीभवनभयात् दूरं गतानीति भावः ; यतो हि, इमाः शिखाः आग्नेयास्त्राणाम् अर्च्चिषः, ध्वजानां केतुदण्डानामित्यर्थः, ये अङ्कुशाः सृणयः, पताकावलम्बनार्थं दण्डाग्रे स्थापिताङ्कुशाकारपदार्थविशेषा इत्यर्थः, तेषां, पटाञ्चलेषु वसनप्रान्तेषु, ("वस्त्रस्यान्तो मतोऽञ्चलः" इति हलायुधः) यद्वा,—अङ्कुशशब्दस्य हस्तिचालनार्हलौहास्त्रभेदार्थकत्वेऽपि अत्र लक्षणया सामान्य-दण्डपरत्वं ज्ञेयम् ; तथाच, ध्वजाङ्कुशानां ध्वजदण्डानामिति तदर्थः । (कुत्रचित् "ध्वजांशुकपटाञ्चलेषु" इति पाठो दृश्यते, तथात्वे—ध्वजांशुकेषु ध्वजसंलग्नवसनेषु, पटाञ्चलेषु वीरजनपरिहितवसनप्रान्तेषु इति तदर्थो ज्ञेयः ) क्षणेति ।—क्षणं मुहूर्त्तं व्याप्येत्यर्थः, कुङ्कुमेन काश्मीरजन्मना, ("अथ कुङ्कुमम् । काश्मीरजन्माऽग्नि-शिखम्—" इत्यमरः ) यत् छुरणं रञ्जनं, तस्य विभ्रमं शोभां, सादृश्यमिति यावत् ; यद्वा,—तस्य विभ्रमं भ्रान्तिं, दधति बिभ्रति, धारयन्तीत्यर्थः, ("शोभार्थेऽपि प्रयुज्यन्ते लक्ष्मीशोभाकान्तिविभ्रमाः ।" इति हलायुधः । "विभ्रमो भ्रान्तिहावयोः" इति च मेदिनी ) ध्वजवसनाञ्चलभागाः अस्त्राग्निप्रभाभिः कुङ्कुमरागरञ्जिता इव

आश्चर्य्यम् !! प्रवृत्त एवायम् उग्रचण्डवज्रखण्डावस्फोटपटुः उत्सर्पिस्फुलिङ्गगुरुः उत्तालतुमुललेलिहानज्वालासम्भारभैरवः भगवान् उषर्बुधः । प्रचण्डश्चास्य सर्वतः सन्तापः, तत् प्रियामङ्केनाच्छाद्य दूरमपसरामि । (ज) [ तथा करोति ] ।

विभान्ति इति भावः । [ अत्र एकस्य कुङ्कुमस्य विभ्रमस्य अपराभिः ध्वजपटसंसक्तशिखाभिः धारणं निरतिशयमसम्भवदपि कुङ्कुमसदृशविभ्रमधारणेन सामञ्जस्यादसम्भवद्वस्तुसम्बन्धरूपो निदर्शनाऽलङ्कारः, अपिच पलायनपराणां प्रायशः अदग्धत्वेन सामान्यतः दाहसम्बन्धरहितानामपि केतुचामराणां साकल्येन दाहसम्बन्धकथनात् जायमानेन असम्बन्धे सम्बन्धरूपातिशयोक्त्यलङ्कारेणाऽसौ सङ्कीर्य्यते । इह हिःशब्दस्य सम्भ्रमार्थे प्रयुज्यमानतया पलायने त्वराऽऽतिशय्यद्योतनात् न कोऽपिदाशङ्कितस्य निरर्थकत्वदूषणस्यावकाशः ] । मञ्जुभाषिणी वृत्तम्; "सजसा जगौ च यदि मञ्जुभाषिणी" इति लक्षणात् ॥ ४ ॥

(ज) आश्चर्य्यम् !!—अतीव विस्मयकरमेतदित्यर्थः । उग्रचण्डेति ।—उग्रचण्डानाम्—अतिभीषणानाम्, अत्युज्ज्वलानां वा, वज्रखण्डानाम्—अशनिशकलानां, हीरकच्छेदानां वा, यः अवस्फोटः,—आविर्भावः, विदारणं वा, तद्वत् पटुः,—अमन्दः, प्रबलः इत्यर्थः, तीक्ष्णो वा; अशनिसम्पातवदतीव भयानकः, हीरकखण्डादपि वा अधिकद्युतिमानिति भावः । ( "दक्षामन्दागदेषु तु । पटुः" इत्यमरः । "पटुस्तीक्ष्णे स्फुटे दक्षे निष्ठुरे निर्द्दयेऽपि च ।" इति रुद्रः ) उत्सर्पिभिः,—उद्गच्छद्भिः, समन्तात् विसरद्भिरित्यर्थः, स्फुलिङ्गैः,—वह्निकणैः, गुरुः,—महान्, स्वयं लघुरपि सर्व्वतोविसारिवह्निकणैः महीयस्तया प्रतीयमान इत्यर्थः । उत्तालेन—अत्युन्नतेन, तुमुलेन—अतिसङ्कुलेन, सर्व्वत्र व्याप्नुवतेत्यर्थः, लेलिहानेन—जगत् ग्रसितुमुद्यता, समन्तात् प्रसरतेत्यर्थः, [ लेढ़ेः आदादिकस्य यङि शानचि पृषोदरादित्वात् यङ्लोपि रूपम् ] ज्वालानां—शिखानां, सम्भारेण—समूहेन, भैरवः,—भीषणः, सर्व्वतोव्याप्तैरतीव भयावहैः जगद्दहनलोलुपैः जिह्वाकल्पशिखासन्तानैः निरतिशयभीष्मविग्रह इत्यर्थः । भगवान्—षडैश्वर्य्यशाली । उषर्बुधः,—अग्निः, ( "शोचिष्केश उषर्बुधः" इत्यग्निपर्य्याये अमरः ) उषसि—सन्ध्यायाम्, ( "उषः प्रभाते सन्ध्यायाम्" इति विश्वः ) बुध्यते—प्रकाशते, यतः आहिताग्नयो हि अग्निमुषसि प्रादुष्कुर्व्वन्ति, इति व्युत्पत्त्या, [ उष उपपदात् बुध्यते इत्यस्य, "इगुपध—" ( ३।१।१३५ पा० ) इति कर्त्तरि कः, "अहरादीनां पत्यादिषु वा रेफः" ( वा० ) इति रेफश्च ] अस्य—अग्नेः । सर्व्वतः,—

उ—३८

विद्याधरी। दिट्ठिआ एदेण विमलमोत्तिअफलसीदल-सिणिद्धमसिणसोवाणमंसलेण णाहदेहप्फंसेण आणंदमंद-मुउलिदघुण्णंतलोअणाए मे अंदरिदो ज्जेव संदावो। *(भ)

विद्याधरः। अयि! किमत्र मया कृतम्? (ञ) अथवा—

* दिष्ट्या एतेन विमलमौक्तिकफलशीतलस्निग्धमसृणसोपानमांसलेन नाथदेह-स्पर्शेन आनन्दमन्दमुकुलितघूर्णल्लोचनाया मे अन्तरित एव सन्तापः।

समन्तात्। प्रचण्डः,—भीषणः, सुदुःसहः इत्यर्थः। सन्तापः,—दाहकारकः उष्मराशिः, प्रसरतीति शेषः। तत्—तस्मात्, दाहकारकत्वाद्धित्यर्थः; दग्धीभवन-भयादिति भावः। प्रियां—पत्नीं विद्याधरीम्। अङ्केन—क्रोडेन। आच्छाद्य—आवृत्य, गोपायित्वेति यावत्। दूरं—विप्रकृष्टप्रदेशं, सन्तापविरहितं स्थानमिति यावत्। अपसरामि—यामि; यथाऽयं प्रबलः तापः प्रियायाः कोमलं गात्रं स्प्रष्टुं न शक्नोति, तथा करोमि इति भावः; तूर्णं पलाय्य स्थानान्तरं यामीत्याशयः।

(भ) विमलेति।—[मौक्तिकं—मुक्ता एवेत्यर्थे स्वार्थे ठक्, तच्च फलमिवेति उपमितसमासः] विमलं—विशुद्धं, यत् मौक्तिकफलं—मुक्ताफलं, तद्वत् शीतलः,—शैत्यजनकः, स्निग्धः,—स्नेहयुक्तः, सुखस्पर्श इत्यर्थः, मसृणः,—श्लक्ष्णः, चिक्कण इत्यर्थः, सोपानमांसलश्च—सोपानम्—आरोहणसाधनं, तद्वत् मांसलः,—बलवान्, दृढ़ इत्यर्थः, ("बलवान् मांसलोऽसलः" इत्यमरः) प्रस्तरादिमयसोपानसमदृढ़ इत्यर्थः, तेन; तद्वदनुभूयमानेनेति भावः। ["उपमानानि सामान्यवचनैः" (२।१।५५ पा०) इति उपमानसमासः] नाथस्य—प्रियतमस्य, देहस्य—शरीरस्य, स्पर्शेन—समाश्लेषेणेति यावत्। आनन्देन—हर्षेण, मन्दम्—ईषत् यथा स्यात्तथा, मुकुलिते—मुद्रिते, घूर्णती—परिभ्राम्यती, समन्तात् प्रचलिते इत्यर्थः, लोचने—नयने यस्याः तथाविधायाः, आनन्दोपभोगवशात् अत्यल्पविकसितविलोल-विलोचनाया इत्यर्थः, सन्तापः,—अग्निजः सञ्ज्वर इत्यर्थः, अन्तरितः,—दूरीकृतः। [अन्तरशब्दात् "तत्करोति—" (ग०) इति णिचि कर्मणि क्तः]।

(ञ) अयि!—इति कोमलसम्बोधने। अत्र—सन्तापप्रशमविधौ। मया किं कृतम्?—न किमप्यनुष्ठितमित्यर्थः; केवलं त्वया निरुपमप्रेम्णा स्वकर्मनिर्व्वचनीयं सुखमनुभूयते इति भावः।

अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः॥ ५॥

विद्याधरी। कहं अविरलविलोलघुम्मंतविज्जुलदाविलासमंडिदेहिं मत्तमोरकंठसामलेहिं ओत्थरीअदि णहत्थलं जलहरेहिं ?। * (ट)

विद्याधरः। हन्त! हन्त! कुमारलवप्रयुक्तवारुणास्त्रप्रभावः खलु अयम्। कथमविरलप्रवृत्तवारिधारासहस्रसम्पातैः प्रशान्तं पावकास्त्रम्!! (ठ)

* कथमविरलविलोलघूर्णद्विद्युल्लताविलासमण्डितैर्मत्तमयूरकण्ठश्यामलैराक्रीयते नभस्तलं जलधरैः ?

अकिञ्चिदिति।—द्वितीयेऽङ्के १६३ पृष्ठायां श्लोकोऽयं व्याख्यातः॥ ५॥

(ट) अविरलेति।—अविरलं—सततं, विलोलानां—चञ्चलानां, घूर्णन्तीनां—कुत्रचित् स्थैर्य्यमलभमानानां, विद्युल्लतानां—तडिद्दाम्नां, विलासेन—विकासेन, मण्डितैः,—भूषितैः, सततं स्फुरितैः चपलैः विद्युद्दामभिरुपशोभितैरित्यर्थः। मत्तानां—मदोन्मादितानां, यवीयसामित्यर्थः, मयूराणां—बर्हिणां, कण्ठा इव—ग्रीवाभागा इव, श्यामलाः,—मेचकाः, नीलवर्णाः इत्यर्थः, तैः। जलधरैः,—मेघपटलैः, विद्युद्दिकाशयुक्तनीलनिविडवारिदसमूहैरिति समुदितार्थः। नभस्तलं—गगनम्। आक्रीयते—आच्छाद्यते। कथं हि अकाले समुदयमानाः विद्युद्दामदेदीप्यमानाः तोयदा वियदाक्रामन्तीति समुदितवाक्यार्थः।

(ठ) हन्त—हर्षार्थकमव्ययम्, [ आनन्दाऽऽतिशय्यद्योतनाय द्विराहृतम् ]। कुमारेति।—कुमारेण—बालेन, लवेन, प्रयुक्तस्य—मुक्तस्य; चन्द्रकेतुप्रयुक्तस्य आग्नेयास्त्रस्य समूलमुपघातायेति भावः; वारुणास्त्रस्य—वरुणदेवताकस्य आयुधविशेषस्य, प्रभावः,—सामर्थ्यं, प्रसर इत्यर्थः; अयं हि नवजलधरपटलप्रतीकाशानां जलाशानां विकाशः परिलक्ष्यते इति भावः। अविरलेति।—अविरलम्—अनारतं, प्रवृत्तानाम्—वर्षणनिरतानामित्यर्थः, वारिधारासहस्राणां—संख्यातुमशक्यानां वर्षप्रवाहाणां, सम्पातैः,—प्रपतनैः, सेचनैरित्यर्थः; असंख्येयैः प्रवृष्टाम्बुभिरिति भावः। पावकास्त्रम्—आग्नेयमस्त्रं, चन्द्रकेतोरिति भावः। प्रशान्तं—निवारितम्; वारुणास्त्रसम्भूतवारिधाराभिः सपदि तत् निर्व्वापितमिति भावः।

विद्याधरी। प्रियं मे प्रियं मे। *(ड)

विद्याधरः। हन्त! हन्त! भो भोः! सर्वमतिमात्रं दोषाय, यत् प्रबलवातावलिक्षोभगम्भीरगुणगुणायमानमेघमेदुरान्धकारनीरन्ध्रनिबद्धम् एकवारविश्वग्रसनविकटविकरालकालकण्ठमुखकन्दरविवर्त्तमानमिव युगान्तयोगनिद्रानिरुद्धसर्वद्वारनारायणोदरनिविष्टमिव भूतजातं प्रवेपते। साधु वत्स चन्द्रकेतो! साधु, स्थाने वायव्यास्त्रमीरितम्। (ढ) यतः,—

* प्रियं मे प्रियं मे।

(ड) प्रियं—प्रीतिकरम्; निखिलजगत्सन्तापनिवारकतया ममापि च दारुणक्लेशोपशमकतया निरतिशयहर्षसंविधायकम् एतत् पावकास्त्रमिति भावः। [आनन्दातिशय्यद्योतनाय द्विर्भावः]।

(ढ) अथ वारुणास्त्रेण पावकप्रसरोपरोधेऽपि तत्प्रयोगकृतकल्पान्तवलाहकाऽऽविर्भावकालिकभीषणान्धतमसोदयेन जगज्जनोपपीड़नमाशङ्क्य नितरां व्यथितचेताः तात्कालिकीं आगतिकीं समवस्थां विशिष्योपवर्णयति, हन्तेति।—हन्त—इति खेदे अव्ययम्; [भीतिजनितसम्भ्रमातिशय्यद्योतनाय द्विरुक्तिः]। अतिमात्रम्—अतिशयितम्, [अतिक्रान्तो मात्रामिति विग्रहे, "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" (वा०) इति द्वितीयासमासः] सर्वं हि प्रमाणाधिकं वस्तु दोषाय सम्पद्यते इति भावः; "सर्व्वमत्यन्तगर्हितम्" इत्यादिवचनादित्याशयः। तदेवोपपादयति, यदिति।—यत्—यतः। प्रबलानाम्—उच्छृङ्खलं प्रवहन्तीनां, भयावहानामित्यर्थः, वातावलीनां—वात्यानां, मारुतसमूहानामित्यर्थः, क्षोभेण—अभिघातेन, समन्तात् सञ्चालनेनेति यावत्, गम्भीरं—मन्द्रं यथा स्यात्तथा, गुणगुणायमानाः,—गुणगुण इति अव्यक्तं भीषणं निनादं कुर्व्वन्तः, ["अव्यक्तानुकरणात्" (५।४।५७ पा०) इति गुणशब्दात् डाचि, "डाचि विवक्षिते द्वे" (वा०) इति द्वित्वे, अगुणं गुणं कुर्व्वन्त इत्यर्थे, गुणगुणा इति स्वरूपात् "लोहितादिडाज्भ्यः क्यष्" (३।१।१३ पा०) इति अभूततद्भावार्थे क्यषि गुणगुणाय इति नामधातोः शानचि सिद्धम्] ये मेघाः,—पयोधराः, तैः मेदुरः,—स्निग्धः, निविड़ इत्यर्थः, यः अन्धकारः,—ध्वान्तं, तेन नीरन्ध्र—निरवकाशं यथा स्यात्तथा, निबद्धं—निबद्धम्, आवृतमित्यर्थः। तदेवोदानीमुत्प्रेक्ष्यते, एकेति।—एकेन वारेण—एकदेवेत्यर्थः, एकेनैव प्रयत्नेनेति यावत्, विश्वस्य—जगतः, यत् ग्रसनं—ग्रासः, कवलीकरणमित्यर्थः, तस्मै

विद्याकल्पेन मरुता मेघानां भूयसामपि।
ब्रह्मणीव विवर्त्तानां क्वापि विप्रलयः कृतः॥ ६॥

तस्मिन् वा विकटः,—तदर्थं विस्फारितः इत्यर्थः, ("विकच" इति पाठान्तरम्) विकरालः,—भयङ्करः, कालकण्ठस्य—नीलकण्ठस्य, जगत्संहर्त्तुमुद्यतस्य महेश्वरस्येत्यर्थः, यः मुखकन्दरः,—मुखगह्वरं, ("मुख" इत्यत्र "कण्ठ" इति पाठान्तरम्) तस्मिन् विवर्त्तमानमिव—विचेष्टमानमिव, निविशमानमिवेत्यर्थः; जगत्सञ्जिहीर्षोः व्यात्तवदनस्य शङ्करस्य मुखविवरमधिशयानमिवानुभूयमानम् इति भावः। अपिचोत्प्रेक्ष्यते, युगान्तेति।—युगान्ते—कल्पक्षये, प्रलये इत्यर्थः, यः योगः,—चित्तैकाग्रता, स निद्रा इव मनसः विषयान्तरव्यावृत्तिरूपः स्वाप इव; [इत्युपमितसमासः] तदानीं बहिरिन्द्रियवृत्तेरपरोक्षादित्याशयः; तथा निरुद्धानि—निगृहीतानि, सर्वाणि द्वाराणि—विषयग्रहोपायभूतानि इन्द्रियाणि येन तादृशस्य, नारायणस्य—भगवतः विष्णोः, उदरे—कुक्षौ, निविष्टमिव—प्रविष्टमिव, महाप्रलये योगनिद्राभिभूते भगवति हरौ तच्छरीरे यथा हि जीवजातं निविशमानमास्ते, तथाऽधुनाऽपि सम्भूतमिवेति भावः। भूतजातं—प्राणिसमूहम्। प्रवेपते—कम्पते; वारुणास्त्राणां ब्रह्माण्डविनाशोद्यमदर्शनमियेति भावः। वातविक्षुब्धमेघमेदुरमम्बरमवलोक्य भूतजातं हि किं नु शङ्करः पुनः जगत्संहर्त्तुमुद्यतः, उत भगवतः नारायणस्य योगनिद्रासमयोऽयं समुपस्थितः इति विभावयत् नितरामुद्विजते इति समुदितवाक्यार्थः। अथेदानीं वायव्यास्त्रसम्प्रयोगदर्शनेन समरकुशलिनं चन्द्रकेतुं प्रशंसति, साध्विति।—साधु—समीचीनमनुष्ठितमिति भावः। [हर्षातिशये द्विर्वचनम्]। स्थाने—युक्तम्। ("युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः)। वायव्यास्त्रं—वायुदैवतमायुधम्। ईरितं—प्रयुक्तम्; जगत्त्रयाभ्युदयस्य लवोन्मुक्तवारुणास्त्रस्य निरसनार्थमिति भावः।

जगद्बाधामपनेतुमभ्युद्यतस्य चन्द्रकेतोः वायव्यास्त्रप्रयोगकौशलमुपवर्णयति, विद्येति।—विद्याकल्पेन ब्रह्मज्ञानसदृशेन, "विद्ययाऽमृतमश्नुते" (ईशोपनिषत् ११ श्लो०) मरुता चन्द्रकेतुप्रयुक्तवायव्यास्त्रेणेत्यर्थः, अत्र मरुत्पदं सामान्येन प्रयुक्तमपि लक्षणया विशेषपरत्वमवसेयम्; वायव्यास्त्रप्रवर्त्तितवायुना वा, भूयसामपि बहुतराणामपि, असंख्येयानामपीत्यर्थः, मेघानां वारुणास्त्राणां प्रयोगात् समुदितजलधराणां, विवर्त्तानां दोषवशात् विलक्षणाकारेण मायाकार्याणां प्रपञ्चानां, भ्रमभूतानां जगतामित्यर्थः, "कारणात् विषमसत्ताकतया उत्पद्यमानं कार्य्यं हि विवर्त्तः" इति वेदान्तिकाः, "ब्रह्माण्डं प्रति विवर्त्तोऽयं ब्रह्मणः सकलं जगत्। अविवर्त्तिनमानन्दमास्थिताः कृतिनः

विद्याधरी। णाह! क्को दाणिं एसो ससंभमुक्खित्त-करब्भमिदपट्टंचलो दूरदो ज्जेव मडुरवअणपडिसिद्धजुज्झ-वावारो एदाणं कुमाराणं अंतरम्मि विमाणवरं ओद-रावेदि? *(घ)

---

* नाथ! क इदानीमेव ससम्भ्रमोत्क्षिप्तकरभ्रमितपट्टाञ्चलो दूरत एव मधुरवचनप्रतिषिद्धयुद्धव्यापार एतयोः कुमारयोः अन्तरे विमानवरमवतारयति?

सदा॥" इति। (वेदान्तसिद्धान्तमुक्तावली ३२६ पृ०) ब्रह्मणि इव अद्वितीये चिन्मये परमात्मनि इव, "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद्ब्रह्म" इति श्रुतेः; क्वापि कुत्रापि, अलक्षितप्रदेशे इत्यर्थः; अकस्मात् सम्भूततया किं इत्तमिति केरपि अलक्ष्यमाणत्वादिति भावः; विप्रलयः ध्वंसः, कृतः सम्पादितः, अचिरादेव तेषां नाशः संसाधित इत्यर्थः; यथा हि ब्रह्मैव सत्यं तद्व्यतिरिक्तञ्च सर्व्वमसत्यमित्याकारकं तत्त्वज्ञानं उपनिषच्छास्त्राध्ययनेन समुदितं सत् सपद्येव घटपटादिविश्वप्रपञ्चान् ब्रह्मणि विलापयति, ब्रह्मविद्यया ब्रह्मज्ञस्य जगत्प्रपञ्चज्ञानस्य सर्व्वथैव निराकरणात् केवलञ्च सर्व्वत्र ब्रह्ममयत्वज्ञानस्यैवोदयात् "तमेव विदित्वा" "विद्ययाऽमृतमश्नुते" इत्यादिश्रुतिभिः मोक्षस्यैवोपदेशात्, तथैव वायव्यास्त्रविलासस्याविर्भावेण वारुणास्त्र-विलसितं त्वरितमेव दूरीभूतमभूदिति भावः। [अत्र विवर्त्तैः सह मेघानामवैधर्म्य-साम्योक्तेः श्रौती उपमाऽलङ्कारः विद्याकल्पेनेत्यार्थ्या उपमया सङ्कीर्य्यते] ॥ ६ ॥

(घ) ससम्भ्रमेति।—ससम्भ्रमं—सत्वरम्, उत्क्षिप्तः,—ऊर्द्ध्वं नीतः, यः करः,—हस्तः, तेन भ्रमितः,—विघूर्णितः, चलितः सञ्चालितः इत्यर्थः, पट्टकस्य—क्षौमप्रावा-रकस्य, अञ्चलः,—प्रान्तभागः येन तथोक्तः, अतिदूरदेशात् सङ्केतेन युद्धक्रियानिवा-रणाय कुमारयोर्दृष्ट्याकर्षणार्थं सव्यग्रमुत्क्षिप्तेन बाहुना वसनाञ्चलमूर्द्ध्वं घूर्णयन् इत्यर्थः। अपिच दूरतः एव—विप्रकृष्टदेशादेव। मधुरवचनैः,—प्रेमपूर्णाभिः हृदयग्राहिणीभिः वाग्भिः, प्रतिषिद्धः,—निवारितः, युद्धव्यापारः,—कुमारयोः सङ्ग्रामक्रिया येन तथाविधः; मधुरैः वचोभिरेव प्रबलसङ्ग्रामस्य प्रतिषेद्धा इति भावः। क एषः,—कोऽयं महापुरुषः। इदानीम्—अधुना। कुमारयोः,—लवचन्द्रकेत्वोः। अन्तरे—मध्यदेशे। विमानवरं—पुष्पकाख्यं व्योमयानश्रेष्ठम्। अवतारयति—अवरोपयति, स्थापयतीत्यर्थः।

विद्याधरः। [दृष्टा]। एष शम्बूकवधात् प्रतिनिवृत्तो रघुपतिः। (त)—

शब्दं महापुरुषसंविहितं निशम्य
तद्गौरवात् समुपसंहृतसम्प्रहारः।
शान्तो लवः, प्रणत एव च चन्द्रकेतुः
कल्याणमस्तु सुतसङ्गमनेन राज्ञः॥ ७॥

[इति निष्क्रान्तौ। विष्कम्भकः]। (थ)

(त) शम्बूकेति।—शम्बूकस्य—तदाख्यस्य जनस्थाने तपस्यतः शूद्रस्य, वधात्—विनाशात्, तद्धननं संसाध्येत्यर्थः। ["ल्यब्लोपे कर्मण्यधिकरणे च" (वा०) इति पञ्चमी] प्रतिनिवृत्तः,—प्रत्यागतः। रघुपतिः एषः,—रघुश्रेष्ठः रामभद्रः खल्वयम्।

अथेदानीं पूज्येष्वनुरागात् प्रवृत्तयोः कुमारयोः युद्धविरतिमुपवर्णयन्, शुभाशंसनपुरःसरं स्वकथामुपसंहरति, शब्दमिति।—महता गुणग्रामविभूषितेनेत्यर्थः, पुरुषेण पुंसा, रामेणेत्यर्थः, संविहितं प्रयुक्तं, समुच्चरितमित्यर्थः, [संवि-दधातेः प्रयोगात् अस्यावश्यकरणीयत्वम्, अकरणे च प्रत्यवायभूयिष्ठमावेदितमिति ज्ञेयम्] शब्दं रणात् युवां विरमतमित्येवं निषेधकं वचनं, निशम्य समाकर्ण्य, तद्गौरवात् तस्मिन् गुरौ रामे समधिकादरात्, रामवाक्ये समधिकश्रद्धावशात् इत्यर्थः, समुपसंहृतः सम्यक्तया परित्यक्तः, सम्प्रहारः समरव्यापारः येन तथाविधः, युद्धव्यवसायाद्विनिवृत्तः इत्यर्थः, लवः शान्तः प्रशमाश्रितः, चन्द्रकेतुश्च प्रणत एव प्रणामक्रियायां प्रवृत्त एव, अधुना, सुतसङ्गमनेन सुतयोः कुशलवयोः समागमेन, ताभ्यां सह सम्मेलनेनेत्यर्थः, राज्ञः रामस्य, कल्याणं शुभम्, अस्तु भवतु। [अत्र लवचन्द्रकेत्वोः युद्धकाङ्क्षिकक्रोधौत्सुक्यादेः प्रशमेन रामविषयकरतिभावस्योदयात् समाहितालङ्कारः]। वसन्ततिलकं वृत्तम्॥ ७॥

(थ) मध्यमाभ्यां पात्राभ्यां विद्याधरजायापतीभ्यां सम्प्रयोजितत्वेनास्य विष्कम्भकस्य शुद्धत्वं ज्ञेयम्; वृत्तानां समरव्यापाराणां वर्तिष्यमाणानाञ्च सुतसमागमरूपाणां कथांशानां सङ्क्षेपतयामाङ्कादावेव निर्दिष्टत्वात् अस्य तल्लक्षणाक्रान्तत्वम् इति, तदुक्तं दर्पणकृता—"वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः। सङ्क्षिप्तार्थस्तु विष्कम्भः आदावङ्कस्य दर्शितः। मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः। शुद्धः स्यात्—" इति।

[ ततः प्रविशति कुमारो लवः प्रणतश्चन्द्रकेतुश्च ] ।

रामः । [ पुष्पकादवतरन् ] ।—

दिनकरकुलचन्द्र ! चन्द्रकेतो !
सरभसमेहि दृढं परिष्वजस्व ।
तुहिनशकलशीतलैस्तवाङ्गैः
शममुपयातु ममापि चित्तदाहः ॥ ८ ॥

अथ वात्सल्यनिधिः भगवान् रामभद्रः पुष्पकविमानादवतीर्य्यैव पुरःप्रणतस्य चन्द्रकेतोः समाश्लेषेण सुचिरसीताविरहनिर्दग्धं स्वमानसं सुस्निग्धीकर्त्तुमभिप्रेत्य आह, दिनकरेति ।—दिनकरस्य सूर्य्यस्य, कुलं वंशः, तस्य चन्द्र इव चन्द्रसदृशः आह्लादकर इत्यर्थः, तत्सम्बोधने; हिमांशुः यथा सुधामयैः किरणैः प्रचण्डतापसन्तप्तानि जगन्ति सुस्निग्धानि करोति, तथा त्वमपि सुचिराऽऽधिसन्तप्तस्य वैवस्वतकुलस्य सन्तर्पयिता असीति भावः ; सूर्य्यवंशानन्दवर्द्धन ! इति फलितम् ; चन्द्रकेतो ! सरभसं रभसेन वेगेन सह वर्त्तमानं यथा तथा, सत्वरमिति यावत्, ( "रभसो वेगहर्षयोः" इति विश्वः ) एहि आगच्छ, दृढं कठोरं, निर्दयमिति यावत्, परिष्वजस्व समालिङ्ग, मामिति शेषः, तुहिनस्य तुषारस्य, यानि शकलानि खण्डानि, तद्वत् शीतलानि स्निग्धानि, सन्तापहारकाणीत्यर्थः तैः, तवाङ्गैः तव शरीरैः, चन्द्रसाम्य सूचनार्थं तुहिनशकलस्वायमानत्वमङ्गानामुक्तमिति ज्ञेयम् ; पुत्रिणो हि तथैव पुत्राङ्गसंश्लेषजसुखमनुभवन्तीत्याशयात् ; ममापि चित्तदाहः चित्तस्य हृदयस्य, दाहः सन्तापः ; सुदीर्घसीताविरहकृतः इति भावः ; शमं शान्तिम्, उपयातु प्राप्नोतु, साकल्येन निर्वात्वित्यर्थः, येन सीताविरहजदुःखस्य कुत्रापि शान्तिर्न लब्धा, तादृशस्य चिराक्रान्तसन्तप्तस्यापि इत्यपिकारार्थः ; यद्वा—न केवलं मम त्वं चित्तदाहहारकोऽसि, अपि तु सर्व्वस्यैवेत्यपिकारार्थः, तथाहि, यतस्त्वं वैवस्वतकुलसन्तापशामकोऽसि, अत एव नूनं तदीयाङ्गसंस्पर्शेन मम सीताविरहनिबन्धनः चिरंतनश्च सन्तापः सर्व्वथैवापनीतः भविष्यतीति निगूढ़ाशयः ; यद्वा—अपि भिन्नक्रमे, चित्तदाहोऽपीत्यन्वयः ; यथा तवाङ्गसंस्पर्शेन शरीरदाहः सर्व्वथैव निर्वाणतामधिगच्छति, चित्तदाहोऽपि तथैव उपशाम्यतु, इत्यपिकारस्याभ्यपर्य्यवसितार्थः । [ अत्र शरीरमात्रसन्तापहारकात् उपमानभूतात् चन्द्रात् उपमेयभूतस्य चन्द्रकेतोः चित्तशरीरोभयदाहप्रशामकतया आधिक्यप्रतीतेः व्यतिरेकालङ्कारः, तद्गतश्चौपम्यमत्र समासगततया आर्थम् इति ज्ञेयम्, अपिच दिनकरस्य कुले चन्द्रोदयस्यायोगेना-

चन्द्रकेतुः। अभिवादये।

रामः। [ उत्थाप्य सस्नेहास्रं परिष्वज्य ]। अपि नाम कुशलं तव दिव्यास्त्रधरदेहस्य ? ( द )

चन्द्रकेतुः। कुशलमत्यद्भुतक्रियस्य प्रियदर्शनस्य लवस्य लाभाभ्युदयेन। तद्विज्ञापयामि, मामिव अविशेषेण मत्तः श्लिग्धतरेण चक्षुषा पश्यतु अमुं महावीरप्रकाण्डं तातः। ( ध )

---

हेतुकस्य तत्र तत्सम्बन्धस्योत्कीर्त्तनात् विभावनाऽलङ्कारः प्रोक्तव्यतिरेकेणाङ्गाङ्गिभावेतया संस्थितेः सङ्कीर्य्यते, किञ्च, "चन्द्र चन्द्र" इत्यत्र मुख्यतरस्य प्रातिपदिकांशस्यैत्यधर्म्मिरूपस्य चन्द्रस्य अभिन्नार्थत्वात् लाटानुप्रासालङ्कारः प्रोक्ताभ्यामर्थालङ्काराभ्यां निरपेक्षतया संस्थितेः संसृज्यते ]। पुष्पिताग्रा वृत्तम् ॥ ८ ॥

( द ) उत्थाप्य—प्रणतं चन्द्रकेतुमुत्तोल्येत्यर्थः। सस्नेहास्रं—स्नेहजनितं—वात्सल्यातिरेकात् समुद्भूतं, यत् अस्रम्—अश्रु, नेत्रसलिलमित्यर्थः, तेन सह वर्त्तमानं यथा स्यात् तथा ; यद्वा—स्नेहेन सह वर्त्तमानं यत् तत् सस्नेहं, तथाभूतम् अस्रं यस्मिन् कर्म्मणि तद्यथा स्यात्तथा, वात्सल्याविर्भावविवशहृदयतया अनियतधाराभिः आनन्दजाश्रुविमोक्षपुरःसरमित्यर्थः। परिष्वज्य—सुदृढ़ समालिङ्ग्य। अपि—प्रश्ने। नाम—सम्भावनायाम्। दिव्येति।—धरतीति धरः, [ पचाद्यच् ] दिव्यानि यानि अस्त्राणि, तेषां धरः,—धारकः, देहः यस्य तथोक्तस्य, अलौकिकास्त्रप्रयोगशोभिशरीरस्येत्यर्थः। तव कुशलम् ?—शुभं ते ? इत्याशीर्व्वचनम्। [ "चतुर्थी चाशिष्य—" ( २।३।७३ पा० ) इति पाक्षिकी षष्ठी ]।

( ध ) अत्यद्भुता—अलौकिकी, क्रिया—युद्धव्यापारः यस्य तस्य, एकेन बालकेन अनेकैः वीरैः सह युगपत् युद्धकरणात् अतिविस्मयावहसङ्ग्रामव्यापारस्येत्यर्थः। प्रियं—प्रीतिकरं, दर्शनं—वीक्षणं यस्य तस्य, निसर्गसौम्यमूर्त्तेरित्यर्थः। लाभः एव—प्राप्तिरेव, एतेन सह समागम एवेत्यर्थः, अभ्युदयः,—सम्पत् तेन। कुशलं वर्त्तते ममेति शेषः ; सौभाग्यवशात् अमुं मित्रतया सम्प्राप्य अहमात्मानं कुशलिनं मन्ये इति भावः। तत्—अत एव। विज्ञापयामि—प्रार्थये। मत्तः अविशेषेण—मत्तः अपृथक्तया, मदनधिकतया इत्यर्थो वा। [ मत्तः इति पञ्चम्यास्तसिल् "पञ्चमी विभक्तिः" ( २।३।४२ पा० ) इति पञ्चमी। अविशेषेणेति "प्रकृत्यादिभ्य उपसंख्यानम्" (वा०) इति तृतीया ]। श्लिग्धतरेण—निर्वृतिमयप्रेम्णा, स्नेहप्रचुरेणेत्यर्थः।

रामः। [ सर्वं निरूप्य ]। दिष्ट्या अतिकल्याणाकृतिरयं वयस्यो वत्सस्य। (न)—

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशो( षो )स्य गुप्त्यै।

चक्षुषा वीक्षणेन, दृष्टिपातेनेत्यर्थः। ("मामिव अविशेषेण मत्तः शिवतरेण चक्षुषा" इत्यत्र "मामिव विशेषेण वा मत्तः शिवेन चक्षुषा" इति पाठान्तरम्)। महावीरप्रकाण्डं—महान्तः ये वीराः, तेषु प्रकाण्डं—प्रधानं, महावीरश्रेष्ठमित्यर्थः। [ निर्द्धारे सप्तमीसमासः। यद्वा—प्रशस्तो महावीरः इत्यर्थकविग्रहे महावीरप्रकाण्डं "प्रशंसावचनैश्च" (२।१।६६ पा०) इति नित्यसमासः। ननु प्रकाण्डशब्दस्य अमरमते नित्यनपुंसकत्वेन "अमुम्" इति विशेषणस्य "अदः" इत्येवमेव भवितुं युक्तम्, एवञ्चास्यानुशासनहीनतया अत्र च्युतसंस्कारताऽऽख्यदोष इति; तथाहि अमरः,—"मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ" इति; अत एव अन्येन लिङ्गेन सामानाधिकरण्येऽपि मावेनास्य स्वलिङ्गता न परित्यक्ता; तथाहि—"ऐच्छिष्ट विबुधैर्मुजप्रकाण्डम्" इति चेन्न; मेदिनीकारेण तु अस्य पुंस्त्वस्यापि उद्घोषितत्वात्, तथाहि—"प्रकाण्डो न स्त्री विटपे मूलशाखान्तरे तरोः। शस्ते" इति। एवं रभसेनापि "अस्त्री प्रकाण्डो विटपे तरुस्कन्धप्रशस्तयोः।" इति। शाश्वतस्तु केवलं पुंस्त्वमेवास्याभिहितवान्, तथाहि—"प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः।" इति। अत एव भट्टिना "विरराज प्रकाण्डकौ" इत्युक्तमिति दिक्। अन्ये तु अमरमतेऽपि अमुमिति पदं विशेष्यतया स्वीकृत्य महावीरप्रकाण्डस्य विशेषणतया परिगृह्य प्रोक्तदोषोद्धार इति वदन्ति, तथाऽपि विशेषणस्य सर्व्वनाम्नः विशेष्यपदसन्निधाने विशेष्यविधया भानं नितान्तमेवासङ्गतमिति मन्यामहे।

(न) अतीति।—अतिकल्याणी—अतीवशुभावहा, आकृतिः,—मूर्त्तिः यस्य सः, निरतिशयमङ्गलमूर्त्तिरित्यर्थः।

बालस्य लवस्य मङ्गलमूर्त्तिमयत्वं विशिष्योपपादयति, त्रातुमिति।—लोकान् जगन्ति, त्रातुं रक्षितुं, कायवान् शरीरी, शरीरिरूपेणेत्यर्थः, परिणतः अवस्थान्तरं गतः, भयेभ्यः लोकान् संरक्षितुं कृतमूर्त्तिपरिग्रहः इत्यर्थः, अस्त्रवेद इव धनुर्वेद इव, धनुर्विद्या लोकसंरक्षणार्थमेवेदानीं मूर्त्तिं परिगृह्य समुदिता इवेत्युत्प्रेक्षा; तथा ब्रह्म एव वेद एव, ब्राह्मण एव वा, कोषः रत्नौघः, तस्य गुप्त्यै रक्षणाय; यद्वा—ब्रह्म एव कोषः रत्नागारः, तस्य गुप्त्यै, वेदार्थराशिरूपरत्नोद्धरणार्थे, वेदरूपामूल्य-

सामर्थ्यानामिव समुदयः सञ्चयो वा गुणानाम्
आविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ ९ ॥

लवः। अहो! पुण्यानुभावदर्शनोऽयं (प) महापुरुषः।—

आश्वासस्नेहभक्तीनामेकमालम्बनं महत्।
प्रकृष्टस्येव धर्मस्य प्रसादो मूर्त्तिसुन्दरः ॥ १० ॥

रत्नभाण्डाररक्षणाय वा, तनुं शरीरं, श्रितः आश्रितः, अङ्गीकृत इत्यर्थः, क्षात्रः क्षत्रियजातिसम्बन्धी, धर्मः इव शौर्य्यादिगुणगणः इव, वेदरूपरत्नभाण्डाराणां ब्राह्मणानां ज्ञातकाणां वा तदुपघातकपामरजनेभ्यः रक्षार्थे एव गृहीतविग्रहः क्षत्रियत्वजातिरेवायमित्युत्प्रेक्षा ; तथा सामर्थ्यानां वीरधर्म्माणां विक्रमाणां, समुदयः इव राशिरिव, गुणानां दयादाक्षिण्यादीनां, सञ्चयो वा समवाय इव, वाशब्दश्चात्र इवार्थे, ("इववत् वायथाशब्दौ" इत्युक्तेः) तथा आविर्भूय मूर्त्तिमाश्रित्य, स्थितः विद्यमानः, मूर्त्तिमानित्यर्थः, जगतां त्रिलोक्याः, पुण्यानां विधिवदनुष्ठितशुभावह-कर्म्मफलभूतानां धर्म्माणां, निर्म्माणानि सृष्टयः. तेषाम्, अत्र भावप्रधाननिर्द्देशात् निर्म्मितपुण्यानामित्यर्थः, कृदभिहितो भावः द्रव्यवत्प्रकाशते इति न्यायात ; राशिरिव सङ्घात इव, "अयम्" इति पूर्वाङ्कस्थेनास्यान्वयः ; जगज्जनैः अनुष्ठितानां शुभावह-कर्म्मणां यानि पुण्यफलानि, तान्येवैकत्र सङ्घीभूय समुदित इवेत्युत्प्रेक्षा, प्रागुपा-त्तोत्प्रेक्षाद्वयेनास्य निरतिशयवीर्य्यशालित्वम् अप्रधृष्यत्वञ्च, अन्तिमोत्प्रेक्षाद्वयेन च गुणग्रामविभूषितत्वं धार्म्मिकत्वञ्च प्रतिपादितमिति ज्ञेयम्। [अत्रोपमेयभूतस्य पूर्वाङ्कस्थेदंशब्दप्रतिपाद्यस्य लवस्य उपमानभूतास्त्ववेद क्षात्रधर्म्म-सामर्थ्यसमुदय-गुण-सञ्चय पुण्यनिर्म्माणराशिरूपत्वेन सम्भावनात् पञ्चोत्प्रेक्षाऽलङ्काराः, सजातीयानाञ्चैतासां परस्परसापेक्षतया संस्थितेः सङ्करः]। मन्दाक्रान्ता वृत्तम् ॥ ९ ॥

(प) पुण्येति।—पुण्यः,—पवित्रः अनुभावः,—तेजोविशेषः, दर्शनम्—अव-लोकनञ्च यस्य सः, पवित्रतेजःपुञ्जधरस्यास्य महापुरुषस्य दर्शनेन सर्वेषामेव पुण्यं सञ्जायते इति भावः।

पुण्यमूर्त्तित्वमेव विशिष्य उपपादयति. आश्वासेति।—आश्वासः समाश्वासनं, विपन्नेभ्यः अभयदानमिति यावत्, स्नेहः वात्सल्यं, भक्तिः पूज्येषु अनुरागः, तासामेकम् अद्वितीयम्, अप्रतिममिति यावत्, महत् सर्व्वतोऽधिकम्, आलम्बनम् आश्रयः, पात्रमित्यर्थः, अयं महापुरुषः इति पूर्वेणान्वयः, अस्मिन् महापुरुषे दयावात्सल्यभक्तिप्रभृतयः गुणनिचयाः पूर्णतया विद्यन्ते इति भावः ; निसर्ग-

आश्चर्य्यम् !!—

विरोधो विश्रान्तः, प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति, विनयः प्रह्वयति माम्।
झटित्यस्मिन् दृष्टे किमपि परवानस्मि, यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥११॥

सौम्येनाकारेण महापुरुषाऽयं दर्शकानां मनांसि प्रीत्यार्द्राणि भक्तिविनम्राणि च कुर्वन् आश्वसानि करोति, विपन्नानामाश्रयप्रदः, आश्रितानाञ्च परिरक्षकः, गुरुजन-सेवकश्चायमिति निसर्गसौम्यमूर्त्तिरेवास्य सूचयतीति वा तात्पर्य्यम्। अतः, प्रकृष्टस्य सर्व्वोत्तमस्य, धर्म्मस्य पुण्यस्य, मूर्त्त्या शरीरेण, सञ्चरते भ्रमति यः तादृशः; मूर्त्तिमानिति भावः; प्रसादः इव प्रसन्नभावः इव, अनुग्रह इव इत्युत्प्रेक्षा, स्थित इति शेषः; शरीरी प्रसन्नः प्रकृष्टः धर्म्म इवायमिति भावः; विशुद्धधर्म्मफलं वा शरीरं स्वीकृत्यैवात्र समुदितमिवेति तात्पर्य्यम्। [अत्र अमुष्य महापुरुषस्य प्रकृतस्य धर्म्मप्रसादरूपतया सम्भावनात् उत्प्रेक्षाऽलङ्कारः] ॥ १० ॥

अथ प्रोक्तोत्प्रेक्षितार्थे विनिगमनां प्रदर्शयितुं तत्फलं विशिष्य निरूपयति, विरोध इति।—अस्मिन् महापुरुषे, दृष्टे नयनपथमापतिते सति, झटिति सहसा, विरोधः वैरं, विद्वेषः इति यावत्, विश्रान्तः निवृत्तः, दूरीभूतः अभूदित्यर्थः, प्रत्युत निर्वृत्या आनन्देन, घनः सान्द्रः, प्रीतिपूर्ण इति यावत्, रसः अनुरागः, प्रसरति आविर्भवति, तत् तथाविधम्, औद्धत्यं गर्व्वावेशजनितं चापल्यं, क्वापि कुत्रापि, व्रजति गच्छति, प्रलीयते इत्यर्थः, विनयः प्रश्रयः, विनीतत्वमित्यर्थः, गुरुजनसन्निधौ स्वापकर्ष-विधायिका नम्रतेति यावत्, मां प्रह्वयति अवनमयति; मां भक्तिविनम्रमूर्त्तिं करोतीति भावः; तेन हि, किमपि कुतोऽपि कारणात्, अनिर्व्वचनीय इति वा, परवान् पराधीनः, अस्मि भवामि; महात्मानममुं दृष्ट्वा अनिर्देश्यकारणेनाहमिदानीं मात्मनि प्रभवामि इति भावः; यद्वा अथवा, तीर्थानामिव पुण्यक्षेत्राणामिव, महतां महानुभवानां, कोऽपि अनिर्व्वचनीयस्वरूपः, महार्घः बहुमूल्यः, सामान्यजनैरुपलब्धु-मशक्य इत्यर्थः, महनीयः इति यावत्, अतिशयः उत्कर्षः, महिमातिरेक इति यावत्, हि खलु; अलौकिकमहिम्नां महीयसां महत्त्वातिरेकः तादृशाम् अनिर्व्वचनीयः एव, यस्मात् विरोधिनामपि विरोधभावः प्रशमं प्रशममुपैति, प्रत्युत तानन्तरा च शान्तिरस-प्रवाहः प्रवहति इति भावः;। [अत्र महापुरुषस्य रामस्य महत्त्वप्रतिपादने प्रकृतस्मिन् विरोधोपशमरूपे कारणे सत्यपि निर्वृतिघनरसप्रसारादीनां इत्यन्तराणा-

रामः। तत् किमेकपद एव दुःखविश्रामं ददाति उपस्नेहयति च कुतोऽपि निमित्तादन्तरात्मानम्, अथवा स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत्। (फ)—

व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः
न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।

---

मुपादानात् समुच्चयालङ्कारः, तथा महत्सु च तीर्थानामवैधर्म्यसाम्योक्तेरुपमाऽलङ्कारः, किञ्च महापुरुषमहिमातिशयरूपेण सामान्येनार्थेन विरोधोपशमादिरूपस्य विशेषार्थस्य सोपपत्तिकत्वकरणादर्थान्तरन्यासालङ्कारश्च, एतेषाञ्च बयाणामन्योऽन्याङ्गाङ्गिभावतया संस्थितेः सङ्करः]। शिखरिणी वृत्तम् ॥ ११ ॥

(फ) तदिति।—तत्—एतदित्यर्थः। किं—कथम्? एकपद एव—सद्य एव, दर्शनसमकालमेवेति यावत्। ("तत्क्षणैकपदं तुल्ये सद्यः सपदि च स्मृते।" इति हलायुधः) दुःखानां—सीताविरहजनितानां शोकसन्ततीनां, विश्रामम्—उपशमम्। ददाति—अर्पयति, मह्यमिति शेषः; संपद्येव मम साकल्येन दुःखोपघातं विदधातीति भावः। तथा, कुतोऽपि अविज्ञातात्, निर्व्वक्तुमशक्यादित्यर्थः। निमित्तात्—कारणात्। अन्तरात्मानम्—अन्तःकरणं, मानसमित्यर्थः, ममेति शेषः। उपस्नेहयति—आर्द्रं करोति, वात्सल्यवशं विदधातीत्यर्थः, बालोऽयमिति शेषः। अत्र यत इति पदमध्याहार्य्यम्; तेन च, दुःखविश्रामं ददाति, अन्तरात्मानमुपस्नेहयति च इति यत् तदेतत् कथमित्यर्थः। अथ स्नेहः अविज्ञातकारणादपि जायते इति पक्षान्तरमाह, अथवेति।—अथवा—पक्षान्तरे। स्नेहश्च—प्रणयः अपि, चकारः समुच्चये। व्यपेक्षया—अपेक्षया, सम्बन्धेनेति यावत्, सह वर्त्तते यः सः सव्यपेक्षः, —ससम्बन्धः, निमित्तेन—कारणेन, सव्यपेक्षः,—ससम्बन्धः, कारणसापेक्ष इत्यर्थः, न ह्ययं कारणनिरपेक्ष इति यावत्; कुतश्चित् कारणादेव कस्यचित् कस्मिंश्चित् स्नेहः सञ्जायते इति भावः। इति—एतद्वचनम्। विप्रतिषिद्धं—विरुद्धम्, अप्रामाणिकमिति यावत्; कस्यचित् जनस्य कस्मिंश्चित् जने स्नेहप्रहर्त्तिरहेतुकैव दृश्यते, सा हि तत्र किमपि बाह्यं निमित्तान्तरं नापेक्षते इत्याशयः।

स्नेहस्य बाह्यकारणानपेक्षित्वम् अर्थान्तरन्यासेन सोपपत्तिकं करोति, व्यतिषजतीति।—आन्तरः अन्तर्वर्त्ती, कोऽपि अविज्ञातः, अनिर्वाच्य इत्यर्थः, हेतुः कारणं, किमपि अबाह्यं निमित्तमित्यर्थः, पदार्थान् वस्तूनि, व्यतिषजति स्नेहसूत्रेण

विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ १२ ॥

लवः । चन्द्रकेतो ! क एते ? ( ब )

चन्द्रकेतुः । प्रियवयस्य ! ननु तातपादा एते । ( भ )

लवः । ममापि तर्हि धर्मतस्तथैव, यतः प्रियवयस्य इत्यात्थ, किन्तु चत्वारः खलु भवतामेवंव्यपदेशभागिनः तत्र-भवन्तो रामायणकथापुरुषाः, तद्विशेषं ब्रूहि । ( म )

परस्परं निबध्नाति, प्रीतयः स्नेहाः, बहिरुपाधीन् बाह्यधर्म्मान्, जन्यजनकभावदाम्पत्यादीन् सम्बन्धानित्यर्थः, न खलु नैव हि, संश्रयन्ते अवलम्बन्ते, बाह्यधर्म्मानाश्रित्य नैव प्रवर्त्तन्ते स्नेहा इति भावः । एतदेव समर्थयते, विकसतीति ।—हि यतः, पुण्डरीकं पद्मं, पतङ्गस्य सूर्य्यस्य ( "पतङ्गौ पक्षिसूर्य्यौ च" इत्यमरः ) उदये आविर्भावे, प्रकाशे सतीत्यर्थः, विकसति प्रस्फुटति, चन्द्रकान्तश्च तदाख्यमणिविशेषोऽपि, हिमरश्मौ तुहिनकिरणे, चन्द्रे इत्यर्थः, उद्गते उदिते सति, द्रवति निष्यन्दते, जललवं विमुञ्चतीत्यर्थः ; यथा हि निखिलजगत्तापकृत्तपनोदयसमकालमेव परमकोमलवपूंषि अपि पद्मानि हसन्ति, चन्द्रोदयमात्रत एव अतिकठिनश्चन्द्रकान्तमणिः अपि द्रवीभवति, तत्र किमपि बाह्यं कारणं नावलोक्यते, आन्तरन्तु किञ्चिदस्तीति अनुमीयते, तथा ममापि बहिःसम्पर्के असत्त्वेऽपि कुमारलवावलोकनमात्रतः चित्तद्रवीभवने किमपि अव्यक्तमान्तरं निमित्तमस्तीति सन्देह्मि इति भावः । [ अत्र पद्मविकाश-चन्द्रकान्तद्रवीभावरूपविशेषार्थद्वयेन आन्तरपदार्थव्यतिषङ्गभावरूपसामान्यार्थस्य सोपपत्तिकत्वकरणात् अर्थान्तरन्यासावलङ्कारौ, तयोरन्योऽन्यसापेक्षतया संस्थितेः सजातीयसङ्करः ]। मालिनी वृत्तम् ॥ १२ ॥

( ब ) के एते—किमाख्योऽयं महापुरुष इत्यर्थः । [ गौरवात् बहुत्वम् ]।

( भ ) तातपादाः,—पूज्यतमाः ज्येष्ठपितरः इत्यर्थः ; पादशब्दः पूज्यतमत्वातिशयव्यञ्जकः । [ अत्रापि बहुत्वं गौरवात ]।

( म ) तर्हि—तदा, तव पितृव्यत्वमीयत्वे इत्यर्थः । ममापि—न केवलं तव इत्यपिशब्दार्थः । धर्मतः,—धर्म्मेण, लोकाचारानुसारेणेत्यर्थः । ( "धर्म्माः पुण्ययमन्यायस्वभावाचारसोमपाः ।" इत्यमरः । "प्रकृत्यादिभ्य उपसंख्यानम्" ( वा० ) इति तृतीया, ततस्तसिल् ) । तथैव—तातपादा एवेत्यर्थः । यतः,—यस्मात्

चन्द्रकेतुः। ननु ज्येष्ठतातपादा इति अवेहि। (य)

लवः। [सोल्लासम्]। कथं रघुनाथ एषः!! दिष्ट्या सुप्रभातमद्य, यदयं देवो दृष्टः। [सविनयकौतुकं निर्वर्ण्य]। तात! प्राचेतसान्तेवासी लवोऽभिवादयते। (र)

रामः। [सस्नेहम्]। आयुष्मन्! एह्येहि। [सस्नेहं परिष्वज्य]। अयि वत्स! कृतं कृतमतिविनयेन, अनेकवारमपरिश्लथं परिष्वजस्व। (ल)—

---

कारणात्। प्रियवयस्य इति—प्रियसख इत्येवम्। आत्थ—ब्रवीषि, मामिति शेषः; भवता सह सौहार्दात् भवत्सम्बन्धीयाः सर्वे एवेदानीं मत्सम्बन्धाः सञ्जाताः इति भावः। भवतां—युष्माकम्। एवम्—इत्थं, व्यपदेशं—समाख्यां, तातपादरूपमित्यर्थः, भजन्ते—आश्रयन्ति ये तथोक्ताः, [भजतः "सम्पृचानु—" (३।२।१४२ पा०) इति घिनुण्] तातपादपदवाच्या इत्यर्थः। तत्रभवन्तः,—पूज्याः। ("त्रिषु तत्रभवानत्रभवान् पूज्यश्च तादृशः।" इति कोषः) रामायणस्य कथा—इतिवृत्तभागः, तस्याः पुरुषाः,—नायकाः। तत्—तस्मात्, तेषां चतुष्टयत्वादित्यर्थः। विशेषम्—इतरव्यावर्त्तकं, नामधेयमित्यर्थः। ब्रूहि—कथय; रामायणकथासु चत्वारः एव भवतां तातपादाः महापुरुषाः श्रूयन्ते, तेन हि तेषु कतमोऽयं भवतीति सविशेषं कथयेति भावः।

(य) ननु—भो लव!। ज्येष्ठतातपादाः,—ज्येष्ठपितरः, भगवान् रामभद्रः इत्यर्थः। इति—इदम्। अवेहि—जानीहि।

(र) सोल्लासं—सहर्षम्, आहेति शेषः। सुप्रभातं—शोभनं दिनमुखं, समुदितमिति शेषः। यत्—यस्मात्, सौभाग्येन पुण्यदिवससमुदयादिति यावत्। देवः,—भगवान् रघुपतिः। दृष्टः,—नयनपथमायातः। सविनयकौतुकं—सप्रश्रयं सकौतूहलञ्चेत्यर्थः। निर्वर्ण्य—निरीक्ष्य। प्राचेतसान्तेवासी—वाल्मीकिशिष्यः। अभिवादयते—प्रणमति, भवन्तमिति शेषः।

(ल) सस्नेहं—सवात्सल्यम, आहेति शेषः। आयुष्मन्!—दीर्घजीविन्!। एहि—आगच्छ। [आदरातिरेके द्विर्भावः] परिष्वज्य—गाढमाश्लिष्य। अयि—कोमलसम्बोधने। वत्स!—निरतिशयकल्याणास्पद!। अतिविनयेन—अत्यधिकप्रश्रयप्रदर्शनेन। कृतम्—अलम्, ("कृतं युगेऽलमर्थेऽपि विहिते हिंसिते त्रिषु।" इति मेदिनी) अतिविनयेन साध्यं नास्तीत्यर्थः। [गम्यमानक्रियायोगात् करणे तृतीया, अन्ये तु वारणार्थकमव्य-

परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः।
नन्दयति चन्द्रचन्दननिष्यन्दजडस्तव स्पर्शः॥ १३॥

लवः। [स्वगतम्]। ईदृशोऽस्मादृशान् प्रति अमीषामकारणस्नेहः, मया पुनरेभ्य एव अभिद्रुग्धमज्ञेन, यदायुधपरिग्रहं यावत् अत्यारूढो दुर्योगः। [प्रकाशम्]। मृष्यन्तु इदानीं लवस्य बालिशतां तातपादाः। (व)

---

योगात् तृतीया इत्याहु'। सम्भ्रमे द्विर्वचनम्]। अनेकवारं—भृशं, पुनःपुनरित्यर्थः। अपरिश्लथ—सुदृढम्, अशिथिलमिति यावत्। परिष्वजस्व—आलिङ्ग; सीताविरहज-तापोपशमाय ते सुकोमलाङ्गैः मां निर्द्दयमाश्लिष्य इति भावः।

सुकुमाराङ्गसंश्लेषस्य निरतिशयसन्तापहरत्वं प्रतिपादयति, परिणतेति।—परिणतं सुविकसितं, कठोरं प्राप्तपूर्णावस्थं, सर्वाङ्गसम्पूर्णमिति यावत, यत् पुष्करं पद्मं, तस्य गर्भच्छद इव अभ्यन्तरगतं दलमिव, पीनः स्थूलः, कोमल इत्यर्थः, मसृणः श्लक्ष्णः, सुकुमारः अभिनवः, प्रफुल्लकमलप्रसूनान्तर्गतपलाशसदृशसुकोमल इत्यर्थः, ["उपमानानि सामान्यवचनैः" (२।१।५५ पा०) इति उपमानसमासः] चन्द्रः हिमकरः, चन्दनस्य च निष्यन्दः द्रव इत्यर्थः; यद्वा—चन्द्रः कर्पूरः, चन्दनस्य च रसः, तद्वत जड़ः शीतलः, तव स्पर्शः त्वच्छरीरस्पर्शः, त्वदङ्गसंश्लेषजं सुखमिति यावत, नन्दयति प्रीणयति, मामिति शेषः; मम विरहतापोपशान्तये हि तव निरवद्यं कोमलमेतदङ्गं सर्व्वथैव प्रभवति, तेन निर्भरं मामालिङ्गेति प्रार्थये इत्याशयः। [अत्र समासगतत्वेन आर्थी उपमाऽलङ्कारः]। आर्य्या जातिः॥ १३॥

(व) ईदृशः—एतादृशः, अनिर्व्वचनीय इत्यर्थः। अस्मादृशान् प्रति—मां प्रति इति यावत्। अमीषां—रघुपतिप्रमुखाणामेषाम्। अकारणस्नेहः,—अहेतुकवात्सल्यम्; सम्बन्धविरहितेऽपि मयि एते महापुरुषाः निरतिशयं स्निह्यन्ति, अहो! महानुभवत्वमेतेषामिति भावः। अज्ञेन—अतिमूढ़ेन। एभ्यः एव—एतादृशेभ्यः दयावात्सल्यनिधिभ्यः एवेति यावत्। ["क्रुधद्रुहोरुपसृष्टयोः कर्म्म" (१।४।३८ पा०) इत्यनुशासनेन सोपसर्गयोः क्रुधद्रुहोः यं प्रति कोपस्तत्कारकस्य कर्म्मसंज्ञत्वविधानात्, अत्र तदुल्लङ्घनेन च्युतसंस्कारताऽऽख्यदोषः। यदि हि अभेरत्र उपसर्गत्वं नाङ्गीक्रियते, "वीप्सायां—वृक्षं वृक्षं प्रति पर्य्यनु वा सिञ्चति; अत्रोपसर्गत्वाभावात् न षत्वम्" इति दीक्षितोक्तिवत्, तदा द्रुहेरुपसृष्टत्वाभावेन "क्रुधद्रुहेर्ष्या—" (१।४।३७ पा०) इति

रामः। किमपराद्धं वत्सेन ?

चन्द्रकेतुः। अश्वानुयात्रिकेभ्यः तातप्रतापाविष्करणमुपश्रुत्य वीरायितम् अनेन। (ग)

रामः। ननु अयमलङ्कारः क्षत्रस्य। (घ)—

---

चतुर्थी स्यात्। तथाच न प्रोक्तदोषावसर इति ध्येयम्। अन्ये तु "क्रिया—" (२।३।१४ पा०) इति चतुर्थीमाहुः, तत्तु न सम्यक्, प्रोक्तकर्मत्वविधानस्यापवादविषयत्वेन बलीयस्त्वादिति]। अभिद्रुग्धं—वैरायितं, जिघांसितमित्यर्थः; स्नेहप्रवणेषु महानुभवेष्वेतेषु निरर्थकं विरोधित्वमनुष्ठितमिति भावः। [अभिपूर्व्वकात् द्रुह्यतेः भावे क्तः]। यत्—यतः। आयुधस्य—अस्त्रस्य, परिग्रहः,—स्वीकारः, ग्रहणमित्यर्थः, तं, यावत्—अस्त्रग्रहणमारभ्येत्यर्थः। [अत्र यावच्छब्दयोगात् द्वितीया। "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे।" इत्यमरः] अत्यारूढः,—प्रकर्षं गतः, प्रबलीभूत इत्यर्थः, दुर्य्योगः,—विवादः, द्रोह इति यावत्। मृष्यन्तु—क्षाम्यन्तु। बालिशतां—मूर्खताम्, अविमृश्यकारितामिति यावत्। तातपादाः,—पितरः, पूज्यतमाः भवन्त इत्यर्थः; पितृस्थानीयेषु पितृषु वा भवत्सु मोहात् मया जिघांसुना यदतीव विगर्हितं वैरमनुष्ठितं, तत् भवद्भिः महानुभवैः स्वकारुण्यगुणेन क्षन्तव्यमिति भावः।

(ग) अश्वेति।—अश्वस्य—अश्वमेधीयस्य वाजिनः, अनुयात्रिकाः,—अनुचराः, रक्षका इत्यर्थः, तेभ्यः। [अनु पश्चात्, यात्रा यानं, प्रयोजनमेषामित्यर्थे, "प्रयोजनम्" (५।१।१०९ पा०) इति ठञ्। अपादाने पञ्चमी। अपरे तु—"श्रुत्यर्थानां श्रावयिता" इति पञ्चमी इत्याहुः] तातस्य—पितृस्थानीयस्य भवतः, प्रतापस्य—प्रभावस्य, आविष्करणं—प्रख्यापनं, समन्तादुद्घोषणमिति यावत्। उपश्रुत्य—आकर्ण्य। वीरायितं—वीरेणेवाचरितम्; वीरा यथा परगुणप्रकर्षं विसोढुमशक्नुवन्तः स्वस्य ततोऽधिकगुणवत्तामावेदयितुं तद्गुणोपघातका भवन्ति, तथैवासावपि भवतो वीरत्वख्यातिं श्रोतुमपारयन्नेव विग्रहव्यापारेण तवान्तरायः सञ्जातः इति भावः। [वीरशब्दादाचारार्थे "कर्तुः क्यङ् सलोपश्च" (३।१।११ पा०) इति क्यङि भावे क्तः]।

(घ) ननु—अवधारणे। अयमलङ्कारः,—इदं वीरत्वप्रकटनं भूषणमेव, न तु दूषणमिति भावः। क्षत्रस्य—क्षत्रियजातेरित्यर्थः; पौरुषाविष्करणं हि क्षत्रियजातेः न दोषावहकमिति भावः। ब्रह्मचारिणि अपि मौर्व्वीमेखलादिदर्शनात् क्षत्रियत्वमवधार्य्यैवमुक्तमिति ज्ञेयम्।

न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयग्रावा निकृत इव तेजांसि वमति ? ॥१४॥

तेजस्विनामन्यतेजोऽसहमानत्वं प्रश्नस्य तस्य स्वाभाविकत्वमेवैतदित्युपपादयति, नेति ।—तेजस्वी वीरः, अपरेषाम् अन्येषां, प्रसृतं समन्तादभिव्याप्तं, प्रदीप्तमित्यर्थः, सर्व्वतोविसारितया सर्वेषामेवाभिभविष्ट इति यावत्, तेजः प्रभावं, न प्रसहते न मर्षयति, न क्षमते इत्यर्थः ; प्रत्युत तदभिभवितुमेव उद्युङ्क्ते इत्याशयः । किं तर्हि स अन्यविद्वेष्टा ? तत्रेत्याह, स इति ।—सः असहनमित्यर्थः, [ विधेय-प्राधान्यात् पुंस्त्वम् ] तस्य तेजस्विनः, प्रकृतिनियतत्वात् स्वभावेन नियन्त्रितत्वात्, निसर्गसिद्धत्वादिति यावत् ; स्वभाववशादेव सञ्जायमानत्वादिति भावः ; अकृतकः अकृत्रिमः, अविकृत इति यावत्, स्वः स्वकीयः, भावः धर्म्मः ; न ह्ययमीर्ष्यया असूयया वा परेषां तेजसामुपरोद्धेति भावः । एतदेव सयुक्तिकं सोपपत्तीकरोति, मयूखै-रिति ।—देवः द्युतिमान्, दिनकरः दिवाकरः, सूर्य्य इत्यर्थः, यदि चेत्, मयूखैः किरणैः, अश्रान्तम् अविश्रमम्, अविरतमिति यावत्, तपति सन्तापं ददाति, जगत्ताप-करान् किरणान् समन्तात् विकिरति इत्यर्थः, तर्हीति शेषः, आग्नेयग्रावा वह्न्युत्पादक शिलाविशेषः, सूर्य्यकान्तमणिरिति यावत्, निकृत इव परिभूत इव ; जगद्धुत्तापकर-णावसरे आग्नेयग्राव्णामपि सन्तापकत्वादित्याशयः ; तेजांसि अग्नीन्, किं कथं, वमति ? उद्गिरति ?, विसृजतीत्यर्थः ; न ह्ययं सूर्य्यकान्तमणिः सूर्य्यतेजोभिरभितप्यमान एव वह्निज्वालाम् विमुञ्चति, किन्तु स्वभावादेव तस्मात् वह्निराविर्भवति इति भावः ; सूर्य्यसम्पर्केण वह्निवज्ज्वलनं सूर्य्यकान्तमणेः प्रसिद्धमेव । अचेतनः मणिरपि यदि सूर्य्यप्रभावमसहमानः तत्तेजः पराभवितुं स्वस्मात् वह्निशिखाः समन्तात् विस्तारयति, तदा का कथा अभिमानधनानां सचेतनानां तेजस्विनाम् ? इति विशदार्थः । [ अत्र सामान्येनोपात्तस्य तेजस्विनः परतेजःसहनाभावस्य विशेषेणाग्नेयग्राव्णः तेजोवमनेन सोपपत्तिकीकरणात् विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः, अपि च निकृत इवेति सम्भावनयोत्कीर्त्तनात् गम्यमानया क्रियोत्प्रेक्षया चासौ सङ्कीर्य्यते । वमतेरिह गौणार्थे प्रयोगात् न ग्राम्यत्वदोषः, तथाहि दण्डी,—"निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥" इति ] ॥ १४ ॥

चन्द्रकेतुः। तात! अमर्षोऽप्यस्य शोभते वीरस्य, पश्यतु हि तातः प्रियवयस्यविनियुक्तजृम्भकास्त्रनिष्कम्पस्तम्भितानि सर्वतः सैन्यानि। (स)

रामः। [विलोक्य]। वत्स लव! संह्रियन्तामस्त्राणि। त्वमपि चन्द्रकेतो! निर्व्यापारविलक्षितानि सान्त्वय बलानि। (ह)

लवः। यथा आज्ञापयति तातः।

[इति प्रणिधानं नाटयति]। (क)

चन्द्रकेतुः। यथाऽऽदिष्टम्। [इति निष्क्रान्तः]।

लवः। प्रशान्तमस्त्रम्।

---

(स) तातेति।—तात!—पितः!, पितृस्थानीय! इत्यर्थः, पूज्यतम इति यावत। अस्य वीरस्य—अमुष्य शूरस्य लवस्य। अमर्षोऽपि—अक्षमाऽपि, परोत्कर्षासहिष्णुत्वमपीति यावत। शोभते—भाति, युज्यते इत्यर्थः। प्रियवयस्येन—प्रियसुहृदा लवेन, विनियुक्तं—निक्षिप्तं, प्रेरितमिति यावत, यत् जृम्भकास्त्रं—तदाख्यं ब्रह्मादीनां तपःप्रभावसम्भृतमायुधं, तेन निष्कम्पं—निश्चलं यथा तथा, स्तम्भितानि—जडीकृतानि, सम्भवन्निर्व्यापारीकृतानि इत्यर्थः। सर्व्वतः,—समन्तात्। सैन्यानि—बलानि; महाप्रभावस्यास्य लवस्य जृम्भकास्त्रप्रभावेण सम्मोहितानि अस्मद्बलानि समन्तात् चित्रार्पितारम्भाणीवावतिष्ठन्ते, अतो निरतिशयवीर्य्यस्यास्यामर्षोऽपि स्थाने एवेति भावः।

(ह) संह्रियन्तां—संयम्यन्ताम्, उपसंह्रियन्तामित्यर्थः, प्रयुक्तान्यप्येतानि जृम्भकास्त्राणि समस्तकाणि सपदि समाक्रम्यन्तामिति यावत्। निर्व्यापारविलक्षितानि —व्यापारस्याभावः निर्व्यापारम [इत्यव्ययीभावः] तेन हेतुना विलक्षितानि—विस्मयान्वितानि, ("विलक्षो विस्मयान्विते" इत्यमरः) निश्चेष्टमवस्थिततया समधिकं विलक्षितानीत्यर्थः, बालस्यैकस्य सकाशे तद्भूबहूनाम् असंख्येयानां स्वपक्षीययोद्धृणां सम्भवद्दवस्थानस्य अतीव लज्जाजनकत्वादिति भावः। सान्त्वय—मधुरवाग्भिः समाश्वासय।

(क) प्रणिधानं—चित्तैकाग्रताम् : उपसंहारकारकेण रहस्येन जृम्भकास्त्राणामुपरोधायेति भावः। नाटयति—अभिनयेन प्रदर्शयति।

रामः । वत्स ! सरहस्यप्रयोगसंहरणानि अस्त्राणि आम्नायवन्ति । (ख)—

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्राः शरदस्तपांसि ।
एतान्यपश्यन् गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥ १५ ॥

अथैतन्मन्त्रपारायणोपनिषदं भगवान् कृशाश्वः परःसहस्र-परिवत्सरान्तेवासिने कौशिकाय विश्वामित्राय प्रोवाच, स तु भगवान् मह्यमित्येष तु पूर्वानुक्रमः । कुमारस्य पुनः कुतः सम्प्रदाय इति पृच्छामि । (ग)

---

(ख) सरहस्यप्रयोगसंहरणानि—सरहस्ये—समन्त्रके, प्रयोगसंहरणे—निक्षेप-प्रशमने येषां तानि; येषां हि अस्त्राणां विमोकः संहारश्च केवलं मन्त्रेणैव साध्यते, तानि इति भावः । अस्त्राणि—जृम्भकादीनि आयुधानि । आम्नायवन्ति—सम्प्रदाया-गतानि, गुरुपरम्परोपदेशसापेक्षाणि इत्यर्थः, भवन्तीति शेषः ; सम्प्रदायसिद्धतया गुरूपदेशं विना दुर्लभानीति भावः । ("अथाम्नायः सम्प्रदायः" इत्यमरः) ।

अथैतेषां जृम्भकास्त्राणां गुरुपरम्पराभ्यः समधिगमं सविशेषमुपवर्णयितुं प्राक् तेषां ब्रह्मादिब्रह्मर्षिगणतपस्तेजोमयत्वमाह, ब्रह्मेति ।—श्लोकश्चैष प्रथमाङ्के ४२ पृष्ठे व्याख्यातः ॥ १५ ॥

(ग) कीदृशी हि एतेषां जृम्भकाणां गुरुपरम्परासंस्थितिरासीत्, तदिदानीं विवृणोति, अथेत्यादिना ।—एतेषां मन्त्राणां—जृम्भकास्त्रप्रयोगसंहारसाधकानामित्यर्थः, पारस्य—अन्तस्य, यत् अयनं—गमनं, समग्राभ्यासजनितं ज्ञानमित्यर्थः, तद्रूपा या उपनिषत्—गुह्यविद्या तां, जृम्भकास्त्रप्रयोगसंहारकुशलसमग्रविद्यामिति यावत् । कृशाश्वः,—कौशिकपितामहः । परःसहस्रेति ।—सहस्रात् परे इति परःसहस्राः ["पारस्करप्रभृतीनि—" (६।१।१५७ पा०) इति ससुट्कः समासः निपात्यते] सहस्राधिकसंवत्सरादप्यधिकाः इत्यर्थः, ये परिवत्सराः,—हायनाः, तान् व्याप्य अन्तेवासिने शिष्यभूताय, ["अत्यन्तसंयोगे च" (२।१।२९ पा०) इति द्वितीयासमासः] सहस्रा-

लवः। स्वतःप्रकाशानि (घ) आवयोरस्त्राणि।

रामः। [विचिन्त्य]। प्रकृष्टपुण्यपरिपाकोपादानः कोऽपि महिमा स्यात्; द्विवचनन्तु कथम्? (ङ)

लवः। भ्रातरौ आवां यमजौ। (च)

रामः। स तर्हि द्वितीयः क्व? (छ)

---

-धिकमपि वत्सरान् व्याप्य गुरुशुश्रूषारतायेति भावः। कौशिकाय—कुशिकनन्दनाय। प्रोवाच—उपदिदेश, उपदेशेन ददौ इत्यर्थः। पूर्वेषां,—पूर्व्वतनानाम्, आदिमाना-मुपाध्यायानामित्यर्थः, अनुक्रमः,—पर्य्यायः, अस्तीति शेषः; एवं हि एतदस्त्रोपदेशक-गुरुपरम्पराख्यितिः इति भावः। कुमारस्य—शिशोस्तवेति यावत्। कुतः,—कस्मात् आचार्य्यादित्यर्थः। सम्प्रदायः,—पारम्पर्य्योपदेशः, आयातः इति शेषः; कोदृशी हि भवतां जृम्भकास्त्रोपदेशकगुरुकुलस्थितिरिति भावः। इति पृच्छामि—एतत्तु जिज्ञासे; यतः भवतां किञ्चित् गुरुकुलवैलक्षण्यमस्ति न वेति तत्त्वतः ज्ञातुमिच्छामि इति विशदार्थः।

(घ) स्वतःप्रकाशानि—स्वतः,—स्वेनैव, उपदेशमन्तरेणैवेति यावत्, प्रकाशः,—आविर्भावः येषां तानि; निसर्गसिद्धानीति भावः।

(ङ) प्रकृष्टेति।—प्रकृष्टं—प्रकर्षं गतं, सर्व्वातिशायीत्यर्थः, यत् पुण्यं—शुभादृष्टं, तस्य यः परिपाकः,—परिणामः, स एव उपादानं—निमित्तं यस्य सः, पुण्यप्रचयप्रकर्षवशादेव समुत्पद्यमान इत्यर्थः। कोऽपि—अनिर्व्वचनीयः एवेति भावः। महिमा—माहात्म्यम्। स्यात्—भवेत्; अपरिज्ञातपुण्यातिरेकप्रभाववशेन एव जृम्भकास्त्रलाभरूपाभ्युदयोऽपि भवितुमर्हतीति भावः। द्विवचनम्—"आवयोः" इति द्विवचनप्रयोगः इति यावत्। कथं?—केन हेतुना कृतमित्यर्थः; एकस्मिन्नेव परिदृश्य-माने त्वयि कथं द्विवचनमनुप्रयुज्यते इति भावः; तर्हि भवतोऽपि अन्यः कश्चिदेतादृशः अस्ति किम्? इत्याशङ्कितोऽर्थः।

(च) यमजौ—यमौ भूत्वा जातौ, युगपदेव मातुः द्वौ सम्भूतावित्यर्थः; एतेन ममापरः एकः सहोदरः अस्तीति विज्ञापितमित्यवधेयम्।

(छ) तर्हि—तदा। द्वितीयः,—अपरः, भवतः अन्यः इत्यर्थः। क्व?—कुत्र? आस्ते इति शेषः; यदि भवन्तौ द्वौ भ्रातरौ, तदा अपरस्तेदानीं कुत्र वर्त्तते? इति पृष्टकृताकूतम्।

[ नेपथ्ये ] । भाण्डायन ! भाण्डायन ! ( ज )—

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु किमात्थ सखे ! तथेति ।
अद्यास्तमेतु भुवनेष्वधिराजशब्दः
क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥ १६ ॥

( ज ) भाण्डायन !—भगवत्प्राचेतसशिष्यस्य कस्यचित् मुनिकुमारविशेषस्य आमन्त्रणमिदम् । [ सम्भ्रमे द्विर्भावः ] अथ सांशयिकेन श्लोकेन सहास्यान्वयः ।

भगवद्भरताश्रमं रामायणकथाभागं नीत्वा ततः प्रत्यावर्त्तमानः कुमारः कुशः पथि लवकृतरघुकुलविरोधमाकर्णयन् स्वस्य वीर्य्यातिशयवत्तया परेषां वीर्य्यातिरेकमसहिष्णुः स्वकीयां प्रोद्धतक्षत्रकुलोपमर्द्देच्छां व्यक्तीकरोति, आयुष्मत इति ।—आयुष्मतः दीर्घजीविनः, अमुष्य कनीयस्तया वात्सल्येन तथात्वोक्तिरिति ज्ञेयम् ; लवस्य तदाख्यस्य स्वानुजस्य, नरेन्द्रसैन्यैः नरपतेः रामस्य सैनिकैः सहेत्यर्थः, आयोधनं युद्धं, प्रवृत्तमिति शेषः, किल इति वार्त्तायाम् ; तथाच—नरपतिसैन्यैः सह दीर्घायुषो लवस्य युद्धवार्त्तां यां परम्परया शृणोमि, तत् तथ्यं किम् ? इति भाण्डायनं प्रति नेपथ्ये कुशस्य प्रश्नः ; ननु ! भोः !, सखे ! मित्र !, भाण्डायन ! इति यावत्, किमात्थ ? किं ब्रवीषि ? तथेति ? यत्त्वया श्रुतं, तत् सत्यमेव, इति ब्रवीषि किम् ? इत्यर्थः ; "तथा" इति नेपथ्यस्थितेन भाण्डायनेनोक्तस्य कुशकृतप्रश्नोत्तरवचनस्य प्रतिध्वनिरूपेण कुशस्येयं पुनरुक्तिरियमिति बोध्यम् ; यद्वा—तथा किल तद्दैव हि, सत्यमेवेत्यर्थः, किलेति निश्चये, इति इत्थम्, एवम्प्रकारमिति यावत्, किमात्थ ? ब्रवीषि किमु ? यदि सत्यं हि जन्यं स्यात्, ततः किं भवेदित्याशङ्कायां तत्फलमाह, अद्येति ।—अद्य इदानीं, भुवनेषु जगत्सु, अधिको राजा इति अधिराजः [ "राजाहःसखिभ्यष्टच्" ( ५।४।९१ पा० ) इति टच् ] स एव शब्दः सङ्केतः, सम्राट्संज्ञेत्यर्थः, अस्तं विलयम्, एतु गच्छतु, न केवलमधिराजशब्दलाञ्छितं पुमांसं विनाशयामि, अपितु शब्दमेव जगतः विलोपयामीत्याशयः ; सर्वेषामेव राजन्यानां विलयकरणेन वाच्याभावात् वाचकशब्दस्यापि विलोपसाधनमिति भावः ; अपि च अद्य क्षत्रस्य क्षत्रियजातेः ; शस्त्रशिखिनः शस्त्राणि एव शिखिनः अग्नयः, शस्त्रानलाः इत्यर्थः, शमं निर्व्वाणं, यान्तु गच्छन्तु, मद्वीर्य्यप्रभावेणेति शेषः ; इदानीमेवाहं रघुकुलापकर्षेण सर्व्वेषामेव क्षत्राणां विलोपी भविष्यति, का कथा केवलमधिराजशब्द-

रामः।— अथ कोऽयमिन्द्रमणिमेचकच्छवि-
ध्वनिनैव दत्तपुलकं करोति माम्।
नवनीलनीरधरधीरगर्जित-
क्षणबद्धकुड्मलकदम्बडम्बरम्? ॥ १७ ॥

---

स्येति भावः। [ अत्र समासेन प्रश्नेषु शिखिनामभेदारोपात् समासगतं निरङ्गं रूपकमलङ्कारः ]। वसन्ततिलकं वृत्तम् ॥ १६ ॥

अथ अविज्ञातपुत्रसमागमेनापि समुदितवात्सल्यविवशचेताः रघुमणिः हर्षाति-रेकात् उद्भूतपुलकां स्वीयां शारीरिकीमवस्थामुपवर्णयति, अथेति।—अथ प्रश्ने, ("मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।" इत्यमरः) इन्द्रमणिः इन्द्रनीलमणिः, तद्वत् मेचका असिता, ("कृष्णे नीलासितश्यामकालश्यामलमेचकाः।" इत्यमरः) छविरिव छविः कान्तिः यस्य सः, इन्द्रनीलमणिश्यामलरुचिरकलेवर इत्यर्थः, तदुक्तं मणिपरीक्षायां—"क्षीरमध्ये क्षिपेन्नीलं क्षीरश्चेत नीलतां व्रजेत्। इन्द्रनीलमिति प्रोक्तम्—" इति; कोऽयं कुमारः, ध्वनिनैव मेघगर्जनगम्भीरेण केवलं कण्ठस्वरेणैव; न त्वालिङ्गनादिभिरिति भावः; दत्तः समर्पितः, पुलकः रोमाञ्चः; हर्षातिशयावेश-जनितः इति भावः; यस्मै तथाविधम्; यद्वा,—दत्तः उत्पादित इत्यर्थः, पुलको यस्य तथाविधं, मां, नवेति।—नवानां नूतनानां, नीलानां श्यामलानां, नीरधराणां जलधराणां, धीरगर्जितस्य क्षणे काले, वर्षाकाले इत्यर्थः; क्षणं मुहूर्त्तमभि-व्याप्येत्यर्थो वा, बद्धाः समुद्गताः, विकसिता इत्यर्थः; मेघगर्जनोदयसमकालमेव विकसिता इत्यर्थो वा; यद्यपि वर्षासु प्रायशः कदम्बाः मुकुलिता भवन्तीति दृश्यते, तथाप्यत्र कुमारकुशशब्दसमाकर्णनानन्तरमेव भगवद्रामभद्रस्य सर्वेषु गात्रेषु कदम्बकोरकसमपुलकोद्गमदर्शनात् मेघध्वनिसमुत्पत्त्यनन्तरमेव कदम्ब-मुकुलोदयवर्णनेन साम्यं सुसंगतमिति ध्येयम्; यद्वा—नवनीलनीरधराणां धीरेण गम्भीरेण, गर्ज्जितेन निनादेन, यः क्षणः उत्सवः, तेन बद्धाः धृताः, उद्गताः इत्यर्थः, कुड्मलाः कोरकाः यस्य तथाविधः, यः कदम्बः नीपतरुः, तस्य डम्बरः समारम्भः, सादृश्यं वा यस्मिन् तथोक्तं, प्रावृड्भोद्भिन्नकोरककदम्बवृक्षकान्तिमित्यर्थः, करोति विदधाति? कोऽयं हि केवलं मधुरवाग्भिरेव हर्षातिशय्यं विदधत् कदम्ब-कुड्मलप्रफुल्लकलेवरं मामकस्मादेव करोति? इति समुदितार्थः। [ अत्र कुशशरीरे इन्द्रनीलमणेर्वैधर्म्यसाम्योपदेशात समासगता, एवं रामशरीरेण सह कदम्बकुड्मल-साम्योत्प्रेक्षणात् वाच्या उपमालङ्कारः, तयोर्मिथः नैरपेक्ष्येण संस्थितेः संसृष्टिः;

लवः। अयमसौ मम ज्यायान् आर्यः कुशो नाम भरताश्रमात् प्रतिनिवृत्तः। (झ)

रामः। [सकौतुकम्]। वत्स! इत एव आह्वयैनमप्यायुष्मन्तम्। (ञ)

लवः। एवम्। [इति परिक्रामति]।

[ततः प्रविशति कुशः]।

कुशः। [साद्भुतहर्षधैर्य्यं धनुरास्फालयन्]। (ट)—

दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादा मनो-
र्दृप्तानां दहनाय दीपितनिजक्षत्रप्रतापाग्निभिः।

---

मकाररकारयोरासकृत् साम्यात् वृत्त्यनुप्रासेन च ते संसृज्येते]। मञ्जुभाषिणी वृत्तम्॥ १७॥

(झ) ज्यायान—वर्षीयान्, अग्रज इत्यर्थः। [वृद्धशब्दादीयसुनि "ज्यायादीयसः" (६।४।१६० पा०) इति ईयसुन आकारादेशे "वृद्धस्य च" (५।३।६२ पा०) इति वृद्धस्य ज्याऽऽदेशः] भरतस्य—भगवतः नाट्यशास्त्रकृतः मुनिविशेषस्य, आश्रमात्—आवासात्। प्रतिनिवृत्तः,—प्रत्यागतः।

(ञ) सकौतुकं—कुमारस्य कुशस्य दर्शनाभिलाषजनितं यदौत्सुक्यं, तेन सह वर्त्तमानं यथा तथा। आयुष्मन्तं—प्रभूतायुषं, चिरञ्जीविनमिति यावत्। [आयुःशब्दात् "भूमनिन्दाप्रशंसासु—" (वा०) इति भूमार्थे मतुप्प्रत्ययः]।

(ट) अद्भुतं—विस्मयः, हर्षः,—आह्लादः, धैर्य्यं—धीरता, तैः सह वर्त्तमानं यथा तथा; अत्र आकाशकयुद्धव्यापारदर्शनेन विस्मयस्य, सूर्य्यवंशीयप्रतिपक्षवीरलाभेन हर्षस्य, तथा युद्धावसरे वीरस्वभावसुलभस्य धैर्य्यस्य च समुद्भवोऽभूदिति ज्ञेयम्। धनुः,—कार्म्मुकम्। आस्फालयन्—समाकर्षन्, प्राहेति शेषः।

अथेदानीं स्वप्रतिपक्षवीरलाभेन स्वभ्यस्तास्त्रविद्यायाः साफल्यलाभमभिव्यञ्जयति, दत्तेन्द्राभयेति।—भगवतः षडैश्वर्य्यशालिनः, विवस्वतः सूर्य्यस्य अपत्यं पुमान् वैवस्वतः तस्मात्, सूर्य्यवंशप्रतिष्ठापकादित्यर्थः, असौ हि सूर्य्यवंश्यानां राज्ञां प्रथमः वैवस्वताऽऽख्यः सप्तमः मनुः आसीत्; मनोः सप्तमात् मन्वन्तराधिपात्, आ वैवस्वतं मनुमारभ्येत्यर्थः, ["आङ्मर्यादावचने" (१।४।८९ पा०) इति कर्म्मप्रवचनीयत्वेन, तत्र तु पञ्चमपदत्वादभिविधावर्थे "पञ्चम्यपाङ्परिभिः" (२।३।१० पा०) इति

आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत् ततो
दीप्तास्त्रस्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः ॥१८॥

[ विकटं परिक्रामति ] ।

रामः । कोऽप्यस्मिन् क्षत्रियपोतके पौरुषातिरेकः ! ! (ठ)—

---

आङ्योगात् पञ्चमी ] । दत्ता समर्पिता, इन्द्राय देवराजाय, अभयदक्षिणा असुरापद्रवरूपविपत्प्रतिकारात्मकम् अभयदानं यैः तथाविधैः, देवेन्द्रसखैरित्यर्थः, तथा दृप्तानां मदगर्व्वितानां, दुर्वृत्तानामिति यावत्, दहनाय भस्मीकरणाय, समूलमुपघातायेति यावत ; अनलानामुन्मूलनायेति भावः ; दीपितः प्रज्वलितः, निजः स्वकीयः, क्षत्रप्रतापः क्षत्रतेजः, क्षत्रियप्रभाव इत्यर्थः ; एव अग्निः अनलः यैः तथाभूतैः ; हिंसकानां विनाशायैव सततं प्रकटितपराक्रमैरिति भावः ; आदित्यैः आदित्यस्यापत्यानि पुमांसः तैः, सूर्य्यवंशीयैरित्यर्थः, नृपतिभिः राजभिः सार्द्धमित्यर्थः, यदि चेत्, विग्रहः विवादः, स्यादिति शेषः, ततः तदा, महाबलैः गुणवीर्य्यपरीक्षकैरेतैः सह विवादे सतीत्यर्थः, [ तच्छब्दात् सप्तम्यां तसिल ] दीप्तानां भास्वराणां, प्रज्वलमानानामित्यर्थः, अस्त्राणां प्रहरणानां, स्फुरन्तीभिः, विलसन्तीभिः, देदीप्यमानाभिरित्यर्थः, उग्राभिः भयावहाभिः, भीषणाभिरित्यर्थः, दीधितिशिखाभिः मरीचिज्वालाभिः, मयूखरूपशिखातितिभिरिति यावत्, नीराजिता आरत्रिकरूपमाङ्गलिकक्रियाभिः सत्कृता, [ निःपूर्व्वकात् राजतेः णिचि कर्म्मणि क्तः ] ज्या मौर्व्वी यस्य तत् ; यथा हि दीपादिभिः माङ्गलिकोपचारैः देवतादयः समभ्यर्च्य समलङ्क्रियन्ते, तथैव दीप्तास्त्रशिखाभिः तस्य धनुषः ज्या तदानीम् अलङ्क्रियतेति भावः ; मम एतत् धनुः कार्म्मुकं, धन्यं श्लाघ्यं, प्रशस्तमित्यर्थः, भवेदिति शेषः ; मन्वन्वयशिखरायमाणैः असुरविजेतृभिः परन्तपैः गुणपक्षपातिभिः महावीरैः धानुष्कैः राजभिः यदि विग्रहः स्यात्, तदा मे सत्प्रतिपक्षस्य विविधनिशितास्त्रप्रयोगशिक्षाकौशलं फलवद् भवेदिति भावः ; गुणवद्भिः विवादोऽपि श्रेयसे भवतीति हृदयम् । [ अत्र क्षत्रप्रतापे अग्नेरभेदारोपात् निरङ्गं रूपकमलङ्कारः, नीराजितशब्दशक्त्या ज्यायां देवतात्वारोपोऽपि व्यज्यते इति रूपकालङ्कारध्वनिः ] । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

(ठ) कोऽपि—अनिर्व्वचनीयः, अनन्यसाधारण इत्यर्थः । अस्मिन्— पुरतः दृश्यमाने । क्षत्रियपोतके—क्षत्रियशिशौ, कुमारे इति यावत् । पौरुषस्य,—प्रभावस्य,

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव !! ॥ १९ ॥

---

तेजसः इत्यर्थः, अतिरेकः अतिशयः, आधिक्यमिति यावत् ; अयं हि क्षत्रियशिशुः निरतिशयं पौरुषं बिभर्त्तीति दृश्यते इति भावः ।

बाल्येऽप्यमुष्य असामान्यवीर्य्ययोगात् पौरुषविशेषशोभिनीमाकृतिं गतिञ्च विशदीकृत्य व्यनक्ति, दृष्टिरिति ।—दृष्टिः विलोकनम्, अस्य क्षत्रियपोतकस्येति शेषः, तृणीकृतः अतृणं तृणं यथा सम्पद्यते तथा कृतः, तृणवद्विगणित इत्यर्थः, जगत्त्रयस्य त्रिभुवनस्य, सत्त्वसारः बलोत्कर्षः यया तथाभूता, भवतीति शेषः ; अयं हि तेजःपूर्णदृष्टिविक्षेपैः प्राणिसङ्घानां तेजांसि परिभवन् त्रिलोकीमपि तृणाय मन्यते इत्यनुमीयते इति भावः ; तथा धीरा गाम्भीर्य्यवती, अचञ्चलेत्यर्थः, अपिच उद्धता दृप्ता, शौर्य्यभूयिष्ठेत्यर्थः, गतिः पदक्षेपः, धरित्रीं पृथिवीं, नमयतीव अधः प्रेरयतीव ; अस्यातिगुरून् पादन्यासान् विसोढुमशक्नुवाना पृथिवी अपि अधोगता भवतीवेति विभाव्यते ; कौमारकेऽपि अतिबाल्येऽपि, का कथा यौवनस्येत्यपिशब्दार्थः, गिरिवत् गिरितुल्यं. ["तेन तुल्यं क्रिया चेद्वतिः" (५।१।११५पा०) इति तुल्यार्थे वतिप्रत्ययः] गुरुतां गौरवं, भारवत्त्वमित्यर्थः, अप्रतिहतभावमिति यावत, दधानः धारयन्, [ "ताच्छील्यवयोवचनशक्तिषु चानश्" (३।२।१२९ पा०) इति शक्तौ वयसि वा चानश् ]। गिरयो हि उत्पत्तिकालमारभ्यैव गुरुत्वभाजः भवन्तीति विभाव्यम्, अयं कुमारः, वीरो रसः किम ? साक्षात वीरो रसः किमु ? मूर्त्तिमान् वीररसस्य स्थायिभावः उत्साहः किमित्यर्थः, उत अथवा, दर्प एव अन्तःसारसम्भृतः अहङ्कार एव, विग्रहवान् वीरत्वगर्व्व एवेत्यर्थः ; तत्सम्मूर्त्तिमयः सन्नेवेति भावः ; एति !! आगच्छति ; शैशवेऽपि अतिशौर्य्यविभूषितोऽयं किमु वीररसस्य दर्पस्य वा रूपं परिगृह्य विचरति ? ( "ऐति" इति पाठान्तरम् ) नायं हि क्षत्रियपोतः, अपितु मूर्त्तिमान् वीररसः दर्पो वा अयमिति भावः। [ अत्र गत्या धरित्र्याः अनमितत्वेऽपि नमितत्वोक्तेः उत्कटैककोटिकसंशयोत्पत्त्या वाच्या क्रियोत्प्रेक्षा-ऽलङ्कारः, तथा प्रथमपादे दृष्ट्या सत्त्वसारस्यातृणीकृतत्वेऽपि तृणीकृतत्वोक्तेः तथैव संशयोदयात् प्रतीयमानक्रियोत्प्रेक्षाऽलङ्कारः, अपि चार्थोपमेयभूते कुमारे कुत्र उपमानभूतयोः वीररसदर्पयोः संशयात् एकतरस्यानिश्चयाच्च शुद्धसन्देहालङ्कारः,

लवः। [ उपसृत्य ]। जयति आर्य्यः।

कुशः। नन्वायुष्मन्! किमियं वार्त्ता युद्धं युद्धमिति? (ङ)

लवः। यत्किञ्चिदेतत्। उद्धतभावमुत्सृज्यार्य्योऽस्मिन् विनयेन वर्त्तताम्। (ढ)

कुशः। किमर्थम्?

लवः। अत्र देवो रघुपतिस्तिष्ठति, स च स्निह्यति आवयोः उत्कण्ठते च युष्मत्सन्निकर्षस्य। (ण)

---

कुमारे गिरेः साम्योत्कीर्त्तनादुपमाऽलङ्कारस्य, एतेषाञ्चतुर्णां मिथः नैरपेक्ष्येण संस्थितेः संसृष्टिः। अत्र हि वीरो रसः, तथाहि, भगवान् रघुमणिरेव आलम्बनविभावः, तस्य तु जगत्त्रयविश्रुतः सत्त्वसार एवात्र उद्दीपनविभावः, कुमारस्य लवस्यान्वेषणमेवात्रानुभावः, कुमारस्य कुशस्य धीरोद्धतगती अभिव्यक्तौ धृतिगर्व्वौ अत्र सञ्चारिभावौ, एतैरभिव्यक्तः उत्साहरूपस्थायिभाव एवात्र वीररसरूपतामेति इति ज्ञेयम्। श्लोकेऽस्मिन् वीररसस्य तथा तत्सञ्चारिभावस्य दर्पस्य स्वशब्देनोक्तित्वात् रसदोष इति ज्ञेयं,—"रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि।" इति दर्पणकृल्लक्षणात् ]। वसन्ततिलकं वृत्तम्॥ १९॥

(ङ) आयुष्मन्!—चिरजीविन्। युद्धं युद्धमिति—युद्धं युद्धमित्याकारिका, [ वीप्सायां द्वित्वम ] इयं वार्त्ता—ईदृशी कथा। किम्?—कथम्? अनुश्रूयते इति शेषः; किमर्थं हि युद्धं युद्धमिति वार्त्तां निरन्तरमाकर्ण्यतेऽस्माभिरिति भावः; केन सह कुत्र कथं सङ्घटितमिति पृच्छ्यते इति तु हृदयम्।

(ढ) यत्किञ्चिदेतत्—युद्धं युद्धमिति यदनुश्रूयते, तत्तु न किमपीत्यर्थः; तत्तु श्रुतं वस्तु अतितुच्छमिति बुद्ध्या भवद्भिः परिहातव्यमिति भावः। उद्धतभावं—महागर्व्वितभावम्, अतीवौद्धत्यमिति यावत्। ("उद्धतभावम्" इत्यत्र "दृप्तभावम्" इत्येव पाठो बहुपुस्तकेषु दृश्यते) उत्सृज्य—विहाय। आर्य्यः,—तत्रभवान् भवान्। अस्मिन्—भगवति रघुमणौ रामभद्रे। विनयेन—नम्रतया, अनौद्धत्येन इत्यर्थः, भक्तिनम्रतयेति यावत्। वर्त्ततां—तिष्ठतु; इदानीं वीरभावं विहाय पुरोवर्त्तिनि अस्मिन् भगवति रघुमणौ प्रश्रयविनम्रमूर्त्तिभाक् भवतु भवानिति भावः।

(ण) अत्र—अस्मिन् स्थाने, युद्धभूमावित्यर्थः। देवः,—महाराजः। रघुपतिः,—

कुश:। [सतर्कम्]। स रामायणकथानायको ब्रह्मघोषस्य गोपायिता? (त)

लव:। अथ किम्?

कुश:। आशंसनीयपुण्यदर्शन: स महात्मा, किन्तु कथमस्माभिरुपगन्तव्य इति न सम्प्रधारयामि। (थ)

---

रघुकुलनायक: भगवान् रामभद्र:। तिष्ठति वर्त्तते। स च—रघुमणिश्च। आवयो:,—त्वयि मयि चेत्यर्थ:। स्निह्यति—निरतिशयं वात्सल्यं विधत्ते। युष्मत्सन्निकर्षस्य—भवत्सन्निधानस्य, तव सामीप्यमिति यावत। उत्कण्ठते—औत्सुक्येन स्मरति, आकाङ्क्षते इत्यर्थ:, अत्युत्कण्ठित: सन् भवद्दर्शनमिवाञ्छतीति यावत्; उभयोरप्यावयो: सातिशयां प्रीतिं प्रकाशयति, भवतश्चेदानीमप्यप्राप्यत्वात तल्लाभाय नितरामुत्सुकायते इति भाव:। [ "युष्मत्सन्निकर्षस्य" इत्यत्र "षष्ठी शेषे" (२।३।५० पा०) इति सम्बन्धभावविवक्षायां षष्ठी, "अधी गर्थदयेशां कर्मणि" इतिवत् इति ज्ञेयम्। उत्पूर्वकस्य भौवादिकस्य कठेर्लटि रूपम् ]।

(त) सतर्कं—तर्केण—अयं रामायणकथानायको न वेत्याकारकसंशयेन सह वर्त्तमानं यथा तथा, ससन्दिग्धमिति यावत। रामायणकथानायक:,—रामायणमहाकाव्यस्याश्रयभूत: महापुरुष इत्यर्थ:। ब्रह्म घुष्यते—स्तूयते अस्मिन्निति [ कर्म्मणि घञ् ] ब्रह्मघोष:,—वेद: तस्य। ("ब्रह्मकोषस्य" इति पाठान्तरम् ) गोपायिता—रक्षक:। [ गोपायते: शीलार्थे तृच् ] राज्ञ: वर्णाश्रमधर्म्मसंरक्षकतया, वेदानामपि तन्मूलकतया परम्परया तद्रक्षकत्वं ज्ञेयम्; अथवा प्रलयपयोधिनिमग्नेषु वेदेषु पुरा भगवान् मीनरूपमास्थाय तानुद्धधार इति पौराणिका: आमनन्ति, अस्यापि भगवत: वेदविद्वेषिणां राक्षसादीनां निहन्तु: तदंशसम्भूततया तथाभूतत्वमित्यपि समाधेयम्।

(थ) आशंसनीयेति।—आशंसनीयं—प्रार्थनीयं, सततमाकाङ्क्षणीयमिति यावत, पुण्य—पवित्रं, निरतिशयपावनमित्यर्थ:, दर्शनम्—अवलोकनं यस्य स:। स महात्मा—महामना रघुमणिरित्यर्थ:। कथं—केन प्रकारेण, कीदृशोपचारेणेति यावत्। उपगन्तव्य:,—उपसेवितव्य:, सत्कर्त्तव्य इत्यर्थ:। सम्प्रधारयामि—निश्चिनोमि; कीदृशेनोपचारेण असौ महापुरुष: अस्माभिरुपसर्पणीय इतीदानीं न स्थिरीकर्त्तुं शक्नोमि इति भाव:।

लवः। यथा गुरुस्तथोपचारेण। (द)

कुशः। अपि कथं नामैतत्?

लवः। अत्युदात्तः सुजनश्चन्द्रकेतुः और्मिलेयः प्रियवयस्य इति सख्येन मामुपतिष्ठते, तेन तत्सम्बन्धेन च धर्मतात एवायं राजर्षिरिति। (ध)

कुशः। सम्प्रति करणीयो राजन्येऽपि प्रश्रयः। (न)

---

(द) यथा—यादृशेनोपचारेण। गुरुः,—पित्रादिरूपः महागुरुजनः इत्यर्थः, उपसेव्यते इति शेषः। तथोपचारेण—तादृशेनैव सत्कारेण; तस्मादविशेषेणैव उपचारेण पितृस्थानीयः महापुरुषोऽसौ अस्माभिः समभ्यर्चनीय इति भावः; प्रश्रयविनम्रमूर्त्तिधृक् भवान् तत्समीपमुपगच्छत्विति तात्पर्य्यम्।

(ध) अत्युदात्तः,—अत्युदारचेताः, महामना इत्यर्थः। सुजनः,—निरतिशयसौजन्याधारः। और्म्मिलेयः,—ऊर्म्मिलायाः अपत्यं पुमानित्यर्थे [ऊर्म्मिलायाः "स्त्रीभ्यो ढक्" (४।१।१२० पा०) इति ढक्] ऊर्म्मिलानन्दन इत्यर्थः। (अतिस्नेहवत्ताद्योतनार्थं मातृनामोल्लेखः) प्रियवयस्य इति—प्रियबन्धुरिति सम्भाषणेनेति यावत्। सख्येन—मैत्र्या, सौहार्द्देनेति यावत्। मामुपतिष्ठते—मां समभ्युपैति; मया सह दृढां मैत्रीं करोतीति भावः। ["उपाद्देवपूजासङ्गतकरण—" (वा०) इत्यात्मनेपदम्]। तेन तस्मात्; अमुना सह मैत्रीविधानादिति भावः। तत्सम्बन्धेन—तस्य—चन्द्रकेतोः, सम्बन्धेन—ज्येष्ठपितृत्वरूपसम्पर्केण; यतोऽयं चन्द्रकेतोः ज्येष्ठतातः, तेन हेतुनेति भावः। अयं राजर्षिः,—राजा भूत्वाऽपि शमादिगुणशतयोगात् ऋषिसन्निभः अयं रघुमणिः। [राजा चासौ ऋषिश्चेति कर्म्मधारयः]। धर्म्मतातः,—धर्मेण—लोकाचारानुसारेणेति यावत्, तातः,—पिता; पितृस्थानीय इति भावः; तेन हि पितृवदेवासौ सबहुमानमस्माभिरुपसेवनीय इति निगूढाशयः।

(न) सम्प्रति—अधुना, धर्म्मतातत्वसम्पर्कात् सम्प्रहारदशायामपीति यावत्। राजन्येऽपि—क्षत्रियेऽपि; आत्या आवयोः समे एतस्मिन् महापुरुषे रघुमणौ ततोऽप्यधिकपितृत्वसम्बन्धयोगादित्यपिकाराशयः। प्रश्रयः,—प्रणयः, विनयः इति यावत्; समौद्धत्येनोपचार इति भावः। ("प्रश्रयप्रणयौ समौ" इत्यमरः) करणीयः,—विधातव्यः; क्षत्रियस्यापि मे अतीवपूज्यतमे क्षत्रिये पितृस्थानीये विनयित्वप्रदर्शनं

लवः। पश्यतु एनम् आकारानुभावगाम्भीर्य्यसम्भाव्यमान-विविधलोकोत्तरचरितातिशयमार्य्यो महापुरुषम्। (प)

कुशः। [निर्व्वर्ण्य]।—

अहो! प्रासादिकं रूपमनुभावश्च पावनः।
स्थाने रामायणकविर्देवीं वाचं व्यवीवृणत्॥ २०॥

---

समुचितमेवेति भावः। ("करणीयः" इत्यत्र "अवचनीयः" इति पाठान्तरं दृश्यते, तत्र अवचनीयः,—अनिन्दनीयः इत्यर्थः; कर्त्तव्यत्वसाम्येऽपि गौरववत्त्वात् विनयित्व-प्रदर्शनं मे न दोषायेति भावः)।

(प) आकारेति।—आकारेण—सौम्यमूर्त्त्या, अनुभावेन—प्रभावेण, तथा गाम्भीर्य्येण—अनभिज्ञैरविज्ञायमाननिगूढ़हृद्गतभावेन च, सम्भाव्यमानः,—अनुमीय-मानः, विविधः,—अनेकविधः, प्रभूत इत्यर्थः, लोकोत्तरः,—अलौकिकः, सर्व्वाति-शायी इति यावत्, चरितातिशयः,—चारित्र्योत्कर्षः, हरधनुर्भङ्गाहल्यामुक्तिसेतु-बन्धनरावणवधादिरूप इत्यर्थः, यस्य तं, महापुरुषं—प्रधानं पुमांसम्; निसर्गसौम्येन आकारेण सर्व्वतेजोऽभिभाविना प्रभावेण चायं महापुरुषः हरधनु-र्भङ्गप्रभृति लोकोत्तर कार्य्यजातं सम्पादयितुमेव भूलोकमवतीर्ण इति सुस्फुटमेव प्रतीयते इति भावः; "यत्राकृतिस्तत्र गुणा वसन्ति" इति सामुद्रिकवचनादित्याशयः।

अथ रघुमणौ सर्व्वलोकविस्मयकरं रूपं प्रसमीक्ष्य महामुनेः प्राचेतसस्य यथायथं तत्प्रभाववर्णनानुगुणानां वाचां प्राक् ततः विधिवत् स्वैरधीतानां सम्यक्तां निरप-वादत्वञ्च विभाव्य प्रतिपादयति, अहो इत्यादिना।—अहो!—अतीव विस्मयकरम्; प्राक् कदाऽपि एवंविधस्य रूपस्य नयनपथेषु अपरिपतनादिति भावः; प्रामोदिकं निरतिशयहर्षसंविधायकं, रूपं लावण्यम्; यस्मिन् मोहनीये रूपे नयनपथे समापतिते एव कुतश्चिदेव देशात् अप्रज्ञातः अननुभूतपूर्व्वश्च अवतायमानः आनन्दसन्दोहः शोकनिर्दग्धमस्माकमपि मानसपथे समुदेतीति भावः। ("प्रामोदिकम्" इत्यत्र "प्रासादिकम्" इति पाठान्तरं दृश्यते, प्रसादगुणपरिचायकमिति तदर्थः, प्रसादो हि विशुद्धिः अनुग्रहप्रवणता वा, तथाच एतादृशमनवद्यरूपवानयं ननु निरतिशयविशुद्ध-चित्तः कृपालुहृदयो वा भवेदिति तु तात्पर्य्यम्)। अपिच, पावनः पवित्रश्च, अनुभावः प्रभावः; आर्त्तत्राणायैव प्रजानां परित्रहात् कदाचिदपि अनागसामपरिपीड़कत्वाच्च, सततविपन्नोद्धारबद्धपरिकरस्य महाप्राणस्यास्य तेजोऽपि निरतिशयपवित्रताऽऽधायक-मेवेति भावः; अतः रामायणकविः रामायणमहाकाव्यस्य रचयिता महर्षिः

[ उपसृत्य ]। तात ! प्राचेतसान्तेवासी कुशोऽभिवादयते। (फ)

राम:। एहि आयुष्मन् !—

अमृताध्मातजीमूतस्निग्धसंहननस्य ते।

परिष्वङ्गस्य वात्सल्यादयमुत्कण्ठते जन:॥ २१॥

---

भगवान् प्राचेतसः, स्थाने योग्यपात्रे ; तस्य हि वाचां यथा पावनत्वं, तथैव स्वप्रतिपाद्यवस्तुनः समधिकपवित्रत्वादित्याशयः ; यद्वा—स्थाने सम्यक्, युक्तमेवेत्यर्थः ; समीचीनस्य विषयस्योपवर्णनात्, सुयोग्यविषयोपवर्णनेन स्वकाव्यप्रणयनप्रयासस्य साफल्योदयादिति भावः ; दैवीं वाचं वाग्देवीं, तस्य निर्यान्तीं भारतीमिति यावत् ; व्यवीवृधत्—विवृतवान्, व्यवृणोदित्यर्थः ; कवितिः महामुनेः वाग्विगुम्फनं धीरोदात्तनायकरूपविशुद्धविषयलाभात् सातिशयं हृद्यमभूदिति भावः। [ वृणोतेः तानादिकात् धातोः णिचि लुङि रूपं, "व्यवीवर्णत्" इत्यप्यस्यात्र पदान्तरं भवतीति विभाव्यम्। अत्र तु "व्यवीवृतत्" इति पाठान्तरं दृश्यते, तत्रापि स एवार्थः। अत्र भगवतो रघुमणेः प्रभाववर्णने एकस्मिन् प्रामोदिकरूपकारणे सत्यपि पावनानुभावरूपस्य हेत्वन्तरस्योपादानात् समुच्चयोऽलङ्कारः ; अपिच पराङ्गं प्रति*पूर्वाङ्गस्य हेतुतयोपन्यासात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, एतयोः सापेक्षतया संस्थितेः सङ्करः ]। पथ्यावक्त्रं वृत्तम्॥ २०॥

(फ) उपसृत्य—उपगम्य, रामस्यान्तिकमागम्येत्यर्थः। तात !—पितः, अविज्ञातसम्बन्धस्य कुशस्यैतत् सम्बोधनं चन्द्रकेतुना सह भ्रातुर्लवस्य मैत्रीसंस्थापनकृतमिति ज्ञेयम्। प्राचेतसस्य—वाल्मीकेः, अन्तेवासी—शिष्यः। अभिवादयते—नमस्यति। [ अभिपूर्वको वदधातुः णिचि नमस्कारे वर्त्तते, फलवत्कर्त्तरि आत्मनेपदम् ]।

अथेदानीं रघुमणिरप्रज्ञातसम्बन्धोऽपि स्वपुत्रे कुशे नैसर्गिकवात्सल्योदयात् तदङ्गसंश्लेषजं सुखं समनुभवितुमौत्सुक्यमावेदयति, अमृतेति।—अयं जनः रामरूपोऽहम् इत्यर्थः, वात्सल्यात् स्नेहात्, त्वां दृष्ट्वा अकस्मात्समुद्भूतस्नेहविवशकायः सन्नित्यर्थः, अमृतेन जलेन, ("अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते।" इति मेदिनी) आध्मातः परिपूर्णः ; सजलनवजलधरस्यातीव स्निग्धकरत्वादित्याशयः ; यद्वा—अमृतं पीयूषमयमित्यर्थः, आध्मातं शब्दितं, ध्वनिरिति यावत्, यस्य तथाभूतः, ("आध्मातः शब्दिते दग्धे वातरुग्भेदसंयुते।" इति मेदिनी) स्निग्धगम्भीरनिर्घोष इति भावः ; यः जीमूतः मेघः, [ जीवनं जलं, तत् मूतं बद्धमनेनेति विग्रहे पृषोदरादित्वात् साधु ; यद्वा—जिनातीति जीः जराजीर्णः इत्यर्थः, तेन मूयते बध्यते असौ इति व्युत्पत्त्या,

[ परिष्वज्य स्वगतम् ]। तत् किमपत्यमयं दारकः ? ( ब )—

अङ्गादङ्गात् सृत इव निजः स्नेहजो देहसारः*
प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेव ।

जिमातेः कर्त्तार क्तिपि, मवतः चौरादिकस्य कर्म्मणि निष्ठायां रूपम् इति जीमूत-शब्दसिद्धिः ; अथवा—जीवस्य मूतः पटबन्ध इव इति विग्रहः ]। तद्वत् स्निग्धं मसृणं, सुखस्पर्शमिति यावत् [ "उपमानानि सामान्यवचनैः" ( २।१।५५ पा० ) इति उपमितसमासः ]। संहननं वपुः यस्य तथाभूतस्य ; ( "गात्रं वपुः संहननम्" इत्यमरः ) नवजलधरसुशीतलकोमलकलेवरस्येति भावः ; ते तव, [ कृद्योगात्कर्म्मणि षष्ठी ] परिष्वङ्गस्य समालिङ्गनस्य, [ "षष्ठी शेषे" (२।३।५० पा० ) इति सम्बन्धमात्र-विवक्षायां षष्ठी । "परिष्वङ्गाय" इति पाठे तु—परिष्वङ्गाय समाश्लेषाय, त्वां परिष्वङ्क्तुमित्यर्थः, "तुमर्थाच्च भाववचनात्" ( २।३।१५ पा० ) इति चतुर्थी ] उत्कण्ठते समुत्सुको भवति, व्याकुलीभवतीत्यर्थः, "सर्व्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते । तत्प्राप्तीच्छां ससङ्कल्पामुत्कण्ठां कवयो विदुः ॥" इत्युत्कण्ठालक्षणात् । तथा चैवमभिलाषुको भवतीति वा भावः । [ अत्र समासेन जीमूतेन सह संहननस्यावैधर्म्यसाम्योपदेशात्समासगतोपमाऽलङ्कारः ]। पथ्यावक्त्रं वृत्तम् ॥ २१ ॥

( ब ) तत्—तर्हि । अयं दारकः,—बालकः, कुशः इत्यर्थः । किमपत्यम् ?—मम औरसः तनयः किमु ? ; नो चेदेवं, तदा अस्य समालिङ्गने एतादृशानिर्व्वचनीय-सुखस्योदयासम्भवादिति भावः ।

अथ स्वस्य अपत्यसमालिङ्गनसदृशानिर्व्वचनीयसुखसमुद्भूतिप्रकारमाह, अङ्गादिति ।—निजः स्वकीयः, मदीय इति यावत्, स्नेहजः वात्सल्यातिरेकात्समुद्भूतः, देहसारः देहस्य शरीरस्य, सारः स्थिरांशः ; यद्वा—देहे मांसपिण्डमये निरुपमरूपाधारे अस्मिन् शरीरे, यः सारः लावण्यराशिः एवेत्यर्थः, अङ्गात् अङ्गात प्रत्यवयवात्, सर्वेभ्यः अङ्गेभ्यः इत्यर्थः, सृतः इव क्षरित इव, संस्थितोऽयमित्यन्वयः ; मम शरीरस्य संरक्षकः प्रवर्त्तकश्च आन्तरः सारसमुदायः विगलितो भवन् झटिति अभ्यन्तर प्रदेशात् बहिर्निःसृत्य पिण्डीभूतः दारकरूपेण संस्थित इवेति मन्ये इति भावः ; अमुष्य बालस्य समाश्लेषसमकालं हि मम शरीरोपादानकः सारसमुदायः तूर्णं द्रवीभूय बहिर्विगलितो भवतीवेति मन्ये,* तत्क्षणे शरीरस्य सपदि विवशभावोदयात् इति ज्ञेयम् ; "अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे" इत्यादिश्रुतौ पुत्रस्य स्वशरीराभिन्नत्वोत्कीर्त्तनादिदं द्रष्टव्योपमेयेति विभाव्यम् ; चेतना चैतन्यं, ज्ञानमित्यर्थः, स एव धातुः शरीर-

सान्द्रानन्दक्षुभितहृदयप्रस्रवेणेव सृष्टो
गात्रं श्लेषे यदमृतरसस्रोतसा सिञ्चतीव ॥ २२ ॥

खवः। तात ! ललाटन्तपो घर्मदीधितिः, तदत्र सालच्छाये मुहूर्त्तमासनपरिग्रहं करोतु तातः। ( भ )

धारकवात्सल्यादिवस्तुनिचयः, तत्तद्वस्तुनिचयानामविकृतिभावेन सत्तायामेव चैतन्यस्य सत्त्वात् तत्र तदभेदारोप इत्यवधेयम् ; स एव प्रादुर्भूय आविर्भूय, शरीराभ्यन्तरात् निःसृत्येत्यर्थः, बहिः बहिर्देशे, स्थित इव वर्त्तमान इव, अयं दारक इत्यन्वयः ; अयं मूर्त्तिमान् मे चैतन्यपदार्थ इव प्रतिभाति, अन्यथा कथं हि समालिङ्गनसमये तदद्भुतसुखोपभोगसमकालं चैतन्यलोपः सञ्जायते इत्यवधेयम् ; यत यतः, सान्द्रः प्रगाढ़ः, यः आनन्दः हर्षः, तेन क्षुभितम् आलोड़ितं, यत् हृदयम् अन्तःकरणं, स एव प्रस्रवः प्रस्रवणं, निर्झरः इत्यर्थः, तेन ; निविड़ानन्दोदयात् स्रुतः संक्षुब्धेन हृदयोत्सेनेति भावः ; सृष्टः इव निर्म्मित इव, अयं दारकः इति प्रागुक्तेनान्वयः ; अन्तःसंक्षुभ्यमाणस्य निर्झरस्य बहिः प्रकटीभाववत् तत्समये सहसा चञ्चलीभूतस्य हृदयस्यापि अभ्यन्तरदेशात दारकरूपतया बहिः प्रकटनमुत्प्रेक्षितमिति वेदितव्यम्। श्लेषे एतस्य समालिङ्गनावसरे, गात्रं मदीयं सकलमेवाङ्गम, अमृतरसस्रोतसा अतिप्रभूतेन पीयूषरसप्रवाहेण, सिञ्चतीव अभिवर्षतीव ; प्रतिप्रतीकमेवासामान्यसुखोदयादिति भावः ; अस्य दारकस्य परिष्वङ्गसमये एवं हि मे अननुभूतपूर्व्वेण हर्षातिशयेन समुद्भूयते, यदसौ दारकः मे शरीरसारं बहिर्विगलितमिव कुर्व्वन्, चेतनामपि सर्व्वथैव विलोपयन्, अकस्मात निर्म्मलानन्दसन्दोहं प्रस्रवणरूपेण बहिः सम्यगाविर्भावयंश्च मोहविवशानि मदङ्गानि सुधारसधारासु निमज्जयतीवेति मन्ये इति समुदिततात्पर्य्यम्। [ अत्र दारकस्य सुतस्नेहसाररूपत्वेन तथा धातुरूपत्वेन चोत्कीर्त्तनात् द्रव्योत्प्रेक्षाऽलङ्कारः, अपिच अमृतरसस्रोतसा सेचनाभावेऽपि सेचनोत्कीर्त्तनात् क्रियोत्प्रेक्षाऽलङ्कारः, चेतनायां धातोरभेदाध्यासाच्च रूपकमलङ्कारः, इत्येषां चतुर्णां परस्परमापेक्षतया संस्थितेः सङ्कर इति ज्ञेयम। "स्नेहजो देहसारः" इत्यत्र "देहजः स्नेहसारः" इति पाठान्तरं दृश्यते, तत्रापि नास्ति कश्चित् अर्थगतो विशेष इति ज्ञेयम् ]। मन्दाक्रान्ता वृत्तम ॥ २२ ॥

( भ ) ललाटन्तपः,—भालदेशसन्तापकरः, अतिप्रदीप्तः इत्यर्थः। [ ललाटं तपतीति व्युत्पत्त्या "असूर्य्यललाटयोर्दृशितपोः" ( ३।२।३६ पा० ) इति खश्प्रत्ययः ]। घर्म्माः,—उष्णाः, दीधितयः,—किरणाः यस्येति घर्म्मदीधितिः,—सूर्य्यः। सालस्य—

रामः । यदभिरुचितं वत्साय । (म)

सर्वे । [परिक्रम्य उपविशन्ति] ।

रामः । [स्वगतम्] ।—

अहो ! प्रश्रययोगेऽपि गतिस्थित्यासनादयः ।
साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च ॥ २१ ॥
वपुरविहितसिद्धा एव लक्ष्मीविलासाः
प्रतिजनकमनीयं कान्तिमत् केतयन्ति ।

वृक्षविशेषस्य, छाया इति सालच्छायं तस्मिन् ["विभाषा सेनासुरा--" (२।४।२५ पा०) इति पाक्षिकं क्लीवत्वम्] मुहूर्तकमास्यताम् । मुहूर्तं—कियन्तं कालमित्यर्थः । ["कालाध्वनो—" (२।३।५ पा०) इति व्याप्त्यर्थे द्वितीया] । आसनस्य परिग्रहः,—स्वीकारः तम् उपवेशनमित्यर्थः । करोतु—विदधातु ।

(म) यत्—यादृशं कर्मेत्यर्थः । अभिरुचितं—रुचेः विषयकं, रोचते इत्यर्थः । वत्साय—स्नेहास्पदाय, आयुष्मते तुभ्यं यदेवाभिरोचते, तदेव क्रियते मयेत्यर्थः । ["रुच्यर्थानां प्रीयमाणः" (१।४।३३ पा०) इति चतुर्थी । वत्सस्य प्रीयमाणत्वात् सम्प्रदानत्वम्] ।

अथ कुमारयोः विनम्रमूर्त्तिधरयोः चक्रवर्त्तिलक्षणयोगं समालोक्य तत्र सार्व्वभौमपदभाक्त्वं वितर्कयति, अहो इति ।—प्रश्रयस्य विनयस्य, योगेऽपि सम्बन्धेऽपि, यद्यप्येतौ मुनिवत् प्रशान्तचेतसौ दृश्येते तथाऽपीत्यर्थः, कुशस्य च लवस्य च तदाख्ययोरेतयोः बालयोः, गतिः गमनं, पादविक्षेपादिकमित्यर्थः, तथा स्थितिः अवस्थानं, निर्व्यापारतया अवस्थितिरित्यर्थः, अपिच आसनम् उपवेशनं, तानि एव आदयः येषां ते तथाभूताः, आदिशब्दात् भाषणवीक्षणादेः परिग्रहः; भावाः अवस्थाः; शरीरसम्पाद्यक्रियासमूहा इति भावः; साम्राज्यशंसिनः राज्यलक्ष्मीलाभसंसूचकाः, भवन्तीति शेषः; तथाहि सामुद्रके—"अकर्म्मकठिनौ हस्तौ पादावध्वनि कोमलौ । यस्य पाणितलौ रक्तौ तस्य राज्यं विनिर्दिशेत् ॥" इति । यद्यप्येतौ मुनिबालकाविव तपोवननिवाससुलभं गमनमुपवेशनादिकञ्च बिभृतः, तथाऽप्येतौ न हि ब्राह्मणतनयौ, क्षत्रियोचितौद्धत्यादेरसत्त्वेऽपि एतयोः बहुशः तत्तोविशेषविभावितराजलक्ष्मीलाभविज्ञापकानि चिह्नानि दृश्यन्ते, अतः रामान्वयसम्भूतौ एतौ इति तर्कयामि इति तु समुदितार्थः ॥ २१ ॥

अपिच प्रकारान्तरेण भाविसाम्राज्यलक्ष्मीलाभसूचकान् भावविशेषान् विवृणोति,

अमलिनमिव रत्नं रश्मयस्ते मनोज्ञा
विकसितमिव पद्मं बिन्दवो माकरन्दाः ॥ २४ ॥

भूयिष्ठाञ्च रघुकुलकुमारच्छायामनयोः पश्यामि । (य)—

कठोरपारावतकण्ठमेचकं
वपुर्वृषस्कन्धसबन्धुरांसकम् ।

वपुरित्यादि ।—ते प्रसिद्धाः, मनोज्ञाः हृदयग्राहिणः, रश्मयः दीधितयः, अमलिनं समुज्ज्वलं, रत्नमिव भास्वरमणिविशेषमिव ; मकरन्दः पुष्परसः, तस्य इमे माकरन्दाः पुष्परससम्बन्धिन इत्यर्थः, [ मकरन्दशब्दात् तत्सम्बन्धार्थे अण् ] बिन्दवः कणाः, विकसितं प्रस्फुटितं, पद्ममिव कमलमिव ; यथाहि मनोहररश्मिराजयः सुविशुद्ध-रत्नं समधिकं विभूषयन्ति, यथा वा पुष्परसलवाः प्रफुल्लपद्मप्रसूनं सातिशयं समल-ङ्कुर्व्वन्ति, तथैवेत्यर्थः, अविहितसिद्धाः नास्ति विहितं विधानं, प्रयत्नः इति यावत, यस्मिन् कर्म्मणि तद्यथा स्यात्तथा, सिद्धाः स्वयमुत्पन्नाः, कमपि प्रयत्नं विनैव समुद्भूता इति यावत्, लक्ष्म्याः सौन्दर्य्यस्य, विलासाः विलसितानि, स्फुरणानि इति यावत्, लक्ष्मीविलासा एव सौन्दर्य्यस्फुरणानि एव, लावण्यसम्पत्तय एव इति यावत्, प्रतिजनकमनीयं सर्व्वजनमनोहरं, कान्तिमत् सौन्दर्य्यपूर्णं, वपुः शरीरं, कुश-लवयोरिति शेषः, केतयन्ति अलङ्कुर्व्वन्ति, निरुपमस्वाभाविकरूपराशयः मनोहर-मेतच्छरीरं सुशोभयन्ति इत्यर्थः ; असामान्यलावण्यपरिस्फूर्त्तिः स्वाभाविकसौन्दर्य्या-करं बालयोरेतयोरेतत्कलेवरं न हि विजहाति, प्रत्युत रश्मयः रत्नमिव मकरन्द-बिन्दवः पद्ममिव च एतयोः शरीरं नितरां सुशोभयति, निसर्गसौन्दर्य्यस्य कदाऽप्यन-पायात् इति भावः ; तथाच नूनमेतौ साम्राज्यलक्ष्मीधरौ अचिरादेव भविष्यत इति विभाव्यते इत्याशयः । [ धातूनामनेकार्थत्वात् चौरादिकस्यामन्त्रणार्थकस्यापि केतधातोः भूषणार्थे लटि रूपम् । अत्र लक्ष्मीविलासानां रश्मिभिः मकरन्दबिन्दुभिश्च साधर्म्यवैधर्म्य-मार्थीपदेशादुपमेऽलङ्कारौ निरपेक्षतया स्थितत्वेन संसृष्टौ ] । मालिनी वृत्तम् ॥ २४ ॥

(य) भूयिष्ठां—बहुलाम् । [ बहुशब्दात् इष्ठनि "इष्ठस्य यिट् च" (६।४।१५९ पा०) इति बहोर्भूरादेशः इष्ठस्य लोपः यिडागमश्च ] । रघुकुलस्य—रघुवंशस्य, यः कुमारः,—बालकः, तस्य छायां—प्रतिबिम्बं, सादृश्यमित्यर्थः । ( "छाया सूर्य्यप्रिया कान्तिप्रतिबिम्बमनातपः ।" इत्यमरः ) रघुवंशीयकुमारा यां शरीरशोभां बिभ्रति, सैवाविसंवादिनी शोभा एतयोः बालयोः परिदृश्यते इति भावः ।

अथेदानीं तत्सादृश्यं स्फुटीकृत्योपपादयति, कठोरेति ।—वपुः शरीरम्, एतयोः

प्रसन्नसिंहस्तिमितञ्च वीक्षितं
ध्वनिश्च माङ्गल्यमृदङ्गमांसलः ॥ २५ ॥

बालयोरिति शेषः, कठोरः परिपुष्टाङ्गः, सबल इति यावत्, यः पारावतः कपोतः, तस्य कण्ठः इव गलदेश इव, मेचकं श्यामलं, पूर्णावयवपारावतकण्ठदेशसदृशं श्यामभास्वरमित्यर्थः, अपि च वृषस्य स्कन्ध इव स्कन्धौ भुजशिरसी यस्मिन् तत् तथोक्तं, स्थूलस्कन्धमित्यर्थः, तथा बन्धुराः अनुन्नतानताः, समाः इत्यर्थः, मांसला इति यावत्, अङ्गाः अवयवाः यस्य तत्, सर्वावयवानवद्यमित्यर्थः, [ "शेषाद्विभाषा" ( ५।४।१५४ पा० ) इति बहुव्रीहौ कप् ] दृश्यते इति शेषः, ( "बन्धुरांसकम्" इति पाठे—बन्धुरौ अंसौ भुजोपरिभागौ यत्र तादृशम् ; अस्मिन् पक्षे "वृषस्कन्धम्" इत्यत्र स्कन्धशब्देन भुजशिरसः उपरिभागो ग्रीवैकदेशो बोध्यः ) अपि च वीक्षितम् अवलोकनं, प्रसन्नञ्च तत् सिंहवत् स्तिमितञ्च इति प्रसन्नसिंहस्तिमितं [ विशेषणकर्मधारयः ] प्रसन्नं निर्मलं, प्रसादगुणभूयिष्ठत्वादनुद्वेजकमित्यर्थः, तथा सिंहवत् स्तिमितञ्च निश्चलञ्च, सिंहस्य दृष्टिः यथा प्रशान्तं निर्भयं गाम्भीर्यव्यञ्जकञ्च दृश्यते, तथा एतयोरपीति भावः ; तथा ध्वनिश्च निनादश्च, कण्ठस्वरश्चेत्यर्थः, माङ्गल्यस्य मङ्गलसूचकस्य, अनुद्धत विराविणः इत्यर्थः, मृदङ्गस्येव वाद्यभेदस्येव, मांसलः मन्द्रः, कर्णसन्तर्पणः इत्यर्थः ; स्निग्धगम्भीरः इति भावः ; [ मांसशब्दात् अस्त्यर्थे लच्प्रत्ययः ] अनुभूयते इति शेषः । [ अत्र सिंहस्येव स्तिमितं, मृदङ्गस्येव च मांसलः इति विग्रहेण प्रोक्तस्थलद्वये "उपमानानि सामान्य—" ( २।१।५५ पा० ) इति उपमानसमासः, उपमेयभूतयोः बालयोः उपमानतया उपन्यासादिति ज्ञेयम् ; यतो हि रघुकुलसन्तानानामिव एतयोः बालकयोः शरीरं नवजलधरश्यामरुचिरं मांसलं स्थूलं बलिष्ठञ्च दृश्यते, वीक्षणमपि धीरम् अनुद्वेगकरं, तथा कण्ठस्वरोऽपि गम्भीरः सुमधुरश्च प्रतीयते, ततः नूनमेतौ रघुकुलाङ्कुरौ भवत इति मन्ये इति भावः । [ अत्र समासेन पारावतकण्ठेन सह वपुषः, वृषस्कन्धेन सह स्कन्धस्य, सिंहवीक्षणेन सह वीक्षणस्य, तथा मृदङ्गध्वनिना सह कण्ठध्वनेः अवैधर्म्यसाम्योल्लेखनात्, समासगता लुप्ताः चतस्र उपमाः अलङ्काराः, तासाञ्च नैरपेक्ष्येण संस्थितेः संसृष्टिरिति ज्ञेयम् । अत्र सिंहस्येव स्तिमितमेतयोः वीक्षितं, तथा मृदङ्गस्येवैतयोः ध्वनिः मांसलः इति उपमानसमासाश्रयणात्, उपमानोपमेयभावमहिम्नैव सिंहवीक्षणसदृशस्तिमितवीक्षणस्य मृदङ्गध्वनिसदृशमांसलध्वनेः अर्थवशसम्पन्नतया लाभेन लक्षणां विनाऽप्युपपत्तेः "कमले चरणाघातं मुखं सुमुखि ! तेऽकरोत्" इत्यत्र यथा मुखस्य चरणयोः सर्वथैवासम्भवात् स्फुटतरार्थसङ्गतये चरणाघातशब्दस्य

[ सूक्ष्मं निरूप्य ]। अये ! न केवलमस्मदङ्गसंवादिनी आकृतिः । ( र )—

अपि जनकसुतायास्तच्च तच्चानुरूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥ २६ ॥

---

निर्जितत्वार्थकत्वमङ्गीकृत्य अभिभूतता हि लक्षणा स्वीकृता, तथैव रूढ़िप्रयोजन-विनाकृतलक्ष्यार्थप्रकाशनरूपनेयार्थत्वदोषः नाशङ्कनीय इत्यवधेयम् ]। वंशस्थविलं वृत्तम् ॥ २५ ॥

( र ) सूक्ष्मं निरूप्य—सविशेषमवलोक्य, निपुणतरं विभाव्येत्यर्थः। अस्मदङ्गं—मदीयावयवं, संवदति—अनुकरोति या तथाविधा अस्मदङ्गसंवादिनी—मदङ्गानुरूपा, अनयोराकृतिर्न केवलं मदाकृतिसौसादृश्यशालिनीत्यर्थः ।

अत्र बालकद्वये न केवलं मदवयवसाम्यम्, अपि तु वैदेह्याः सौसादृश्यं दृश्यते इत्याह, अपीति। इह अत्र, शिशुयुग्मे बालकद्वये, नैपुणेन निपुणतया, उन्नेयं ज्ञायमानं, प्रणिधानगम्यमित्यर्थः, तच्च तच्च प्रसिद्ध, मया प्राक् सततमेव परिलक्षितमित्यर्थः, जनकसुताया अपि वैदेह्या अपि, मत्प्राणसमायाः सीताया अपीत्यर्थः, अनुरूपं सौसादृश्यं, [ रूपस्य योग्यम् इत्यानुरूप्येऽव्ययीभावः ] स्फुटं सुव्यक्तम्, अस्ति विद्यते ; न केवलं मम, अपि तु सीतायाः अङ्गलावण्यं वाङ्माधुर्य्यं दृष्टि-विक्षेपादिकञ्च सर्व्वमेवात्राविरुद्धभावेनैवास्तीति दृश्यते इति भावः। एतदेव प्रमाणयितुं सीतायाः पुनः प्रत्यक्षायमाणतामाह, नन्विति।—ननु वितर्के, तत् प्राक् बहुशो दृष्टमित्यर्थः, अभिनवं सद्यःप्रस्फुटितं, यत् शतपत्रं पद्मं, तदिव श्रीमत् रमणीयं, प्रियायाः प्राणसमायाः सीतायाः, आस्यं वदनं, पुनः भूयः, मे अक्ष्णोः मम नयनयोः, गोचरीभूतमिव विषयीभूतमिव, नयनपथमापतितमिवेत्यर्थः ; ध्रुवम्, इदानीमेवाहं तत् मे प्रियामुखं पुनः पश्यामीति भावः। [ अत्राक्षीरगोचरीभूतेऽपि तदास्ये तद्गोचरीभूतत्वोत्कीर्त्तनेन उत्कटैककोटिकसंशयोदयात् उत्प्रेक्षाऽलङ्कारः, समासेन शतपत्रश्रिया अवैधर्म्यसाम्योक्तेश्चोपमा समासगता, सादृश्यदर्शनेन सीतामुखस्मरणोदयाच्च स्मरणालङ्कारः, एतेषाञ्चान्योऽन्यसापेक्षतया स्थितेः सङ्करः ]। मालिनी वृत्तम् ॥ २६ ॥

मुक्ताच्छदन्तच्छविदन्तुरेयं
सैवौष्ठमुद्रा स च कर्णपाशः।
नेत्रे पुनर्यद्यपि रक्तनीले
तथाऽपि सौभाग्यगुणः स एव॥ २७॥

सीतायाः सौसादृश्यं पुनरपि विशदीकृत्य प्रदर्शयति, मुक्तेति।—मुक्ता इव मौक्तिकानीव, अच्छाः विशदाः, ये दन्ताः दशनाः, तेषां या छविः कान्तिः, तया दन्तुरा उन्नतानता; आलापसमये मुक्ताफलधवलदन्तकान्तीनां समन्तात् विसरणशीलतया सर्व्वत्र समभावेन अपरिपतनात् बन्धुरवत् प्रतीयमानेति भावः; धवलदन्तकिरणमनोहारिणीत्याशयः; ("दन्तुरस्तून्नतरदे तथोन्नतानते त्रिषु।" इति मेदिनी। "मुक्ताच्छदन्तच्छविसुन्दरी" इति तु क्वचित् पाठः, तदर्थस्तु स्फुट एव)। इयं प्रत्यक्षं दृश्यमाना, शिशुयुग्मसम्बन्धिनी इत्यर्थः, ओष्ठमुद्रा ओष्ठयोः मुद्रा आवरणम्, ओष्ठाधराविति यावत्, सैव सीताऽनुरूपा एव; एतयोः दशनवाससी सर्व्वथा सीतारदनच्छदसाम्यं बिभृत एवेति भावः; स च सीतासम्बन्धी एव, कर्णपाशः शोभनकर्णः, (पाशशब्दस्य केशोत्तरवर्त्तित्वे समूहार्थकत्वं, कर्णोत्तरवर्त्तित्वे तु शोभनार्थकत्वं ज्ञेयं, तथा च मेदिनी "पाशः केशादिपूर्व्वः स्यात् समूहे कर्ण-पूर्व्वकः। सुकर्णे च" इत्यादि। "प्रशंसावचनैश्च" (२।१।६६ पा०) इति समासः)। पुनः किन्तु, यद्यपि, नेत्रे नयने, एतयोर्बालयोरिति शेषः, रक्तनीले प्रान्ते लोहिते तारकायाञ्च श्यामे, नीललोहिते इति यावत्; पितुर्विलोचनानुकारित्वादित्याशयः; ["वर्णो वर्णेन" (२।१।६९ पा०) इति समासः]। तथाऽपि एवं सीतानयनवैषम्ये विद्यमानेऽपीति भावः; स एव सीता-ऽनुरूप एव, सौभाग्यगुणः सौन्दर्य्यलक्ष्मीविलासः; पुंस्त्वयोगात् रक्तिमांशे सम्यक् तत्साम्याभावेऽपि नीलिमांशे सौसादृश्यमस्त्येवेति भावः; यतः सीतानेत्रसाम्यमत्र नातिशयं विद्यते, तर्हि एतत् तस्या एवापत्ययुगलमिति शङ्का न हि कपदि मानस-पथात् सम्यगेनापसरतीति हृदयम्। पुरुषाणां नेत्रयोः रक्तिमा नीलिमा च यथा शुभलक्षणं, स्त्रीणान्तु न तथा, इति सामुद्रिका आमनन्ति। [कथं हि अन्यदन्तच्छविमपरः धारयेदिति बिम्बानुबिम्बभावमुद्रया तद्दन्तच्छविसादृश्य-प्रतीतेः असम्बद्धवस्तुसम्बन्धरूपो निदर्शनाऽलङ्कारः, समासेन मुक्तानां दन्त-साधर्म्योत्कीर्त्तनाच्च समासगतोपमेति सङ्करः, सीतायास्ताभ्यां बालकाभ्यां

तदेतत् प्राचेतसाध्युषितमरण्यं, यत्र किल देवी परित्यक्ता। इयञ्च अनयोराकृतिर्वपुश्च। यदपि स्वतःप्रकाशानि अस्त्राणीति, तत्र विमृशामि, अपि खलु तच्चित्रदर्शनप्रासङ्गिका-मस्त्राभ्यनुज्ञानमुद्भूतं स्यात्? न हि असाम्प्रदायिकानि अस्त्राणीति पूर्वेषामपि अनुशुश्रुम। अयञ्च संप्लवमानमात्मानं सुखातिशयो हृदयस्य मे विस्रम्भयते। भूयिष्ठञ्च मया द्विधा प्रतिपन्नो देव्या गर्भभार आसीत्। (ल) [सास्रम्]।—

नैवर्द्धिमांशे न्यूनत्वप्रतीतेः व्यतिरेकालङ्कारश्च व्यज्यते, इत्यलङ्कारध्वनिः]। इन्द्रवज्रोपजातिः॥ २७॥

(ल) एतत्—पुरो दृश्यमानमित्यर्थः। प्राचेतसेन—वाल्मीकिना, अध्युषितम्—अधिष्ठितम्। तत् अरण्यं—वनं, जनस्थानमिति यावत्; वाल्मीकेराश्रमपदमिति भावः। यत्र किल—यस्मिन्नेवारण्ये। देवी—जानकी। परित्यक्ता—निर्वासिता, कुमारलक्ष्मणेनेति शेषः। इयञ्च—सीतासदृशी इत्यर्थः। अनयोः,—बालयोः। आकृतिः,—शरीरसङ्घटनपद्धतिः। वपुश्च—शरीरञ्च। यदपि—यञ्च, उक्तं प्राक् लवेनेति शेषः। स्वतः,—स्वेनैव, गुरूपदेशमन्तरैवेत्यर्थः, प्रकाशः,—आविर्भावः येषां तानि। अस्त्राणि—जृम्भकाऽऽस्त्राणि। तत्र—जृम्भकास्त्राणां स्वतःप्रकाशे; तेषामाजन्मसंसिद्धाविति भावः। विमृशामि—अवधारयामि। अपि खलु—किमु एतदित्यर्थः। चित्रदर्शनप्रासङ्गिकं—सीतायै चित्रपटप्रदर्शनावसरे मया प्रस्तावक्रमेणोक्तम्। अस्त्राभ्यनुज्ञानं—जृम्भकास्त्राणां मया स्वतः-प्रकाशानुमोदनम्, आलेख्यप्रदर्शनसमये "सर्व्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति" इति मया अनुमोदितमित्यर्थः। उद्भूतं—फलवज्जातमित्यर्थः। स्यात्?—भवेत्; मदभ्यनुज्ञावशेनैवैतेषामत्र समुदयः सम्भवतीति भावः। कुतः एवं तर्क्यते, तदेव सोपपत्तीकरोति, न हीति।—सम्प्रदायः,—गुरुपरम्परा, तं विना समुद्भूतानि असाम्प्रदायिकानि—गुरुपारम्पर्य्योपदेशादृते अनधिगमनीयानीत्यर्थः। पूर्वेषां—पूर्व्वतनानां, ब्रह्मक्षत्रादीनामित्यर्थः। अस्त्राणि—आयुधानि, जृम्भकास्त्राणीत्यर्थः। न हि अनुशुश्रुम—नैव आकर्णितवन्तः; पूर्वैरपि केचित् गुरूपदेशाद्विना एतादृशानि अस्त्राणि लब्धानीति कदाचिदप्यस्माभिर्नाकर्णितमिति भावः। [श्रणोतेः लिटि रूपं, कैचित्तु लिटि उत्तमपुरुषप्रयोगस्य कुत्रचिदप्य-

पुराऽऽरूढ़े स्नेहे परिचयविकासादुपचिते
रहो विस्रब्धाया अपि सहजलज्जाजडदृशः।
मयैवादौ ज्ञातः करतलपरामर्शकलया
द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया॥ २८॥

दर्शनात् असमीचीनतामाहुः, सत्यप्येवमेकत्वप्रयोगस्य प्रथमपुरुषैकत्वाभिन्नतया तथात्वेऽपि अत्र बहुत्वे प्रयोगस्य तु तथाभूतत्वाभावात् तथात्वोक्तिरिति ज्ञेयम्]। अयञ्च मे हृदयस्य सुखातिशयः,—आनन्दातिरेकः, कुशलवयोरवलोकननिबन्धनः सुखसन्तान इत्यर्थः। संप्लवमानं—निमज्जन्तम्; आनन्दप्रवाहे इति भावः। आत्मानं विस्रम्भयते—प्रत्याययति, "तवैव एतौ तनुजौ" इति प्रतीतिमुत्पाद्य आश्वासयतीत्यर्थः; अन्यथा बालयोरेतयोर्दर्शनानन्तरमेव कथमियान् मे सुखातिरेकः इति भावः। [अत्र "आत्मा विस्रम्भते" इति अणिकर्त्तुरात्मनः चित्तवत्कर्तृकत्वाभावात्, "अणावकर्म्मकात्—"(१।३।८८ पा०) इत्यनुशासनेन परस्मैपदत्वं नाशङ्कनीयम्]। भूयिष्ठञ्च—बहुशश्च। द्विधा प्रतिपन्नः,—द्वितयत्वेनाभिज्ञातः, भ्रूणद्वयमस्मिन् गर्भे विद्यते इत्यनुमितः इत्यर्थः। देव्याः,—सीतायाः। गर्भभारः,—भारभूतमुदरसंस्थानमिति यावत्। आसीत्—अभूत्; सीतायाः जठराभ्यन्तरे यमौ एव बालौ विराजेते इत्यस्मादेवाहं प्राक् हस्तेन संवाहनाद्यवसरेऽन्वभवमिति भावः।

एतौ यमौ एव बालौ सीतागर्भसम्भूताविति प्रत्याययितुं प्रोक्तमेवार्थं स्वयं विशदीकृत्य व्यनक्ति, पुरेति।—पुरा पूर्व्वम्; उद्वाहात् परमिति भावः; आरूढ़े समुत्पन्ने, प्रथमसहावस्थानावसरे ईषन्मुकुलिते इति यावत्, स्नेहे प्रणये, परिचयस्य दीर्घकालं व्याप्य साहचर्य्यस्य, विकासात् प्रभावात्, उपचिते विवर्द्धिते सति; यदा हि तदीयं प्रेम निरतिशयं विवर्द्धितमासीत् तदेति भावः; रहः निर्ज्जने, विस्रब्धायाः विश्वस्तायाः, अपि; अहमत्र ईदृशी कैरपि न वीक्षिता भवेयमिति असङ्कुचितायाः अपि इति भावः; सहजया स्वाभाविक्या, लज्जया त्रपया, जडे निर्व्यापारे, निमीलिते इत्यर्थः, दृशौ चक्षुषी यस्याः तस्याः; तस्याः मुग्धवधूत्वादिति भावः; गर्भग्रन्थिः ग्रन्थीभूतगर्भपिण्डः, जठराभ्यन्तरे गर्भस्य सन्निवेशविधिरिति यावत्, मयैव न तु तयेति भावः; (अन्ययोगव्यवच्छेदकोऽयमेवकारः) आदौ प्राक्; सीतायाः अपि अभिज्ञानात् पूर्व्वमिति भावः; करतलेन पाणितलेन, यः परामर्शः संवाहनक्रिया, तस्य कलया कलनया, विधानेनेत्यर्थः, चातुर्य्येणेति यावत्; हस्तेन मृदु परिवाहणावसरे इति भावः; यद्वा—परामर्श एव कला शिल्पं, शिल्पकौशल-

[रुदित्वा] । तत्किमेतौ पृच्छामि केनापि उपायेन ? (व)

लवः । तात ! किमेतत् ?—

बाष्पवर्षेण नीतं वो जगन्मङ्गलमाननम् ।
अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम् ॥ २९ ॥

---

विशेष इति यावत्, ("कला स्यात् मूलरैवृद्धौ शिल्पादावंशमात्रके । षोडशांशे च चन्द्रस्य कलनाकालमानयोः ॥" इति मेदिनी) अधिकतया कौशलविशेषव्यतिरिक्ततया वा परामर्शने कृते अतिशालीना जानकी इस्तमपसारयतीति तथ्यनिर्णयः अशक्यः स्यात् इति कलाशब्दप्रयोगोऽत्र बोध्यः ; द्विधा द्वितयत्वेन, द्विधाविभक्तत्वेनेति यावत्, ज्ञातः विदितः, तदनु तत्पश्चात् ; मदभिज्ञानात् परमिति भावः ; कैरपि दिवसैः कतिपयैर्वासरैः, (करणैः) तया सीतया, ज्ञात इति पूर्वेणान्वयः ; मद्दर्शनात् परं हि सुस्फुटे गर्भे सञ्जाते यमरूपोऽयमिति स्वयमपि समवेदि इति भावः ; तथा चेमौ बालौ नूनं सीतासुतौ भविष्यत इत्याशङ्कितार्थः । [अत्र प्रस्तुतयोरेव कर्त्रोः सीतारामयोः एकज्ञातत्वरूपक्रियाऽभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः ] । शिखरिणी वृत्तम् ॥ २८ ॥

(व) रुदित्वा—सीतानिर्व्वासनमनुस्मृत्य शोकवेगं विसोढुमशक्नुवन् सुचिरं बाष्पं विमुच्येत्यर्थः । तत्—तर्हि, एतयोः सीतासुतत्वसंशये इत्यर्थः । एतौ—कुमारौ । केनापि उपायेन—कमपि व्याजमनुसृत्येत्यर्थः । किं पृच्छामि ?—किं जिज्ञासे ; "भवन्तौ कौ, कस्य सुतौ च ?" इत्यादिकमिति भावः ।

रोदनकारणं किमिति पृच्छति, बाष्पेति ।—जगन्मङ्गलं त्रिलोकशुभकरं, विलोकितं सत् जगतां निरतिशयशुभाधायकमित्यर्थः, वः युष्माकम्, आननं मुखं, बाष्पवर्षेण अविरलधारमश्रुविमोचनेन, अवश्यायेन नीहारेण, ("अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ।" इत्यमरः) अवसिक्तस्य आर्द्रीकृतस्य, अभ्युक्षितस्येत्यर्थः, पुण्डरीकस्य पद्मस्य, चारुतां रमणीयतां, नीतं प्रापितम्, एतत् किम् ? इति पूर्वकथ्यवाक्येनान्वयः ; तव प्रफुल्लपुण्डरीकसन्निभे मुखे कथं हि नियतं नीहारराशिप्रतीकाशः बाष्पासारविमोक्षः दृश्यते इति भावः ; इन्दीवरकल्पं भगवतो राघवस्य आननं तदानीं विरहविपाण्डुरतया पुण्डरीकोपममभूदिति ध्येयम् । [अत्र एकस्य चारुतामपरः कथं हि प्राप्तुं शक्नुयात् इति वस्तुसम्बन्धे असम्भवत्यपि बिम्बप्रतिबिम्बभावमुद्रया तच्चारुतासदृशचारुताबोधस्य आसञ्जनेनोपपादनात् असम्भववस्तुसम्बन्धरूपो निदर्शनाभेदः ] । पथ्यावक्त्रं वृत्तम् ॥ २९ ॥

कुशः। अयि वत्स!—

विना सीतादेव्या किमिव हि न दुःखं रघुपतेः?
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति।
स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमित्येवं पृच्छस्यनधिगतरामायण इव? ॥ ३० ॥

दुर्व्वहसीताविप्रयोगममुष्य एवैष वाष्पनिर्म्मोक इत्युक्त्वा रामायणतत्त्वार्थानभिज्ञत्वेन लवं सनिकारमाह, विनेति।—सीतादेव्या देवीस्वरूपया वैदेह्या, विना ऋते; तद्विप्रयुक्तस्येति भावः; रघुपतेः रघुनायकस्य रामचन्द्रस्य, किमिव हि त्रिलोकीस्थितं किमपि वस्तु हि, न दुःखं न दुःखकरम्? इह जगति निखिलसुखसंसाधकं राजैश्वर्य्यादिकं वस्तुजातं समासाद्याप्यसौ रघुमणिः केवलं सीताविरहितः सततमेव दुःखायते इति भावः; अतः सीताविरह एव ईदृशस्य वाष्पविसर्गस्य हेतुः इत्याशयः। एतदेव सामान्याकारेणोपपादयति, प्रियेति।—प्रियायाः प्रियतमायाः पत्न्याः, नाशे वियोगे सति; यद्वा—प्रियाणां प्रेमास्पदीभूतानां विषयाणाम्, आ सम्यक्, नाशे अदर्शने, निधने सतीत्यर्थः, मनसोऽभीष्टवस्तूनां सर्व्वथा अप्राप्तौ सत्यामिति यावत्, कृत्स्नं किल समग्रमेव; न तु अंशविशेष इति भावः; जगत् निखिलप्राणिपूर्णमेवैतत् भूमण्डलम्, अरण्यं वनकल्पं, भवति हि सम्पद्यते एव; प्रियाविप्रयोगे हि सर्वं द्रव्यजातपूर्णमपि जगदरण्यप्रायं शून्यमेव प्रायशो विरहिभिरनुभूयते इति भावः। दुःखिनः जगति बहवः सन्ति, न हि भवन्ति ते एवं विह्वलाः इति शङ्कामपनेतुम् अस्य तु तदसामान्यम् इत्येतदेव विशदीकृत्य विवृणोति, स चेति।—स च तादृशः, अन्यत्र क्वाप्यदृष्टः इत्यर्थः, तावान् तत्परिमितः, अपरिमेय इत्यर्थः, स्नेहः प्रणयः, उभयोरासीदिति शेषः, अयमपि इदानीमनुभूयमानश्च, निरवधिः असीमः, आजीवनं स्थायितया अपार इति यावत्, वियोगः विरहः; यत्र हि प्राक् निरतिशया सुखसन्ततिः व्याजात, तत्र चेदिदानीम् अनन्तः विरहजक्लेशः विलसति, तदा असौ नितरामसहनीय एव भवति इति भावः; प्राक् सीतासविधे तया सार्द्धं सततं विमलं सुखमुपेयुषः रघुमणेः इदानीं समापतिते कथञ्चिदपि अविषहणीये तद्विरहे न हि भवति विस्मयकरः विच्छाये कमलप्राये तदीये मुखे तुषारपातप्रतिमः अश्रुसेकः इति तु गर्भिताशयः। कथं हि रामभद्रः सुचिरं विरहजं क्लेशमनुभूय वाष्पसेकैः सर्व्वामपि वनस्थलीमभ्यषिञ्चत्, तत्तु करुणरसाकरे रामायणे तदध्येतृभिरनिशमेव दृश्यते,

रामः। [ स्वगतम् ]। अये ! तटस्थित आलापः, कृतं प्रश्नेन। दग्धहृदय ! कोऽयमाकस्मिकस्ते स्नेहपरिप्लवो विकारः? एवञ्च निर्भिन्नहृदयावेगः शिशुजनेनाप्यनुकम्पितोऽस्मि, भवतु तावत्, अन्तरयामि। [ प्रकाशम् ]। वत्सौ ! रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वतीनिष्यन्दः प्रशस्तिरादित्यवंशस्य; तत्र कौतूहलेन यत्किञ्चिच्छ्रोतुमिच्छामि। ( अ )

तेन हि त्वत्प्रश्नः विफल एवेत्याह, किमिति।—अनधिगतम् अपठितं, रामायणं येन तादृश इव, रामायणतत्त्वानभिज्ञः जन इवेत्यर्थः, किमिति कथं हि, एवम् इत्थं, "किमेतत्" इत्यादिकमिति यावत्, पृच्छसि? जिज्ञाससे? महामुनेः वाल्मीकेः समीपे समग्रं रामायणमधीतवतः तव नैषः प्रश्नः युज्यते इति भावः। [ अत्र पूर्व्वार्द्धे प्रियामात्रजनितजगदरण्यानुभवरूपसामान्यार्थेन सीताविरहकृतदुःखोपभोगरूपविशेषार्थस्य समर्थनात सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः, अपिच जगति अरण्यस्य तादात्म्याध्यासात् निरङ्गं रूपकञ्चालङ्कारः, तृतीयपादेन च एकत्र विरुद्धयोः तादृशस्नेहवियोगयोः सङ्घटनात् विरूपसङ्घटनारूपो विषमालङ्कारः, चतुर्थपादेन तु अनधिगतरामायणेन पुरुषेण सार्द्धं लवस्यावैधर्म्यसाम्योत्कीर्त्तनादुपमाऽलङ्कारश्च, एषां चतुर्णां परस्परसापेक्षतया स्थितेः सङ्करः इति ज्ञेयम् ]। शिखरिणी वृत्तम् ॥ २० ॥

( अ ) तटे—समीपे, स्थितः,—समासीनः, सीतासम्बन्धकथायाः मध्यमप्रविश्यैव तदुपान्ते वर्त्तमान इत्यर्थः, उदासीनपुरुषाभ्यामिव प्रवर्त्तित इति यावत्। आलापः,—अनयोः अाचोः मातृत्वसम्बन्धोल्लेखरहितं मिथः भाषणम्; संलापेनैतेन स्फुटं परिज्ञायते, यन्नैतौ सीतासुतौ इति, तथात्वे कथं हि कुशः "सीतादेव्याः" इत्यत्र "अनन्याः" इत्यादिकं नाभिदध्यादिति हृदयम्। प्रश्नेन—सीतारामौ किं युवयोः मातापितरौ इत्येवं परिपृच्छयेति यावत्। कृतम्—अलम्। दग्धहृदय !—हतचेतः; सीतासुतावेवैतौ इति प्राक् कृताऽऽशायाः सर्व्वथेदानीं वैफल्योदयेन निर्दग्धीभूतस्यास्य नाशप्रायत्वमाशङ्क्यानास्थयैवैषा सम्बुद्धिः कृतेति ज्ञेयम्। आकस्मिकः,—अकस्मादुद्भूतः, अहेतुक इति यावत्। स्नेहपरिप्लवः,—स्नेहेन—वात्सल्येन, परिप्लवः,—चञ्चलः, वात्सल्यविवशतया समधिकमस्थिर इति यावत्। विकारः,—अन्यथाभावः, स्नेहाधिक्योदयात् निरतिशयचाञ्चल्यमिति यावत्। एवञ्च—इत्थञ्च; अश्रुप्रवाह-

कुश:। स कृत्स्न एव सन्दर्भोऽस्माभिराहृत्त:, मृत्युपर्ग्रस्थितौ तावदिमौ बालचरितस्यान्त्येऽध्याये द्वौ श्लोकौ। (च)

राम:। उदीरयतु वत्स:। (स)

कुश:।—

प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मन:।
प्रियभाव: स तु तया स्वगुणैरेव वर्द्धित:॥ २१॥

---

वर्यत्वादिति भाव:। निर्भिन्न:,—प्रकटीभूत:, हृदयस्य—चेतस:, आवेग:,—आवल्यं, दु:खसंक्षोभ इति यावत्, यस्य तथाभूत:, अहमिति शेष:। शिशुजनेन—बालकजनेन। अनुकम्पित:,—अनुगृहीत:, कृपापात्रीकृत इत्यर्थ:। अभि-भवामि; स्वभावधीरस्य मे एतादृशमधैर्य्यं सर्व्वथैवानुपपन्नमिति भाव:। भवतु तावत्—अस्त्वेवमित्यर्थ:। किं तत्? तदेवाह, अन्तरेति।—अन्तरयामि—आपतितं शोकावेगं विषयान्तरसञ्चारणेन अपनयामि, [अन्तरं करोमीत्यर्थे "तत्करोति—" (ग०) इति णिचि लटि रूपम्] सरस्वत्या:,—वाच:, ("गीर्वाग्वाणी सरस्वती" इत्यमर:) निष्यन्द:,—प्रवाह:, विरचनमित्यर्थ:, वाक्यसौम इति यावत्। आदित्यवंशस्य—सूर्य्यवंशस्य। प्रशस्ति:,—प्रशंसा, चरितकीर्त्तनमित्यर्थ:। तत्र—प्रशस्तौ। कौतूहलेन—औत्सुक्येन, तच्छ्रवणे तदतिरेकोदयेनेत्यर्थ:। यत्किञ्चित्—कञ्चिदंशविशेषमिति यावत्। श्रोतुमिच्छामि—आकर्णितुमभिलषामि।

(च) कृत्स्न एव—समग्र एव। सन्दर्भ:,—रामायणग्रन्थ:। आहृत्त:,—अधीत:। मृत्युपर्यस्थितौ—स्मरणपथमापतितौ। बालचरितस्य—पूर्व्वचरितस्य, प्रथमस्य बालकाण्ड-स्येत्यर्थ:। अन्त्ये—चरमे। अध्याये—परिच्छेदे। द्वौ श्लोकौ—द्वे पद्ये; अधीतनिखिल-रामायणप्रबन्धोऽपि अहं केवलमिदानीमनयो: श्लोकयो: स्मरामि, तेन हि भवत्कौतुक-विनिवृत्तये तावेव पठितुं शक्नोमि इति भाव:।

(स) उदीरयतु—अभिदधातु। वत्स:,—अतिस्नेहास्पदं भवानित्यर्थ:।

तौ एव श्लोकौ इदानीं क्रमेणाभिधत्ते, प्रकृत्यैवेति।—सीता वैदेही, महात्मन: महो-दारचेतस:, रामस्य रघुमणे:, प्रकृत्यैव स्वभावेनैव; न तु कृत्रिमतयेति भाव:; प्रिया प्रीतिकरी, आसीत् अभूत्; महात्मना: राघव: जानक्यां सत्वत एव प्रणयी आसीत्, न त्वसौ अस्यां मनागपि कपटप्रणयं व्यधत्त इति भाव:। कालक्रमेण तत्प्रणयस्य अत्यन्तातिशयं निरस्यति, प्रियभाव इति।—तया सीतया, स तु प्रियभाव: तथाविध: अनिर्व्वचनीय: प्रणय: इत्यर्थ:, स्वगुणैरेव स्वकीयपातिव्रत्यादिगुणसमूहैरेव, वर्द्धित: द्विं

तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत्।
हृदयं त्वेव जानाति प्रीतियोगं परस्परम्॥३२॥ इति।

रामः। कष्टम्!! अतिदारुणो हृदयमर्म्मोपघातः। हा देवि! एवं किल तदाऽऽसीत्। अहो! निरन्वयविपर्य्यास-विरमवृत्तयो विप्रलम्भपर्य्यवसायिनस्तापयन्ति संसार-वृत्तान्ताः। (छ)—

सीत; महात्मा रघुप्रवरः सीतायाः केवलमनुपमं लावण्यमभिसमीक्ष्य न तस्यामति-प्रणयी अभूत, न वा कृपासिन्धुः रघुमणिः महौदार्य्येण तस्यां वात्सल्यवानासीत्, यत् तत्प्रियभावे कृत्रिमता आशङ्केत, असौ तया स्वकीयविनयाऽऽर्ज्जवादिगुणगरिम्णैवोपा-र्ज्जितः, तेन हि महात्मनोरेतयोरतिविशुद्धः सुधाऽवदातः तादृशः प्रियभावः अन्यत्र दुर्लभ एवेति भावः; एतादृशः प्रियभावः निर्व्वासनावसरे कथं हि ततः सपदि विलुप्तोऽभूत, तदतीव विस्मयकरमिति तु हृदयम्। पथ्यावक्त्रं वृत्तम्॥३१॥

सीताया अपि अकपटः तथैव प्रियभावः रघुमणौ आसीदित्यावेदयति, तथैवेति।—तथैव सीता यथा रामस्य आसीत् तद्वदेवेत्यर्थः, सीतायाः वैदेह्याः, रामः रघूद्वहः, प्राणेभ्योऽपि स्वजीवनादपि, प्रियः प्रीत्यास्पदम्, अभवत् आसीत्; रामवत् सीता अपि न हि रामे कृत्रिमप्रणयवती बभूवेति भावः। कीदृशं तत्? इति प्रश्ने तस्यानुपमत्व-माह, हृदयमिति।—हृदयमेव तयोरुभयोः मानसमेव, परस्परम् अन्योऽन्यगतं, प्रीतियोगन्तु प्रणयसम्बन्धं पुनः, इतरेतरगतम् अतिविशुद्धं हार्द्दमिति यावत्, जानाति वेत्ति; तयोरुभयोः परस्परहृदयं विना अन्यस्य कस्यापि तत तादृशं प्रीतियोगं नाभि-जानाति, अन्यत्र तादृशप्रेमादर्शनात् दृष्टान्तस्य सौलभ्यविरहादिति भावः। एतादृशे परस्परसुदृढ़प्रणये सति कथं हि तयोरेवम् अकस्मात् वियोगः उदपादि, तद्विषयक-विस्मयस्य भगवति रामभद्रे समुत्पादनार्थं श्लोकयोरेतयोरवतारणा इत्यवधेयम्। [श्लोकावेतौ अस्मद्दृष्टेषु वाल्मीकीये रामायणे बालकाण्डान्तिमाध्याये न दृश्येते, एतदनुरूपौ हि अवलोक्येते, तेन तत्प्रतिच्छायामवलम्ब्य कविना अभिनवावेतौ श्लोकौ विरचिताविति विभावयामः। तच्छ्लोकौ यथा,—"प्रिया तु सीता रामस्य दाराः पितृकृता इति। गुणाद्रूपगुणाच्चापि प्रीतिर्भूयो विवर्द्धते॥ तस्याश्च भर्त्ता द्विगुणं हृदये परिवर्त्तते। अन्तर्गतमपि व्यक्तमाख्याति हृदयं हृदा॥" इति]। पथ्यावक्त्रं वृत्तम्॥३२॥

(छ) कष्टम्—अतीव क्लेशकरम्, अतिदुःखप्रदमित्यर्थः। अतिदारुणः,—अति-

क्व तावानानन्दो निरतिशयविस्रम्भबहुलः ?
क्व तेऽन्योन्यं यत्नाः ? क्व च नु गहनाः कौतुकरसाः ?
सुखे वा दुःखे वा क्व नु खलु तदैक्यं हृदययोः ?
तथाप्येष प्राणः स्फुरति न तु पापो विरमति ! ॥ ३३ ॥

भयङ्करः, कथमपि सोढुमशक्य इत्यर्थः। हृदयमर्म्मोपघातः,—हृदयस्य—अन्तःकरणस्य, मर्माणि—शिरास्नायुस्थिसन्धिप्रभृतीनां सन्निपातस्थानानि, तेषामुपघातः,—ताड़नं, संक्षोभः इति यावत्; यद्वा—हृदयमर्म्मणः,—अन्तःकरणरूपमर्मस्थलस्य, उपघातः,—विदारणम्; बालस्यैतत् भीषणं समुद्भूतपूर्व्वस्मृतिर्मे हृदयं सर्व्वथा निक्रन्ततीति भावः। ("उद्घातः" इति पाठान्तरम्) अथ स्मृतेरभ्युदयेन अतिविषमं तथाविधं शोकं सोढुमपारयन् अधीरतया विलपति, क्व इत्याह।—तदा—बाल्ये वयसि। एवं किल—इत्थमेव। आसीत्—अवर्त्तिष्ट; आवयोः प्रीतियोगः आयुष्मता कुशेन महर्षिविवर्णितः यथा उक्तः, स तथैव तत्त्वतः आसीदिति भावः। निरन्वयेति।—निः,—नास्ति, अन्वयः,—सम्बन्धः हेतुर्वा यस्मिन् तथाभूतः, आकस्मिक इति यावत्, यः विपर्य्यासः,—विपरिणामः, पूर्वावस्थाया अन्यथाभावः इत्यर्थः, तेन विरसाः,—अहृद्याः, व्रत्तयः,—व्यापाराः येषां तथाभूताः, अहेतुकदशाविपर्य्ययोत्पादकतया सुतरां मर्म्मपीड़का इति भावः। विप्रेति।—विप्रलम्भे—वियोगोद्भूते शोके, पर्य्यवस्यन्ति—परिणमन्ति ये तथाभूताः; सन्तापोदर्का इति भावः। संसारस्य—सृष्टेः, एतज्जगत इति यावत्, वृत्तान्ताः,—वृत्तवर्त्मानि, कर्म्मनिचयाः इत्यर्थः। सन्तापयन्ति—व्यथयन्ति; वियोगबहुले इह जगति मर्म्मोपपीड़काः व्यापारनिवहाः सततं हि संसारिणां मानसानि व्याकुलीकुर्वन्ति, नास्ति कियानपि इह सुखलेश इति भावः।

शोको हि सांसारिकं विपर्य्यासमिदानीं स्वस्मिन्नेव विशदीकृत्य विवृणोति, क्वेति।—निः नास्ति, अतिशयः आतिशय्यं यस्मात् तथाभूतः, लोकोत्तरः इत्यर्थः, यः विस्रम्भः विश्वासः, प्रीतिप्रवणतेति यावत्, तेन बहुलः घनः; असीमप्रणयपरिपूर्णः इति भावः; तावान् तत्परिमितः, आनन्दः हर्षः, क्व कुत्र ? अधुना प्रागनुभूता तादृशी प्रेमगर्भसुखसन्ततिधारा कुत्र विलुप्तेति भावः; अन्योऽन्यम् इतरेतरम्, अधिश्रिताः इति शेषः, ते तथाविधाः, अकपटाः इति यावत्, यत्नाः सुखाधायकाः चेष्टाविशेषाः, क्व कुत्र ? विलुप्ताः इति शेषः; ते हि इदानीं नानुभूयन्ते इत्याशयः; गहनाः निविड़ाः, निर्भरा इत्यर्थः, कौतुकेषु कौतूहलोत्पादकेषु विषयेषु इति यावत्; नर्म्महासादिकेषु

भोः ! कष्टम् ।—

प्रियागुणसहस्राणामेकोन्मीलनपेशलः ।
य एव दुःस्मरः कालस्तमेव स्मारिता वयम् ॥ ३४ ॥

वा, रसाः रागाः, क्व च नु ? कुत्र हि अपसृत्य गता इत्यर्थः ; प्रागिव वयमिदानीं कौतुकोद्दीपकविषयव्यापृता न भवेम इति भावः ; सुखे वा आनन्दे वा, दुःखे वा विषादे वा, तत् प्रागवस्थितं, तथाविधमित्यर्थः, हृदययोः सीतायाः मम च मानसयोः, ऐक्यम् एकीभावः, सुखदुःखयोरभिन्नानुभूतिरिति यावत्, क्व नु खलु ? कुत्र हि विलुप्तं सत् गतमित्यर्थः ; पुरा हि पतिव्रता सीता यथा मम सुखे सुखिनी दुःखे च दुःखिनी आसीत्, तथैवाहमपि आसम्, उभौ हि आवां समसुखदुःखौ आस्व, इदानीन्तु तादृशभावः कथं हि सपदि अदृश्यतां गतः, इत्यहो विचित्राः संसारगतयः इति भावः ; तथाऽपि पूर्व्वमिवम्भूते अकपटे प्रणये उपभुक्ते अधुना तु दुर्व्विपाके तस्याः विरहे समुदिते अपीत्यर्थः, एषः मदीयः इति भावः ; पापः दारुणदुःखदायकतया दुरदृष्टफलभूत इत्यर्थः, दग्ध इति यावत्, प्राणः हृदयस्थवायुविशेषः, प्राणवायुरिति यावत्, ("प्राणो हृन्मारुते बोले काव्यजीवेऽनले बले।" इति मेदिनी। अत्र प्राणस्य आन्तरवायुविशेषार्थकतया एकत्वमवधेयम्) ; स्फुरति स्पन्दते, इदानीमपि निश्वसिति इति यावत्, न तु विरमति न श्वसनकर्म्मणः निवर्त्तते, नाहं म्रिये इत्यर्थः ; सम्प्रति प्राणविनाशनमेव मे वरमित्याशयः। [ "व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम्। अत्र प्राणनाशकरकठोरदुःखकारणसत्त्वेऽपि प्राणवियोगरूपफलोदयस्याभावात् विशेषोक्त्यलङ्कारः ]। शिखरिणी वृत्तम् ॥ ३३ ॥

अथ तेषां ग्रैष्मसमयस्य कुशेन महर्षिभारत्या स्मृतिपथमापादितस्य सातिशयदुःखदायकत्वमाह, प्रियेति।—प्रियायाः सीतायाः, गुणसहस्राणाम् असंख्यानां सारल्यपातिव्रत्यादिगुणानाम्, एकेन असाधारणेन, उन्मीलनेन उदयेन, पेशलः मनोरमः ; वैदेह्याः ये ये हि श्रेष्ठाः गुणवर्गाः मया यस्मिन् यस्मिन् काले प्रागनुभूताः, तेषां तेषां हि विभिन्नकालिकानां सर्व्वेषाम् एव गुणानां युगपत् एतस्मिन्नेव काले स्मृतिपथे समुदयात् अतीव रमणीयतमः इति भावः ; यद्वा—प्रियागुणसहस्राणाम् एकोन्मीलने असाधारणोन्मेषे, सम्पूर्णतया स्मृतिविषयीभूतसम्पादने इत्यर्थः, पेशलः दक्षः, निपुण इत्यर्थः ; ("चारौ दक्षे च पेशलः" इत्यमरः) प्रियायाः असंख्येयगुणावलीनामतिशयेन स्मारक इति समुदितार्थः, य एव यो हि, कालः पूर्व्वतनः सुखकरः समयः, दुःस्मरः सर्व्वथा दुःखदायकतया अधुना स्मर्त्तुमशक्यः ; इदानीन्तन-

तदा किञ्चित् किञ्चित् कृतपदमहोभिः कतिपयै-
स्तदीषद्विस्तारि स्तनयुगलमासीन्मृगदृशः ।
वयःस्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धस्य वपुषि ॥ २५ ॥

---

वियोगसमयस्य सुखकरकालोत्तरवर्त्तितया स्वत एव दुर्व्विषहत्वेन प्रागनुभूतसुखसमयः स्मृतिपथमापतितः सुतरामेवासहनीयो भवतीति भावः ; तमेव तादृशं कालमेव, वयं स्मारिताः स्मृतिपथमापादिताः ; सीतागुणसम्पृक्तस्य पूर्व्वतनसुखसमयस्य अधुना स्मरणात् शोकः नितरामेव मर्म्माणि पीडयतीति भावः । [ वयमित्यस्य "गतिबुद्धि—" ( १।४।५२ पा० ) इत्यादिना अणिकर्त्तुः कर्म्मत्वेन उक्ते कर्म्मणि प्रथमा ज्ञेया । अत्र "स्मारिताः" इत्यस्य ज्ञानसामान्यार्थपरत्वेन व्याख्याने स्मृतिरूपज्ञानविशेषार्थकतया च अव्याख्याने प्रदर्शितसूत्रस्य ज्ञानसामान्यार्थकत्वेन विषयतया प्रोक्तार्थसङ्गतिरित्यव-धेयम् । तथा च "दृशेश्च" इति वार्त्तिकसूत्रे दीक्षिताः,—"सूत्रे ज्ञानसामान्यार्थाना-मेव ग्रहणं, न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते, तेन स्मरति जिघ्रतीत्यादीनां न, स्मारयति घ्रापयति वा देवदत्तेन" इति । अन्ये तु दर्शनरूपज्ञानविशेषार्थकदृशि-धातोरेवाणिकर्त्तुः कर्म्मत्वस्य वैकल्पिकत्वं, ज्ञानसामान्यार्थकानान्तु नित्यत्वं विदधति, तथा च तन्मते न कश्चिद्दोषः, इत्यलमनल्पजल्पनेन इति ] । पथ्यावक्त्रं वृत्तम् ॥ २४ ॥

तादृशरमणीयतरः कालः कथम्भूत एवासीत्, यो हि इदानीं सर्व्वथा दुःस्मरणीय इत्युच्यते, तमेवाभिधत्ते, तदेति ।—तदा बाल्ये वयसि, विवाहात् परत एवेत्यर्थः ; प्रागेव स्तनोद्भेदकालात् उपयमनविधेः प्राशस्त्यादित्याशयः ; मृगदृशः कुरङ्ग-नयनायाः, प्रियायाः सीताया इत्यर्थः, स्तनयुगलं कुचयुग्म, किञ्चित् किञ्चित् ईष-दीषत्, कृतपदं लब्धस्थानं, क्रमेण मुकुलमिव कियत् लब्धोदयं सदित्यर्थः, कतिपयैः कतिभिः, अहोभिः दिवसैः, कियद्दिनाभ्यन्तर एवेत्यर्थः, [ अपवर्गे तृतीया ] तत् स्तनयुगलम्, ईषद्विस्तारि स्तोकविकाशि, स्वल्पविस्तृतमिति यावत्, आसीत् अभूत् ; शैशवोद्गमात् क्रमशः तत्कालोचितं स्थौल्यमधिगन्तुमारेभे इति भावः ; यत्र यस्या-मवस्थायां, वयसः यौवनस्य, स्नेहस्य प्रणयस्य, आकूतस्य अभिप्रायस्य च, व्यतिकरेण सम्पर्केण, घनः निबिडः, निरतिशयं परिपुष्टः इति यावत्, मदनः कामः, हृदि मानसे, प्रगल्भः प्रौढः, व्यापारः क्रिया यस्य सः, सम्यगुद्बुद्धः सन् इत्यर्थः, स्फुरति विकाशते, वपुषि शरीरे, बहिराकारे इति यावत्, मुग्धस्य मृदुलस्य, लज्जाभयात् गाति-प्रकाश इत्यर्थः, तादृशस्य सन्, स्फुरति इत्यन्वयः ; तथा च इदानीं कामः वयसा प्रेम्णा

कुशः । अयञ्च मन्दाकिनीचित्रकूटवनविहारे सीतादेवी-मुद्दिश्य रघुपतेः श्लोकः । ( क )—

त्वदर्थमिव विन्यस्तः शिलापट्टोऽयमग्रतः ।
यस्यायमभितः पुष्पैः प्रवृष्ट इव केशरः ॥ २६ ॥

---

अभिप्रायविशेषेण च नितरां प्रवर्द्धितः सन् हृदये समुत्कटः, शरीरे सौम्यदर्शनः समजनि इति भावः । [ अत्र एकस्यैव मदनस्य हृदयदेहरूपस्थलद्वयगोचरत्वेन पर्य्यायालङ्कारः, अपि च प्रगल्भत्वमुग्धत्वयोर्विरुद्धयोः एकत्र तदीयवपुषि अविरुद्धतया समावेशेन विरोधाभासोऽलङ्कारः, इत्युभयोरङ्गाङ्गिभावेन सङ्करः ]। शिखरिणी वृत्तम् ॥ २५ ॥

( क ) मन्दाकिनी—चित्रकूटोपान्तचारिणी काचित् गिरिनदी, गङ्गा इति केचित्, तथा च रघौ कालिदासः,—"मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः ।" इति ; चित्रकूटस्य—तदाख्यः पर्व्वतविशेषः, तत्र यानि वनानि—अरण्यानि, तेषु विहारः,—क्रीडा तस्मिन्, तत्र तत्र विहारावसरे इत्यर्थः । सीतादेवीं—वैदेहीम् । उद्दिश्य—सम्बोध्य । रघुपतेः श्लोकः,—रघुपतिना एषः वक्ष्यमाणः श्लोकः अभ्यधायि इत्यर्थः ।

अथ विहारकालिकं तमेव श्लोकमिदानीमभिधत्ते, त्वदर्थमिवेति ।—अग्रतः पुरतः, अयं परिदृश्यमानः, शिलापट्टः शिलाखण्डरूपमासनं, त्वदर्थमिव तवोपवेशनार्थमिव, विन्यस्तः स्थापितः, यस्य शिलापट्टस्य, अभितः सर्व्वतः, अयं केशरः वकुलपादपः, पुष्पैः कुसुमैः, प्रवृष्टः इव वर्षणकर्म्मनिरत इव ; वकुलपादपः स्वकुसुमानि शिलातलेषु सन्न्यस्य तव सुखशय्यां विरचयितुं प्रवृत्त इव प्रतीयते इति भावः । [ अत्र "यस्य" इत्यत्र अभितःशब्दयोगात् द्वितीयाप्रसक्तेः "अभितःपरितः—" ( वा० ) इत्याद्यनु-शासनोल्लङ्घनेन षष्ठीप्रयोगात् च्युतसंस्कारताऽऽख्यः दोषः । श्लोकश्चैष रामायणे न दृश्यते इति कविकल्पितोऽयमिति विभावयामः । अत्र स्वाभाविकशिलाविन्यास-पुष्पप्रवर्षणयोः सीतासङ्गतत्वार्थकत्वाभावेऽपि तदर्थगतत्वेनाभिधानेन उत्कटैक-कोटिकसंशयसमुदयात् क्रियोत्प्रेक्षे अलङ्कारौ, तयोश्चान्योऽन्यसापेक्षत्वात् सजातीय-सङ्करः ; एतेन सुखकरविहारस्थानमेतदिति च गम्यते इत्यलङ्कारेण वस्तुध्वनिः ]। पथ्यावक्त्रं वृत्तम् ॥ २६ ॥

रामः। [सलज्जितखेदकरुणम्]। अतिनामायं मुग्धः शिशुजनः, विशेषतस्त्वरण्यचरः। हा देवि! स्मरसि वा तस्य प्रदेशस्य तत्समयविस्रम्भातिशयप्रसङ्गसाक्षिणः? कष्टं भोः! कष्टम्। (ख)—

श्रमाम्बुशिशिरीभवत् प्रसृतमन्दमन्दाकिनी-
मरुत्तरलितालकाकुलललाटचन्द्रद्युति।

(ख) लज्जितं—लज्जा; प्रियासङ्गतस्य गोप्यविषयस्य बहिः प्रकाशनादिति ज्ञेयम्, खेदः,—सीतागतः प्रणयः, पुत्त्रत्वबोधाद्वा तत्र शिशुजने वात्सल्यं, करुणश्च—सीताविरहजनितः शोकश्च, तैः सह वर्त्तमानं यथा तथा, आहेति शेषः। अतिनाम—अत्यर्थमेव। अयं शिशुजनः,—बालः कुश इत्यर्थः। मुग्धः,—सरलभावसम्पन्नः। विशेषतः,—विशेषेण। अरण्यचरः,—आरण्यकः; बालजनः स्वभावत एव चातुर्य्यसंस्काररहितः भवति, वनवासिबालस्तु सुतरामेवेति भावः। अथ तत्प्रदेशस्य स्मृत्युदयात् विलपति, हेति।—देवि!—सीते!। स्मरसि?—स्मृतिविषयतां नयसि? इत्यर्थः। तस्य प्रदेशस्य—शिलापट्टादिसनाथं तं देशमित्यर्थः। ["अधीगर्थदयेशाम्—" (२।३।५२ पा०) इति स्मृत्यर्थयोगात् कर्म्मणि षष्ठी] तत्समये—वनविहारकाले, यः विस्रम्भातिशयः,—विश्वासबाहुल्यम्; तत्तद्देशानां निरुपद्रवत्वात् तत्र मिथः सम्भाषणादेरनायासेनैव जायमानत्वादित्याशयः; तस्य प्रसङ्गः,—व्यापारः, अनुष्ठानमिति यावत्, तस्य साक्षी—द्रष्टा तस्य, आवयोः विश्रब्धालापविहरणादिक्रियाणां परिदर्शकस्येत्यर्थः; यत्र हि आवां सुखेन प्रागवसाव, तं देशमिति भावः। कष्टं भोः कष्टं—दुर्विषहस्य दुःखस्य जनकमेतदिति भावः।

अथ तत्तद्देशाना स्मृत्वा सपदि सीतामुखप्रत्यभिज्ञानोदयात् तस्य तस्य वस्तुनः नितरां दुर्विषहतामाह, श्रमेति।—श्रमाम्बुभिः श्रमजनितैः जलैः, घर्म्मोदबिन्दुभिरिति यावत्; सर्व्वत्र वनोद्देशे पादाभ्यां विहरणादिति भावः; शिशिरीभवत् शीतलीभावमापद्यमानम्, अपि च प्रसृतेन उच्छलितेन, मन्देन मृदुना, मन्दाकिनीमरुता मन्दाकिनीसलिलसम्पृक्तवायुना, तरलितैः चञ्चलतामापादितैः, अलकैः चूर्णकुन्तलैः, आकुला तिरोहिता, ललाटचन्द्रस्य भालरूपशशधरस्य, द्युतिः दीप्तिः, शोभेति यावत्, यस्मिन् तत्, [कर्म्मधारये कृते "श्रम···द्युति" पर्य्यन्तमेकपदम इति केचित] कुङ्कुमेन कलङ्कितौ चिह्नितौ, रञ्जितौ इति यावत्, कुङ्कुमकलङ्कितौ, ("कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्" इत्यमरः) न कुङ्कुमकलङ्कितौ अकुङ्कुमकलङ्कितौ कुङ्कुमरागरहितौ इति यावत्, तथाऽपि उज्ज्वलौ दीप्यमानौ,

अकुङ्कुमकलङ्कितोज्ज्वलकपोलमुत्प्रेक्ष्यते
निराभरणसुन्दरश्रवणपाशसौम्यं मुखम् ॥ ३७ ॥

[ स्तम्भित इव स्थित्वा सकरुणम् ]। अहो नु खलु भोः ! (ग)—

चिरं ध्यात्वा ध्यात्वा निहित इव निर्माय पुरतः
प्रवासेऽप्याश्वासं न खलु न करोति प्रियजनः।

---

स्वत एव मनोहराविव्यर्थः, कपोलौ गण्डौ यस्मिन् तथाविधम्, अपि च निराभरणौ अनलङ्कृतौ, तथाऽपि सुन्दरौ रमणीयौ, यौ श्रवणपाशौ प्रशस्तौ कर्णौ, निसर्गरमणीयौ कर्णाविव्यर्थः, ( "पाशः केशादिपूर्वः स्यात् तत्सङ्के कर्णपूर्वकः। सुकर्णे च" इति मेदिनी ) ताभ्यां सौम्यं रुचिरं, रमणीयमिति यावत्, मुखं सीतावदनम्, उत्प्रेक्ष्यते दृश्यते, सततमनुध्यानेन तव तादृशं मुखं विलुप्तदर्शनमपि इदानीं दृग्विषयतामासाद्यते इवेत्यर्थः ; अहो ! पुरा वनविहारजनितघर्मबिन्दुसुशोभितं मृदुशीतलमारुतान्दोलित-कुन्तलराजिरञ्जितभालशोभासुन्दरं कपोलरागरुचिरं सुमनोहरकर्णयुगलविमण्डितं ते मुखं कियद्धि स्मर्तुमिदानीं कथमपि शक्नोमीति भावः। [ अत्र तथाविधसीतामुखस्या-नुत्प्रेक्षितत्वेऽपि सम्भावनया तथात्वेनोत्प्रेक्षणात्, वाचकेवादिशब्दस्य च गम्यमानत्वात् प्रतीयमानक्रियोत्प्रेक्षाऽलङ्कारः, चन्द्रेण सह ललाटस्य च अभेदाध्यासात् निरङ्गं रूपकमलङ्कारः, अपि च कुङ्कुमरूपरञ्जनसाधनाद्यभावेऽपि तथा श्रवणप्रसाधनाद्य-भावेऽपि च अहेतुकसौन्दर्य्योदयदर्शनात् विनाहेतुककार्य्योत्पत्तिरूपविभावना-ऽलङ्कारश्च, इत्येतेषामन्योऽन्यसापेक्षतया संस्थितेः सङ्करः ]। पृथ्वी वृत्तं—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात् ॥ ३७ ॥

( ग ) स्तम्भित इव—शोकावेगेन नितरां जडीभूतः इव, पिशाचोपहत इव निर्व्यापारतया संस्थित इवेत्यर्थः। सकरुणं—सखेदम्। अहो नु खलु भोः !,— अहोवत, निरतिशयशोकमङ्गलमेतदित्यर्थः।

तदेव शोककारणं विशेषेण विवृणोति, चिरमिति।—चिरं सुदीर्घकालं, ध्यात्वा ध्यात्वा अभीक्ष्णं चिन्तयित्वा, [ वीप्सायां द्विः ] नियतं तद्रूपानुध्यानेनेत्यर्थः, निर्माय सृष्ट्वा, पुरतः अग्रतः, निहित इव स्थापित इव ; सततचिन्तनमहिम्ना काल्पनिकचित्रं नयनयोः पुरतः आनीय संस्थापित इवेति भावः ; प्रियजनः प्रीत्यास्पदीभूतो जनः, प्रवासेऽपि देशान्तरेऽपि, दीर्घविप्रयोगावसरेऽपि इति यावत्, आश्वासं सान्त्वनाम् ; विरहिणां तद्विरहदग्धहृदयस्येति भावः ; न खलु करोति नैव विदधाति, इति न,

जगज्जीर्णारण्यं भवति हि विकल्पव्युपरमे
कुकूलानां राशौ तदनु हृदयं पच्यत इव ॥ ३८ ॥

[ नेपथ्ये ] ।—वशिष्ठो वाल्मीकिर्दशरथमहिष्योऽथ जनकः
सहैवारुन्धत्या शिशुकलहमाकर्ण्य सभयाः ।

अपि तु करोत्येवेत्यर्थः, विकल्पस्य तादृशानुध्यानस्य, व्युपरमे निवृत्तौ, ( सति ) जगत् भूमण्डल, जीर्णारण्यं पुरातनतया पत्रपुष्पादिपरिशून्यशुष्कशाखापादपादिप्रतिभयं वनमिव सर्वथा अशोभनं, केवलं शोकदुःखादिसङ्कुलमिति यावत्, भवति हि सम्पद्यते एव; सर्वं सुशोभनमपि सर्वथा अशोभनमिव प्रतिभाति इति यावत ; "तदा रम्याण्यरम्याणि प्रियाः शल्यं तदाऽसवः । तदेकाकी सबन्धुः सन् इष्टेन रहितो यदा ॥" इति भावः ; तदनु तत्पश्चादित्यर्थः, हृदयं चेतः, विरहि- जनस्येति शेषः, कुकूलानां तुषाग्नीनां, ( "कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले ।" इत्यमरः ) राशौ प्रचये, पच्यते इव दह्यते इव ; आदौ चेतः उदासीनं कृत्वा पश्चात् नितरां तेनाऽऽधिना भस्मीक्रियते इवेति भावः ; निरन्तरानुचिन्तनवशात् यद्यपि प्रियजनप्रतिकृतिः मानसपटे समुदीय कथञ्चित् मानसिकं सन्तापमपनयति, तथाऽप्यसौ क्षणात परमेव याथार्थ्यमनुभाव्य विलुप्तीभूय मानसं नितरां दन्दह्यते इत्यहो ! प्रियजनविप्रयोगस्य दुर्विषहतेति संक्षेपः । [ अत्र प्रियजनप्रतिकृतेः पुरतः अनिहितत्वेऽपि सम्भावनया तथात्वोत्कीर्त्तनात, अपि च हृदयस्य पचनाद्यभावेऽपि सम्भावनया तथात्वोपदेशात् क्रियोत्प्रेक्षेऽलङ्कारौ, एवमेव जगतः जीर्णारण्यरूपत्वाभावेऽपि तथात्वेन सम्भावनात द्योतकेवादेरभावात प्रतीय- मानोत्प्रेक्षाऽलङ्कारः, अपि च जगति जीर्णारण्यतादात्म्याध्यासाच्च निरङ्गं रूपक- मलङ्कारः, इत्येतेषां चतुर्णां परस्परनैरपेक्ष्येण संस्थितेः सङ्करः ]। शिखरिणी वृत्तम् ॥ ३८ ॥

अथ एतदङ्के विशेषतो विवृतस्य रामभद्रीयापारशोकस्य सपदि प्रस्तावान्तरोप- क्षेपणेन विपर्य्यासभावमुपपादयितुमिदानीं नेपथ्यभाषणेन लवचन्द्रकेत्वोः युद्धवार्त्ता- श्रवणात् सभयानां भगवद्वशिष्ठादीनां कौशल्यादीनाञ्च युद्धक्षेत्रागमनमुपवर्णयति, वशिष्ठ इति ।—वशिष्ठः तदाख्यः रघुकुलगुरुः, वाल्मीकिः भगवान् प्राचेतसः, दशरथस्य महिष्यः कृताभिषेका पत्नी कौशल्या इत्यर्थः; [एकत्वेऽपि गौरवात् बहुवचनम् । केचित् तु "महिष्यः" इति बहुवचनदर्शनात् सर्वासामेव दशरथपत्नीनामागमनमामनन्ति, तन्न, यतः तस्या एकस्या एवात्रागतत्वात्, उपरिष्टात् रामवचसैतत् विवृतिमेष्यतीति

जराग्रस्तैर्गात्रैरथ खलु विदूराश्रमतया
चिरेणागच्छन्ति त्वरितमनसोऽपि श्रमजडाः ॥ ३९ ॥

रामः। कथं भगवन्तौ अरुन्धतीवशिष्ठौ अम्बा जनकश्च अत्रैव खलु एते द्रष्टव्याः? [सकरुणं विलोक्य]। अहह! तातजनकस्तु दैवादत्रैवायात इति वज्रेणैव ताडितोऽस्मि मन्दभाग्यः। (घ)—

ज्ञेयम्] अथ जनकः विदेहराजोऽपि; एते सर्वे इति भावः; अथशब्दोऽत्र समुच्चयार्थकः; अरुन्धत्या वशिष्ठपत्न्या, सहैव सार्द्धमेव, शिश्वोः लवचन्द्रकेत्वोः, कलहं सङ्ग्रामम्, आकर्ण्य श्रुत्वा, सभयाः कलहायमानयोः समानसम्बन्धयोः बालयोः अनिष्टापातमाशङ्क्य विवशाः, सञ्जाता इति शेषः, अथ अनन्तरं, विदूरः अतिदूरवर्त्ती, असन्निकृष्टः इति यावत्, आश्रमः येषां तेषां भावः, तत्ता तया; तेषामाश्रमस्य अतीव दूरवर्त्तित्वादिति भावः; श्रमेण पथिभ्रमणक्लान्त्या, जडाः कातराः सन्तः, श्लथगमना भूत्वा इति यावत्, त्वरितं त्वरायुक्तं, सोत्कण्ठमित्यर्थः, मनः येषां तथाभूताः सन्तोऽपि, जरया वार्द्धकेन, ग्रस्तैः आयत्तीकृतैः, वार्द्धकोदयात् सामर्थ्यहीनैरिति यावत्, गात्रैः देहैः उपलक्षिताः, [“प्रकृत्यादिभ्यः” (वा०) इति तृतीया] चिरेण विलम्बेन, आगच्छन्ति खलु आयान्ति खलु; खलुशब्दोऽत्र वाक्यालङ्कारे सान्त्वनायां वा, (“खलु स्यात् वाक्यभूषाया जिज्ञासायाञ्च सान्त्वने”। इति मेदिनी) लवचन्द्रकेत्वोः समरदर्शनेन तयोरनिष्टाशङ्कया नितराम् उत्कण्ठितानामाश्रमवासिनां केषाञ्चित् परिसान्त्वनार्थं कस्यचिन्मुनेर्वाक्यमिति बोध्यम्; रघुकुलहितैषिणः भगवन्तः वशिष्ठादयः बालयोः संग्राममाकर्ण्य सत्वरं युद्धस्थलमायात् वारयितुमैतौ अभिलषन्तोऽपि आश्रमस्यातीव सुदूरस्थितत्वात् स्वेषाञ्च जराजीर्णगात्रतया त्वरान्वितमनसोऽपि पथिश्रमाभिभूततया क्लाम्यन्तः अत्वरितपदविक्षेपमागच्छन्तीति भावः। [अत्र चिरेणागमनं प्रति जराग्रस्तगात्रत्वस्य श्रमजडत्वस्य च हेतुगर्भत्वेनोपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः]। शिखरिणी वृत्तम् ॥ ३९ ॥

(घ) भगवन्तौ—माहात्म्यवन्तौ। अरुन्धतीवशिष्ठौ—गुरुपत्नी गुरुश्च एताविन्यर्थः। अम्बा—माता कौशल्या। जनकश्च—विदेहराजः श्वशुरश्च। एते—सर्वे। अत्रैव खलु—अस्मिन् सीतानिर्वासनस्थाने जनस्थाने एवेत्यर्थः, उपस्थिता इति शेषः। कथं—केन प्रकारेण। द्रष्टव्याः,—अवलोकयितव्याः; एतेषां पुरतः मूढधीः दुर्दैव-

सम्बन्धस्पृहणीयताप्रमुदितैर्जुष्टे वशिष्ठादिभिः
दृष्ट्वाऽपत्यविवाहमङ्गलमहे तत् तातयोः सङ्गतम्।
पश्यन्नोदृशमीदृशे पितृसखं वृत्ते महावैशसे
दीर्य्ये किं न सहस्रधाऽहमथवा रामेण किं दुष्करम्? ॥४०॥

---

विवशचेताश्चाहं कथमपि स्वमुखं दर्शयितुं न शक्ष्यामीति भावः। विशेषतो जनक-दर्शनस्य दुःषहदुःखदायकत्वमाह, अहहेति।—अहह!—हा कष्टमेतदित्यर्थः। तात-जनकस्तु—पितृतुल्यविदेहराजोऽपि। दैवात्—मम दुर्दैवविलसनात् हेतोः। अत्रैव—अस्मिन् सीतानिर्वासनस्थाने एव। आयातः,—उपस्थितः। इति—अस्मात् हेतोः। वज्रेणेव—अतिकठोरकुलिशेनेव। ताडितः,—अभिहतः। अस्मि—भवामि। मन्दभाग्यः,—हतदैवः; सीतायाः निर्वासनात् अतिशुचः मां प्रति कुपितस्य च सज्जनकस्य जनकस्य साक्षात्करणं वज्रहननवत् मे नितरां पीडाजननमिति भावः।

अथेदानीं राजर्षेः जनकस्य सन्दर्शनेन पुनर्नवीभूतस्य शोकस्य तीव्रतायां हेतुं प्रदर्शयति, सम्बन्धेति।—सम्बन्धस्य वैवाहिकसम्पर्कस्य; विदेहवंशीयैः सह रघु-वंशीयानामिति भावः; स्पृहणीयतया वाञ्छनीयतया, श्लाघनीयतयेत्यर्थः, प्रमुदितैः प्रहर्षपुलकितैः, वशिष्ठादिभिः वशिष्ठप्रभृतिभिः रघुकुलहितैषिभिः मुनिभिः, जुष्टे सेविते, स्वोपस्थित्या पूर्णतां प्रापिते इत्यर्थः, अपत्यानां सीतारामादीनां, विवाहः परिणयः, स एव मङ्गलः माङ्गलिकः, शुभकर इत्यर्थः, महः उत्सवः तस्मिन्, ("मह उद्धव उत्सवः" इत्यमरः) तातयोः पित्रोः दशरथस्य विदेहराजस्य च, तत् तथाविधम्, अतीव आनन्दविधायकमित्यर्थः, सङ्गतं पुरातनं समागमं, दृष्ट्वा प्राक् अवलोक्य, अधुना ईदृशे एवंविधे, दुर्विषहे इति यावत्, महावैशसे निर्व्वासनेन सीताहत्यारूपे अतिक्रूरे कर्म्मणि, वृत्ते सङ्घटिते, सम्पादिते सति इत्यर्थः, ईदृशं शोकसंविग्नं, पितुः दशरथस्य, सखायं परममित्रं, राजर्षिं जनकमित्यर्थः, [ "राजाहःसखिभ्यष्टच्" ( ५।४।९१ पा० ) इति समासान्तः टच्प्रत्ययः ], पश्यन् अवलोकयन्, अहं, किं कथं, सहस्रधा सहस्रप्रकारं, सहस्र-खण्डैरिति यावत्, न दीर्य्ये? न विदीर्णो भवामि? शोकक्रकचेन कथं नाहं दशशतधा विपाटितो भवामीति भावः; इदानीं मे निधनमेवोचितमित्याशयः। [ दीर्य्यतेः दैवादिकस्य परस्मैपदित्वेऽपि वैकल्पिकं कर्त्तरि आत्मनेपदम्, अथवा कर्म्मकर्त्तरीयं प्रयोगः ]। अथवा किं वा; अन्यत् किमु अत्र वक्तव्यमिति भावः; रामेण अतीवा-

[ नेपथ्ये ]। कष्टं भोः! कष्टम्।—

अनुभावमात्रसमुपस्थितश्रियं
सहसैव वीक्ष्य रघुनाथमीदृशम्।
प्रथमप्रमूढजनकप्रबोधनाद्
विधुराः प्रमोहमुपयान्ति मातरः॥ ४१॥

रामः। हा तात! हा मातरः! हा जनक!—

---

धन्येन मया इत्यर्थः; स्वनामग्रहणेन स्वस्याविमृष्यकारित्वं निःस्नेहत्वञ्च व्यक्तीकृतमिति ज्ञेयम्; किं दुष्करम्? किमिह दुःसाध्यमस्ति? सर्व्वमप्येतेन जनेन कर्त्तुं योग्यं सहनीयञ्चेत्यर्थः; येन निरपराधा पतिव्रता सीता परित्यक्ता, तस्य किमप्यकार्य्यं नास्तीति भावः। [ अत्र रामस्य सर्व्वकार्य्यकरणसमर्थत्वरूपकार्य्येण, दारुणशोकसमयेऽपि अविदारणरूपकार्य्यस्य समर्थनात् कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः ]। शार्द्दूलविक्रीडितं वृत्तम्॥ ४०॥

अथेदानीं सीताशोकविकलेन्द्रियस्य रघुमणेः तथाभूतं शोकोच्छ्वासं प्रस्तावान्तरात्तेपिणोपसंहर्त्तुं शोर्णदेहं रामभद्रमवलोक्य शोकात् विमूर्च्छितानां गुरुजनानां प्रमोहं नेपथ्यभाषणेनावतारयति, अनुभावेति।—अनुभावमात्रेण केवलेन नैसर्गिकशारीरिकतेजोविशेषेण, समुपस्थिता विद्यमाना, श्रीः कान्तिः यस्य तथोक्तं, लावण्यमात्रावशेषं न तु पूर्व्ववत् दैहिकपीनत्वादियुक्तमित्यर्थः, ईदृशम् एवंविधं, सीतावियोगेन नितरां शीर्णकायमिति यावत्, रघुनाथं रामं, सहसैव अकस्मादेव, वीक्ष्य अवलोक्य, प्रथमं प्रागेव, प्रमूढस्य विलुप्तचैतन्यस्य, जनकस्य विदेहराजस्य, प्रबोधनात् चैतन्यलाभात्, अनन्तरमिति शेषः, विधुराः विवशाः, मातरः रामजनन्यः, कौशल्येत्यर्थः; विलापावसरे राघवेण केवलं कौशल्याया एव नामग्रहणेन तस्या एवात्रागमनस्य सूचितत्वात्; [ अत्र गौरवात् बहुत्वं ज्ञेयम् ]; प्रमोहं मूर्च्छाम्, उपयान्ति गच्छन्ति; तत्तत्स्थानेषु तावत् कालं पर्य्यटतः श्रीरामचन्द्रस्य सीतायाः कृते दुर्व्विषहशोकसमुदयात् छायामात्रावशेषं शरीरकार्श्यं सञ्जातं, दूरादेव तद्दृष्ट्वा प्राक् राजर्षिः जनकः मोहमुपागतः, कथञ्चित्तु तस्मिन् संज्ञामुपगमिते राममाता कौशल्याऽपि विमूर्च्छिताऽभवदिति तु समुदितवाक्यार्थः। [ अत्र अनुभावमात्रेत्याद्युक्त्या गम्यार्थस्य सीताशोकविधुरस्य रामचन्द्रस्य शोकाधिक्यस्य भङ्ग्या प्रतिपादनात् पर्य्यायोक्तमलङ्कारः ]। मञ्जुभाषिणी वृत्तम्॥ ४१॥

जनकानां रघूणाञ्च यत् कृत्स्नं गोत्रमङ्गलम् ।
तस्मिन्नकरुणे पापे वृथा वः करुणा मयि ॥ ४२ ॥

यावत् सम्भावयामि । (ङ) [ इति उत्तिष्ठति ] ।

कुशलवौ । इत इतस्तातः । ( च )

[ सकरुणं परिक्रम्य निष्क्रान्ताः सर्वे ] । ( छ )

इति कुमारप्रत्यभिज्ञानो नाम षष्ठोऽङ्कः ॥ ६ ॥

---

अथ वृथाऽपवादभयात् रघुकुललक्ष्मीभूतायां सीतायामन्याय्यमाचरितरि अतीवाधन्ये स्वस्मिन् कृपापात्रत्वाभावमुपदर्शयति, जनकानामिति ।—जनकानां जनकवंशीयानां, रघूणाञ्च रघुवंशीयानाञ्च, यत् सीतारूपं वस्तु, कृत्स्नं समग्रं, गोत्रयोः वंशयोः, रघुजनककुलयोरित्यर्थः, मङ्गलं शुभं, ययैव हि सदा जनकाः रघवश्च मङ्गलवन्तः अभवन् इत्यर्थः, तस्मिन् रघुजनककुलयोः सर्व्वमङ्गलनिदाने सीतारूपे वस्तुनि, अकरुणे निर्द्दये, अतिनृशंसकर्म्मचारिणि इति यावत् ; पूर्णगर्भावस्थायां विनापराधं तस्याः हिंस्रकसङ्कुले वने निर्व्वासनादिति भावः ; अत एव पापे पापकारिणि, दुष्टे इत्यर्थः, मयि रामे, वः युष्माकं, करुणा दया, वृथा निष्फला ; ईदृशक्रूरकर्म्मविधायिजनो न हि भवति भवतामनुकम्पाभाजनमिति भावः । [ यतो हि अहम् अकरुणः पापश्च, अतो मयि वः करुणा वृथा, इति करुणाभावं प्रति अकरुणत्वस्य पापत्वस्य च हेतुभततया उपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, अपि च गोत्रदीपस्थानीये सीतारूपे वस्तुनि गोत्रमङ्गलत्वस्य अभेदाध्यासात् निरङ्गं रूपकमित्यनयोः तिलतण्डुलवत् संसृष्टिः ]। पथ्यावक्त्रं वृत्तम् ॥ ४२ ॥

( ङ ) यावत्—वाक्यालङ्कारे । सम्भावयामि—स्वयं गत्वा समागतान् गुरुजनान् प्रणिपातादिना संवर्द्धयामि, शोकविमूर्च्छितान् मातृप्रभृतीन् प्रीणयामीति वा भावः । [ अत्र भविष्यदर्थे "यावत्पुरा—" ( ३।३।४ पा० ) इति लट् ] ।

( च ) तातः,—पितृवत् पूजनीयः भवानित्यर्थः । ( "पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते" इति नियमात् ) इतः इतः,—अस्मिन्नेव पथि, पथाऽनेनेत्यर्थः, समागच्छतु इति शेषः ।

( छ ) सकरुणं—सशोकम् । परिक्रम्य—परिभ्रम्य, कियत्पदपादविक्षेपं कृत्वेत्यर्थः । निष्क्रान्ताः,—गताः, रङ्गात् प्रचलिता इत्यर्थः ।

—:०:—

## अथ षष्ठाङ्कस्य सङ्क्षेपः।

विष्कम्भके विद्याधरमिथुनं दिव्यं विमानमधिरुह्य रङ्गमाजगाम। विद्याधरस्तु स्वां प्रियां रणप्रचण्डयोः कुमारयोः भीषणमायोधनं प्रदर्शयितुमारेभे। दिवि च देवाः कुमारयोस्तयोः श्रेयसे दुन्दुभिं विनेदुः। निपेतुश्च तदा तयोः शिरसि अनवरतमेव मकरन्दरम्याणि कुसुमानि। अथ विद्याधरी प्राह, कथं हि सहसा अम्बरतलं तडित्प्रभापिङ्गलमाभाति? इति। विद्याधरस्तु प्रत्याह, समारोपितः किमु अद्य त्वष्ट्रा शाणयन्त्रे मार्त्तण्डः! उत वा समुन्मीलयति जगत्संहारार्थं तृतीयं लोचनं भगवान् नीललोहितः! येन हि अलौकिकः तेजसां राशिः नभोमण्डलं समुद्भासयतीति। क्षणं विचिन्त्य पुनराह, आं ज्ञातं, वत्सेन चन्द्रकेतुना आग्नेयास्त्रमभिप्रयुक्तं, तस्मादेवैषा पावकप्रभा समाविर्भवतीति, यतो हि तदस्त्रप्रभाभिः कर्बुरितकायैः वैमानिकानां विमानमण्डलैः दाहभयात् द्रुतं पलायितमेव, अहमपि प्रचण्डाग्निज्वालातः स्वप्रियामात्मानञ्च संरक्षितुं सुदूरमपसरामीति उक्त्वा तथा अकरोत्। तदा पत्युः सुशीतलाङ्गसंस्पर्शेन प्रशमितानलसन्तापा विद्याधरी प्राह, कथं हि विद्युद्विलासपरिशोभितैः श्यामलैः नवजलधरैः नभस्तलं सहसा समाकीर्य्यते? इति। तदाकर्ण्य विद्याधरः आह, अहो! कुमारलवेन वारुणास्त्रं सम्प्रयुज्य पावकास्त्रं प्रशमितमिति। पुनश्चाह, हन्त भोः! प्रगाढान्धकारनिमग्नमिव भूतजातमिदानीं प्रवेपते, यतो हि कुमारचन्द्रकेतुना वायव्यास्त्रमीरितं, तेन च मरुता, ब्रह्मविद्यया ब्रह्माणि विवर्त्तानामिव, भूयसां मेघानां सहसा विलयः संजनित इति। अत्रान्तरे अपृच्छत् विद्याधरी, को हि महापुरुष इदानीं दूरत एव युद्धव्यापारविरतिमुपदिशन् कुमारावन्तरा विमानमवतारयति? इति। तद्दृष्ट्वा विद्याधरः आह, भगवान् रघुपतिः शम्बूकवधादिदानीं प्रतिनिवृत्तः; तेन हि तद्गौरवात् कुमारौ युद्धकर्म्मणः त्वरितमेव व्यरंसिष्टाम्। अधुना सुतसमागमेन राज्ञः रामभद्रस्य शुभं भूयादित्युक्त्वा शुभमनुध्यायन् विद्याधरः पत्न्या सह रङ्गान्निश्चक्रामेति।

अथ पुष्पकविमानादवतीर्य्य रामः चन्द्रकेतुमाह, वत्स! द्रुतमागत्य मां सुदृढं परिष्वजस्व, तव सुशीतलाङ्गानां संस्पर्शेन मम चित्तदाहः प्रशममुपगच्छत्विति। ततः, आर्य्य! अभिवादये इत्यभिधाय राममभिववन्दे चन्द्रकेतुः। अपि कुशलं दिव्यास्त्रधारिणः तव देहस्य? इति पृष्टवति रामे, अत्यद्भुतकर्म्मणः लवस्य लाभादेव मे कुशलं,

तेन हि मामिवेमं वीरमपि भवान् सस्नेहं पश्यत्विति चन्द्रकेतुराह। कुमारं लवमवलोक्य राम आह, अहो! जगत् रक्षितुमेवावतीर्णः मूर्त्तिमानस्त्रवेद इव, वेदनिधिरक्षार्थे धृतकायः क्षात्रधर्म्म इव, सामर्थ्यसमुदाय इव, गुणनिचय इव, पुण्यराशिरिवायं वीरपोत इति। अथ लव आह, पुण्यदर्शनोऽयं महापुरुषः, स्नेहभक्तीनामेकाधारभूतः मूर्त्तिमान् धर्म्मप्रकर्ष इवेति। आश्चर्य्यम!! इदानीं विरोधः कुत्रैवापहृतः, निर्वृतिघनरसश्च प्रसरति, औद्धत्यञ्च सुदूरपराहतमेव, अवनमयति च मां विनयमत्स्वभावः, महापुरुषमिमञ्च दृष्ट्वा आत्मनि नाहं प्रभवामि, अहो! पुण्यशीलानामिव महतामलौकिकं माहात्म्यमिति। अथ रामः आह, कथं मे सहसा सर्वाण्येव दुःखानि विलुप्तानि? स्नेहश्च मेऽन्तरात्मानं विद्रावयति? एष हि कारणान्तरजन्यः इति लोकोक्तिः अलीकैवेति, यतः सूर्य्योदये कमलमेव विकाशमेति, चन्द्रोदये च चन्द्रकान्तमणिर्विगलति, केनापि तु आन्तरेण हेतुना इमे पदार्थाः परस्परं स्नेहपाशसंयताः भवन्ति, किञ्चिदपि कारणं तेषां नाभिज्ञायते, यतः हि स्नेहाः बाह्यानि कारणानि न समाश्रयन्तीति।

लवस्तु चन्द्रकेतोर्वचनात् ज्येष्ठतातपादा इमे इति विदित्वा, अहो! सुप्रभातमद्य, यतः देवो रघुमणिः दृष्ट इति कथयित्वा सविनयं पुनराह, तात! लवो भवन्तमभिवादयते इति। ततः रामः सस्नेहमाह, आयुष्मन्! एह्येहि, मां सुदृढ़ परिष्वजस्व, चन्दनसारसुकुमारस्तेऽङ्गसंस्पर्शः मां नितरां नन्दयतु। तदाकर्ण्य लवः पुनरभिदधे, अश्वरक्षिणां मुखात् तत्रभवतां वीरत्वगाथामुपश्रुत्य स्ववीरत्वप्रदर्शनर्ज्जनितां मे वालिशतां क्षम्यन्त्विति। नन्वयमलङ्कार एव चपलस्य, यथा सूर्य्यकान्तमणिः दिनकरकिरणैः समुत्तापितः तेजांसि वमति, तथैव महान्तः तेजस्विनः स्वभावादेव परेषां तेजः न विषहन्ते इत्यभिधाय, जृम्भकास्त्रप्रभावेण चित्रलिखितानीवावस्थितानि स्वसैन्यानि विलोक्य रामः तदस्त्रजातमुपसंहर्त्तुं लवमादिदेश। स तु तथैवाकरोत्।

अथ रामः जृम्भकास्त्राणां स्वसम्प्रदायमुपवर्ण्य लवं तत्सम्प्रदायमपृच्छत, तन्मुखात् तदस्त्राणां स्वत एव प्रकाशमधिगत्यासामान्यपुण्यप्रभावादेव एतेषां सम्भवोऽपि भवितुं शक्नुयादिति कियत्कालमनुदध्यौ। ततः प्रसङ्गक्रमेण तौ तु यमजौ विदित्वा, को हि नामायं द्वितीयो भवतीति भिजिज्ञासत। अपि च नेपथ्ये कुशस्य भाण्डायनं प्रति चापशौर्य्यप्रकर्षसंसूचिकां सगर्वोक्तिं समाकर्ण्य आह, को हि नामायं वीरपोतः नवजलधरगम्भीरध्वनिना मे हर्षं समुत्पादयति? इति। ततः लवमुखादिमं ज्यायांसं भ्रातरं कुशं भरताश्रमात् प्रतिनिवृत्तमाकर्ण्य पुनराह, आयुष्मन्तमितः समाह्वयेति।

अत्रान्तरे कुशः महनीयकीर्त्तिभिरादित्यवंशीयैः नृपतिभिः विग्रहं स्वगौरवसूचकमभिमन्य धनुरास्फालयितुमारेभे। रामस्तु धीरोद्धतगतिसमलङ्कृतं तदीयमसामान्यं वीर्य्यं विलोक्य परं मुमुदे। तदा लवस्तु कुशस्य समीपमागत्य रघुमणेः तद्दर्शनेच्छां तं विज्ञापितवान्। कुशस्तु रामायणकथापुरुषं वेदगोपायितारं पुण्यदर्शनं रघुमणिमवलोक्य परं पिप्राय, चन्द्रकेतौ भ्रात्रा सख्यभावसंस्थापनात् तत्सम्पर्केण धन्यतातवदनं राघवं सवर्द्धितवांश्च। रामस्तु तं निर्भरं परिष्वज्य पुत्रसमालिङ्गनवत् परां निर्वृतिमधिजगाम। ततश्च सर्वे कियत्कालं प्रच्छायावहुले शालतले समुपविश्य गोष्ठीसुखमनुबभूवुरिति।

अथ रामः राजलक्ष्मीविलाससुशोभितं कुशलवयोः निसर्गकान्तं कलेवरं वीक्ष्य, रघुकुलकुमारवदेतयोः प्रसन्नस्निग्धस्तिमितवीक्षणं मङ्गलमृदङ्गगम्भीरध्वनिश्च भवतीति विभाव्य, स्वशरीरसंवादिनीमाकृतिं जनकसुताऽनुरूपामङ्गघटनाञ्च समवलोक्य, तदा सीतायाः श्रीमदङ्गलावण्यं पुनः प्रत्यक्षीकृतवानिवेत्यमन्यत; किञ्च एतर्हि सीतानिर्वासनस्थानं स्वतःप्रकाशानि चैतयोः जृम्भकास्त्राणि, प्राक् स्वयं समीक्षितं द्विधाप्रतिपन्नं सीतायाः गर्भभारमित्यादिकं तदा मनसा समालोच्य विह्वलः सन् भृशं रुरोद च। तदा लवः रामस्य नेत्रावश्यायसिक्तं पुण्डरीकमिवाश्रुसलिलाप्लुतमाननमवलोक्य विस्मयान्वितो बभूव, तात! किमेतदित्यपृच्छच्च। तदाकर्ण्य कुशः आह, वत्स! रामायणं सम्यगधीत्यापि कथमेवमनभिज्ञ इव जिज्ञाससे? देवीं सीतां विना रघुपतेः किमपीह सुखकरं नास्ति, तादृशप्रणयात् परममुं दुर्विषह एतादृक् वियोगो जगत् जीर्णारण्यप्रायमनुभावयतीति।

अथ रघुपतिः वाल्मीकिसरस्वतीनिस्यन्दभूतां रामायणकथां श्रोतुमभिललाष। ततः कुशमुखात् बालचरितस्यान्तिमौ द्वौ श्लोकौ समाकर्ण्यात्यधिकां मर्म्मव्यथामापत्। हा वैदेहि! तदा किल त्वमेवमेवासीरित्युक्त्वा सर्माधिकं विलपितवान्। कुशस्तु तदा पुनः मन्दाकिनीचित्रकूटवनविहारावसरे देवीं सीतां प्रति रघुपतेः श्लोकान्तरमपठत्। मुग्धस्यारण्यचरस्य शिशोर्मुखात् तदाकर्ण्य रामः सीतां संस्मृत्य विललाप, सवाष्पगद्गदम् उवाच च, हा देवि! स्मरसि किमु तस्य देशस्य? यत्र तु मन्दाकिनीमरुता तव श्रमाम्बूनि निःशेषमेव विशोषमुपगतानि, चलकजालकानि च कुङ्कुमरागवान्निसर्गरम्ये त्वन्मुखचन्द्रे परिपत्य क्षणं तदीयां प्रभां पर्य्याकुलामकार्षीदिति। अपि चाह, अहो! सुचिरमनुध्यानात् प्रवासेऽपि प्रियजनेन कल्पनाप्रसूतेन सता पुरतः स्थीयते इवेत्यभिमन्यते विरहिजनः, विकल्पे विनिवृत्ते च तेन पुनः जगत् जीर्णारण्यप्रायमनुभूयते, हृदयञ्च तस्य तुषानलेन विदह्यते इवेति।

अथ नेपथ्ये वशिष्ठादयः महर्षयः देव्या कौशल्यया अरुन्धत्या च सह शिशुकलहं समाकर्ण्य त्वरितमागन्तुमभिलषन्तोऽपि जराग्रस्ततया सुचिरेणैव कालेन समायास्यन्तीति कलरवमाकर्ण्य राघवः प्राह, कष्टं भोः! कष्टं, गुरुजनाः विशेषतस्तु तातजनकोऽपि सीताविवासनदेशे सममेव द्रष्टव्यः इति मूर्ध्नि वज्रेणाभिताडितोऽस्मि मन्दभाग्यः। इत्यमभिदधदेवासौ पुनः, अहो! प्राक् वैवाहिकसम्बन्धप्रमुदितानां वशिष्ठादीनां जनकादीनाञ्च विवाहमङ्गलमहोत्सवे समागमं पश्यन्निदानीं पितृसखस्य जनकस्यातिनिर्विण्णस्य सीताविवासनस्थले दुर्दृशीं शोचनीयामवस्थामवलोकयन्नहं हतदैवः कथं सहस्रधा न विदीर्य्ये? इत्युक्त्वा बहुधा व्यलपत्। अथ सीतावियोगपरिक्षामस्य रघुपतेरीदृशीमनुभावमात्रैकगम्यां शरीरश्रियं विलोक्य विधुराः मातरः गुरुजनाश्च सपदि प्रमोहमुपगताः इति नेपथ्यभाषितमाकर्ण्य रामः, हा तात! हा मातरः! हा जनक! एतस्मिन् पापे जनकरघुकुलसख्योपरिहारके मयि भवतां करुणा व्यर्थैवेति समाश्वासनार्थं तदन्तिकमगात्।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-कुलपतिकल्प-"बि, ए" इत्युपनामक-
श्रीमज्जीवानन्दविद्यासागर-भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण-श्रीमन्नित्यबोधविद्यारत्नाभ्यां
परिवर्त्तित-परिवर्द्धितायां सुखबोधिनीसमा-
ख्यायाम् उत्तररामचरितव्याख्यायां
षष्ठोऽङ्कः ॥ ६ ॥

---

# अथ सप्तमोऽङ्कः।

लक्ष्मणः। भो भोः! भगवता खलु वाल्मीकिना सब्रह्मक्षत्रपौरजानपदाः प्रजाः सहास्माभिराहूय कृत्स्न एव सदेवासुरतिर्य्यगुरगनायकनिकायो जङ्गमः स्थावरश्च भूतग्रामः स्वप्रभावेण सन्निधापितः। आदिष्टश्चाहमार्य्येण,—"वत्स लक्ष्मण! भगवता वाल्मीकिना स्वकृतिमप्सरोभिः प्रयुज्यमानां द्रष्टुमुपनिमन्त्रिताः स्मः; तद्गङ्गातीरमातोद्यस्थानमुपगम्य क्रियतां समाजसन्निवेशः" इति। कृतश्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानेषु समुपवेशनं मया। (क) अयन्तु,—

---

(क) अथ वियोगान्तनाटकोपवर्णनस्य आलङ्कारिकजनाचारविरुद्धतया तत्रभवान् भवभूतिः तन्मतं सर्व्वथाऽनुवर्त्तमानः वास्तविकवियोगान्तमपि रामचरितं काल्पनिककथोपन्यासेन मिलनान्तरूपतया समापयितुं विष्कम्भकरूपलक्ष्मणवाक्यमूलेन गर्भोपस्थापितवृत्तमवतारयति, भो भोः इति।—भो! भोः!—इति स्वानुचराणां सम्बुद्ध्यर्थकमव्ययम्। सब्रह्मेति।—ब्रह्मभिः,—ब्राह्मणैः, ("ब्रह्म तत्त्वतपोवेदे न द्वयोः पुंसि वेधसि। ऋत्विग्योगभिदोर्विप्रे" इति मेदिनी) क्षत्रैः,—क्षत्रियैः, पौरैः,—नागरिकैः, जानपदैः,—जनपदवासिभिश्च सह वर्त्तमानाः याः ताः, प्रजाः,—प्रकृतिपुञ्जान्। अस्माभिः,—मादृशैः राजपरिजनैरित्यर्थः। सह—सार्द्धम्। आहूय—आमन्त्र्य। कृत्स्न एव—समग्र एव। सदेवेति।—देवाः,—अमराः, असुराः,—दितिसुताः, तथा तिर्य्यञ्चः,—पशवः पक्षिणश्च, उरगाः,—सर्पाश्च तेषां तेषु वा ये ये नायकाः,—मुख्याः, ("नायको नेतरि श्रेष्ठे हारमध्यमणावपि।" इति वैजयन्ती) तेषां निकायः,—समूहः, ["सङ्घे चानौत्तराधर्य्ये" (३।३।४२ पा०) इति घञन्तस्य चिनोतेः समूहार्थे कादेशः। "निकायस्तु पुमान् लक्ष्ये सधर्म्मिप्राणिसंहतौ। समुच्चये संहतानां निलये परमात्मनि॥" इति मेदिनी) तेन सह वर्त्तमानः। जङ्गमः,—गमनशीलः, मनुष्यादिः इत्यर्थः। स्थावरश्च—स्थितिशीलश्च, पर्व्वतादिश्चेत्यर्थः। (एवम्भूतः) भूतग्रामः,—भूतानां—जङ्गमस्थावरात्मकजीवाजीवानां, ग्रामः,—समूहः।

राज्याश्रमनिवासेऽपि प्राप्तकष्टमुनिव्रतः ।
वाल्मीकिगौरवादार्य्य इत एवाभिवर्त्तते ॥ १ ॥

स्वप्रभावेण—स्वकीयतपोमहिम्ना । सन्निधापितः,—सम्यापितः, एकत्र सन्निवेशित इत्यर्थः ; स्थावराणां सन्निधानन्तु तत्तदधिष्ठातॄणां सन्निधानेनेति ज्ञेयम् । आदिष्ट—आज्ञप्त । आर्य्येण—पूज्येन, रामचन्द्रेणेत्यर्थः । स्वकृतिं—स्वस्य—आत्मनः, कृतिं—रचना, दृश्यकाव्यविशेषरूपामित्यर्थः । अप्सरोभिः प्रयुज्यमानाम्—उर्व्वशीप्रभृतिभिरभिनीयमानाम् । उपनिमन्त्रिताः स्मः,—आहूता भवामः, वयमिति शेषः, भगवता वाल्मीकिना इत्यन्वयः । तत्—तस्मात् । गङ्गातीरं—सुरधुनीतटम् । आतोद्यस्थानं—चतुर्व्विधवाद्यविशेषस्थानं, रङ्गमित्यर्थः । ("ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकन्तु सुषिरं कांस्यतालादिकं घनम् ॥ चतुर्व्विधमिदं वाद्यं वादित्रातोद्यनामकम् ॥" इत्यमरः) । उपगम्य—प्राप्य । क्रियतां—विधीयताम् । समाजसन्निवेशः,—समाजस्य—सदसः, सन्निवेशः,—संस्थापनम्, अभिनयं द्रष्टुं समागतानां देवासुरादिसामाजिकसङ्घानां सुखोपवेशनयोग्यं रमणीयं रङ्गविरचनमित्यर्थः । मर्त्त्यामर्त्त्यस्य—मर्त्त्यस्य—मरणधर्म्मवतः मनुष्यादेः, तथा अमर्त्त्यस्य—अमरस्य । भूतग्रामस्य—प्राणिनिचयस्य । समुचितस्थानेषु—यथायोग्यप्रदेशेषु, गुणसम्माननाद्यनुरूपस्थलेषु इति यावत् । समुपवेशनं—संस्थापनम् ; इक्ष्वाकुवंशीयानां गुणग्रामविशेषगुम्फितां प्राचेतसकृतिं द्रष्टुं समागताः सर्व्वे एव प्रेक्षकाः मया यथायोग्यस्थानेषु गुरोराज्ञाऽनुसारतः सन्निवेशिता इति भावः ।

अथेदानीं भगवतो रघुमणेः स्ववंशप्रशस्तिं वाल्मीकिरचितां श्रोतुं तत्स्थलसमागममाह, राज्याश्रमेति ।—राज्यं प्रजापालनरूपं राजकर्म्म, स एव आश्रमः गार्हस्थ्याश्रम इत्यर्थः ; राज्यरूपः अतिविशालगृहस्थजनाश्रम इति भावः ; तत्र यः निवासः अवस्थानं तस्मिन्नपि ; गृहमेधिधर्म्मं यथाविध्यनुतिष्ठतः भगवतः रघुमणेः राजत्वात् तदनुपालितस्थलस्य तदीयाश्रमत्वेनाभेदारोपः कृत इति ज्ञेयम् ; गृहस्थजनोचिते स्थले निवासं कृतवत्यपीति भावः ; प्राप्तकष्टमुनिव्रतः प्राप्तं स्वीकृतं, कष्टं क्लेशकरं, मुनिव्रतं दारादापभोगविनिवृत्तत्वेन मुनीनामिव व्रतं कृच्छ्रसाध्यः नियमविशेषः येन तथाविधः ; गृहमेधिप्रवरोऽपि स्वान्तरपरिग्रहमकृत्वा मुनिवत् यमनियमाद्यवलम्बनपूर्व्वकं निर्व्विकारं तथा स्थित्वा केवलं राजधर्म्ममनुपालयन् आहारविहारादिविविधभोगसाधनसामग्रीतः सर्व्वथैव विनिवृत्ततया संस्थित इति भावः ; आर्य्यः रामः, वाल्मीकिगौरवात् वाल्मीकौ यत् गौरवं सातिशयसमादरः तस्मात् ; तस्मिन् मुनिप्रवरे निरतिशयभक्तिमत्त्वादिति

[ ततः प्रविशति रामः ]।

रामः। वत्स लक्ष्मण ! अपि स्थिता रङ्गप्रेक्षकाः ? ( ख )

लक्ष्मणः। अथ किम् ?

रामः। इमौ पुनर्वत्सौ कुशलवौ चन्द्रकेतुसदृशीं स्थानप्रतिपत्तिं लम्भयितव्यौ। ( ग )

लक्ष्मणः। प्रभुस्नेहप्रत्ययात् तथैव कृतम्। इदन्तु आस्तीर्णं राजासनमुपविशतु आर्य्यः। ( घ )

---

भावः; इत एव अस्मिन्नेव स्थले, भट्टिरचितरङ्गस्थाने इति यावत्, अभिवर्त्तते आगच्छति; सर्वविषयविरक्तोऽपि केवलं भगवति वाल्मीकौ बहुमानात् अत्र रङ्गे समायाति, न तु अभिनयदर्शनकौतुकोपभोगार्थमिति भावः। [ अत्र गृहिणां मुनिजनोचिताश्रमानुपालनस्य असम्भवितत्वात् विरोधः, श्रीरामचन्द्रस्य अलौकिकमहिमवत्त्वेन तत्परिहारात विरोधाभासोऽलङ्कारः ]। पथ्यावक्त्रं वृत्तम् ॥ १ ॥

( ख ) अपि—प्रश्ने। [ रज्यते अस्मिन्नित्यर्थे रञ्जेः अधिकरणे घञ् ] रङ्गः,—नाट्यभूमिः, तस्य प्रेक्षकाः,—दर्शकाः, सामाजिकजना इत्यर्थः। स्थिताः ?—यथायोग्यस्थलेषु सुसुखमवस्थिताः किम् ? इत्यर्थः।

( ग ) चन्द्रकेतुसदृशीं—चन्द्रकेतुसमानाम्। स्थानप्रतिपत्तिं—स्थानस्य—समुपवेशनयोग्यस्य आसनस्य, प्रतिपत्तिं—समादरं, यथायोग्यासनप्रदानेन गौरवमित्यर्थः। लम्भयितव्यौ—प्रापयितव्यौ, यादृशे आसने चन्द्रकेतुरुपविशति, तादृशे आसने इमौ बालकौ कुशलवौ अपि समुपवेशनीयाविति अर्थः। [ लभतेः णिचि "लभेश्च ( ७।१।६४ पा० ) इति नुमागमे कर्म्मणि तव्यप्रत्ययः, "लभेर्गत्यर्थत्वात् णिचि अणौ कर्त्तुः कर्म्मत्वाकर्म्मत्वे" ( ५ अधि० २ अ० ९ सू० ) इति वामनोक्तौ प्राप्त्युपसर्ज्जनगत्यर्थत्वे तु अणिकर्त्तुः कर्म्मत्वमेवेति व्याख्यानरहस्यात् अत्र प्राप्त्युपसर्ज्जनगत्यर्थत्वात् अणिकर्त्तृभूतयोः कुशलवयोः कर्म्मत्वं, कर्म्मणि चोक्तत्वेन प्रथमा ज्ञेया ]।

( घ ) प्रभुरिति।—प्रभोः,—जगत्पतेः भवतः, यः स्नेहः,—कुशे लवे च वात्सल्यं, तस्मिन् प्रत्ययः,—विश्वासः तस्मात्, कुशलवयोः भवतः तादृशं स्नेहं विलोक्येत्यर्थः। तथैव कृतं—भवत्कथनानुरूपम् अभिप्रायाभिज्ञेन मया प्रागेवानुष्ठितमित्यर्थः; चन्द्रकेतुसदृशमेव आसनम् एताभ्यां प्रदत्तमिति भावः। आस्तीर्णम्—उपस्थापितम्, उपकल्पितमित्यर्थः। राजासनं—सिंहासनम्। उपविशतु—उपवेशनेनालङ्करोत्वित्यर्थः।

राम:। [ उपविशति। सर्व्वे चोपविशन्ति ]।

राम:। **प्रस्तूयतां भो:! ( ङ )**

सूत्रधार:। [ प्रविश्य ]। **भो भो:! भगवान् भूतार्थवादी प्राचेतस: सजङ्गमस्थावरं जगदाज्ञापयति,—"यदिदमस्माभिरार्षेण चक्षुषा समुदीक्ष्य पावनकरुणाद्भुतरसं किञ्चिदुपनिबद्धं, तत्र कार्य्यगौरवादवधातव्यम्" इति। ( च )**

---

( ङ ) प्रस्तूयतां—प्रारभ्यतां, नाटकीयं वस्तु अभिनीयतामित्यर्थः।

( च ) सूत्रधार:,—सूत्रं—नाट्योपकरणादिकं, सम्प्रमाङ्कोदरप्रविष्टस्य गर्भाङ्कस्य इति शेषः, धारयति—प्रवर्त्तयति यस्तथोक्तः, "नाट्योपकरणादीनि सूत्रमित्यभिधीयते। सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते॥" इत्युक्तेः आमुखादिमतः गर्भाङ्करूपाभिनवनाटकीयवस्तुनः प्रवर्त्तकः नटविशेष इति यावत्; "अङ्कोदरप्रविष्टो यो रङ्गद्वाराऽऽमुखादिमान्। अङ्कोऽपरः स गर्भाङ्कः सबीजः फलवानपि॥" इति दर्पणात्। भो भो:!—इति सामाजिकजनसम्बोधनं, हे प्रेक्षकसङ्घा इत्यर्थः। भूतेति।—भूतम्—ऋतं, सत्यमित्यर्थः, ( "युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु" इत्यमरः ) अर्थं—वस्तु, वदितुं—कथयितुं शीलमस्येति तथोक्तः, यथार्थभाषी इत्यर्थः। प्राचेतसः,—वाल्मीकिः। सेति।—जङ्गमैः,—गतिमद्भिः मनुष्यादिभिः, स्थावरैः,—स्थितिशीलैः वृक्षलतादिभिश्च सह वर्त्तमान यथा तथेत्यर्थः; अचेतनेषु स्थावरेषु भगवतो वाल्मीकेः आज्ञापनं तत्तदधिष्ठातृषु ज्ञेयम्, अतो न विरोधः; जगत्—सचराचरं विश्वम्। आज्ञापयति—आदिशति। किं तत्? एतदेवाह, यदिति।—यत्—यस्मात् कारणात्। अस्माभिः,—मयेत्यर्थः। [ अविशेषणत्वेनावास्मदः बहुत्वम् ] आर्षेण—ऋषिसम्बन्धिना, अतीन्द्रियेण इत्यर्थः; भूतं भविष्यत् वर्त्तमानञ्च विषयजातं सममेव प्रत्यक्षीकुर्व्वतेति भावः। चक्षुषा—नेत्रेण; योगजसन्निकर्षेण सर्व्वार्थदर्शकेन ज्ञानमयेन वीक्षणेनेति भावः। समुदीक्ष्य—सम्यगवलोक्य; यद्यदुद्वीक्षित तत् सर्व्वमेव पूत निःसन्दिग्धं कलङ्कलेशविनिर्मुक्तञ्च ज्ञेयमित्याशयः। पावनेति।—पावनः,—अतिपवित्रः, दर्शनश्रवणादिनाऽन्येषामपि पवित्रताविधायक इत्यर्थः, करुणाद्भुतरसः,—करुणः,—शोकस्थायिभावकः, सातिशयदुःखप्रद इत्यर्थः, अद्भुतः,—विस्मयस्थायिभावकः, रसः,—आस्वाद्यमानं वस्तु यत्र तादृशम्, अतिपावनं वियोगबहुलं सातिशयविस्मयकरञ्चेत्यर्थः। ( "पावनं करुणाद्भुतरसञ्च" इत्यस्तत्र-

रामः। एतदुक्तं भवति। साक्षात्कृतधर्म्माण ऋषयः, तेषाममृतसाराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद् व्याहन्यन्ते इत्यनभिशङ्कनीयानीति। (छ)

---

पाठान्तरम्) लिखित—रूपकमित्यर्थः। उपनिबद्धं—विरचितम। तत्र—रूपके। कार्य्यगौरवात्—कार्य्यस्य—विवक्षितवस्तुनः, गौरवात्—बहुमानात, तस्य अतीवादरणीयत्वादित्यर्थः। अवधातव्यं—मनः विषयान्तरात विनिवर्त्य सावधं मन्निवेशयितव्यमित्यर्थः। इति—एवम्, आज्ञापयतीत्यनेनान्वयः। अस्य तात्त्विकोपनिबद्धतया एतादृशी प्रार्थना न दोषावहेति ज्ञेयम्।

(छ) एतत—एवमित्यर्थः। उक्तं भवति—कथितं भवति, सूत्रधारेणेति शेषः; सूत्रधारेण भगवतो महर्षेः आशयः इत्यमेव व्यक्तीकृतः इति भावः। तस्य स्वयमेव निष्कृष्टार्थमभिदधाति, साक्षादिति।—साक्षात्कृताः,—प्रत्यक्षीकृताः, धर्म्माः,—अलौकिकश्रेयःसाधनरूपाः ये तथाभूताः, योगजसन्निकर्षेण सर्व्वार्थदर्शिनः इत्यर्थः; यद्वा—साक्षात्कृताः,—आर्षेण चक्षुषा प्रत्यक्षवत् परिज्ञाताः, धर्म्माः,—वस्तुतत्त्वं यैः ते तथोक्ताः। ["धर्म्मादनिच् केवलात्" (५।४।१२४ पा०) इति बहुव्रीहौ धर्म्मशब्दात् समासान्तः अनिच्प्रत्ययः]। अमृतसाराणि—अमृतस्येव—पीयूषरसस्येव, सारः,—उत्कर्षः येषां तानि, पीयूषरसवद्विमलानि इत्यर्थः; यद्वा—अमृतस्य—मोक्षस्य, सारः,—स्थिरांशः येषु तानि, मोक्षलाभोपायभूतानि इति भावः; "ज्ञानान्मुक्तिः" इति साङ्ख्यसिद्धान्तः। परोरजांसि—परम—अतीतं, रजः,—रजोगुणः येभ्यः तानि, रजोगुणासम्पृक्तानि, रजसः पराणि इति वा अर्थः। रज इति तमसोऽप्युपलक्षणं, तेन सत्त्वगुणप्रधानानि इति यावत्। [राजदन्तादिवत् परनिपातः। "पारस्करप्रभृतीनि च संज्ञायाम" (६।१।१५७ पा०) इति परशब्दात सुट् निपात्यते]। तेषां भगवतां—वाल्मीकिप्रभृतीनाम्। प्रज्ञानानि—प्रकृष्टतत्त्वज्ञानानि। क्वचित—कुत्रापि, विष्वपि कालेष्वित्यर्थः। न व्याहन्यन्ते—न प्रतिहतानि भवन्ति। इति—अस्मात् हेतोः; एतेषां विशुद्धसत्त्वमयत्वादिति भावः। अनभिशङ्कनीयानि—न संशयितव्यानि; महर्षिभिः विज्ञानमयेन चक्षुषा यानि यानि हि प्रत्यक्षीकृतानि, तानि हि तत्त्वानि कुत्रापि अयथार्थभूतानि भवितुं नार्हन्ति, अतः महर्षिणा वाल्मीकिना यद्धि उपनिबद्धं, तत् सर्वं निःसन्दिग्धचेतसा ग्रहीतव्यं, कुत्रापि संशयः कियानपि न कार्य्यः इति भावः।

[ नेपथ्ये ]। हा अज्जउत्त ! हा कुमारलक्खण ! एआइणीं मंदभाइणीं असरणं अरणे आसण्णपसववेअणं हदासं सावदा मं अहिलसंति, साहं दाणिं मंदभाइणी भाईरहीए अत्ताणं णिक्खिवेमि । * (ज)

लक्ष्मणः। [ आत्मगतम् ]। कष्टं वतान्यदेव किमपि । ( झ )

---

* हा आर्य्यपुत्र ! हा कुमारलक्ष्मण ! एकाकिनीं मन्दभागिनीम् अशरणा-मरण्ये आसन्नप्रसववेदनां हताशां श्वापदा मामभिलषन्ति, साऽहमिदानीं मन्दभागिनी भागीरथ्यामात्मानं निक्षिपामि ।

---

(ज) कुमारलक्ष्मणेन विजने वने वैदेह्याः निर्वासनानन्तरं तस्याः किं हि वृत्तं, तद्धि अभिनवभावेनोपवर्णयितुमिदानीं नेपथ्यभाषितमवतारयति, ईति ।—हा आर्य्यपुत्र !—हा प्राणसमरते रघुमणे ! ; हा कुमारलक्ष्मण !—हा स्नेहास्पद सौमित्रे ! एकाकिनीं—द्वितीयरहितां, सहायहीनामित्यर्थः। मन्दभागिनीं—हतभाग्याम् । अशरणां—नास्ति शरण—रक्षिता यस्याः तां, रक्षकहीनामित्यर्थः। आसन्ना—समुपस्थिता, प्रसवस्य—गर्भमोचनस्य, वेदना—व्यथा यस्याः ताम् आसन्नप्रसववेदनां—प्रासन्नप्रसवयन्त्रणामित्यर्थः। हताशां—हता—विनष्टा, आशा—जीवनाद्याकाङ्क्षा यस्याः तां, जीवनप्रत्याशारहितामित्यर्थः। मां—वैदेहीमित्यर्थः। श्वापदाः,—शुनः पदानि इव पदानि येषां ते, हिंस्रजन्तव इत्यर्थः। अभिलषन्ति—भक्षयितुमिच्छन्ति। साऽहम्—इत्थं निरुपाया अहम्। इदानीम्—अधुना, ईदृशे विपत्सङ्कुले समये इत्यर्थः। भागीरथ्यां—गङ्गायाम् । आत्मानं—स्वदेहम् । निक्षिपामि—परित्यजामि ; अधुना जीवनरक्षाप्रत्याशाया अभावात् हिंस्रकवदने स्वशरीरमनिक्षिप्य मातुः भागीरथ्याः सलिले आत्मानं विसर्ज्जयामीति भावः।

(झ) कष्टम्- अतीव क्लेशकरमित्यर्थः। वत—खेदे ; अकस्मादिदं नेपथ्यभाषण-मिति भावः। अन्यदेव—अस्माकं चिन्तितविषयात् भिन्नमेव। किमपि—अनिर्व्वच-नीयम् इत्यर्थः, एतदस्तु इति शेषः, मया यद्धि प्रागाकलितम्, एतत्तु तत् न भवती-त्यर्थः ; किमेतदभिनेयमित्यधुनाऽप्यस्माभिर्निर्णेतुं न शक्यते, परन्तु अतिदुर्विषह-मेतदिति विभावयाम इति भावः।

सूत्रधारः।—विश्वम्भराऽऽत्मजा देवी राज्ञा त्यक्ता महावने।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति॥ २॥

[ इति सूत्रधारौ निष्क्रान्तः ]।

रामः। देवि! क्षणमपेक्षस्व। ( ञ )

लक्ष्मणः। आर्य्य! नाटकमिदं नाटकमिदम्। ( ट )

---

नेपथ्यभाषितार्थं सूत्रधारः स्वयमेव विशदीकृत्य नाटकीयाऽऽमुखमुपसंहरति, विश्वेति।—राज्ञा नृपेण, रामेणेत्यर्थः, महावने भीषणे दण्डकारण्ये, त्यक्ता विसृष्टा, निर्वासितेत्यर्थः, विश्वम्भराऽऽत्मजा विश्वं निखिलं जगत, बिभर्त्ति धारयति या सा विश्वम्भरा पृथिवी, [ "संज्ञायां भृतॄवृजि—" (३।२।४६ पा०) इति खच्प्रत्ययः ]। तस्याः आत्मजा दुहिता, देवी सीता, प्राप्तप्रसवं प्राप्तः उपस्थितः, प्रसवः गर्भविमोचनकालः यस्य तथाविधम्, आसन्नप्रसवकालम्, उपस्थितप्रसववेदनं वेत्यर्थः, आत्मानं स्वदेहम्, ( "आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि।" इति विश्वः ) गङ्गादेव्यां भागीरथीप्रवाहे, विमुञ्चति त्यजति; हिंस्रकादिभ्यः आपन्नत्यविनिवृत्तये मातृसमायाः जाह्नव्याः शरणमाप्नोति, तेन आत्महत्यादिकृतः दोषः नाशङ्कनीयः इति भावः। इदन्तु आमुखं प्रयोगातिशयरूपं ज्ञेयम्। पथ्यावक्त्रं वृत्तम्॥ २॥

( ञ ) देवि!—जानकि!। क्षणं—कियत्कालम्। [ "कालाध्वनोरत्यन्तसंयोगे" ( २।३।५ पा० ) इति द्वितीया ] अपेक्षस्व—विलम्बस्व; मां विहाय त्वमेकाकिनी कुत्रापि कदाऽपि नैव गता, अतः अधुनाऽपि त्वमेकाकिनी एव न गन्तुमर्हसि, यावत् अहमपि तवानुवर्त्ती भवामि, तावदपेक्षस्व इति भावः; मयि जीवति इदानीं न हि त्वमशरणा सती जाह्नवीजले आत्मानं विनिक्षेप्तुमर्हसि, अहमेव ते शरणं सर्वथा भविष्यामीति वा भावः। नेपथ्यभाषणश्रवणात् परं रामेणाप्येतत् व्यक्तीकृतं यदसौ प्राणसमां जानकीं मनसः न हि निर्वासितवानिति, तेन हि अभिन्नं तच्चिन्तया तादृशाभिनयप्रवणेन च इत्थं प्रलपितमित्यवधेयम्।

( ट ) आर्य्य!—पूज्य रघुमणे!। इदं नाटकं—महर्षिवाल्मीकिविरचितं दृश्यकाव्यमेतत्; न हि तात्त्विकतया वैदेही इदानीं गङ्गायाम् आत्मानं निक्षिपति, प्राक् यद्धि भूतं तदेवोपनिबद्धं वस्तु इदानीम् अभिनीयते, अतस्तदर्थं विलापः तदुद्धरणप्रयासो वा कर्त्तुं नोचित इति भावः। [ अवधारणे द्विरुक्तिः ]।

राम:। हा देवि! दण्डकारण्यवासप्रियसखि! एष ते रामाद्दैवदुर्विपाकः। (ठ)

लक्ष्मणः। आर्य्य! दृश्यतां तावत् प्रबन्धार्थः। (ड)

राम:। एष सज्जोऽस्मि वज्रमयः। (ढ)

[ ततः प्रविशत्युत्सङ्गितैकैकदारकाभ्यां पृथ्वीगङ्गाभ्यामवलम्बिता सीता ]। (ण)

राम:। वत्स लक्ष्मण! असंविज्ञातमनिबन्धनं तम इव प्रविशामि, धारय माम्। (त)

---

(ठ) दण्डकारण्यवासप्रियसखि!—दण्डकारण्ये—जनस्थानान्तर्गते अरण्ये तदाख्ये वने, यो वासः,—वसतिः, तत्र प्रियसखि!—अनुकूलसहचरि!, एकमात्र-सहायभूते इत्यर्थः। ते—तव। एषः,—गङ्गायामात्मविसर्ज्जनरूप इत्यर्थः। दैव-दुर्विपाकः,—दैवस्य—दुरदृष्टस्य, दुर्विपाकः,—विषमयः परिणामः। रामात्—अधन्यात् मत्त एवेत्यर्थः, समजनि इति शेषः; या त्वं सदा मत्सुखदुःखा आसीः, अहमेव तथाभूतायाः ते सर्व्वासाः विपत्तेः मूलम्, अतो मत्समो नास्ति अन्यः क्रतघ्नः इति भावः।

(ड) दृश्यताम्—अवलोक्यताम्। प्रबन्धार्थः,—प्रबन्धस्य—उपनिबद्धवस्तुनः, अर्थः,—विषयः; इदानीं तथाशोकं विजहीहि, यद्धि वृत्तं वस्तु, तदेव अधुना अभिनीयते, अतस्त्वं धैर्य्यमवलम्ब्य पश्यवलोकय इति भावः।

(ढ) वज्रमयः,—कुलिशसमकठिनहृदयः, अतिनिष्ठुर इत्यर्थः। एषः,—अयम्, अहमिति शेषः। सज्जः अस्मि—श्रोतुमेव व्यापारितः भवामि; यद्यहं वज्रसमकठिनकायः न स्यां, तदा कथमेतादृशकठोरव्यापारश्रवणात् परमेव न शतधा विचूर्णितकायः भवेयम्? तत् नूनं मत्समः नृशंसः नासीह कुत्रापीति भावः।

(ण) उत्सङ्गितेति।—उत्सङ्गितः,—क्रोडदेशे स्थापितः, एकैकः,—प्रत्येक-मेकमात्र एवेत्यर्थः, दारकः,—बालकः याभ्यां ताभ्याम्, एकमेकं दारकं स्ववक्षसि संस्थाप्येत्यर्थः। पृथ्वीगङ्गाभ्यां—वसुन्धराभागीरथीभ्याम्। अवलम्बिता—धृता। सीता प्रविशति—रङ्गस्थलमायातीत्यर्थः।

(त) असंविज्ञातम्—अननुभूतस्वरूपम्। अनिबन्धनम्—अहेतुकम्, आकस्मिक-मिति यावत्। तम इव—अन्धकारमिव। प्रविशामि—निमज्जामि, तमसः अभ्यन्तरं

गङ्गा ।—समाश्वसिहि कल्याणि ! दिष्ट्या वैदेहि ! वर्द्धसे ।
अन्तर्जलं प्रसूताऽसि रघुवंशधरौ सुतौ ॥ ३ ॥

सीता । [ समाश्वस्य ]। दिट्ठिआ दारए पसूदम्हि, हा अज्ज-उत्त ! * ( थ ) [ इति मूर्च्छति ]।

लक्ष्मणः । [ पादयोर्निपत्य ]। आर्य्ये ! आर्य्ये ! दिष्ट्या वर्द्धामहे, कल्याणप्ररोहो रघुवंशः । [ विलोक्य ]। हा ! हा ! कथं क्षुभित-वाष्पोत्पीड़निर्भरः प्रमुग्ध एव आर्य्यः । ( द ) [ इति वीजयति ]।

---

* दिष्ट्या दारकौ प्रसूताऽस्मि, हा आर्य्यपुत्र !

---

यामि इत्यर्थः ; अभिनयदर्शनेन एवमेव मोहमुपागतः यत्, निविडान्धकारमध्ये निमज्जितः एवाहमस्मि इति मन्ये इति भावः । मां धारय—हस्ताभ्यां मच्छरीरम् अवलम्बस्वेत्यर्थः । [ "तमः" इत्यत्र "अन्धतमसम्" इति पाठे—अन्धयतीति अन्धं, तथाविधं तमः अन्धतमसं—गाढ़ं ध्वान्तमित्यर्थः । "अवसमन्धेभ्यः तमसः" ( ५।४।७९ पा० ) इति समासान्तः अच्प्रत्ययः ]।

अथ वियोगविधुरायाः सीतायाः भागीरथीकृतं समाश्वासनप्रकारमाह, समाश्वसिहीति ।—हे कल्याणि ! मङ्गलालये !, हे वैदेहि ! सीते !, समाश्वसिहि समाश्वस्ता भव, दैन्यं विजहिहि धैर्य्यञ्च धेहि इत्यर्थः, दिष्ट्या भाग्येन, वर्द्धसे वृद्धिं गताऽसि, सौभाग्यवशेन पुत्रलाभाभ्युदयात् अधुना त्वं श्रेयस्विनी भवसीत्यर्थः, रघुवंशधरौ रघुकुलाङ्कुरावित्यर्थः, सुतौ पुत्रौ, अन्तर्जलं गङ्गाप्रवाहमध्ये इति यावत्, [ जलस्यान्तः इति विभक्त्यर्थेऽव्ययीभावः, "तृतीयासप्तम्योर्बहुलम्" ( २।४।८४ पा० ) इति सप्तम्याः पाक्षिकः अम्भावः ज्ञेयः ] प्रसूताऽसि उत्पादितवती भवसि, पुत्रौ त्वया प्रसूतौ इत्यर्थः, यतस्त्वं पुत्रद्वयं प्रसूतवती, अतोऽतीव सौभाग्यवती भवसीति भावः । [ अत्र आदिकर्म्मणि कर्त्तरि क्तप्रत्ययः ]। पथ्यावक्त्रं वृत्तम् ॥ ३ ॥

( थ ) दिष्ट्या—भाग्येन । दारकौ—पुत्रौ । प्रसूताऽस्मि—उत्पादितवती भवामि ; पुत्रोत्पत्तिश्रवणसमकालमेव चरणम् अनिर्व्वचनीयहर्षस्य समुदयोऽभवत् इति दिष्ट्येत्युक्तं, ततश्च यदि हि पुत्रद्वयप्रसवसमये पतिः समीपे वर्त्तेत, तदा कियान् आनन्दोऽभावि-ष्यदिति निरन्तरभावनया प्रियपतिविरहं संस्मृत्य तादृशपतिसमागमाभावजनित-शोकेन मूर्च्छागमोऽभूदिति ज्ञेयम् ।

( द ) वर्द्धामहे—वयमधुना सर्वे सौभाग्ययुक्ता भवाम इत्यर्थः । कल्याणप्ररोहः,—

पृथ्वी। वत्से ! समाश्वसिहि समाश्वसिहि ।

सीता। [ आश्वस्य ]। भअवदि ! का तुमं इअं अ ? । * (ध)

पृथ्वी। इयन्ते श्वशुरकुलदेवता भागीरथी। (न)

सीता। भअवदि ! णमो दे णमो दे। †

भागी। चारित्रोपचितां कल्याणसम्पदमनुगच्छ। (प)

* भगवति ! का त्वमियञ्च ?

† भगवति ! नमस्ते नमस्ते ।

कल्याण:,—शुभकर:, प्ररोह:,—अङ्कुरो यस्य स:, मङ्गलप्रदाङ्कुरसमन्वित इत्यर्थ:। रघुवंश:,—रघो:, वंश इव—वेणुविशेष इव, वंश:,—अन्वाय:, रघुकुलरत्नाकर: माङ्गलिक: अङ्कुर: सञ्जात इत्यर्थ: ; सीताया: तनयोत्पत्त्या रघुवंश: इदानीं प्रतिष्ठां गत इति भाव:। [ अत्र कल्याणे श्लेषमूलकप्ररोहशब्दसाहचर्य्यात् वंशशब्दस्य श्लिष्टतया श्लिष्टपरम्परितरूपकालङ्कार: ]। स्तम्भितेति।—स्तम्भितेन—अत्यर्थम् उद्वेलितेन, वाष्पाणाम्—अश्रूणाम्, उत्पीड़न—पूरेण, निर्भर:,—प्रगाढ़:, प्रगाढ़तया आकुल: इत्यर्थ:, अजस्रं वाष्पायमाणनयन इति यावत्। प्रमुग्ध एव—मूर्च्छित एव। आर्य्य:,—राम: ; अकारणसीतानिर्व्वासनजनितस्वदोषं संस्मृत्य नियतम् अश्रूणि विमुञ्चन्नेव रघुमणि: स्ववंशरत्नाकरं सीताया: दारकद्वयं प्रसूतमाकर्ण्य सहसा हर्षोदयात् धैर्य्यं धारयितुमपारयन् सपदि मोहमुपागत इति भाव:।

(ध) का त्वम् ?—अत्रभवती किन्नामधेया भवति ? इयञ्च—एषा अपरा भवत्सङ्गिनी च, का इत्यन्वय: ; किं हि नाम भवत्या अस्याश्च इति विज्ञातुमिच्छामीति भाव: ; भागीरथ्यां देहविसर्ज्जनसमये ते हि देव्यौ तदीयतप:प्रभावात् सहसा आविरभूतां, तत्तनयञ्च रक्षितवत्यौ, तत्सर्वं प्रसवकाले मूर्च्छिता सा किमपि नाजानात्, अत: सविशेषविज्ञानार्थं परिचाययति इति ज्ञेयम्।

(न) श्वशुरेति।—श्वशुरस्य—दशरथस्य, यत् कुलं—वंश:, तस्य देवता—अधिष्ठात्री देवी ; महर्षिकपिलशापनिर्द्दग्धानां सगरसन्ततीनां सदुद्धारकारिणी भगवती भागीरथी रघुकुलानामधिदेवतात्वेन विशेषत: उपास्या आसीदिति ज्ञेयम्।

(प) चारित्रेति।—चारित्रेण—पातिव्रत्यसंरक्षणरूपसच्चरित्रतया, उपचितां—विवर्द्धिताम्। कल्याणसम्पदं—शुभसम्पत्तिं, मङ्गलसमृद्धिमित्यर्थ:। अनुगच्छ—लभस्व इत्यर्थ: ; त्वं यादृशसच्चारित्रवती भवसि, तदनुरूपकल्याणभाक् भवेति भाव:। ("अधिगच्छ" इति पाठान्तरम्)।

लक्ष्मणः। अनुगृहीताः स्मः। (फ)

भागी। इयन्तु जननी ते वसुन्धरा।

सीता। हा अंब! ईदिसी अहं तुए दिट्ठा। * (ब)

पृथ्वी। एहि वत्से! एहि पुत्रि!

[इति सीतामालिङ्ग्य मूर्च्छति]।

लक्ष्मणः। [सहर्षम्]। दिष्ट्या पृथ्वीगङ्गाभ्यामभ्युपपन्ना आर्य्या। (भ)

रामः। [अवलोक्य]। करुणतरं खलु एतद्वर्त्तते। (म)

भागी। विश्वम्भराऽपि नाम व्यथत इति जितमपत्यस्नेहेन; यद्वा सर्वसाधारणो ह्येष मोहग्रन्थिरन्तश्चरश्चेतनावतामनुपप्लवः संसारतन्तुः। वत्से वैदेहि! देवि भूतधात्रि! समाश्वसिहि समाश्वसिहि। (य)

---

* हा अम्ब! ईदृशी अहं त्वया दृष्टा।

---

(फ) अनुगृहीताः स्मः,—अनुकम्पिताः भवामः; भागीरथ्याः रघुकुललक्ष्मीभूतायां सीतायां शुभाशीर्व्वचसा वय सर्वे एव मङ्गलभाजः भवामः इति भावः।

(ब) हा अम्ब!—भो मातः वसुन्धरे!। ईदृशी—एवंविधा, विपन्ना इत्यर्थः, अलीकापवादभयात् स्वभर्त्रा निर्वासितेति यावत्। त्वया—भवभवत्या। दृष्टा—आलोकिता; सर्व्वलोकसाक्षिभूतायां भवत्यां भगवत्यां विद्यमानायां निरागसः तद्दुहितुर्मे एवं वृथाऽपवादेन अयथानिकारः उदपादि, न हि त्वया तत्प्रतिकारः कथमपि कर्त्तुं शक्तः इति भावः; चारित्र्यपरिभूतायाः दुहितुः जनन्यादिगुरुजनदर्शनं निरतिशयलज्जाकरमिति वा भावः। मातृपरिचयश्रवणात् सखेदोक्तिरियमिति ज्ञेयम्।

(भ) अभ्युपपन्ना—अनुगृहीता। आर्य्या,—सीता; अभरणा सीता शरणं प्राप्तवती इति तु हर्षकारणं ज्ञेयम्।

(म) करुणतरम्—अतिशोकोद्दीपकम्। एतत्—पृथ्वीगङ्गाभ्यां सीतायाः समाश्वासनमित्यर्थः; मयि निखिलप्रजापालके सत्यपि जीवति मत्पत्न्याः अन्यकृतरक्षणम् अतीव दुःखाकरमिति भावः।

(य) विश्वं—निखिलं जगदित्यर्थः, बिभर्त्ति या सा विश्वम्भराऽपि—

पृथ्वी।—देवि ! सीतां प्रसूय कथमाश्वसिमि ? (२)—
एकश्चिरं राक्षसमध्यवासः
साङ्गो द्वितीयश्च सुदुःश्रवोऽस्याः।

पृथिवी देवी अपि। व्यथते—दुहितुः सीतायाः शोकेन दुःखमनुभवति। इति—अस्मात् हेतोः। अपत्यस्नेहेन—सन्ततिवात्सल्येन। जितं—सर्व्वोत्कर्षेण स्थितमित्यर्थः; यतो हि अपत्यस्नेहः स्थिरां धीरां सर्वसहामपि शिथिलयति अतोऽयं सर्वपरिभावी, अन्येभ्यश्च स्नेहेभ्यः गरीयानिति भावः। सर्व्वसाधारणः,—सर्वेषां प्राणिनां समानः; कुत्रापि न वैषम्येण वर्त्तमान इति भावः। एषः,—अयं परिदृश्यमान इत्यर्थः, मोहग्रन्थिः,—मोहः,—अपत्यस्नेहादिरूपा माया, ग्रन्थिः यस्य तथोक्तः; यतो हि ग्रन्थिबहुलः आलरूपः तन्तुः मीनादीनामिव सर्वेषां नितरां दुरुच्छेदो भवतीति भावः। चेतनावतां—प्राणिनां सर्वेषामेव। अन्तश्चरः,—अन्तः,—अन्तःकरणे चरति यस्तथोक्तः, अन्तःकरणचारीत्यर्थः। अनुपप्लवः,—नास्ति उपप्लवः,—उच्छेदः विनाशो वा यस्य तथोक्तः, उच्छेदरहितः इत्यर्थः। संसार एव तन्तुः,—जालम्, अनादिसृष्टिपरम्परेत्यर्थः; यद्वा,—एषः,—अयम-पत्यस्नेहरूप इत्यर्थः, मोहग्रन्थिः,—मोहरूपग्रन्थिः; ममेत्याकारकज्ञानजनित-बन्धनविशेषः इत्यर्थः, सर्वसाधारणः चेतनावतामन्तश्चरः अनुपप्लवः संसारतन्तुः,—संसारस्य—सृष्टिप्रवाहरूपस्य, तन्तुः,—मूलं, धीजकमूलमित्यर्थः, संसारघटक इति यावत्; अनेनैव स्नेहात्मकेन आकर्षकमूलेण दृढाकृष्टाः प्राणिनः आकल्पं संसरन्तीति भावः। अस्मिन् विनश्वरे चराचरे सर्वे एव जीवा अपत्यादिमायापाश-नियमिताः निरन्तरं विविधं क्लेशमनुभवन्ति, न हि क्लेशविनिर्म्मुक्ताशयः इह भुवि कोऽपि विद्यते इति तात्पर्य्यम्। भूतधात्रि !—भूतानां—प्राणिनां, धात्री—धारणकर्त्री, पोषयित्री चेत्यर्थः, तस्याः सम्बुद्धौ, हे वसुन्धरे इति यावत्। समाश्वसिहि—समाश्वस्ता भव। (सम्भ्रमे द्विर्वचनम्)।

(२) देवि !—भगवति भागीरथि ! सीतां—जानकीम्। प्रसूय—जनयित्वा। कथं—केन प्रकारेण। आश्वसिमि ?—आश्वस्ता भवामि ? यस्याः दुहिता एवं चिरं दुःखमनुभवति, तस्याः जननी सत्यहं कथं हि समाश्वस्ता भवामीति भावः।

अथ दुहितुः क्लेशपरम्परामवलोक्य स्वदुःखकारणं विवृणोति, एकश्चिरमिति।—अस्याः सीतायाः, एकः प्रथमः, चिरं सुदीर्घकालं व्याप्येत्यर्थः, राक्षसानां रावणेनापहरणानन्तरम् अशोकवने निर्य्यातनपरायणानां निशाचराणां, मध्ये

भागी ।—को नाम पाकाभिमुखस्य जन्तु-
र्द्वाराणि दैवस्य पिधातुमीष्टे ? ॥ ४ ॥

पृथ्वी । भागीरथि ! सदृशमुक्तम् । युक्तमेतद्वा राम-
भद्रस्य ? ( ख )—

---

अभ्यन्तरे, वासः वसतिः, अतिक्लेशेनावस्थानमिति यावत्, साङ्गः अङ्गेन अलीकेन पातिव्रत्यभङ्गरूपापवादेन स्वामिकृतपरित्यागस्य निदानभूतेनावयवेन सह वर्त्तमानः ; न केवलं तया राक्षसमध्ये सुचिरं वासकृतं दुःखमनुभूतम्, अपि तु तथाकलङ्कोऽपि चिरमुपभुज्यते इति भावः ; यद्वा—साङ्गः अङ्गैः अवान्तरैः बहुभिः क्लेशकरैः विषयैः मायामयरामनिधनवार्त्ताश्रवणरूपैः अवयवैः सह वर्त्तमानः ; सा हि तत्र लङ्कापुर्यां स्थित्वा इयतः विविधान् क्लेशान् उपभुक्तवतीत्येवमेव प्रथमदुःखहेतुरिति भावः ; द्वितीयश्च अपरश्च, अलीकापवादारोपिणा भर्त्तृकृतपरित्यागरूपः अनिष्टापातश्चेत्यर्थः, सुदुःश्रवः न कथमपि श्रोतुं शक्यः ; पतिप्राणायाः अपांशुलातिलकभूतायाः एतस्याः ईदृशः अपवादः कर्णेन कैरपि सद्भिः श्रोतुं न शक्यते, इत्येष एव द्वितीयदुःखहेतुः पूर्वदुःख-हेतोरपि गरीयानित्याशयः । ( "सोढश्चिरं राक्षसमध्यवासः त्यागो द्वितीयश्च सुदुःसहोऽस्याः" इति पाठान्तरम् ) अथ तदाकर्ण्य भागीरथी दैवस्य निरङ्कु-शतिकत्वमुपवर्ण्य वसुन्धरां कथञ्चित् समाश्वासयितुमारभते, को नामेति । —नाम सम्भावनायां, को नाम जन्तुः को हि जीव इत्यर्थः, पाकाभिमुखस्य पाके परिणामे, अभिमुखस्य प्रवृत्तस्य, फलं प्रसोतुमुद्यतस्य इत्यर्थः, फलोन्मुख-मिरतस्येति यावत्, दैवस्य नियतेः, सुकृतदुष्कृतात्मकभाग्यस्येत्यर्थः, द्वाराणि प्रसरण-मार्गान्, फलप्रकाशकोपायानिति यावत्, पिधातुम् आवरितुं, निराकर्त्तुमित्यर्थः, [ "वष्टिभागुरिरल्लोपम—" ( का० ) इत्यादिवचनात् पाक्षिकः अपेरकारस्य लोपः ] ईष्टे ? प्रभवति ? अपि तु न कोऽपीत्याशयः ; सर्वेषां हि जीवानां सुखदुःखादि-परम्परा नियतिकृता इति विभाव्य सीतायाः ईदृशे दुर्विषहदुःखापाते विलापो न कार्यः, दैवविलसितस्य दुर्वारत्वादिति भावः । [ अत्र दैवविलासरूपसामान्येन वस्तुना राक्षसमध्यवासादिरूपविशेषवस्तुनः उपपत्तीकरणात् सामान्येन विशेष-समर्थनरूपोऽर्थान्तरन्यासालङ्कारः ] । इन्द्रवज्रा वृत्तम् ॥ ४ ॥

(ख) सदृशम—उचितं, समीचीनमित्यर्थः । उक्तं—कथितम् ; दैवस्य दुरूहगतिकतया दुरदृष्टवशादेव सीतायाः ईदृशी गतिः जाता इति स्वीकरोमीति

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ।
नाहं न जनको नाग्निर्नानुवृत्तिर्न सन्ततिः ॥ ५ ॥

भावः । यद्यपि तव वचनम् अतीव साधीयः, तथाऽपि रामभद्रेण सुष्ठु नाचरितमिति पक्षान्तरमाह, युक्तमिति ।—रामभद्रस्य—रामचन्द्रस्य, एतत्—सीतायाः सर्व्वथैव मिथ्याभूतायां दुश्चरित्रतायां विश्वाससंस्थापनं निर्वासनञ्च । युक्तं वा ?—उचितं किम् ? वाशब्दः पक्षान्तरे । ("वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये ।" इति विश्वप्रकाशः) ।

सीतानिर्वासनस्य अयुक्ततायां प्रमाणमुपन्यस्यति, नेति ।—बाल्ये बालभावे, शैशवे इत्यर्थः, बालेन कुमारेण रामेण, पीडितः दारकर्म्मणि परिगृहीतः, पाणिः सीतायाः करः, न प्रमाणीकृतः युक्तायुक्तविचारे प्रमाणत्वेन न अवेक्षितः ; यथाशास्त्रं परिणीतायाः पत्न्याः केवलदुर्ज्जनकृतापवादात् सहसा परित्यागः लोकशास्त्रविगर्हिततया नितान्तमन्याय्य इति भावः ; अहं पृथिवी, न, प्रमाणीकृतेति लिङ्गविपरिणामेन अन्वयः, अहमपि विश्वास्यत्वेन न स्वीकृतेत्यर्थः ; मद्दुहिता कथं हि सतीधर्म्मात् विच्युता भविष्यति इत्यपि तेन न गणितं, तथा च एतेन मां प्रत्यपि तस्य अविश्वासः सूचितो भवतीति भावः ; जनकः राजर्षिर्विदेहाधिपोऽपि, न, प्रमाणीकृत इत्यन्वयः ; यस्याः पिता जीवन्मुक्तः, तत्कन्या कथं चारित्रहीना भविष्यति इत्यपि तेन न पर्य्यवेक्षितं, तथा च व्यवहारेणानेन सुप्रशस्तचरित्रः जनकोऽपि तेनावज्ञात इति भावः ; अग्निर्न, प्रमाणीकृत इत्यन्वयः ; सर्वलोकपावनः अग्निः विशोधनेन सीतायाः निर्द्दोषतापरिचायकः आसीत्, सोऽपि विश्वस्तत्वेन न गणित इति भावः ; अनुवृत्तिः अनुवर्त्तनं, छायावत् पत्युः सर्व्वदानुसरणं, छन्दोऽनुवर्त्तनं वा, न, प्रमाणीकृता विश्वासास्पदं नाभूदित्यर्थः ; या हि स्वैरिणी भवति, सा तु कदाऽपि पत्युः छन्दोऽनुवर्त्तिनी न भवेदित्यपि न विवेचितमिति भावः ; तथा, न सन्ततिः अपत्यद्वयमपि न, प्रमाणीकृता इति शेषः ; गर्भवत्याः तस्याः निर्वासनेन स्वस्य वंशलोपोऽपि भवेत्, यतः अस्याः गर्भे निजतेजः स्ववंशस्याविच्छेदकारणं वर्त्तते, अतः आपन्नसत्त्वायाः अस्याः निर्व्वासनमतीवान्याय्यं, तथा भ्रूणहत्याहेतुत्वेन महापापजनकञ्च, अतः सन्तत्यनुरोधेनापि सा सर्वथैवापरित्याज्या आसीदेव, इत्यपि न विगणितमिति भावः ; प्रोक्तेष्वेतेषु अपरित्यागबीजभूतेषु सत्स्वप्यसौ तानि सर्वाणि अविचार्य्यैव प्राणसमां पत्नीं सहसः अत्याक्षीत्, तत् किं न अन्याय्यमाचरितमिति वक्तृतात्पर्य्यमिति ज्ञेयम् । [अत्र एकया प्रमाणीकृत*

सीता। अज्जउत्तं सुमराविदह्मि। * (व)

पृथ्वी। आः !! कस्तवार्य्यपुत्त्रः ? (श)

सीता। [सलज्जास्रम्]। जह्वा वा अंबा भणादि। † (ष)

रामः। अम्ब पृथिवि ! ईदृशोऽस्मि। (स)

* आर्य्यपुत्रं स्मारितास्मि।

† यथा वा अम्बा भणति।

इति क्रियया प्रस्तुतानां सर्वेषां पाणिग्रहणादिरूपकर्म्मणामभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः, तथा सीतानिर्वासनं प्रति बहूनां कारणानां तत्कार्य्यैककरत्वेन समावेशात् समुच्चयोऽलङ्कारः, इत्यनयोः परस्परसापेक्षतया सङ्करः]। पथ्यावक्त्रं वृत्तम्। ५॥

(व) आर्य्यपुत्रं—रामम्। स्मारिता—स्मृतिपथमापादिता। अस्मि—भवामि, अहं जनन्येति शेषः; सुचिरकालवियोगेन तं विस्मरन्ती अहमिदानीं जनन्या तन्नामोच्चारणात् स्मारिता सती पुनर्नवीभूतेन तद्वियोगशोकेन नितरां विव्यथित-हृदया भवामीति भावः।

(श) आः !!—इति विरक्तौ, खेदे वा। तव—भवत्याः। आर्य्यपुत्रः,—पतिः। कः ?—न कोऽप्यस्तीति भावः; जगत्पतिः रामभद्रः यदि तव पतिः स्यात, तदा कथं तव ईदृशी दुर्गतिः भवेत्, पतिस्ते कोऽपि नास्तीति मन्ये, न हि ते वयम् आर्य्यपुत्र इति वृथावादं श्रोतुमिच्छामः इति विरक्तिगर्भं वचनमेतदिति ज्ञेयम्।

(ष) सलज्जास्रमिति।—पतिनिन्दां श्रुत्वा लज्जया पतिव्रता सीता वाष्पम-मुञ्चदिति भावः। वा—अथवा। यथा—यादृक्। अम्बा—जननी। भणति—कथयति; तत् तथैवेति भावः; इदानीं पतिपरित्यक्तया मया आर्य्यपुत्र इति कृत्वा विफलं विलपनं कर्त्तुं नोचितमित्याशयः; अथवा—मज्जननी शोकात् यदेव वदितु-मिच्छति तदेव वदतु, अहन्तु हतदैवा कर्त्तव्यपरायणमार्य्यपुत्रं विनिन्दितुं न प्रभवामीति भावः।

(स) ईदृशः,—भवदुक्तप्रकारः। अस्मि—भवामि; भवद्दुहितुः आर्य्यपुत्र-पदवाच्यः न भवितुमर्हामीति भावः; यद्यहमस्याः पतिः स्यां, तदा कथमेवं नृशंसो-चितमकार्य्यं कृत्वा आत्मानं पातकिनं कुर्य्याम् ? अतः भवत्या यदुक्तं, तत्सर्वं सत्यमेवेति रामस्य सकरुणमात्मक्षोभकरं वचनमेतदिति ज्ञेयम्।

भार्गी। भगवति वसुन्धरे! शरीरमसि संसारस्य, तत् किमसंविदानेव जामात्रे कुप्यसि ? (छ)—

घोरं लोके विततमयशो या च वह्नौ विशुद्धि-

र्लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु ?।

(छ) ("भगवति वसुन्धरे!" इत्यत्र "प्रसीद भगवति वसुन्धरे!" इत्यधिकः पाठः पुस्तकान्तरेषु दृश्यते)। शरीरमसि—देहभूता त्वं भवसि; सर्वेषां प्राणिनां वक्षसि धारणात् स्वदेहरसेन च परिपोषणात् सर्वाणि तव शरीरमयाणि भवन्ति, कस्माच्चिदपि वस्तुनः ते पृथग्भावो नास्तीति भावः। संसारस्य—प्राणिपूर्णजगतः। तत्—तस्मात्, अधिष्ठानरूपतया तव सर्वेषां कलेवररूपत्वादित्यर्थः। किं—कथम्। असंविदाना इव—तत्त्वार्थमविजानती इव, अविदिततत्त्वान्तेवेत्यर्थः। [वैसे: "विदिप्रच्छिस्वरतीनामुपसङ्ख्यानम्" (वा०) इति अकर्म्मकत्वादात्मनेपदं, तेन च शानच्] जामात्रे—राघवाय। कुप्यसि ?—क्रुध्यसि ? किमर्थं राघवेण प्राणसमाऽपि सीता विवासिता, स्वकीयतत्त्वात्त्वं स्त्रीया तनुरिव सर्वेषां शरीरभूता त्वं तत् सर्वं जानासि एव, प्रजारञ्जनस्य रघुकुलधर्म्मतया तदनुल्लङ्घनीयत्वात् तदनुरोधेनैव अवशेन रामचन्द्रेण सीता परित्यक्ता, तदास्य अपराधलेशोऽपि नास्ति, इति सीताविवासनविशेषज्ञाऽपि त्वं किमर्थं सीतापतये निरपराधाय रामाय वृथा कुप्यसि ? एतत्ते नोचितम् इति भावः। ["जामात्रे" इति "क्रुधद्रुह—" (१।४।३७ पा०) इति सम्प्रदानत्वेन चतुर्थी]। पृथिव्याः सर्वज्ञत्वाभिज्ञत्वे प्रमाणं यथा—"आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्म्मश्च जानाति नरस्य वृत्तम्॥" इति।

स्वकुलधर्म्मानुपालकेन रामेण कथमिदमतीवाकार्य्यमनुष्ठितं, तत्र बीजं प्रदर्शयितुमाह, घोरमिति।—लोके भुवने, घोरं दुःप्रदत्वात् अतिदारुणम्, अयशः निन्दा, सीतायाः चारित्र्यदूषणरूपेत्यर्थः, विततं विस्तीर्णं, व्याप्तमिति यावत्। ननु तादृशनिन्दाव्युदासार्थन्तु सीतायाः अग्नौ परीक्षा कृता, तत्कथं निन्दायाः सर्वत्र विततत्वमित्युच्यते ? इत्याशङ्कायामाह, येति।—[द्विर्गता आपो यत्र तत् द्वीपम्, अस्य रूढ़ित्वात् एतत्तु व्युत्पत्तिमात्रं ज्ञेयम्। "ऋक्पूरब्धूः पथामानक्षे" (५।४।७४ पा०) इति समासान्तः अप्रत्ययः, "द्व्यन्तरुपसर्गेभ्योऽप ईत्" (६।३।९७ पा०) इति ईदादेशः]। लङ्काद्वीपे लङ्का एव द्वीपं तस्मिन्, सर्वतः समुद्रपरिवेष्टिते लङ्कानाम्नि

इक्ष्वाकूणां कुलधनमिदं यत् समाराधनीयः
कृत्स्नो लोकस्तदतिगहनं किं स वत्सः करोतु ? ॥ ६ ॥

लक्ष्मणः। अव्याहतान्तःप्रकाशा हि देवता भूतेषु, विशेषेण गङ्गा ; तदयमञ्जलिस्ते। (क)

प्रदेशे, वह्नौ अनले. या च विशुद्धिः निर्दोषत्वपरीक्षा, सीताया आसीदिति शेषः, इह अस्मिन् अयोध्याप्रदेशे ; तत्र: अतीव सुदूरे देशे इति भावः ; अतः लोकः, तां विशुद्धिं, कथमिव केन वा प्रकारेण, श्रद्दधातु ? विश्वसितु ? यो हि विषयः प्रत्यक्षीक्रियमाणोऽपि अत्यद्भुततया लोकैः न सहसा श्रद्धीयते, सुदूरदेशे वृत्ते हि तस्मिन् कथं साधारणजनानां श्रद्धा स्यात् ? इति भावः। भवतु तावत् वह्निपरीक्षायां साधारणप्रकृतीनामुत्तरकोशलवासिनामविश्वासः, परन्तु स्वचक्षुषा प्रत्यक्षीकृतनिखिलवृत्तान्तः स्वयं रघुमणिः कथं हि तां निर्दोषां स्वपत्नीं साधारणजनवाक्यतः विवासितवान् ? इत्याशङ्कायामाह, इक्ष्वाकूणामिति।—यत् यतः, कृत्स्नः लोकः सकला एव प्रजाः, समाराधनीयः अनुरञ्जनीयः, परितोषणीय इति यावत्, तत् ततः, अतिगहनम् अतीव दुष्करं कार्य्यमित्यर्थः, इदं प्रजानुरञ्जनम्, इक्ष्वाकूणाम् इक्ष्वाकुवंशीयानां, कुलधनं कुलक्रमागतं धनं, व्रतमित्यर्थः ; यथा धनं लोकैः सयत्नं रक्ष्यते, तथैव इक्ष्वाकुभिः प्रजापालनं सयत्नं क्रियते इति भावः ; यद्वा,—कृत्स्नो लोकः समाराधनीयः, इति यत् इक्ष्वाकूणां कुलधनं, तत् इदं लोकाराधनरूपं कौलिकं व्रतम्, अतिगहनम्, इत्येवं योजनीयम् ; सः वत्सः वात्सल्याधारः रामः, किं करोतु ? दुर्जनानां सुजनानाञ्च सर्वासां प्रजानाम् अनुरञ्जनात् ऋते कथं हि एकाकी वत्सः सीतापरित्यागमकृत्वा स्वकुलधर्ममनुपालयतु ? इत्यर्थः ; सीतादोषसम्भावनया विरक्तानां प्रजानामपि अनुरञ्जनं तस्य राजतया कुलधर्मतया च नियतमेव कर्त्तव्यमिति तस्य नास्ति अत्रोपालम्भस्य दोषः इति वक्तुराशयः। [ अत्र सीताविवासनकार्य्यस्य एकस्मिन् कारणे दुर्जननिन्दारूपे सत्यपि लोकानुरञ्जनरूपकारणान्तरस्य खले कपोतिकान्यायेन तत्कार्य्यकारित्वेनोपन्यासात् समुच्चयालङ्कारः ]। मन्दाक्रान्ता वृत्तम् ॥ ६ ॥

(क) भूतेषु—सर्वेषु प्राणिषु विषयेषु। अव्याहतान्तःप्रकाशा—अव्याहतः,—अप्रतिबद्धः, केनचिदपि अनिवारित इत्यर्थः, अन्तःप्रकाशः,—मानसिकवृत्तिविज्ञानं, सर्वेषां जीवानामन्तर्गतभावपरिज्ञानमित्यर्थः, यासां ताः ; देवा हि अन्तर्य्यामितया सर्वेषामेव जीवानां मनोगतभावं विदन्तीति भावः। विशेषेण—प्राधान्येन।

राम:। अम्ब ! अनुवृत्तस्त्वया भगीरथगृहे प्रसादः। ( ख )

पृथ्वी। देवि ! नित्यं प्रसन्नाऽस्मि वः ; किन्त्वापातदुःसहः स्नेहावेगेनैवं ब्रवीमि। न पुनर्न जानामि सीतास्नेहं रामभद्रस्य ?। ( ग )—

दह्यमानेन मनसा दैवात् वत्सां विहाय सः।
लोकोत्तरेण सत्त्वेन प्रजापुण्यैश्च जीवति॥ ७॥

---

गङ्गा—भागीरथी ; भगवती गङ्गा तु सर्वेषामेव जीवानां मनोगतभावं विशेषतया वेत्ति, तस्याः किमप्यपरिज्ञानं नास्ति, अतः किमर्थं रघुमणिना सीता विवासिता इति स्वयं सर्वं तदाशयमन्तर्यामितया विदित्वैव सर्वलोकसमक्षं प्रीत्यर्थं सुस्फुटमुवाचेति भावः। तत्—तस्मात्, त्रिलोकीपूज्यत्वात् इत्यर्थः। ते—तुभ्यम्। अयमञ्जलिः,—प्रणामार्थं करद्वयसंयोगः, मया क्रियते इति शेषः, त्वां प्रणमामि इत्यर्थः। ( "तदेष ते प्रणामाञ्जलिः" इति पाठान्तरम् )।

( ख ) अम्ब !—मातः !। अनुवृत्तः,—अविच्छेदेन प्रवर्त्तितः। भगीरथगृहे—भगीरथभवने, सूर्य्यकुलसन्ततिषु इत्यर्थः। प्रसादः,—अनुग्रहः ; भगीरथवंशधरेषु सर्वेषु तवानुग्रहः अकृत्रिमः वर्त्तते एव, तेन त्वं स्वयमेवैवं मत्कृते पृथिवीं देवीमनुनयसीति भावः।

( ग ) नित्यं—सततमेव। वः,—युष्मान् प्रति। प्रसन्नाऽस्मि—सन्तुष्टा भवामि ; सर्वेषु भवत्यत्सु मे अकृत्रिमं वात्सल्यं विद्यते एवेत्यर्थः। किन्तु—परन्तु। आपातेति।—आपाते—तदात्वे, सीतायाः विपद्वार्त्ताश्रवणक्षणे एवेति यावत्, ("तदात्वे पात आपातः" इति वैजयन्ती। "दर्शनक्षण आपातस्तथैवाकर्णनक्षणे।" इति कोषश्च) यः दुःसहः,—सोढुमशक्यः, अप्रतिरोध्य इत्यर्थः, स्नेहावेगः,—सीतायां वात्सल्योदयप्रसरः तेन, सीतायाः निरतिशयस्नेहप्राबल्येनेत्यर्थः। ( "किन्त्वापातदुःसहः शोकावेगोऽपत्यस्य, तेन" इति पाठान्तरम् )। एवम्—इत्थम्। ब्रवीमि—कथयामि, प्रोक्तरूपां राघवनिर्भर्त्सनां करोमि इति यावत्। पुनः,—किन्तु। रामभद्रस्य—राघवस्य। सीतास्नेहं—सीतायां वात्सल्यम्। न जानामि न—न वेद्मि इति न ; अपि तु कियान् हि स्नेहः सीतायां रामस्य वर्त्तते, तत् सर्वं सर्वथा अवगच्छामि एवेति भावः।

अथ स्वाभिज्ञानप्रकाशं विशदीकृत्योपवर्णयितुं रामाशयं व्याचष्टे, दह्यमानेनेति।—दैवात् नियतिवशात्, अप्रतिरोध्यदैवस्य एकान्तायत्तत्वादित्यर्थः, वत्सां जानकीं,

रामः। सकरुणा हि गुरवो गर्भरूपेषु। (घ)

सीता। [ रुदती कृताञ्जलिः ]। णेदु मं अत्तणो अंगेसुं विलअं अंबा। * (ङ)

रामः। किमन्यद् ब्रवीतु ? (च)

भागी। शान्तम्! अविलीना वत्सरसहस्राणि भूयाः। (छ)

---

* नयतु मामात्मनोऽङ्गेषु विलयमम्बा।

विहाय निर्वास्य, दह्यमानेन अपराधाहतेऽपि सीतां परित्यजामि इति दुःसहदुःखभाराक्रान्ततया सातिशयं सन्तप्यमानेन, मनसा चेतसा उपलक्षितः सन्, सः रामः, लोकोत्तरेण अलौकिकेन, असामान्येनेति यावत्, सत्त्वेन व्यवसायेन, धैर्य्येणेत्यर्थः, ("द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु।" इत्यमरः) प्रजापुण्यैश्च प्रजानां प्रकृतीनां, पुण्यैश्च धर्म्मैश्च; प्रजानां प्राक्तनपुण्यैरेव एतादृशसर्वगुणसमन्वितस्य नरपतेर्लाभादित्याशयः; जीवति प्राणिति; रामः प्रकृतिरञ्जनार्थं प्राणसमां सीतां निर्वास्य तच्छोकेन एवं हि विवशकायः समजनि, यत् यदि तस्य तादृशमसामान्यं धैर्य्यं प्रकृतिपुञ्जानाञ्च सौभाग्य नाऽऽस्तां, तदा नूनमसौ सीताशोकेन म्रियेतेति सर्वमहं विजानामीति भावः। [ अत्र राघवजीवनं प्रति एकस्यासामान्यधैर्य्यरूपकारणस्य सत्त्वेऽपि पुनः तत्कारणरूपतया प्रजापुण्यस्योपादानात् समुच्चयालङ्कारः, अपि च, रामजीवनं प्रति प्रदर्शितद्वितीयकारणस्य प्रजासु विद्यमानत्वात्, कार्य्यभूतस्य जीवनस्य च रामे सत्त्वात् कार्य्यकारणयोः भिन्नदेशगतत्वेन असङ्गतिरलङ्कारः ]। पथ्यावक्त्रं वृत्तम् ॥ ७ ॥

(घ) गुरवः,—गुरुजनाः। गर्भरूपेषु—सन्ततिषु। सकरुणाः,—सदयाः, भवन्तीति शेषः; पुत्रभूतानां शतेषु अपराधेषु सत्स्वपि गुरवः तान् नूनं न गर्हन्ति, तेन हि सापराधाय मह्यं पृथिवी देवी नाभिक्रुध्यति इति भावः।

(ङ) आत्मनः,—स्वस्याः। अङ्गेषु—देहेषु। विलयं—विलोपं, मिश्रणेन एकीभावमित्यर्थः। नयतु—प्रापयतु, निजाङ्गे मां विलीनं कारयत्वित्यर्थः; इतःपरं नाहं जीवितुमिच्छामीति भावः।

(च) अन्यत्—अपरं, मरणाद्भिन्नमित्यर्थः। किं ब्रवीतु ?—किं कथयतु ? इदानीं सर्वासाः आशायाः विनाशात् मरणं विना कथितव्यान्तरस्याभावादिति भावः।

(छ) शान्त—निवृत्तं, भवतु शोकवचनमिति शेषः, एवं मा वद इत्यर्थः।

पृथ्वी। वत्से! अपि रक्षणीयौ ते पुत्रकौ। (ज)

सीता। अणाधाम्हि। * (झ)

रामः। हृदय! वज्रमयमसि? (ञ)

भागी। कथं त्वं सनाथाऽप्यनाथा? (ट)

सीता। कीदिसं मम अभव्वाए सणाधत्तणं? † (ठ)

---

* अनाथाऽस्मि।

† कीदृशं ममाभव्यायाः सनाथत्वम्?

---

[मान्तमव्ययमेतदिति कोषः]। वत्सरसहस्राणि—दशशताब्दान् व्याप्येत्यर्थः। ["कालाध्वनोरत्यन्तसंयोगे (२।३।५ पा०) इति द्वितीया]। अविलीना—अविलुप्ता, चिरजीविनी इत्यर्थः। भूयाः,—स्थेयाः; कदाऽपि तव विनाशो न भवतु इति भावः।

(ज) अपि—अवधारणे, अवश्यमेव इत्यर्थः। रक्षणीयौ—पालनीयौ। पुत्रकौ—तनयौ; एतयोः बालयोः रक्षणार्थं त्वया अवश्यं जीवितव्यमिति मन्ये, मातः स्तन्यपानादृते बालस्य जीवनरक्षायाः दुःसाध्यत्वादिति भावः। ("अपि रक्षणीयौ" इत्यत्र "अवेक्षणीयौ" इति पाठान्तरम्)।

(झ) अनाथा—अशरणा। अस्मि—भवामि; मम तु कोऽपि रक्षको नास्ति, तेन सहायशून्या निरुपाया स्त्री कथं हि बालयोः परिपालने समर्था भविष्यतीति भावः। ("किं एदंहिं" इत्यधिकः पाठः क्वापि दृश्यते)।

(ञ) हृदय!—चेतः! वज्रमयं—कुलिशघटितम्। असि?—भवसि?; एवंविधं विलापमाकर्ण्य यतस्त्वं न सहस्रधा विदीर्य्यसि, अतो नूनं वज्रसमसारं भवसि इत्यर्थः; सार्व्वभौमस्य मे निरपराधायाः महिष्याः ईदृशं रक्षकहीनतासूचकं विलापभूयिष्ठ वचः श्रुत्वा तव सर्व्वथा विलयीभवनमेवोचितमिति भावः।

(ट) कथं—केन हेतुना। सनाथा अपि—नाथवती अपि, सभर्त्तृकाऽपीत्यर्थः। अनाथा—अशरणा, भवसीति शेषः; जगत्पालके पतौ जीवति कथमपि त्वं रक्षकहीना न भविष्यसीति भावः; जगतां नाथः यस्याः पतिः, तस्याः किं कथमपि अनाथत्वं सम्भवति? इति वक्तुराशयः।

(ठ) अभव्यायाः,—अकुशलायाः, दुर्भाग्यग्रस्तत्वात् अमङ्गलास्पदीभूतायाः इत्यर्थः; वृथाकलङ्कारोपेण निर्वासनात् नियत्या अनन्तदुःखसागरनिमज्जितायाः इति

देव्यौ।—जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे ?।
आवयोरपि यत्सङ्गात् पवित्रत्वं प्रकृष्यते ॥ ८ ॥

लक्ष्मणः। आर्य्ये ! श्रुतम् ? (ड)

रामः। शृणोतु लोकः। (ढ)

नेपथ्ये। [कलकलः]।

भावः। ("भावुकं भविकं भव्यं कुशलं चेममस्त्रियाम्।" इत्यमरः। "मंदभागधेये" इति पाठभेदः)। कीदृशं—किम्प्रकारम्। सनाथत्वम् ?—रक्षकवत्त्वम् ? रक्षकेण पत्या परित्यक्ता कथं सनाथा भवामीति भावः।

अथेदानीमतिनिर्वेदपरायणां सीतां प्रस्तुतवाक्यैः समाश्वासयति, जगन्मङ्गलमिति।—हे सीते ! इत्यामन्त्रणपदमध्याहार्य्यम्; त्वं जगन्मङ्गलं त्रिभुवनकल्याणकरम्, अखिलजगतां मङ्गलनिदानभूतमित्यर्थः, आत्मानं स्वं, कथं केन हेतुना, किमर्थमित्यर्थः, अवमन्यसे ? अवजानासि ?; "अनाथाऽस्मि" इत्यादि खेदसूचकवाक्यैः वृथा निन्दसीति भावः; यत्सङ्गात् यस्याः तव, सङ्गात् संसर्गात्, आवयोरपि जगति पावनत्वेन प्रसिद्धयोः पृथिवीगङ्गयोरपि; अपरेषां का कथा ? इति भावः; पवित्रत्वं पूतत्वं पावनत्वं वा, प्रकृष्यते उत्कृष्यते; यद्वा—प्रकृष्यते उत्कर्षतां गच्छति, [कर्म्मकर्त्तरि प्रयोगोऽयम्]। त्वत्सम्बन्धादेव आवां जगति अतीव पवित्रतमे इति लोकैरुत्कीर्त्त्यते, इत्यतः वृथा आत्मनि घृणां विमुञ्चेति भाव.; त्वन्तु पतिव्रताशिरोमणिभूता एव भवसि इति तु तात्पर्य्यम्। [अत्र स्वत एव पूतयोः पृथिवीगङ्गयोः सीतासङ्गेन पवित्रताप्रकर्षासम्बन्धेऽपि तत्सम्बन्धोक्तेः असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिरलङ्कारः]। पथ्यावक्त्रं वृत्तम् ॥ ८ ॥

(ड) श्रुतम् ?—आकर्णितम् ? सीतायाः पातिव्रत्यविषये पृथिवीगङ्गयोः अभिमतमिति शेषः; आकर्ण्य सा हि कीदृशी पतिव्रताकुलधुरन्धरा तत् अवधार्य्यतामिति भावः। ("श्रूयते ?" इति पाठान्तरम्)।

(ढ) लोकः,—प्रकृतिवर्गः। [जातावेकवचनम्]। शृणोतु—आकर्णयतु; अहन्तु सीतापातिव्रत्यविषये संशयितः नाऽऽसम्; किन्तु प्रकृतिरञ्जनं हि स्वकुलधर्म्मः, इति तदनुरञ्जनार्थमेव प्राणसमामपि तां निर्वासितवान्, तेन च तच्छङ्काकुलाः प्रकृतयः एव वचनमेतत् शृण्वन्तु, श्रुत्वा च तद्वारित्रगतं स्वसन्देहं निराकुर्व्वन्तु इत्याशयः।

रामः। अद्भुततरं किमपि!! (थ)

सीता। किंत्ति अंतरिक्खं पज्जलदि? * (त)

देव्यौ। ज्ञातम्।—

कृशाश्वः कौशिको राम इति येषां गुरुक्रमः।

आविर्भवन्ति तान्येव शस्त्राणि सह जृम्भकैः॥ ९॥

[नेपथ्ये]।—देवि सीते! नमस्तेऽस्तु गतिर्नः पुत्रकौ हि ते।

आलेख्यदर्शने देवो यदाह रघुनन्दनः॥ १०॥

* किमिति अन्तरीक्षं प्रज्वलति?

(थ) अद्भुततरम्—अतिविस्मयकरम्। किमपि—अनिर्वचनीयं वस्तु, समुदितं भवतीति शेषः; नो चेदेवं तर्हि कथमेतादृशः कलकलोऽनुश्रूयते इति भावः।

(त) किमिति—कथं हि। अन्तरीक्षं—गगनम्। प्रज्वलति?—देदीप्यमानं भवति? अपूर्वज्योतिर्भिः सर्वा दिशः समुल्लासयतीति भावः। ("पज्जाउलम्" इति पाठे—पर्य्याकुलं कलकलपूर्णम्)।

अथान्तरीक्षौज्ज्वल्यकारणं संस्मृत्याभिदधाते, कृशाश्व इति।—कृशाश्वः विश्वामित्रपूर्वपुरुषः तन्नामकः कश्चित् मुनिविशेषः, कौशिकः कुशिकनन्दनः विश्वामित्रः, रामः स्वयं रघुमणिश्च, इति इत्थं, येषाम् अस्त्राणां, गुरुक्रमः आचार्य्यपरम्परा, एते तु येषामस्त्राणां प्रयोगसंहारोपदेशदातारः इति यावत्; तथा हि आदौ कृशाश्वः, तस्मात विश्वामित्रः, तस्माच्च रामः यानि अस्त्राणि समधिगत्य तत्सम्प्रदायं प्रवर्त्तितवानिति भावः; तान्येव शस्त्राणि आयुधविशेषाः, जृम्भकैः सह समन्त्रप्रयोगसंहारैः तदाख्यैरस्त्रैः सह, आविर्भवन्ति प्रकटीभवन्ति, गगनमण्डले प्रकाशन्ते इत्यर्थः; प्राक् आलेख्यपरिदर्शनकालिकं वत्सस्य राघवस्यादेशमनुपालयितुं तत्सुतौ कुशलवौ समुपचरितुञ्चेदानीं तान्येतानि व्योम्नि समुदितानि भवन्ति, अत एव कोलाहलः श्रूयते, अन्तरीक्षञ्च प्रज्वलितं दृश्यते इति भावः। पथ्यावक्त्रं वृत्तम्॥ ९॥

अथ भगवद्राघवस्य निदेशानुसारतः जृम्भकास्त्राणां सीतासुतयोः कुशलवयोः स्वेच्छाकृतमात्मसमर्पणं नेपथ्यभाषितेनाह, देवीति।—हे देवि सीते! ते तुभ्यं, नमः प्रणतिः, अस्तु वर्त्ततां, वयं त्वां प्रणमाम इत्यर्थः, हि यतः, ते तव, पुत्रकौ सुतौ, नः अस्माकं, गतिः आश्रयः, उपायभूतौ इत्यर्थः, भवतः इति शेषः, वयं तव सुतौ इदानी-

सीता। दिट्ठिआ अत्थदेवदाओ परिप्फुरंति। * (थ)

लक्ष्मणः। उक्तमासीदार्य्येण,—"सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति" इति। (द)

देव्यौ।—नमो वः परमास्त्रेभ्यो राघवस्य परिग्रहात्।
अनुध्यातैरुपेतव्यं वत्सयोर्भद्रमस्तु वः॥ ११॥

* दिष्ट्या अस्त्रदेवताः परिस्फुरन्ति।

माश्रयाम इत्यर्थः; यतस्त्वमस्माकमाश्रयीभूतयोः कुशलवयोर्जननी, अतस्त्वां प्रणमाम इति भावः। कथमेवमभिधत्त? तदेवोच्यते, आलेख्येति।—देवः रघुनन्दनः रघुमणिः, आलेख्यस्य चित्रस्य, दर्शने विलोकनावसरे, यत यादृक् वचनं, "सर्वथा इदानीं त्वत्प्रसूतिमुपस्थास्यन्ति" इत्यमाशीर्वचनमित्यर्थः, आह उवाच; तथाभूतं तदादेशमनुपालयितुं वयमधुना त्वत्सुतावुपसेवामहे इति भावः। पथ्यावक्त्रं वृत्तम्॥ १०॥

(थ) दिष्ट्या—भाग्येन, पुत्रयोर्मे सौभाग्यवशादित्यर्थः। अस्त्रदेवताः,—जृम्भकास्त्राणामधिष्ठात्री देवताः। परिस्फुरन्ति—प्रकाशन्ते; अस्त्रदेवताभिः पुत्रौ मे अनुगृहीतौ भवत इति भावः।

* (द) आर्य्येण—रामेण। उक्तमासीत्—प्रथमाङ्के चित्रपटदर्शनप्रस्तावे कथितमभूत्। सर्वथा—साकल्येन। इदानीम्—अधुना, तव पुत्रोत्पादानन्तरमेवेत्यर्थः। त्वत्प्रसूतिं—तव सन्ततिम्। उपस्थास्यन्ति—उपसेविष्यन्ते। इति—एवम्, उक्तमासीदित्यन्वयः, इत्थं हि आशीर्वचनं प्राक् रघुपतिः प्रदत्तवानित्यर्थः।

अथ पृथ्वीभागीरथ्यौ परमास्त्रवन्दनपुरःसरं सीतासुतयोः तदनुग्रहमभियाचेते, नम इति।—परमास्त्रेभ्यः उत्कृष्टजृम्भकास्त्राधिदेवताभ्यः, वः युष्मभ्यं, नमः प्रणतिः, अस्तु इति शेषः, राघवस्य रामस्य, परिग्रहात स्वीकारात, राघवकर्त्तृकलाभादित्यर्थः; युष्माकं राघवस्य आज्ञाऽनुवर्त्तित्वादिति भावः; अनुध्यातैः स्मृतैः सद्भिः, युष्माभिरिति शेषः, वत्सयोः पुत्रभूतयोः कुशलवयोः समीपे, उपेतव्यम उपस्थातव्यम्; कुशलवयोः स्मरणानन्तरमेव राघवाज्ञामपालनार्थं भवद्भिः तत्समीपे आगन्तव्यमित्याशयः; वः युष्माकं, भद्रं कुशलम्, अस्तु भवतु। (श्लोकयेष पुस्तकान्तरेषु रामीक्तिरूपतया प्रदर्शितः, "राघवस्य परिग्रहात्" इत्यत्र "धन्याः स्थो वः परिग्रहात" इति च पाठान्तरं निर्योजितमस्ति; तदर्थस्तु—वः युष्माकं, परिग्रहात् स्वीकारात्, लाभा-

राम: ।—क्षुभिता: कामपि दशां कुर्वन्ति मम साम्प्रतम् ।
विस्मयानन्दसन्दर्भजर्जरा: करुणोर्मय: ॥ १२ ॥

देव्यौ । मन्यस्व वत्से ! रामभद्रतुल्यौ इदानीन्ते पुत्रकौ संवृत्तौ (ध)

सीता । भअवदीओ ! को एदाणं खत्तिओचिदं कम्म करिस्सदि ? * (न)

* भगवत्यौ ! क एतयो: क्षत्रियोचितं कर्म करिष्यति ?

दित्यर्थ:, धन्या: जगति प्रतिष्ठामुपेता:, कृतार्था इत्यर्थ:, स्म: वयं जाता इत्यर्थ: ) । पथ्यावक्त्रं वृत्तम ॥ ११ ॥

अथ रघुपति: प्रोक्तार्थजातमवलोक्य आत्मन: विवशभावमाह, क्षुभिता इति ।—साम्प्रतम् अधुना, विस्मयानन्दसन्दर्भजर्जरा: विस्मयस्य अद्भुतवृत्तान्तदर्शनेन चेतसो विमुग्धीभावरूपावस्थाविशेषस्य ; पृथ्वीभागीरथीकृतसीतासमाश्वासन-जृम्भकास्त्राद्याविर्भावजनितस्येति भाव: ; तथा आनन्दस्य पुत्रद्वयदर्शनजनितस्य हर्षस्य च, सन्दर्भेण ग्रथनेन, समावेशेनेत्यर्थ:, जर्जरा: विशीर्णा:, अत्यर्थमाकुलीभूता इत्यर्थ:, परस्परसंवलितभावेन स्थिता इति यावत, करुणोर्मय: करुणस्य सीतानिर्वासनकृतदु:खप्रवाहस्य, ऊर्मय: तरङ्गा:, शोकप्रवाहा: इत्यर्थ: ; ऊर्मिशब्देनात्र करुणाया: जलधितुल्यमगाधत्वं व्यज्यते ; क्षुभिता: उद्वेलिता:, विकृता: सन्त: इत्यर्थ:, मम कामपि अनिर्वचनीयस्वरूपां, दशाम् अवस्थां, कुर्वन्ति विदधति ; अहमिदानीं विस्मयहर्षशोकै: युगपदाक्रान्ततया कामप्यनिर्वचनीयां दशां प्राप्त: किमपि नावधारयितुं शक्नोमीति भाव: । [ अत्र प्रकृतो रस: हर्षाख्यभावश्च करुणरसस्याङ्गभूततया स्थित:, अतो रसवदलङ्कार: ] । पथ्यावक्त्रं वृत्तम ॥ १२ ॥

(ध) वत्से !—कल्याणि सीते ! मन्यस्व—जानीहि । ( "मन्यस्व वत्से !" इत्यत्र "मोदस्व वत्से ! मोदस्व" इति पाठान्तरम् । मोदस्व—हृष्टा भव इत्यर्थ: ) । इदानीम्—अधुना । ते—तव । पुत्रकौ—तनयौ कुशलवौ । रामभद्रतुल्यौ—राघवस्य समौ । संवृत्तौ—जातौ ; जृम्भकास्त्रलाभात् पराक्रमेण रामचन्द्रतुल्यशौर्यशालिनौ भवत इति भाव: ।

(न) भगवत्यौ !—पृथ्वीभागीरथ्यौ ! एतयो:,—मत्पुत्रयो: कुशलवयो: । क्षत्रि-

रामः।—एषां वशिष्ठगुप्तानां रघूणां वंशवर्द्धिनी।
सीताऽपि सुतयोः कष्टं! संस्कर्त्तारं न विन्दति?॥१२॥

देवी। पुत्रि! किं तवानया चिन्तया? एतौ हि वत्सौ स्तन्यत्यागात्परेण भगवतो वाल्मीकेरर्पयिष्यावः, स एवैतयोः क्षत्रकल्पं करिष्यति। (प)—

योचितं कर्म—क्षत्रियजात्यनुरूपं जातकर्म्मादिशास्त्रोक्तसंस्कारसमूहमिति यावत्। करिष्यति?—सम्पादयिष्यति? ("करिष्यतीति" इति पाठे,—इति—एतत्, अहं चिन्तयामीति शेषः)।

अथ रामः जीवति स्वस्मिन् वशिष्ठादौ च स्वपुत्रसंस्कर्तृत्वाभावमुपलभ्य नितरामनुशोचति, एषामिति।—वशिष्ठेन ब्रह्मपुत्रेण तपोनिधिना, गुप्तानां रक्षितानां, कृतसंस्काराणां, शान्तिक्रियादिभिः विविधोपद्रवेभ्यः रक्षितानां वेति यावत्, एषाम् अस्मदीयानाम्, ("एषा" इति पाठान्तरे—एषा मत्प्राणसमा पत्नीत्यर्थः, सीता इत्यनेनान्वयः) रघूणां रघुवंशीयानां, वंशवर्द्धिनी पुत्रप्रसवेन कुलवृद्धिकारिणी, सीताऽपि जानकी अपि, सुतयोः पुत्रयोः कुशलवयोः, संस्कर्त्तारं जातकर्म्मादिशास्त्रीयक्रियासम्पादयितारं, न विन्दति न लभते, कष्टम् अहो! अतीव क्लेशकरमेतदित्यर्थः; ("सीताऽपि सुतयोः कष्टम्" इत्यत्र "कष्टं सीताऽपि सुतयोः" इति पाठव्यतिक्रमः); रघुवंशीयानां सकलसंस्कारक्रियासम्पादयितरि वशिष्ठादौ विद्यमानेऽपि रघुकुलाङ्कुरयोः संस्कर्तुरभावः समजनि, अहो धिक्! कष्टोऽयमवस्थाविपर्य्यय इति भावः। पथ्यावक्त्रं वृत्तम्॥१२॥

(प) पुत्रि!—तनयभूते सीते!। तव अनया—एतया। चिन्तया—भावनया। किम्?—अलम्; आवयोः विद्यमानयोः सत्योः कः तव सुतयोः संस्कारं करिष्यतीति चिन्ता त्वया नैव करणीयेति भावः। हि—यस्मात्। एतौ वत्सौ—बालौ कुशलवौ। स्तन्यत्यागात्—स्तनदुग्धपानत्यागात्। परेण—अनन्तरमेव; यदा एतौ स्तनदुग्धत्यागं करिष्यतः तदा इति भावः। [अत्र दिक्शब्दवाचिपरशब्दयोगात् पञ्चमी, "अन्यारादितर—" (२।३।२९ पा०) इति दिक्शब्दयोगात् पञ्चमीविधानात्, तथा हि दीक्षिताः,—"दिशि दृष्टः शब्दो दिक्शब्दः; तेन सम्प्रति देशकालवृत्तिना योगेऽपि भवति" इति]। भगवतो वाल्मीकेः,—महामुनेः प्राचेतसस्येत्यर्थः, [अत्र मुख्यदानाभावात् न चतुर्थी; "रजकस्य वस्त्रं ददाति" इतिवत् शेषे षष्ठी ज्ञेया]।

यथा वशिष्ठाङ्गिरसावृषी प्राचेतसस्तथा।
रघूणां जनकानाञ्च वंशयोरुभयोर्गुरुः॥ १४॥

रामः। सुविचिन्तितं भगवतीभ्याम्। (फ)

लक्ष्मणः। आर्य्य! सत्यं विज्ञापयामि, तैस्तैरुपायैर्वत्सौ कुशलवौ उत्प्रेक्षे। (ब)—

एतौ हि जन्मसिद्धास्त्रौ जातौ प्राचेतसाश्रमे।
वीरौ सम्प्राप्तसंस्कारौ वयसा द्वादशाब्दिकौ॥ १५॥

---

अर्पयिष्याव:,—दास्याव:। (अत्र "देव्यौ" इत्यत्र "भागीरथ्यौ" तथा "अर्पयिष्याव:" इत्यत्र "अर्पयिष्यामि" इति च पाठान्तरे)। स एव—असौ मुनिरेव। एतयोः,—तव सुतयोः कुशलवयोः। क्षत्रकृत्यं—क्षत्रियजात्युचितं संस्कारम्। करिष्यति—विधास्यति।

महर्षिं वशिष्ठं विना जातकर्म्मादिक्रियायां सम्पादितायां कुलगुरुत्यागजनित-महानिष्टापातो भविष्यति इत्याशङ्कामपनयति, यथेति।—वशिष्ठः तदाख्यः ब्रह्मणः मानसपुत्रः, आङ्गिरसः शतानन्दश्च, एतौ ऋषी, यथा यादृक्, रघूणां रघुवंशीयानां, जनकानाञ्च जनकवंश्यानाञ्च, गुरू इति शेषः, तथा प्राचेतसः वाल्मीकिरपि, उभयोः वंशयोः एतेषां द्वयोरेव कुलयोः, गुरुः आचार्य्यः, भवतीति शेषः; यथा वशिष्ठः रघुवंशस्य शतानन्दश्च जनकवंशस्य गुरुर्भवति, तथा भगवान् वाल्मीकिरपि, ततः तेन सम्पादितः संस्कारविधिः न कथमपि परिहीनः भविष्यति, अतस्त्वया वृथा चिन्ता परिहरणीयेति भावः। पथ्यावक्त्रं वृत्तम्॥ १४॥

(फ) भगवतीभ्यां—परमैश्वर्य्यशालिनीभ्यां पृथ्वीभागीरथीभ्याम्। ("भगवत्या" इति पाठान्तरम्)। सुविचिन्तितं—सुष्ठु अवधारितम्; कुशलवयोः संस्कर्त्ता वाल्मीकिरेव भविष्यति इति यत् विवेचितं, तत समीचीनमेव कृतमिति भावः।

(ब) आर्य्य!—पूज्य! सत्यं—तथ्यं, यथाभूतमेव वस्तु इत्यर्थः। विज्ञापयामि—निवेदयामि। तैः तैः,—प्राक् प्रदर्शितैरित्यर्थः। उपायैः,—हेतुभिः। वत्सौ कुशलवौ उत्प्रेक्षे—सीतासुतत्वेन सम्भावयामि; तैरेव हेतुभिः वत्सौ कुशलवौ भवत्सुतावेव भवतः सत्यमिति मन्ये इति भावः।

प्रोक्तानुमितौ हेतूनुपन्यस्यति, एताविति।—हि यस्मात्, एतौ परिदृश्यमानौ द्वौ एव कुमारौ, जन्मसिद्धास्त्रौ जन्मनः उत्पत्तेः, सिद्धानि आयत्तीभूतानि,

राम:। वत्स ! इति परिप्लवमानहृदय: सन् मुग्धोऽस्मि। (भ)

पृथ्वी। एहि वत्से ! पवित्रीकुरु रसातलम्। (म)

राम:। हा प्रिये ! लोकान्तरमसि गता !! (य)

सीता। णेदु मं अत्तणो अंगेसु विलयं अंबा, ण सक्कम्हि ईदिसं जीअलोअ-परिवत्तं अणुभविदुं। * (र)

---

* नयतु मामात्मनोऽङ्गेषु विलयमम्बा, न शक्नोऽस्मि ईदृशं जीवलोकपरिवर्त्त-मनुभवितुम्।

---

अधिगतानीत्यर्थ:, अस्त्राणि जृम्भकाख्यानि आयुधानि ययो: तौ, जन्मन: प्रभृति एतयो: बालकयो: जृम्भकास्त्राणि स्वत:सिद्धतया आविर्भूतानि इत्यर्थ:, तथा प्राचेतसात् वाल्मीके:, मुने: तपोधनात्, सम्प्राप्तसंस्कारौ सम्प्राप्ता: लब्धा:, संस्कारा: जातकर्मादय: याभ्यां तौ, एवं वीरौ भवत्सदृशपराक्रमौ, त्वत्तुल्यशौर्य्यसमन्विताविति यावत्, अपि च वयसा द्वादशाब्दिकौ द्वादशवार्षिकौ, जातौ सम्भूतौ, यमजयो-रेतयो: बालयोरिदानीं द्वादशवर्षाणि वय: सम्भूतानीत्यर्थ:; ("जातौ" इत्यत्र "उभौ" इति पाठान्तरम्)। यतो हि बालकावेतौ आजन्मन एव जृम्भकास्त्राणि समधिगतवन्तौ, भगवान् वाल्मीकिश्च स्वयमेव एतयो: संस्कारकर्माणि सम्पादित-वान्, द्वादशवर्षीयौ चैवैतौ भवत:, तेन नूनं सीतापुत्राविमौ इत्यनुमिनुम इति भाव:। पथ्यावक्त्रं वृत्तम् ॥ १५ ॥

(भ) इति—अस्मादेव हेतो:, सीतासुतत्वेनाशङ्कमानत्वादेवेत्यर्थ:। परिप्लव-मानहृदय:,—परिप्लवमानम्—आकुलं, संशयदोलाचलम् इति यावत्, हृदयं—चेत: यस्य स:, इमौ मत्सुतौ किम् ? न वेति कमपि पक्षं निर्णेतुमशक्नुवन् इत्यर्थ:। अत एव मुग्ध:,—मूढ़:, विवेकरहित इत्यर्थ:। अस्मि—भवामि। ("इत्येवाहं परिप्लवमानहृदय: प्रमुग्धोऽस्मि" इति पाठान्तरम्)।

(म) पवित्रीकुरु—स्वस्या: अधिष्ठानेन पुनीहि। रसातलम्—अधोभुवनम्।

(य) लोकान्तरम्—अन्य: लोक: [ इति नित्यसमास: ] मर्त्यलोकभिन्नं लोकं, पातालमित्यर्थ:। गताऽसि—प्रस्थिता भवसि ; तत्र इहावस्थाने कदाचित् दर्शनं सम्भवितं स्यात्, तत्तु इदानीं मे विलुप्तमिति भाव:।

(र) आत्मन:,—स्वस्या:। अङ्गेषु—देहेषु। मां—दुहितरमित्यर्थ:। विलयम्—एकीभावम्, अदर्शनम् इत्यर्थ:। नयतु—प्रापयतु। अम्बा—जननी, वसुन्धरेत्यर्थ:।

राम:। किमुत्तरं स्यात्? (ल)

पृथ्वी। त्यागं स्तन्यस्य यावन्मन्नियोगत: पुत्रकयोरवेक्षस्व, परेण ते यथा रोचिष्यते। (व)

भागी। एवं नाम। (श)

[ततो निष्क्रान्ता गङ्गापृथ्वीसीता: ]।

राम:। कथं विलय एव वैदेह्या: सम्पन्न:!! हा देवि! दण्डकारण्यवासप्रियसखि! हा चारित्रदेवते! लोकान्तरं पर्य्यवसितासि? (ष) [इति मूर्च्छति]।

---

ईदृशम्—एवंविधं, दु:सहमित्यर्थ:। जीवेति।—जीवलोकस्य—भुवनस्य, परिवर्त्तम्—अन्यथाभावम्। अनुभवितुं—सोढुम्। न शक्तास्मि—न हि समर्था भवामि; रसातलमपि स्थितया हतदैवया मया ईदृशमेवानियतं दु:खमनुभवितव्यमत: इदानीं मे मृत्युरेव श्रेयान् इति; मर्त्यवासोचिता अहं कथं रसातले स्थातुं शक्नोमि? अतिघोरो दुर्विषहश्चायं दशाविपर्य्यय इति वा भाव:।

(ल) किं—कीदृशम्। उत्तरं—सीतावाक्यस्य प्रतिवचनम्। स्यात्?—भवेत्? सीताया: प्रार्थनां श्रुत्वा पृथिवी किं वदेदिति श्रोतुं नितरां पर्य्याकुलोऽस्मीति भाव:।

(व) पुत्रकयो:,—सुतयो: कुशलवयो:। स्तन्यस्य—स्तनदुग्धस्य। त्यागं यावत्—परित्यागकालपर्य्यन्तमित्यर्थ:। मन्नियोगत:,—ममादेशमनुपालयितुमिति यावत्। अवेक्षस्व—प्रतिपालय। परेण—स्तन्यत्यागात् परत एवेत्यर्थ:। ते—तुभ्यम्। यथा—यादृक्। रोचिष्यते—रुचिविषयीभूतं भविष्यति, यत् त्वमभिलाषिष्यसीत्यर्थ:, ["रुच्यर्थानां प्रीयमाण:" (१।४।३३ पा०) इति चतुर्थी]। तथा त्वं करिष्यसीति शेष:। ("वत्से! स्तन्यत्यागं यावत् मन्नियोगत: पुत्रकयोरपेक्षस्व; परेण ते यथा रोचते, तथा करिष्यसि" इति पाठान्तरम्)।

(श) एवं नाम—इत्थं वसुन्धरया यदुक्तं तदेव भवतु; पृथिव्युक्तप्रकारं कुरु इति भाव:।

(ष) कथं—किम्। वैदेह्या:,—सीताया:। विलय:,—तिरोधानं, लोकान्तरे प्रस्थानमिति यावत्। सम्पन्न एव!!—सम्भूत एव!!, सत्यमेव किं सीतया पातालदेशाधिष्ठानं परिगृहीतमभूदित्यर्थ:। दण्डकेति।—दण्डकारण्ये—तदाख्ये जनस्थानान्तर्गते वने, यो वास:,—चतुर्द्दशवत्सरान् व्याप्य वसति:, तत्र प्रियसखि!—अनुकूल-

लक्ष्मणः। भगवन् वाल्मीके! परित्रायस्व, एष किं ते काव्यार्थः? (स)

[नेपथ्ये]। अपनीयतामातोद्यकम्। भो भोः सजङ्गमस्थावराः प्राणभृतो मर्त्त्यामर्त्त्याः! पश्यत, महर्षिणा भगवता वाल्मीकिना अनुज्ञातं पवित्रमाश्चर्य्यम्। (ह)

---

सहचरि!। चारित्रदैवते—चरित्रमेव चारित्रं, तदेव देवता इव विशुद्धेत्यर्थः, यस्याः तस्याः सम्बोधने; यद्वा—चारित्रेण—पातिव्रत्यरूपसच्चरित्रतया, दैवता—देवीभूता तत्सम्बोधने; सच्चारित्रगुणयोगात् त्वमपि देवीवत् परिपूजनीया भवसीति भावः। लोकान्तरम्—अन्यं लोकं, पातालमिति यावत्। पर्य्यवसितासि—प्रस्थिता भवसि; अन्यत्रागं यावत् रसातलावस्थानस्य वसुन्धराभ्यनुज्ञातत्वात् द्वादशानां संवत्सराणां समतीतत्वाच्च लोकान्तरपर्य्यवसानं निश्चितमिति समाधातव्यम्। [पर्य्यव-पूर्व्वकात् दैवादिकात् स्यतेः गत्यर्थत्वात् कर्त्तरि क्तप्रत्ययः। "द्यतिस्यति—" (७।४।४० पा०) इति इकारोऽन्तादेशः]।

(स) परित्रायस्व—रक्ष, रामस्य विमूर्च्छितस्य जीवनसम्पादनेन अस्मान् परिपालयेत्यर्थः। एषः,—ईदृशः, मोहोत्पादनेन रामस्य जीवननाशकारकः इति यावत्। किं—किमु। ते—तव। काव्यार्थः,—उपनिबद्धस्य दृश्यकाव्यस्य प्रयोजनम्; किं भवता रामस्य जीवनापनयनार्थमेव ईदृग्दृश्यकाव्याभिनयः प्रदर्श्यते? नैतदुचितं ते इति लक्ष्मणस्य सखेदोक्तिरियमिति ज्ञेयम्।

(ह) अपनीयताम्—अपसार्य्यताम्। आतोद्यकं—ततानद्धसुषिरघनेत्याख्यं चतुर्विधं वाद्यम्; यतोऽधुना अभिनयः पुनः प्रारभ्यते, अतो वीणादिवाद्यवादकाः विश्राम्यन्तु इति भावः। सेति।—जङ्गमैः,—गमनशीलैः पशुपक्ष्यादिभिः, स्थावरैः,—स्थितिशीलैः तरुशैलादिभिश्च सह वर्त्तमानाः। प्राणभृतः,—प्राणिनः। मर्त्त्यामर्त्त्याः,—मर्त्त्याः,—भूतलवासिनः मनुष्यादयः, अमर्त्त्याः,—तद्भिन्नाश्च देवासुरादयः सर्वे इत्यर्थः। पश्यत—अवलोकयत, यूयमिति शेषः। महर्षिणा—ऋषिप्रवरेण। भगवता वाल्मीकिना—प्राचेतसेन। अनुज्ञातम्—उपदिष्टं, दृश्यकाव्याकारेणोपनिबद्धमित्यर्थः। पवित्रं—निरतिशयं पूतमिति यावत्। आश्चर्य्यं—विस्मयकरं, भागीरथीपृथ्वीसहिताया: सीतायाः सलिलाभ्यन्तरात् समुदयरूपमित्यर्थः। एष हि सूत्रधारेण यवनिकान्तःस्थेनाभिहितत्वात् चूलिकाख्यः गर्भाङ्कस्यार्थोपक्षेपक-विशेषः,—"अन्तर्यवनिकासंस्थैः सूचनाऽर्थस्य चूलिका" इति साहित्यदर्पणात्।

लक्ष्मणः। [ विलोक्य ]।—

मन्थादिव क्षुभ्यति गाङ्गमम्भो
व्याप्तञ्च देवर्षिभिरन्तरीक्षम् ।
आश्चर्य्यमार्य्या सह देवताभ्यां
गङ्गामहीभ्यां सलिलादुदेति ॥ १६ ॥

[ नेपथ्ये ]।—अरुन्धति ! जगद्वन्द्ये ! गङ्गापृथ्व्यौ भजस्व नौ ।
अर्पितेयं तवाभ्यासे सीता पुण्यव्रता वधूः ॥ १७ ॥

---

प्रोक्तं विस्मयकरं वस्तु लक्ष्मणो विलोक्य स्फुटीकृत्य व्यनक्ति, मन्थादिवेति ।—गाङ्गं गङ्गाया इदं, गङ्गासम्बन्धि इत्यर्थः, अम्भः जलं, मन्थादिव आलोडनादिव, अन्तर्निवेशितपर्व्वतादिरूपमन्थनदण्डजनितादिति यावत्, क्षुभ्यति उच्छलति, चञ्चलीभवतीत्यर्थः, देवर्षिभिः देवाः अमराः, ऋषयः मुनयश्च तैः,अन्तरीक्षं गगनं, व्याप्तञ्च आकीर्णञ्च, आश्चर्य्यदर्शनकौतुकात् देवाः ऋषयश्च सर्वे आकाशदेशे समवेता अभवन्नित्यर्थः, आश्चर्य्यं विस्मयकरमेतदित्यर्थः, आर्य्या सीता, गङ्गामहीभ्यां भागीरथीपृथ्वीभ्यां, देवताभ्यां, सह सार्द्धं, सलिलात् गङ्गायाः जलात्, उदेति उद्गच्छति। [ अत्र मन्थनस्यासत्त्वेन सम्भावनया तदुक्तौ सङ्गमात् हेतूत्प्रेक्षाऽलङ्कारः। श्लोकेऽस्मिन् क्षुभ्यतीति मुख्यक्रियामारभ्य उदेतीति तथाभूतक्रियया समापनात् अन्तरा च व्याप्तमिति विभिन्नक्रियायाः प्रयोगात् उपात्तक्रमभङ्गजनितः भग्नप्रक्रमताऽऽख्यदोषः, स च "देवर्षिसङ्घाश्च समाप्नुवन्ति" इत्यनेन समाधेयः ]। इन्द्रवज्रा वृत्तम् ॥ १६ ॥

अथ अरुन्धतीसमीपे पृथ्वीभागीरथीकृतमतिविस्मयकरं सीतायाः समर्पणमाह, अरुन्धतीति।—जगद्वन्द्ये जगतां त्रिलोकीनां, वन्द्ये ! पूजनीये ! ; पतिव्रताशिरोभूषणभूतत्वात् इति भावः ; अरुन्धति ! वशिष्ठपत्नि !, नौ आवां, गङ्गापृथ्व्यौ भागीरथीपृथिव्यौ, भजस्व सेवस्व, आवयोरभिलाषानुरूपं कर्म्म कृत्वा नौ सन्तोषयेत्यर्थः, ( "जुषस्व" इति पाठान्तरम ) तव भवत्याः, अभ्यासे समीपे, पुण्यव्रता पुण्यं पवित्रं, व्रतमाचरणं यस्याः सा, पूताचारा, साधुशीलेति यावत्, इयं वधूः स्नुषा सीता, अर्पिता न्यस्ता ; भवती एव पतिव्रतानां स्त्रीणां सम्मानसंरक्षयित्री, अतः सतीशिरोमणीभूतेयं सीता अतिविशुद्धेति जानतीभ्याम् आवाभ्यां तव करे समर्प्यते, त्वमेवास्याः संरक्षणेनालीकापवादं प्रक्षालय, रामपरिगृहीतामेनां कुरु इति भावः। पथ्यावक्त्रं वृत्तम् ॥ १७ ॥

लक्ष्मणः। दिष्ट्या आश्चर्य्यमाश्चर्य्यम् !! आर्य्य ! पश्य पश्य । कष्टम्, अद्यापि नोच्छ्वसिति आर्य्यः !! । (क)

[ ततः प्रविशति अरुन्धती सीता च ] ।

अरु ।—त्वरस्व वत्से वैदेहि ! मुञ्च शालीनशीलताम् ।
एहि जीवय मे वत्सं प्रियस्पर्शेन पाणिना ॥ १८ ॥

सीता । [ ससम्भ्रमं रामं स्पृशन्ती ] । समस्ससिदु अज्जउत्तो । *(ख)

---

* समाश्वसितु आर्य्यपुत्रः ।

---

(क) दिष्ट्या—सौभाग्यसूचकम् । ("दिष्ट्या" इत्यत्र "अहो !" इति पाठान्तरम् )। आश्चर्य्यं—विस्मयकरमेतदित्यर्थः । [ विस्मये द्विर्भावः ]। आर्य्य !—राम !। पश्य पश्य —अवलोकय । [ सम्भ्रमे द्विरुक्तिः ] कष्टं—दुःखकरम् । अद्यापि—इदानीमपि । नोच्छ्वसिति—न प्राणिति,. न समाश्वस्तो भवति इत्यर्थः । आर्य्यः,—रामः ; भो रघुकुलमणे ! देवी सीता अरुन्धत्या भवत्समाश्वासनार्थमेव पुनः परिगृह्यते इति विस्मयकरं वस्तु अवलोकय । किमद्यापि राघवः न संज्ञां प्रतिलभते !! इति भोः ! कष्टमेतदिति भावः ।

अथ देवी अरुन्धती मोहमुपागतस्य राघवस्य समाश्वासनार्थं सीतामुपदिशति, त्वरस्वेति ।—वत्से ! हे शुभे !, वैदेहि ! सीते !, त्वरस्व सत्वरा भव, शालीनशीलतां शालीनम् अधृष्ट, लज्जायुक्तमित्यर्थः, शीलं स्वभावः यस्याः तस्याः भावः तत्ता तां, लज्जाशीलतामित्यर्थः, ("स्यादधृष्टे तु शालीनः" इत्यमरः ) मुञ्च त्यज ; विपन्नस्य भर्त्तुः समाश्वासनार्थं स्वाभाविकं मुग्धभावं विजहीहीति भावः ; गुरुजनाः विद्यन्ते कथं भर्त्तुः सकाशं यामि इति सङ्कोचस्य नायमवसर इति तात्पर्य्यम् ; एहि आगच्छ, प्रियस्पर्शेन प्रियः सुखकरः, स्पर्शः अङ्गपरामर्शनादिक्रिया यस्य तेन, पाणिना करेण, मे मम, वत्सं रामं, जीवय सम्प्राप्तजीवनं कुरु ; त्वं कोमलकरसंवाहनेन रघुमणिं सर्व्वथा विगतखेदं विधेहीति भावः । पथ्यावक्त्रं वृत्तम् ॥ १८ ॥

(ख) ससम्भ्रमं—व्यग्रतासहितम् । रामं स्पृशन्ती—तद्देहं परामृशन्ती सती, उवाचेति शेषः । भर्त्तुः मोहं सपदि अपसारयितुमेवात्र त्वरा ज्ञेया । समाश्वसितु—समाश्वस्तः भवतु । आर्य्यपुत्रः,—स्वामी, राम इति यावत् ; मोहं परित्यजेति भावः ।

रामः। [ समाश्वस्य सानन्दम् ]। भोः! किमेतत्? [ दृष्ट्वा सहर्षाद्भुतम् ]। कथं देवी! [ सलज्जस्मितम् ]। अये! अम्बा अरुन्धती, सर्वे च प्रहृष्यन्त ऋष्यशृङ्गशान्तासमेता गुरवः! ( ग )

अरु। वत्स! एषा भगवती भगीरथगृहदेवता सुप्रसन्ना गङ्गा। ( घ )

[ नेपथ्ये ]। जगत्पते रामभद्र! स्मर्य्यतामालेख्यदर्शने मां प्रति आत्मनो वचनम्; यथा,—"सा त्वमम्ब! स्नुषायाम् अरुन्धतीव सीतायां शिवानुध्यानपरा भव" इति। तस्मादनृणाऽस्मि जाता। ( ङ )

( ग ) समाश्वस्य—सीतायाः पाणिस्पर्शेन संज्ञालाभानन्तरं किञ्चित् समाश्वस्तो भूत्वेत्यर्थः। सानन्दं—सहर्षम्, आहेति शेषः। भोः! किमेतत्?—अहो! कथमिदानीमेतत् सम्भूतमिति भावः। दृष्ट्वा—लोकान्तरप्रस्थितां सीतां श्वश्रूशुश्रूषापरायणामवलोक्य। सहर्षाद्भुतं—हर्षः,—सीतायाः पुनर्लाभात् आनन्दः, अद्भुतम्—आशातीतस्य वस्तुनः कथं हि समधिगमः इति विस्मयः, ताभ्यां सह वर्त्तमानं यथा तथा, आहेति शेषः। कथं—किम्। कथंशब्दोऽत्र सहर्षविस्मयसूचको बोध्यः। देवी!!—सीता!! समुपस्थितेति भावः। सलज्जस्मितं—लज्जा—गुरुजनानाम् अरुन्धतीप्रभृतीनां .दर्शनात् त्रपा, स्मितं—सीतायाः पुनः प्राप्तिजनितहर्षात् ईषद्धास्यञ्च, ताभ्यां सह वर्त्तमानं यथा तथा, आहेति शेषः। अम्बा—जननी। अरुन्धती—अस्मत्कुलगुरोः वशिष्ठस्य धर्म्मपत्नी। ऋष्यशृङ्गेति।—ऋष्यशृङ्गः,—तदाख्यमुनिविशेषः भगिनीपतिः, शान्ता—भगिनी, ताभ्यां समेताः,—युक्ताः। सर्वे गुरवः,—गुरुजनाः। प्रहृष्यन्तः,—आनन्दन्तः सन्तः, समुपस्थिता इति शेषः।

( घ ) भगीरथेति।—भगीरथस्य—युष्मत्पूर्वपुरुषस्य गङ्गानयनकर्त्तुः, गृहं—कुलं, तस्य देवता—अधिष्ठात्री देवी। गङ्गा—जाह्नवी। सुप्रसन्ना—सदया, युष्मान् प्रति अनुग्रहं कृतवती इत्यर्थः।

( ङ ) जगत्पते!—जगतां—भुवनानां, पतिः,—पालकः, तत्सम्बोधने; अस्य हि भगवतो नारायणस्य अंशसम्भूततया एवमभिहितमिति ज्ञेयम्। आलेख्यदर्शने—चित्रपटप्रदर्शनावसरे। मां प्रति आत्मनः वचनं स्मर्य्यतां—मामुद्दिश्य प्राक् त्वं यद्वचनमभ्यदधाः, तदिदानीं विचिन्त्यताम्। किं तत्? तदेवाह, यथेति।—सा त्वं

अव। इयन्ते श्वश्रूर्भगवती वसुन्धरा। (च)

[नेपथ्ये]। उक्तञ्च पूर्वमायुष्मता वत्सात्यागे, यथा—"भगवति वसुन्धरे! श्लाघ्यां दुहितरमवेक्षस्व जानकीम्" इति। तदधुना कृतवचनाऽस्मि प्रभोर्वत्सस्येति। (छ)

रामः। कथं कृतमहापराधो भगवतीभ्यामनुकम्पितः!! प्रणमामि वः। (ज)

---

—तादृशी भवती, सततमेवास्मत्कुलमङ्गलाभिलाषिणी भवतीति यावत्। स्नुषायां सीतायां—वध्वां जानक्याम्। अरुन्धतीव—अस्माकं गुरुपत्नी यथा तथैवेत्यर्थः। शिवानुध्यानपरा—शिवस्य—शुभस्य, यदनुध्यानं—परिचिन्तनं, तत्परा—तदासक्ता। भव—एधि; सततमेव मङ्गलाभिलाषिणी सती तिष्ठेति भावः। तत्र—भवद्वचनपरिपालनविषये इत्यर्थः। अनृणा—नास्ति ऋणं यस्याः तथाभूता, ऋणमुक्ता, परिपालितवचनेति यावत्। अस्मि—भवामि; घोरविपत्तिसमये देहपातव्यवसायपरायणां सीतां संरक्ष्य जगत्पतेः भवतः आज्ञा सर्व्वथा सम्पादितवत्यस्मीति भावः।

(च) श्वश्रूः,—श्वशुरस्य पत्नी; सीतायाः गर्भे धारणात अस्याः तथात्वं ज्ञेयम्। वसुन्धरा—रत्नगर्भा पृथिवी; यथा हि अमुया रत्नानि स्वगर्भे धृतानि, तथैव सतीकुलशेखरीभूतायाः सीतायाः गर्भे धारणात् इयमधुना स्वाभिधानस्य सार्थकतां सम्पादितवतीति भावः।

(छ) वत्सात्यागे—वत्सायाः,—सीतायाः, त्यागे—निर्व्वासनावसरे। पूर्व्वं—प्राक्। आयुष्मता—दीर्घायुषा त्वया राघवेण। उक्तञ्च—कथितञ्च। किमिति? तदेवाह, यथेति।—भगवति वसुन्धरे!—हे रत्नगर्भे पृथिवि!। श्लाघ्यां—प्रशंसनीयाम्। दुहितरं—कन्याम्। जानकीं—सीताम्। अवेक्षस्व—पश्य, सततमेवास्याः पर्य्यवेक्षणं कुर्य्या इत्यर्थः। इति—इत्थम्, उक्तञ्चेत्यनेनान्वयः। तत्—तस्मात्। अधुना—इदानीम्। प्रभोः,—पालकस्य; भूपतित्वादिति भावः। वत्सस्य—जामातृत्वात् आयुष्मतः तव राघवस्य। कृतवचना—कृतं—सम्पादितं, वचनं—वाक्यं यया तथाभूता, अनुष्ठिताऽऽदेशा इत्यर्थः। अस्मि—भवामि; त्वदाज्ञां सम्यक् सम्पाद्य अनृणा सञ्जाताऽस्मीति भावः।

(ज) कृतमहाऽपराधः,—कृतः,—विहितः, महान्—विपुलः, घोरः इत्यर्थः, अपराधः,—सीतानिर्व्वासनरूपः दोषः येन तथोक्तः, पापाशयः, अतिनृशंसः इत्यर्थः।

चन्द्र। भो भोः पौरजानपदाः! भगवतीभ्यां जाह्नवीवसुन्धराभ्यामेवं प्रशस्यमाना ममारुन्धत्याः समर्पिता, पूर्वञ्च भगवता वैश्वानरेण निर्णीतपुण्यचारित्रा, सब्रह्मकैश्च देवैः संस्तुता, सावित्रकुलवधूर्देवयजनसम्भवा सीतादेवी परिगृह्यतामिति कथं भवन्तो मन्यन्ते? (झ)

---

भगवतीभ्यां—युवाभ्यां पृथ्वीभागीरथीभ्याम्। कथं—किम्। विस्मयसूचकमिदम्। अनुकम्पितः?—अनुगृहीतः; अहो! कृतमहापातकेऽपि मयि भवत्योः सौजन्यम् अनुकम्पा चेति भावः। वः,—युष्मान्। [गौरवाद्बहुवचनम्]। प्रणमामि—नमस्करोमि।

(झ) पौरजानपदाः!—नगरवासिनः देशवासिनश्च सर्वाः प्रकृतयः! इत्यर्थः। भगवतीभ्यां—परमैश्वर्य्यशालिनीभ्याम्, अतिपवित्राभ्यामिति यावत्। जाह्नवीवसुन्धराभ्यां—गङ्गापृथ्वीभ्याम्। एवं—प्रोक्तरूपैः, "आवयोरपि यत्सङ्गात्" इत्यादिवचोभिः इति यावत्। प्रशस्यमाना—संस्तूयमाना। मम अरुन्धत्याः,—सतीकुलप्रधानाया वशिष्ठपत्न्याः मे सकाशे इति यावत्; ["मम अरुन्धत्याः" इत्यनेन आत्मनः सतीत्वगौरवजनितं किञ्चित् गर्वाधिक्यं व्यज्यते]। समर्पिता—न्यस्ता; सीता चेत् असती स्यात्, तदा गङ्गापृथ्वीभ्यामत्यर्थ्यमिनीभ्यां कथमपि न प्रशस्येत, न वा सतीशिरोमणितया विख्यातायाः ममारुन्धत्याः समीपे समर्प्येत इत्याशयः। पूर्व्वञ्च—प्रागपि; रावणवधानन्तरं लङ्कापुर्य्यां पुनः सीतायाः स्वीकारसमये इति भावः। वैश्वानरेण—अग्निना। निर्णीतपुण्यचारित्रा—निर्णीतं—स्थिरीकृतं, प्रमाणीकृतमित्यर्थः, पुण्यं—पवित्रं, चारित्रं—प्रकृतिः यस्याः सा, प्रमाणीकृतपातिव्रत्यधर्म्मा इत्यर्थः। सब्रह्मकैः,—ब्रह्मणा—प्रजापतिना सह वर्त्तमानैः। देवैः,—इन्द्रादिभिः त्रिदशगणैः। संस्तुता—प्रशंसिता, पतिव्रताशिरोमणित्वेन समादृतेत्यर्थः; यद्वा—संस्तुता—सतीशिरोमणित्वेन परिचिता, विज्ञाता इत्यर्थः, ("संस्तवः स्यात् परिचयः" इत्यमरः)। सावित्रेति।—सवितुरिदं सावित्रं, यत् कुलं—वंशः, सूर्य्यवंश इत्यर्थः, तस्य वधूः,—स्नुषा। देवेति।—देवयजनं—यज्ञभूमिः, तस्मात् सम्भवः,—उत्पत्तिः यस्याः सा, यज्ञक्षेत्रप्रसूतेत्यर्थः; पवित्रक्षेत्रसम्भूतत्वादतिपवित्रा इति भावः। सीतादेवी—जानकी। परिगृह्यतां—स्वीक्रियतां, रामेणेति शेषः; ("परिगृह्यते" इति पाठान्तरम्) ईदृशी सीता साध्वीकुलभूषणा राघवेण परिगृहीता भवतु इति अस्माभिः अनुमोद्यते इत्याशयः। इति—अस्मिन् विषये, सीतायाः पवित्रचारित्र-

लक्ष्मणः। एवमार्य्यया अरुन्धत्या निर्भर्त्सिताः प्रजाः कृत्स्नश्च भूतग्राम आर्य्यां नमस्करोति, लोकपालाश्च सप्तर्षयश्च पुष्प-वृष्टिभिरुपतिष्ठन्ते। (ञ)

अरु। जगत्पते रामभद्र!—

---

विधौ रामकृतपरिग्रहविषये चेति यावत। भवन्तः,—पौरजानपदाः सर्वे प्रकृतिवर्गा इत्यर्थः। कथं—किम। मन्यन्ते?—विचारयन्ति; युष्माकं किमभिमतम्? इति भावः; या हि विशुद्धस्वभावा इति मत्वा पृथ्वीभागीरथीभ्यां स्वतोकुलसम्मानरक्षिकायाः करे हस्ते समर्पिता, अग्नौ च परीक्षितपातिव्रत्यप्रभावा, देववृन्दैश्च भृशमेवाऽभिवन्दिता, सूर्य्यवंशीयकुलवधूनामुज्ज्वलरत्नभूता, जनकस्य राजर्षेः यज्ञवेदिसम्भूता, सा सीता किमिति अपवित्रतया भवद्भिः पौरजनैरनुमोद्यते? एषः विसदृशः संस्कारः भवद्भिः सर्वैरेव युगपत् स्वस्वमानसपथात् निरसनीय इति वक्तृतात्पर्य्यम्। अत्र सीतापरिग्रह-विषये पूर्वोक्तहेतुसमूहोपन्यासपुरःसरं प्रकृतिपुञ्जानामभिमतजिज्ञासया आरोपिताली-कापवादानां तेषां धृष्टतायाः उत्कटतिरस्कारः सूचितो भवतीति ज्ञेयम्।

(ञ) एवम्—इत्थं, प्रोक्तरूपेणेत्यर्थः; अतिपवित्रायाः सीतादेव्याः रामकृत-परिग्रहविषये सम्मतिप्रार्थनारूपसाधिक्षेपवचनेनेति भावः। निर्भर्त्सिताः,—तिरस्कृताः। प्रजाः,—प्रकृतयः! कृत्स्नः,—सर्व्वः। भूतग्रामः,—स्थावरजङ्गमात्मकः चराचरः। आर्य्या—सीताम्। नमस्करोति—प्रणमति; दुर्म्मर्य्यादत्वेन प्राक् सीतायामपवादा-रोपादधुना लज्जिताः प्रजाः किमपि वक्तुमशक्नुवत्यः नमस्कारेण तस्याः पवित्रत्वमङ्गी-करोतीति भावः। ["उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति न्यायात् अत्र नमःशब्दयोगेऽपि द्वितीया ज्ञेया]। लोकपालाः,—इन्द्रादयः देवाः। (तथा चामरः,—"इन्द्रो वह्निः पितृपतिः नैरृतो वरुणो मरुत्। कुबेरः ईशः पतयः पूर्वादीनां दिशां क्रमात्" ॥ इति)। सप्तर्षयः,—मरीच्यादयः। (तथा चोक्तं—"मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः। वशिष्ठश्च तथा सप्त ऋषयः परिकीर्त्तिताः ॥" इति)। पुष्पवृष्टिभिः,—स्वर्गीयकुसुमानां वर्षणैः। उपतिष्ठन्ते—परिपूजयन्ति, संवर्द्धयन्तीत्यर्थः, भूतग्रामसहिताः सर्वे एव देवाः सीता परमपवित्रा इति समुद्घुष्य तां सर्व्वथा अभिनन्दयन्ति, अतः सीतायाः राज्ञीत्वेन परिग्रहे नास्ति काऽप्यापत्तिः प्रजानामिति निष्कृष्टार्थः। ["उपाद्देवपूजा—" (वा०) इति उपपूर्वात्तिष्ठतेरात्मनेपदम्। एतेन भागीरथीप्रमुखाभिर्देवीभिः इन्द्रादिभिर्देवैः सप्तर्षिभिश्च संस्तूयमानत्वात् सीतायाः देवतात्वं व्यज्यते इति ज्ञेयम्]।

नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम् ।
हिरण्मय्याः प्रतिकृतेः पुण्यप्रकृतिमध्वरे ॥ १८ ॥

सीता । [ स्वगतम् ] । जाणादि अज्जउत्तो सीदादुक्खं पमज्जिदुं । * ( ट )

* जानाति आर्य्यपुत्रः सीतादुःखं प्रमार्जयितुम् ।

अथारुन्धती हिरण्मयीं सीताप्रतिकृतिं विहाय अतिपवित्रां साक्षात् सीतामेव धर्म्मचारिणीं कृत्वा अश्वमेधाध्वरं सम्पादयितुं राममुपदिशति, नियोजयेति ।—हे जगत्पते ! पृथिवीपालक !, रामभद्र ! रघुमणे !, इति चर्णकस्यमामन्त्रणपद-मत्राकर्षणीयम् ; त्वं हिरण्मय्याः सुवर्णनिर्म्मितायाः, [ हिरण्यस्य विकारः इत्यर्थे मयटि "दाण्डिनायनहा—" ( ६।४।१७४ पा० ) इति सूत्रेण यलोपः निपात्यते, टित्वात् ङीप् च, तेन हिरण्मयीति सिद्धम् ] । प्रतिकृतेः प्रतिमूर्त्तेः ; स्वर्णनिर्म्मित-तद्दीयादर्शादपीति भावः ; पुण्या पवित्रा, प्रकृतिः आदर्शः स्वभावो वा यस्याः तां, पतिव्रताशिखरीभूतां त्वदुपान्ते वर्त्तमानां मूर्त्तिमतीं साक्षादिमामित्यर्थः ; यद्वा— हिरण्मय्याः प्रतिकृतेः प्रतिच्छायायाः, पुण्यप्रकृतिं पुण्या पवित्रा, सतीकुलप्रधानत्वेन सुवर्णप्रतिमाया अपि अतिविशुद्धा इति यावत्, प्रकृतिः मूलभूता ; यामवलम्ब्य प्रतिकृतिर्घटिता आसीत् सैवेति भावः ; ताम् ; प्रियां वल्लभां सीताम्, अध्वरे अश्वमेधयज्ञे, धर्म्मचारिणीं धर्म्माचरणसहचरीं, यथाधर्म्मं धर्म्ममनुसृत्य, धर्म्मशास्त्रानुसारेणेत्यर्थः, नियोजय संस्थापय ; एतया साक्षात् सीतया सहितः अश्वमेधं निष्पादयेति भावः । "मुख्यालाभे प्रतिनिधिः शास्त्रार्थः" इति न्यायात्, मुख्याप्राप्तौ प्रतिनिधिविधानस्य शास्त्रीयत्वेन सीतायाः सुवर्णमयमादर्शं संस्थाप्य अश्वमेधाध्वरसम्पादनं हि साक्षात् सीतायाः प्राप्तावन्याय्यमेव, अतः सीतां स्वीकृत्य तया सह यज्ञं निष्पादयेति तात्पर्य्यम् । अत्र "पुण्यप्रकृतिम्" इत्यनेन "यस्य भार्य्या विदूरस्था पतिता दूषिताऽथवा । अनिच्छुः प्रतिकूला वा—" इत्यादि निषेधविधे-र्व्युदासात् सीतया सार्द्धं यज्ञनिष्पादने फलभूयस्त्वं व्यज्यते । पथ्यावक्त्रं वृत्तम् ॥ १८ ॥

( ट ) आर्य्यपुत्रः,—रामः । सीतादुःखं—सीतायाः,—मम, दुःखं—क्लेशम् । प्रमार्ज्जयितुं—शोधयितुं, निराकर्त्तुमित्यर्थः । जानाति—वेत्ति ; अधुना मां पुनः स्वीकृत्य अकारणनिर्वासनजनितं मे खेदं समूलमुन्मूलयिष्यतीति, मम सुवर्णप्रतिकृतिं निर्म्माय तया सह यज्ञसमारम्भात्, सीताऽहम् अपवित्रा इति बुद्ध्या स्वामिना

रामः। यथा भगवती आदिशति। (ठ)

लक्ष्मणः। कृतार्थोऽस्मि। (ड)

सीता। जीविदम्हि। * (ढ)

लक्ष्मणः। आर्य्ये! एष निर्लज्जो लक्ष्मणः प्रणमति। (ण)

सीता। वच्छ! ईद्दिसो वि चिरं जीव। † (त)

---

* जीवितास्मि।

† वत्स! ईदृशोऽपि चिरं जीव।

---

परित्यक्तास्मि इति मे परित्यागलज्जाशल्यं तेन समूलमुन्मूलितमिति वा भावः।

(ठ) यथा—यादृक्। भगवती—भवती अरुन्धतीत्यर्थः। आदिशति— आज्ञापयति, तथा करोमीति शेषः; गुरुजनानुज्ञायाः अनुपेक्षणीयत्वात् पुनरप्यहं सीतां ग्रहीष्यामीति भावः।

(ड) कृतार्थोऽस्मि—कृतकृत्यः भवामि; सीतारामयोः पुनः समागमदर्शनेन सर्वेषामस्माकमपूर्वानन्दस्य सञ्जननादिति भावः।

(ढ) जीवितास्मि—प्राप्तप्राणा भवामि; प्राणेभ्योऽपि प्रेयसः रामस्य विरहेण एतावन्तं कालं मृतप्राया इव आसम्, इदानीं तल्लाभेन प्रत्युज्जीविता इव भवामीति भावः।

(ण) निर्लज्जः,—निर्नास्ति लज्जा यस्य तथोक्तः, सीताविवासनरूपनैष्ठुर्य्याचरणात् निस्त्रपः इत्यर्थः; यो हि प्राक् ज्येष्ठादेशात् आपन्नसत्त्वामेकाकिनीं त्वां श्वापदसङ्कुले विजनेऽरण्ये निर्वासितवान्, नृशंसः स कथं तव पुरतः दृश्यमानः निर्विकारचेता इव ते मुखं दर्शयति? इत्यहो! नैघृण्यं तस्येति भावः।

(त) वत्स!—प्रेमास्पदीभूत!, आयुष्मन्नित्यर्थः। ईदृशः अपि—प्रोक्तरूपः सन्नपि, मद्विवासनेन निष्ठुरभावप्रकाशनात् लज्जाहीनः भवन्नपीत्यर्थः। चिरं—सुदीर्घं कालम्। जीव—प्राणिहि; स्वेच्छायामसत्यामपि केवलम् अग्रजस्यादेशानुपालनाय मद्विवासनरूपं यदन्याय्यमाचरितं, तत्र ते अणीयानपि दोषो नास्तीत्यहं जानामि, परं ज्येष्ठादेशानुपालनात् त्वं मे परमप्रीतिभाजनमेव भवसि, किञ्च तज्जीवनं हि मे प्राणेभ्योऽपि गरीयः, तेन लज्जां परिहाय सततं सुखमास्तां पुत्रानुपश्यानुपुत्रेति भावः।

अरु। भगवन् वाल्मीके! उपनीयेतामिमौ सीता-गर्भसम्भूतौ रामभद्रस्य पुत्रकौ कुशलवौ। (थ)

[ इति निष्क्रान्ता ]।

रामलक्ष्मणौ। दिष्ट्या तथैव तत्। (द)

सीता। [ सबाष्पाऽऽकुला ]। कहिं ते पुत्तआ मे? * (ध)

[ ततः प्रविशति वाल्मीकिः कुशलवौ च ]।

वाल्मीकिः। वत्सौ कुश लवौ! एष रघुपतिः पिता युवयोः,

* कुत्र तौ पुत्रकौ मे?

(थ) भगवन् वाल्मीके!—इति नेपथ्यस्थितं वाल्मीकिमुद्दिश्य अरुन्धत्याः सम्बोधनम्। इमौ—तत्सकाशे अवस्थितौ इत एव दृश्यमानौ। सीतागर्भसम्भूतौ—जानकीगर्भजातौ। पुत्रकौ—तनयौ। उपनीयेतां—प्राप्येतां, सीतारामसमीपे बालक-द्वयमुपस्थाप्यतामित्यर्थः। इति निष्क्रान्ता—रङ्गालयात् बहिर्गता, अरुन्धतीति शेषः। अत्रैव गर्भाङ्कस्य परिसमाप्तिर्ज्ञेया। गर्भाङ्कलक्षणमुक्तं दर्पणे यथा—"अङ्कोदर-प्रविष्टो यो रङ्गद्वारामुखादिमान्। अङ्कोऽपरः स गर्भाङ्कः सबीजः फलवानपि॥" इति। बीजलक्षणमपि तत्रैव यथा,—"अल्पमात्रं समुद्दिष्टं बहुधा यत् विसर्पति। फलस्य प्रथमो हेतुर्बीजं तदभिधीयते॥" इति। "साहं मंदभाइणी भाइरहीए अत्ताणं णिक्खिवेमि" इत्येवात्र बीजम्; यतश्चैतदत्रात्र स्वल्पतया समुद्देशविषयीभूतं सत् अरुन्धतीसम्पाद्यसीतारामसमागमरूपफलं प्रति कारणम्। सीतारामसमागमरूपञ्चात्र फलं ज्ञेयम्। "प्रविश्य सूत्रधारः" इत्यारभ्य "विश्वम्भरा भगवती" इत्यादि श्लोक-पर्य्यन्तमत्र रङ्गद्वारामुखादिकं ज्ञेयम्।

(द) तत्—कुशलवसम्बद्धं वस्तुजातमित्यर्थः। तथैव—तादृगेव; यथाऽस्माभिः प्राक् चिन्तितं तद्रूपमेवेति भावः।

(ध) ("सबाष्पाकुला" इत्यत्र "सबाष्पाकूतम्" इति पाठे—बाष्पेण—आनन्दा-श्रुणा, आकूतेन—पुत्रदर्शनाभिप्रायेण च सह वर्त्तमानं यथा तथा)। तौ—सन्त्यागादनन्तरं मया विच्छिन्नौ इति यावत्। पुत्रकौ—कुशलवौ। कुत्र—कस्मिन् स्थाने इदानीं वर्त्तेते? इत्यर्थः; यौ हि सन्त्यागं यावत् मया पोषितौ, ताविदानीं कुत्र वर्त्तेते, यतस्तद्दर्शनेच्छा मां नितरां विवशीकरोतीति इति भावः।

लक्ष्मणः कनिष्ठतातः, सीतादेवी जननी, एष राजर्षिर्जनको मातामहः। (न)

सीता। [सहर्षकरुणाद्भुतं विलोक्य]। कहं तादो !! * (प)

कुशलवौ। हा तात ! हा अम्ब ! हा मातामह ! (फ)

रामलक्ष्मणौ। [सहर्षमालिङ्ग्य]। ननु वत्सौ ! पुण्यैः प्राप्तौ स्थः। (ब)

सीता। एहि जाद कुस ! एहि जाद लव ! चिरस्स परिस्सजध पुणो जम्मंतरगदं जणणिं। † (भ)

---

* कथं तातः !!

† एहि जात कुश ! एहि जात लव ! चिरस्य परिष्वजेथां पुनः जन्मान्तरगतां जननीम्।

---

(न) अथ भगवान् वाल्मीकिः कुशलवौ तद्गुरुजनादीन् परिचाययति, वत्साविति।—रघुपतिः,—रामचन्द्रः। युवयोः पिता—जनकः। कनिष्ठतातः,—पितृव्यः। मातामहः,—मातुः पिता। ["मातृपितृभ्यां पितरि डामहच्" (वा०) इति मातृशब्दात् डामहच्प्रत्ययः]। राजर्षिजनकस्तु अभिनयदर्शनार्थं महर्षेः वाल्मीकेराह्वानवशादेवात्र समागतः इति ज्ञेयम्।

(प) सहर्षकरुणाद्भुतम्—आनन्दशोकाश्चर्यैः सह वर्त्तमानं यथा तथेत्यर्थः, आहेति शेषः। अत्र पितुः दर्शनात् हर्षः, तस्याः दुरवस्थां स्मृत्वा करुणः, अकस्मात् पितुरागमनदर्शनाच्च अद्भुतं सम्भूतम् इति ज्ञेयम्।

(फ) अत्र हाशब्दः विषादसहकृतहर्षद्योतकः; पित्रादिदर्शनात् हर्षः, तेषां तथाभूतामवस्थां विलोक्य च विषादः इति ज्ञेयम्।

(ब) ("रामलक्ष्मणौ" इत्यत्र "रामः" इतिमात्रपाठः क्वचिद्दृश्यते)। ननु—भोः!!। पुण्यैः,—प्राक्तनसुकृतैः। प्राप्तौ स्थः,—लब्धौ भवथः, युवामिति शेषः; पूर्व्वजन्मार्ज्जितपुण्यबलेनैव युवामस्माभिः लब्धाविति भावः।

(भ) चिरस्य—बहुकालं यावदित्यर्थः। [षष्ठ्यन्तप्रतिरूपकमव्ययमेतत्] परिष्वजेथाम्—आलिङ्गतं, युवामिति शेषः; बहुकालात् परमुपागतस्य वस्तुनः स्वल्पकालं व्याप्योपभोगेन सम्यक्तया तृप्तिर्न भवतीति भावः। जन्मान्तरगतां—

कुमारौ। [तथा कृत्वा]। धन्यौ स्वः। (म)

सीता। भअवं! पणमामि। * (य)

वाल्मीकिः। वत्से! ईदृश्येव चिरं भूयाः। (र)

सीता। अम्महे! तादो, कुलगुरू, अज्जाअणो, सभत्तुआ अज्जा संतादेई, सलक्खणा सुपसण्णा अज्जउत्तचलणा, समं कुसलवावि दीसंति, ता णिब्भरम्हि आणंदेण। † (ल)

* भगवन्! प्रणमामि।

† आश्चर्य्यम्! तातः, कुलगुरुः, आर्य्याजनः, सभर्तृका आर्य्या शान्तादेवी, सलक्ष्मणाः सुप्रसन्नाः आर्य्यपुत्रचरणाः, समं कुशलवावपि दृश्यन्ते, तन्निर्भराऽस्मि आनन्देन।

अन्यान्तरप्राप्तम्; पातालदेशात् पुनः भूतले समुदयादिति भावः; यद्वा—सुदीर्घकालं व्याप्य अनुभूतदारुणक्लेशस्य अधुनाऽपगमात् प्राप्तजन्मान्तरभावाविवेति भावः।

(म) धन्यौ स्वः,—सार्थकजन्मानौ भवामः; लोकान्तरगतायाः मातुः पुनर्लाभादिति भावः।

(य) भगवन्!—परममाहात्म्यशालिन्!, महर्षे वाल्मीके! इत्यर्थः। प्रणमामि—अभिवादये, भवन्तमिति शेषः; यतः भवत्प्रभावेणैवाहं स्वामिविरहकृतचिरदुःखभागिन्यपि पुनः तत्समागमेनेदानीं विगतदुःखा भवामीति भावः।

(र) ईदृश्येव—एवम्भूता एव, पत्यपत्ययोः चिरसंयोगवत्येवेत्यर्थः। भूयाः,—स्थेयाः इति यावत्; न हि कदाऽपि प्रागिव पतिपुत्रवियोगविधुरा भवेरिति भावः।

(ल) तातः,—पिता, राजर्षिः जनक इत्यर्थः। कुलगुरुः,—वशिष्ठः। आर्य्याजनः,—कौशल्यादिश्वश्रूजनः। सभर्तृका—भर्त्रा—ऋष्यशृङ्गेण सह वर्त्तमाना, पतिवत्नी इत्यर्थः। आर्य्या—मान्या। शान्तादेवी—पूजनीया शान्तानाम्नी ननान्दा। सलक्ष्मणाः,—सौमित्रिसहिताः। सुप्रसन्नाः,—आनन्दपूर्णाः, अधुना शोकमोहाद्यपगमात् आनन्दोज्ज्वला इति यावत्। आर्य्यपुत्रचरणाः,—पतिः रामभद्रः; पत्युः महागुरुत्वात् महागौरवप्रदर्शनार्थे तत्र चरणशब्दोपन्यासः। समं दृश्यन्ते—युगपदेवैते सर्वेऽपि मया अवलोक्यन्ते इत्यर्थः। तत्—तस्मात्, सकलानां युगपदेव दर्शनाल्लोचनयोरिति यावत्। आनन्देन—हर्षेण। निर्भरा—व्याप्ता, परिपूर्णेति यावत्। अस्मि—भवामि, आनन्दविवशहृदया भवामीत्यर्थः।

नेपथ्ये। [ कलकलः ]।

वाल्मीकिः। [ छायायावलोक्य च ]। उपहृतलवणो मधुरेश्वरः प्राप्तः। ( च )

लक्ष्मणः। सानुषङ्गाणि कल्याणानि। ( छ )

रामः। सर्वमिदमनुभवन्नपि न प्रत्येमि। यद्वा, प्रकृतिरियमभ्युदयानाम्। ( ज )

---

( च ) उपहृतलवणः,—उपहृतः,—उत्खातः, निहतः इत्यर्थः, लवणः,—मधुदैत्यसुतः राक्षसविशेषः येन तथोक्तः। ( "उत्खातलवणः" इति पाठान्तरम् )। मधुरेश्वरः,—मधुरा नाम लवणवधानन्तरं यमुनाकूलस्थे मधुदैत्याधिकृते मधुवने शत्रुघ्नेन निर्म्मिता काचित् पुरी, अधुना "मथुरा" इति प्रसिद्धा, तस्या ईश्वरः,—अधिपतिः, शत्रुघ्नः इत्यर्थः। प्राप्तः,—समायातः; अतस्तत्सेनाया एवायं कलकलः श्रूयते इति भावः। लवणवधविवरणन्तु प्रागेव महर्षिणा वाल्मीकिना तपःप्रभावेण परिज्ञातमासीदिति ज्ञेयम्। कालिन्दीकूलस्थानां प्रशान्तचेतसा मुनीनामतिप्रभूतपीडकं कुम्भीनसीगर्भसम्भूतं मधुसुतं लवणराक्षसं निहत्य भगवद्रामभद्रादेशात् शत्रुघ्नः तदधिकृते मधुवनप्रदेशे मधुरां नाम रम्यां पुरीं संस्थाप्य शशासेति रामायणी कथा अत्रानुसन्धेया।

( छ ) कल्याणानि—शुभानि। सानुषङ्गाणि—अनुषङ्गः,—अनुबन्धः, सहचरः इत्यर्थः, तेन सह वर्त्तमानानि यानि तथाभूतानि, दीर्घवियोगानन्तरं पुत्रकलत्रादिसम्मेलनरूपकल्याणानि प्रियानुजशत्रुघ्नसम्मेलनरूपकल्याणान्तरेण सानुबन्धानीत्यर्थः, भवन्तीति शेषः; एकः अभ्युदयः अभ्युदयान्तरैरनुस्रियते, यतः सम्पत् सम्पदमेवानुबध्नाति विपच्च विपदमिति भावः।

( ज ) इदं सर्वं—पुत्रकलत्रगुरुजनादिसमागमजनितसुखमित्यर्थः। अनुभवन्नपि—प्रत्यक्षीकुर्वन्नपि। न प्रत्येमि—न विश्वसिमि; अभव्यस्य मे एतादृशालौकिकसुखसम्भोगस्यातीवासम्भवितत्वादिति भावः। प्रत्यक्षानुभूतस्यापि अस्य विश्वसनीयत्वे संशयमाकलय्य किञ्चित् विमृश्य च प्रत्ययार्हत्वमपि भवितुमर्हति इति पक्षान्तरमाह, यद्वेति।—यद्वा—अथवा। अभ्युदयानां—मङ्गलानाम्। इयं—खलु कर्पोतिकान्यायात् यौगपद्येनाविर्भावरूपेति यावत्। प्रकृतिः,—स्वभावः; तथा च अभ्युदयो हि अभ्युदयमेव प्रसूते इति नैसर्गिकनियमात् एतस्य विश्वसनीयताऽप्यत्र सङ्गच्छते इति भावः।

वाल्मीकिः । रामभद्र ! उच्यतां, किन्ते भूयः प्रियमुपकरोमि ? (स)

रामः । अतः परमपि प्रियमस्ति ? तथाऽपीदमस्तु । (ह)—

पाप्मभ्यश्च पुनातु वर्द्धयतु च श्रेयांसि सेयं कथा
मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च ।

(स) भूयः,—पुनः, पुत्रकलत्रादिसमर्पणादन्यदित्यर्थः । प्रियं—प्रीतिकरं कार्य्यम् । उपकरोमि ?—संसाधयामि ? ; किं ते ममाधुना उपकार्य्यमवशिष्टमस्ति, तत् ब्रूहीति भावः ।

(ह) अतः परमपि—एतस्मात् आयाऽपत्यादिसम्मेलनजनितप्रियानुष्ठानादधिकमपि । अपि—प्रश्ने । प्रियं—प्रीतिजननम् । अस्ति ?—वर्त्तते किम् ?, नास्त्येवेत्यर्थः । तथाऽपि—एतदतिरिक्तप्रीतिकरविषयासत्त्वेऽपि । इदं—वक्ष्यमाणप्रकारं, भरतवाक्यमिति यावत् । अस्तु—भवतु ।

अथ भरतवाक्यं प्रस्तौति, पाप्मेति ।—माता इव जननीव ; माता यथा पुत्रादीनां मङ्गलविधात्री सुखदायिनी च भवति, तथैवेत्यर्थः, सर्वभूतधात्री निखिललोकपालयित्री मह्येव इत्यर्थो वा, तथा गङ्गेव च भागीरथीव च, जगतः लोकस्य, सर्वेषां प्राणिनिचयानामित्यर्थः, मङ्गल्या च कल्याणजननी च, मनोहरा च रमणीया च, कौतुकोद्दीपकविविधाख्यायिकापूर्णत्वात् मनसः सुखदा च इत्यर्थः, सा इयं वाल्मीकीयचतुर्विंशतिसाहस्रिकानुसंवादिनी सुप्रसिद्धा उत्तररामचरितरूपा, कथा प्रबन्धः, पाप्मभ्यश्च जननीपृथ्वीभागीरथीवत् पापेभ्यश्च, पुनातु पवित्रीकरोतु, जगदिति शेषः, श्रेयांसि च मङ्गलानि च, वर्द्धयतु जनयतु, सर्वेषां सामाजिकजनानामिति शेषः ; प्रजानामपापवत्त्वे श्रेयोभूयस्त्वे च नृपस्यापि तत्फलभागित्वात् भवत्तमोपि ममेयमर्थनेति भावः ; "वासुदेवकथा राजन् ! पुरुषांस्त्रीन् पुनाति हि । वक्तारं प्रच्छकं श्रोतृन् तत्पादसलिलं यथा ॥" इति श्रीमद्भागवतोक्तेः वासुदेवकथा यथा वक्त्रादीन् पुनाति, इयं रामकथा अपि तद्वत् इति तात्पर्य्यम् ; इयन्तु रामकथा नानाविधनीतिविभूषिता धर्म्मशास्त्रसंवादिनी, विविधोपाख्यानपूर्णत्वात् कौतूहलोद्दीपिका च भवति, तेनैतस्याः मङ्गलसाधकत्वं मनोहरत्वञ्च ज्ञेयमित्याशयः । ("पाप्मभ्यश्च पुनाति वर्द्धयति च श्रेयांसि सेयं कथा" इति पाठान्तरम्) ननु असेविता सती कथं सा पुनीयात् कथं वा श्रेयांसि विदध्यात् ? इत्यत आह, तामेतामिति ।—बुधाः पण्डिताः, शब्दब्रह्मविदः शब्दरूपब्रह्म वेत्ति यस्तस्य,

तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः
शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम् ॥ २० ॥

[ इति निष्क्रान्ताः सर्वे ] ।

इति सम्मेलनं नाम सप्तमोऽङ्कः ॥ ७ ॥ ( क )

समाप्तमिदं महाकविभवभूतिविरचितमुत्तरराम-
चरितं नाम नाटकम् ।

निखिलशब्दार्थतत्त्वाभिज्ञस्य इत्यर्थः; निखिलवेदतत्त्वाभिज्ञस्येत्यर्थो वा, अपि च परिणतप्रज्ञस्य परिणता परिपाकं गता, भ्रमचापल्यादिदोषरहितेत्यर्थः, प्रज्ञा बुद्धिर्यस्य तस्य तथोक्तस्य, अलौकिकमनीषासमुद्भासितस्येत्यर्थः; तदन्यथात्वे ईदृशं रसभावसमुज्ज्वलशब्दयोजनानैपुण्यं न सम्भवेदिति भावः; कवेर्वाल्मीकेः भवतः, तां प्रसिद्धां रामायणरूपाम, अभिनयैः अधुना आङ्गिकादिभिश्चतुर्भिरवस्थाऽनुकारैः, "भवेदभिनयोऽवस्थाऽनुकारः स चतुर्विधः । आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा ।" इति दर्पणात्; विन्यस्तरूपां वि विशेषेण, न्यस्तं निहितं, रूपं शरीरं यस्याः तथोक्तां तां, प्रदर्शितप्रकाराम् इत्यर्थः, सम्यगभिनीतामिति यावत्, एताम् अधुना सर्वसमक्षमभिनीयमानाम्, इमां भवद्रचितां, सचराचरैर्भूतग्रामैरिदानीमेव प्रत्यक्षं दृष्टां, वाणीं रूपकाख्यां भारतीमित्यर्थः, रामचरितरूपामिति यावत्, परिभावयन्तु समालोचनया संवर्द्धयन्तु; भगवद्वाल्मीकिविरचितरामायणानुगतत्वात् एतन्नाटकमपि लोके मुखकरं समादरणीयञ्च भवतु इति भावः। ("वाल्मीकेः परिभावयन्त्वभिनयैः विन्यस्तरूपा" इति पाठान्तरम् ) । [ अत्र माङ्गल्यत्वमनोहरत्वरूपसाधर्म्यद्वयमन्तर्भाव्य मात्रा गङ्गया च साकमेतत्कथायाः अवैधर्म्यसाम्योक्तेः पूर्णोपमाऽलङ्कारौ सजातीयसङ्कीर्णौ। किञ्च श्लोकेऽस्मिन् पुनातु वर्द्धयतु इति प्रार्थनायां लोटः विधानात् "चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा" इतिवत् कैश्चिदाशङ्कितस्य भग्नप्रक्रमतादोषस्य नावसरः, भरतवाक्ये हि सर्वत्र लोटः व्यवहारो दृश्यते, न लटः; "चिरं जीवतु" इत्यस्य तु तथात्वाभावादिति विभाव्यम् ]। शार्दूलविक्रीडितं वृत्तम् ।

( क ) सम्मेलनं नाम—रामसीताकुशलवशत्रुघ्नादीनां परस्परसमागमात्मक इति नाम्ना प्रसिद्धः । सप्तमोऽङ्कः इति—समाप्त इत्यर्थः, इतिशब्दः समाप्तौ ।

इति पण्डितकुलपतिना श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता
सुखबोधिनी नामोत्तररामचरितटीका समाप्ता ।

# अथ सप्तमाङ्कस्य सङ्क्षेपः ।

अथ लक्ष्मणः रङ्गस्थलं प्रविश्य, अद्य खलु भगवता वाल्मीकिना सप्रभावैस्तत्र सदेवासुराः भूतग्रामाः सन्निधापिताः, तेनाहमार्य्येणादिष्टः यत्, भगवान् वाल्मीकिरप्सरोभिः प्रयुज्यमानां स्वकृतिं द्रष्टुमस्मानुपनिमन्त्रितवान्, अतस्त्वं त्वरितं भागीरथीतीरे समाजसन्निवेशं विधेहि, किञ्च चन्द्रकेतुर्यादृशासने उपविशति, वत्सौ कुशलवावपि तादृशमासनमुपवेशयितव्यौ इति । तन्निर्देशानुसारतः मया सर्वेषां समुपवेशनं समुचितस्थानेष्वेव कृतमिति ; राज्याश्रममध्युष्यापि मुनिव्रतः आर्य्यः राघवः वाल्मीकिगौरवादित एवाभिवर्त्तते इति च व्यजिज्ञपत् । रङ्गप्रेक्षकेषु सभास्थलमुपविष्टेषु रामोऽपि राजासनमलञ्चकार । ततः सूत्रधारः प्रविश्य, आर्षज्ञानमयेन चक्षुषा समुद्वीक्ष्य मया यथाययमुपनिबद्धं करुणाद्भुतरसमेतत् रामचरितं, कार्य्यगौरवात् भवद्भिरवधातव्यमिति भगवतो वाल्मीकेः निर्देशं विज्ञापयामास । एतदाकर्ण्य रामः, भगवतां प्रज्ञानमयानि वचांसि अव्याहतानि भवन्तीत्युक्त्वा सूत्रधाराशयं विशदीकृत्याभिदधे ।

अथ वैदेह्याः, हा आर्य्यपुत्र ! हा कुमार लक्ष्मण ! अशरणां मामरण्ये आपदः अभिलषन्ति, तेनाहमिदानीं मन्दभागिनी भागीरथ्यामात्मानं निक्षिपामि, इति करुणां परिदेवनामाकर्ण्य, अहो ! दुर्व्विषहमेतद्वचनमिति निर्भरं करुणञ्च विलपति लक्ष्मणे, देवी वैदेही राज्ञा रामेण विजने वने परित्यक्ता प्रसववेदनां सोढुमशक्नुवती भागीरथ्यामात्मानं विमुञ्चतीत्युक्त्वा सूत्रधारः निष्क्रान्तः ।

तदाकर्ण्य विह्वलीभूते रघुपतौ क्षणमपि चक्ष्व देवि ! इत्युक्तवति सति, आर्य्य ! नाटकमिदमित्युक्त्वा लक्ष्मणः तं समाश्वासितुमैहत । तदा रामः वज्रमयः खल्वहमित्युक्त्वा कथञ्चिदात्मानं विधृतवान् ।

अथ पृथ्वीभागीरथ्यौ दारकद्वयमुत्सङ्गे निधाय सीतया सह सभास्थलमाजग्मतुः, समाश्वासयितुमारेभाते च अन्तर्जले दारकद्वयं प्रसूय प्रमूर्च्छितां सीताम् । किञ्चिदाश्वस्तीभूय च सा, हा आर्य्यपुत्र ! इति क्रन्दित्वा शोकवेगं विषोढुमपारयन्ती सती मुमूर्च्छ । तदा रघुवंशस्य कल्याणाङ्कुरः प्ररोहः सञ्जातः इति कथामाकर्ण्य रामचरणयोर्निपतितो लक्ष्मणः तं प्रमुग्धं ज्ञात्वा वीजयितुमारभत । अथ लब्धाश्वासा सती सीता पृथ्वीतः प्रथमां स्वकुलाधिदेवतां भागीरथीं ज्ञात्वा तामवन्दत, ततो भागीरथीमुखात् द्वितीयां स्वजननीं वसुन्धरां विदित्वा क्रन्दितुमारेभे, वसुन्धराऽपि विललाप ।

अपत्यस्नेहेन जितं खलु, यतः विश्वम्भराऽपि व्यथते नाम, इत्युक्त्वा भागीरथी तां सान्त्वयितुमारेभे। सा तु, चिरदुःखभागिनीं सीतां प्रसूय दुहितुश्च तादृशं जनापवाद-माकर्ण्य कथं समाश्वस्ता भवामि? इत्युवाच। भागीरथी तु, दैवगतिरलङ्घनीया खलु इत्युक्त्वा तां विगतखेदां कर्त्तुमचेष्टत। ततः पृथिवी प्रागुक्तं भागीरथीवचनं कथञ्चित् समर्थ्य, रामभद्रेण किमेतत् युक्तं कृतम्? यतः बाल्ये पाणिपीडनं न प्रमाणीकृतं, तथा अहं, राजर्षिः जनकः, पावकेन विशोधनं, अन्वदानुगत्यं, सन्ततिश्च, एतेषु च किमपि तेन न गणितमित्युक्त्वा सीतानिर्वासनस्य अयौक्तिकतां प्रतिपादयामास। तदा पुनः, हा! आर्य्यपुत्रं स्मारिताऽस्मि अधुना, इत्येवंविधं सीतायाः विलापमुपश्रुत्य, सा तु, आः!! कस्ते आर्य्यपुत्रः? इत्युक्त्वा तां निर्भर्त्सयामास। भागीरथी तदा, भगवति वसुन्धरे! प्रसीद, सर्वं विजानत्यपि कथं जामात्रे इत्थं प्रकुप्यसि? सुदूरस्थिते लङ्काद्वीपे सीतायाः अग्निविशुद्धिं कथमिहस्थाः जनाः विश्वस्युः? इति विभाव्य, जगति घोरमयशः समाकर्ण्य च स्वकुलगौरवं संरक्षितुं [illegible] लोकांश्च समाराधयितुमेव रामः प्राणसमामपि सीतां निर्वासितवान्, तत्र नास्त्यणीयानप्यस्य दोषः इत्युक्त्वा तां सान्त्वयितुमारभत। एतदाकर्ण्य देवी पृथ्वी आह, नित्यं वः प्रसन्नैवाहमस्मि, रामभद्रस्य सीतास्नेहमपि जानामि, किन्त्वविषह्यशोकावेगेनैवेत्थं ब्रवीमि, वेद्मि च दुर्दैववशात् वत्सां जानकीं निर्वास्य रामभद्रः मनसि निरन्तरं निदंग्धीभवन्नपि केवलमसामान्यसत्त्ववशात् प्रकृतिपुण्यानां पुण्यबलाच्चेदानीमपि जीवतीति। सीता तु तदा रुदती सती आह, अम्ब! मां त्वदङ्गेषु विलीनां कुर्व्विति। तदाकर्ण्य पृथ्वी आह, पुत्रकौ त्वया अवेक्षणीयावेवेति। अनाथाऽहं कथमेतौ रक्षामि? इति सीतावचनमाकर्ण्य तदा रामः, हृदय! वज्रमयः खल्वसीत्युक्त्वा विललाप। कथं त्वं सनाथा अप्यनाथा? इति गङ्गया सान्त्विता सीता, मन्दभागिन्या मे कीदृशं सनाथत्वम्? इत्यात्मानमधिचिन्तवती। देव्यौ तु सीतायाः तादृशं विलापनमाकर्ण्योचतुः, त्वत्सङ्गादेवावामतिपूते इति जगति ख्यातिमागते; कथं त्वमात्मानमेवमवजानासि? इति। तदाकर्ण्य लक्ष्मणः प्राह, देव! श्रूयतामिति। रामस्तु प्रत्याह, लोकः शृणोत्वेतत्।

अथ नेपथ्ये महान् कलकलः उदजनि, किमिति सहसा विमानमण्डलमधुना प्रज्वलति? इति सीतायाः वचनमाकर्ण्य देव्यावाहतुः, आं ज्ञातं, कृशाश्वसम्प्रदाय-सिद्धानि जृम्भकशस्त्राणि व्योम्नि आविर्भूतानीति। अत्रान्तरे तानि शस्त्राणि नेपथ्यात्
* स्वयमेवाऽऽहुः, देवि सीते! तुभ्यं नमः, पुत्रकौ हि तेऽस्माकं रक्षितारौ; भगवान् रघुपतिः आलेख्यप्रदर्शनावसरे एवमेवास्मानादिदेशेति। श्रुत्वैतत् देव्यावाहतुः,

वत्से! मोदस्व, रामभद्रसदृशौ ते पुत्रौ सञ्जाताविति। तदा सीतामुखात् को हि मे पुत्रकयोः संस्कारकर्म्म विधास्यति? इत्याकर्ण्य रामः वशिष्ठसंस्कृतानां रघुसन्ततीनामिदानीं संस्कारभावमभिप्राय परं विलपितवान्। तदा तु देव्यौ आहतुः, स्तन्यत्यागात् परमेवावां भगवतो वाल्मीकेः तव पुत्रकावर्पयिष्यावः, असौ हि त्वत्पुत्रयोः यथोचितं संस्कारं संविधास्यतीति। ततः सीतामादाय गङ्गापृथ्व्यौ अन्तर्दधाते।

अथ सीतायाः लोकान्तरप्रयाणमवलोक्य रामः मोहमुपागतः। लक्ष्मणस्तु तदा, भगवन् वाल्मीके! आर्य्यस्य जीवनमपहर्तुं किं भवता ईदृशं काव्यमुपनिबद्धम्? इत्युक्त्वा सवाष्पगद्गदं विललाप। ततो नेपथ्ये, आतोद्यकमपनीयतामधुना, पश्यन्तु सर्वे स्थावरजङ्गमाः वाल्मीकिनिबद्धं पवित्रमाश्चर्य्यमिति वागुदभूत। तदा लक्ष्मणः विलोक्य आह, अहो! मन्त्रौषे देवा ऋषयश्च अद्भुतमेतत् द्रष्टुं समवेताः सञ्जाताः, यतः देवी सीता गाङ्गाम्भसामभ्यन्तरात् पृथ्वीगङ्गाभ्यां सह समुदेतीति।

अत्रान्तरे नेपथ्यभाषितेन गङ्गापृथ्व्यौ पुण्यव्रतां वधूं सीतामरुन्धतीहस्ते समर्पयामासतुः। ततः सौमित्रिः, आर्य्य! पश्य पश्येदमाश्चर्य्यमित्युक्त्वा रघुनाथं मूर्च्छितमवलोक्य यदा तस्य मूर्च्छामपनेतुमैहत, तदा अरुन्धती सीतया सह सवेगं रङ्गमागत्य आह, वत्से सीते! लज्जाशीलतां विमुञ्च, मोहमुपागतं मे वत्सं रामं त्वं प्रियस्पर्शेन पाणिना सेवं सेवं समुज्जीवयेति।

तदाकर्ण्यास्त्रस्ता सीता ससम्भ्रममुपसृत्य रामशरीरम्; तेन च रामः किंयद्धि समाश्वस्य सानन्दमाह, भोः! किमेतत्? कथं देवी! इत्युक्त्वा सलज्जमाह, अये! अम्बा, सर्वे गुरवश्चात्र समागताः। तदा अरुन्धती आह, वत्स! रामभद्र! एषा भगीरथगृहाधिदेवता भवति च सुप्रसन्ना भगवती गङ्गा, इयञ्च ते श्वश्रूर्भगवती वसुन्धरेति। तदा भागीरथी नेपथ्यभाषितेनाऽऽह रामभद्रं, जगत्पते! आलेख्यप्रदर्शनावसरे मामभिलक्ष्योदीरितं "सा त्वमम्ब! स्नुषायामरुन्धतीव सीतायां शिवाभिध्यानपरा भव" इति भवतो वचनमनुपाल्याहमिदानीमनृणा सञ्जाताऽस्मीति। वसुन्धराऽपि तदा आह, वत्स! प्रभो! अहमपि, "भगवति! वसुन्धरे! श्लाघ्यां दुहितरमवेक्षस्व जानकीम्" इति भवद्वचनमनुपालितवत्यस्मीति। ततः रामः सप्रश्रयं ते तु देव्यौ ववन्दे इति।

अथारुन्धती पौरजानपदान् सम्बोध्याऽऽह, वैश्वानरविशुद्धा देववृन्दसंस्तुता च सावित्रकुललक्ष्मीः सीता परिगृह्यते, किमत्र भवन्तोऽभिमन्यन्ते? इति। तदा लक्ष्मणमुखात् निर्भर्त्सितानां प्रजानां सीतायै नमस्कारं देवानाञ्च पुष्पवृष्टिभिरुपस्थानं श्रुत्वा पुनराहारुन्धती, रामभद्र! हिरण्मयप्रतिकृतितोऽपि पवित्रां साक्षात् सीतां धर्म्म-

चारिणीं सीतां त्वमधुना भ्रातरं सम्पादयेति । रामस्तु, यथैव भगवत्यादिशतीत्याह । तदा वाल्मीकिः सर्वेषां गुरुजनानां सविधे कुशलवौ रामाय समर्पितवान् । सीता तु सर्वेषां गुरुजनानामपूर्वं समागममवलोक्य निर्भरमानन्दमनुभूतवती ।

अत्रान्तरे नेपथ्ये कलरवं श्रुत्वा उत्थायावलोक्य च लवणासुरं विनाश्य मधुरेश्वरः शत्रुघ्नः समुपस्थितः इति वाल्मीकिराह । युगपत् सर्वेषामभ्युदयानामुदयमालोक्य रघुमणिः सातिशयं पिप्राय । तदा वाल्मीकिराह, वत्स ! किन्ते भूयः प्रियमुपकरोमि ? इति । तदाकर्ण्य राम आह, भगवन्‌ः किमप्यन्यत् प्रियतमं वस्तु, यदभियाचे ; तथाप्येवमेतदेव भवतोऽभिप्रार्थये यत्, भगवन्! इयं कथा भागीरथीव नॄणां सततं पापानि नाशयतु, श्रेयांसि च वितरतु, वाल्मीकिविरचितामिमाञ्च रामचरितकथां सर्व्वे एव बुधाः अनारतं समालोचयन्त्विति शिवम् ।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-कुलपतिकल्प-"बि, ए" इत्युपनामक-
श्रीमज्जीवानन्दविद्यासागर-भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण-श्रीमन्नित्यबोधविद्यारत्नाभ्यां
परिवर्त्तित-परिवर्द्धितायां सुखबोधिनीसमा-
ख्यायाम् उत्तररामचरितव्याख्यायां
सप्तमाङ्कः ॥ ७ ॥

